## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । (३३/२२६)

'विभाषा जसि' (१.१.३२/२२५) इति[1] वर्तते । द्वन्द्वे इति निवृत्तम् । प्रथम चरम तय अल्प अर्ध कतिपय नेम इत्येते[2] जसि विभाषा [3]सर्वनामसञ्ज्ञा भवन्ति । प्रथमे, प्रथमाः । [4]चरमे, चरमाः । द्वितये, द्वितयाः । [5]अल्पे, अल्पाः । अर्धे,[6] अर्धाः । कतिपये, कतिपयाः । [7]नेमे, नेमाः । तय इति तयप्[8]प्रत्ययः । [9]शिष्टानि प्रातिपदिकानि । [10]तत्र नेम इति सर्वादिषु पठ्यते, तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते[11]। उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या [12]सर्वनामसञ्ज्ञा इहापि [13]जस्कार्यं प्रति विभाषा ।[14]काकचोर्यथायोगं वृत्तिः ॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् । (३४/२१८)

पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येषां गणे पाठात् पूर्वेण [15]नित्यायां सर्वनामसञ्ज्ञायां [16]प्राप्तायां जसि विभाषा आरभ्यते । पूर्वादीनि विभाषा जसि सर्वनामसञ्ज्ञानि भवन्ति व्यवस्थायामसञ्ज्ञायाम् ।[17]स्वाभिधेयापेक्षावधिनियमो व्यवस्था । पूर्वे, पूर्वाः । परे, पराः । अवरे, अवराः । दक्षिणे, दक्षिणाः । उत्तरे, उत्तराः । अपरे, अपराः । अधरे, अधराः । व्यवस्थायाम् इति किम् ? दक्षिणा इमे गाथकाः । प्रवीणाः इत्यर्थः । असञ्ज्ञायाम् इति किम्? उत्तराः कुरवः । सत्यामेव व्यवस्थायामियं तेषां सञ्ज्ञा ॥

## स्वमज्ञातिधनाख्यायाम् । (३५/२१९)

[18]अत्रापि नित्या सर्वनामसञ्ज्ञा प्राप्ता जसि [19]विभाष्यते । स्वम् इत्येतच्छब्दरूपं जसि विभाषा सर्वनामसञ्ज्ञं भवति, न चेज् ज्ञातिधनयोः [20]सञ्ज्ञारूपेण वर्तते । स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, [21]स्वा गावः । आत्मीयाः[22] इत्यर्थः । ज्ञातिप्रतिषेधः इति [23]किम् ?

धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव [24]संहताः ।
उल्मुकानीव [25]मेऽमी स्वा ज्ञातयो भरतर्षभ ॥[26] (महाभारते ५.३६.३८)

अधनाख्यायाम् इति किम् ? प्रभूताः स्वा न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते । प्रभूतानि धनानि इत्यर्थः ॥

## अन्तरं बहिर्योगोपसंव्यानयोः । (३६/२२०)

अत्रापि पूर्वेण नित्या [27]सर्वनामसञ्ज्ञा प्राप्ता सा जसि [28]विभाष्यते । अन्तरमित्येतच्छब्दरूपं विभाषा जसि सर्वनामसञ्ज्ञं भवति बहिर्योगे उपसंव्याने च [29]गम्यमाने । अन्तरे गृहाः,[30] अन्तराः गृहाः । नगरबाह्याश्चाण्डालादिगृहा

---

1. इत्येव फ. ह, इत्यनुवर्तते क.ड. 2. इत्येतानि फ. 3. सर्वनामसञ्ज्ञानि फ. 4. चरमे चरमाः इति नास्ति फ. 5. तृतये तृतयाः इत्यधिकं ड, अल्पे अल्पाः इति नास्ति ड. 6. अर्धे नास्ति फ. ह. 7. नेमे, नेमाः इति नास्ति ग. 8. तयप् नास्ति फ. ह, तय नास्ति ड. 9. परिशिष्टानि क. ड, शिष्टानि इमानि ब. 10. तत्र नास्ति फ. 11. असमासे क. ब. 12. सञ्ज्ञा क, पूर्ववन्नित्या सञ्ज्ञा प्राप्ता जसि विभाषा आरभ्यते ड. 13. जसः कार्यं क. ग. फ. 14. पूर्वादीनि जसि विभाषा सर्वनामसञ्ज्ञानि भवन्ति इत्यधिकम् ह. 15. नित्यसञ्ज्ञायाम् फ. ह, नित्यायां प्राप्तायाम् अ. 16. प्राप्तायां नास्ति क. ह. 17. स्वाभिधेयापेक्षोऽवधिनियमो ई. 18. तत्रापि नित्या सञ्ज्ञा प्राप्ता फ. 19. विभाषा आरभ्यते अ. फ, इष्यते क. 20. सञ्ज्ञात्वेन ग. 21. स्वा गावः नास्ति फ. 22. गावः इत्यधिकम् क. 23. किमर्थः फ. ह. 24. संगताः ग. फ. ह. 25. ते मे ड. 26. धूमायन्ते व्यपेतानि ज्वलन्ति संहतानि च । धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ पु.प्र. 27. सञ्ज्ञा क. ड. 28. जसि विभाषा आरभ्यते अ. क. फ, अत्र नित्या सञ्ज्ञा प्राप्ता विभाष्यते ह. 29. उपसङ्गच्छते ग, गम्यमाने नास्ति अ.क.फ. 30. गताः ब.

उच्यन्ते। (उपसंव्याने)--अन्तरे शाटकाः, अन्तराः शाटकाः। उपसंव्यानं परिधानीयमुच्यते, न [1]प्रावरणीयम्। बहिर्योगोपसंव्यानयोः इति किम्? [2]अनयोः ग्रामयोरन्तरे तापसः प्रतिवसति। [3]तस्मिन्नन्तरे शीतान्युदकानि। [4]मध्यप्रदेशवचनोऽन्तरशब्दः। गणसूत्रस्य [5]चेदं प्रत्युदाहरणम्।

[५] अपुरीति वक्तव्यम्। (म. भा. १.९३.)
अन्तरायां पुरि वसति।

[६] [6]विभाषाप्रकरणे तीयस्य वा ङित्सु[7] सर्वनामसञ्ज्ञा इत्युपसंख्यानम्। (म. भा. १.९३)
द्वितीयस्मै, द्वितीयाय। तृतीयस्मै, तृतीयाय॥

## स्वरादिनिपातमव्ययम्। (३७/४४७)

स्वरादीनि शब्दरूपाणि निपाताश्च अव्ययसञ्ज्ञानि भवन्ति। [8]स्वर्, अन्तर्, प्रातर्, एते अन्तोदात्ताः [9]पठ्यन्ते। पुनर् आद्युदात्तः। सनुतर्[10], उच्चैस्, नीचैस्, शनैस्, ऋधक्,[11] आरात्, ऋते, युगपत्, पृथक्, [12]एतेऽपि सनुतर्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते[13]। ह्यस्, श्वस्, दिवा, रात्रौ[14], सायम्, चिरम्, मनाक्, ईषत्[15], जोषम्, तूष्णीम्, बहिस्, [16]आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, [17]नक्तम्, नञ्, हेतौ, अद्धा,[18] इद्धा, सामि,[19] एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते। वत्--[20]वदन्तमव्ययसञ्ज्ञं भवति। ब्राह्मणवत्। क्षत्रियवत्। सन्[21], सनात्, सनत्, तिरस्, एते आद्युदात्ताः [22]पठ्यन्ते। [23]अन्तरा--अयमन्तोदात्तः। अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, [24]स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, [25]विहायसा, दोषा, मुधा[26], मिथ्या। 'क्त्वातोसुन्कसुनः', कृन्मकारान्तः, [27]सन्ध्यक्षरान्तः, अव्ययीभावश्च। पुरा, मिथो, मिथस्, प्रबाहुकम्[28], आर्यहलम्[29], [30]अभीक्ष्णम्, [31]साकम्, सार्धम्, समम्, नमस्, हिरुक्[32]। तसिलादिः तद्धित एधाच्पर्यन्तः, [33]शस्तसी, कृत्वसुच्, सुच्, आस्-थालौ, च्व्यर्थाश्च, अम्, आम्, प्रतान्[34], प्रशान्। [35]स्वरादिः[36]। निपाता वक्ष्यन्ते--'प्राग्रीश्वरान्निपाताः' (१.४.५६/१९) इति। च, वा, ह, अह[37], एव, एवम्[38] इत्यादयः। अव्ययप्रदेशाः--'अव्ययादाप्सुपः' (२.४.८२/४५२) इत्येवमादयः। अव्ययम् इत्यन्वर्थसञ्ज्ञा।

---

1. प्रावरणम् फ. ह, प्रावरणीयमिति ड. 2. अयम् अनयोः ड. ई. 3. अस्मिन्नगरे ग. फ. ह. ई. 4. मध्यवचनो ग. 5. वेदं फ, नास्ति ग, गणसूत्रस्यैतावत् ह. 6. वाप्रकरणस्य क. ड. 7. ङित्सु वा उपसंख्यानम् ड, वा नास्ति अ. क. फ. ह. 8. स्वर् (तै. ५.५.५.३), अन्तर् (तै. ब्रा. १.१.५.१), प्रातर् (तै.आ. २.६.१). 9. निपात्यन्ते ग. ह, नास्ति ड. 10. सनुतर् नूनं (वा.सं.८.४) ह. 11. ऋधक् (ऋ. ९.१४.३०). 12. वाक्यमिदं नास्ति अ. 13. पठ्यन्ते नास्ति ड. 14. नक्तम् ग. 15. ईषत् नास्ति ग. 16. आविस् अवस् न स्तः क, अवस् नास्ति ह. 17. न्यक्षं होता पोता अर्धे सामि ऋते स्वयम् इत्यादयोऽन्तोदात्ताः पठ्यन्ते ग. ह. 18. अद्धा (ऋ. ३.५४.५), इद्धा नास्ति क. 19. सामि इत्येवमादयः क. 20. वत्यन्तं ग. फ. ई. 21. सन् नास्ति फ. ई, वनासतं क, सनातस् ह. 22. पठ्यन्ते नास्ति. 23. अन्तरयम् फ, नास्ति ई. 24. स्वधा अलम् न स्तः फ. ह. 25. विहायस् ह. 26. कधा फ. 27. सन्ध्यक्षरशून्यः फ. 28. प्रबाहुकम् (का. २९.६), प्रग् भुक् ग. 29. आर्यमलम् ह. 30. अभीक्ष्यम् ग. अभीक्षणम् ह. 31. साकम् नास्ति ह, साकम् समम् न स्तः अ, समम् नास्ति फ. ई. 32. हिरुक् (ऋ. १.१९४.१२), मनस् ग, मिथुनम् ह, मनसा फ. 33. शस्तसी नास्ति अ. फ. 34. प्रतान् नास्ति ई, प्रदान् ह. 35. स्वरादेः ब, एते स्वरादयः ग. 36. आकृतिगणश्चायम्। तेन अन्येऽपि। तथाहि--माङ् श्रम् कामम् (प्रकामम्) भूयस् परम् साक्षात् साचि (सावि) सत्यम् मङ्क्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम्। सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अमिथु विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् (अम्भर) अम्मर (अम्भर) स्थाने परम् दुष्ठु बलात् शु अर्वाक् शुदि वदि इत्यादि। तसिलादयः प्राक्पाशपाः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः कृत्वोऽर्थः। तसिवती। नानाञौ इति--इति स्वरादिः गणः ड.। 37. अह्न ह, आह ई. 38. एवम् नास्ति फ.

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ (गो. ब्रा. १. १. २६)

## तद्धितश्चासर्वविभक्तिः । (३८/४४८)

तद्धितान्तः [1]शब्दोऽसर्वविभक्तिः[2] अव्ययसञ्ज्ञो भवति । यस्मान्[3] न सर्वविभक्तेरुत्पत्तिः सोऽसर्वविभक्तिः । ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा[4] । तद्धितः इति किम् ? एकः, द्वौ, बहवः । असर्वविभक्तिः[5] इति किम् ? औपगवः[6], औपगवौ, औपगवाः ॥

## कृन्मेजन्तः । (३९/४४९)

कृद् यो मकारान्तः[7], एजन्तश्च तदन्तं शब्दरूपमव्ययसञ्ज्ञं भवति । स्वादुङ्कारं[8] भुङ्क्ते । सम्पन्नङ्कारं भुङ्क्ते[9] । लवणङ्कारं भुङ्क्ते[10] । एजन्तः–वक्षे रायः । ता वामेषे रथानाम् (ऋ. ५. ६६. ३) । क्रत्वे दक्षाय जीवसे (ऋ. १०. ५७. ४) । ज्योक् च सूर्यं दृशे (ऋ. १०. ५७. ४) । वक्षे इति वचेः 'तुमर्थे सेसेनसे°[11]' (३. ४. ९/३४३६) इति सेप्रत्यये [12]कुत्वे षत्वे च कृते रूपम् । एषे इति इणः सेप्रत्यये गुणे षत्वे च[13] कृते रूपम् । जीवसे इति जीवेः असे प्रत्यये[14] रूपम् । दृशे इति दृशेः केन्प्रत्ययो निपात्यते–'[15]दृशे विख्ये च' (३. ४. ११/३४३८) इति । अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्[16] । इह मा भूत्–आधये, चिकीर्षवे, कुम्भकारेभ्यः इति ॥

## क्त्वातोसुन्कसुनः । (४०/४५०)

क्त्वा, तोसुन्, कसुन् इत्येवमन्तं शब्दरूपमव्ययसञ्ज्ञं भवति । कृत्वा । हृत्वा[17] । तोसुन्–'(व्युष्टायां) पुरा सूर्यस्योदेतो[18]राधेयः' (का.सं. ८. ३) । [19]'पुरा वत्सानामपाकर्त्तोः' (का.सं. ३१. १५) । 'भावलक्षणे स्थेण्कृञ्वदि°' (३. ४. १६/३४४३) इति इणः, कृञश्च तोसुन् [20]प्रत्ययः । कसुन्–'सृपितृदोः कसुन्' (३. ४. १७/३४४४) । 'पुरा क्रूरस्य विसृपो विरप्शिन्' (तै. सं. १.१.९.३) । 'पुरा जत्रुभ्य[21] आतृदः' (ऋ. ८. १. १२) ॥

## अव्ययीभावश्च । (४१/४५१)

[22]अव्ययीभावसमासोऽव्ययसञ्ज्ञो भवति । [23]किं प्रयोजनम् ? लुङ्मुखस्वरोपचाराः । लुक् (२.४.८२/४२२)- उपाग्नि, प्रत्यग्नि शलभाः[24] पतन्ति । मुखस्वरः–उपाग्निमुखः, [25]प्रत्यग्निमुखः । 'मुखं स्वाङ्गम्'[26] (६. २. १६७/३९०१) इत्युत्तरपदान्तोदात्तत्वं प्राप्तम्, '[27]नाव्ययदिक्शब्द°' (६. २. १६८/३९०२) इति[28]प्रतिषिध्यते । तस्मिन्

1. तद्धितान्तशब्देषु अ. ब. 2. विभक्तियुक्तो ब. ह, विभक्तियुक्ते अ. 3. सर्वा विभक्तिर्नोत्पद्यते ग. फ. ह, न सर्वा विभक्तिरुत्पद्यते ड. 4. सदा नास्ति क. फ., कदा ड. 5. विभक्तियुक्ता फ. 6. औपगवः नास्ति फ. 7. माकारान्तं ड. 8. स्वांकारं फ. 9-10. भुङ्क्ते नास्ति क. ड. 11. असेन्–इति से प्रत्यये नास्ति फ. 12. चोः कुः (८. २. ६०/३७८) क. ड. 13. च नास्ति फ, षत्वे नास्ति ई. 14. इदं ग, असेन् प्रत्यये अ. क. ड. फ, जीवेरसुन् प्रत्यये ह, असे प्रत्यये कृते अ, असे प्रत्यये विहिते ग. 15. दृश्ये क. 16. औपदेशिकार्थम् ह. 17. हत्वा अ. 18. नाधेयः ब.ई. 19. अमावास्यायाम् इत्यधिकम् अ. 20. प्रत्ययः नास्ति क. 21. जर्तृभ्यः मुद्रितः पाठः, आहतः ह. 22. अव्ययीभावश्च क. ग. ड. ह. ई. 23. किं प्रयोजनम् नास्ति क. 24. शलभा नास्ति क. फ. ह. 25. प्रत्यग्निमुखम् ग. फ. ह. 26. उच्यते इत्यधिकम् क. 27. वाव्यय ग. 28. इत्यादिना फ.

प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति । उपचारः–[1]उपपयःकारः, उपपयःकामः । [2]विसर्जनीयस्थानिकस्य सकारस्य उपचारः इति सञ्ज्ञा । [3]तत्राव्ययीभावस्याव्ययत्वे 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' (८.३.४६/१६०) [4]इति पर्युदासः सिद्धो भवति (म. भा. १.१८) । सर्वमिदं [5]काण्डं स्वरादावपि पठ्यते । पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेनायं [6]कार्यनियमः सिद्धो भवति । इह च—'पुरा सूर्यस्योदेतोराधेयः' (का.सं. ८.३), 'पुरा क्रूरस्य विसृपो विरप्शिन्' (तै. सं. १.१.९.३) इति 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२.३.६९/६२७) इति [7]षष्ठीप्रतिषेधो न भवति ॥

## शि[8] सर्वनामस्थानम् । (४२/३१३)

शि इत्येतत्[9] सर्वनामस्थानसञ्ज्ञं भवति । [10]किमिदं शि इति ? [11]'जश्शसोः शिः' (७.१.२०/३१२) इति शिः आदेशः । कुण्डानि (७.१.७२/३१४) (६.४.८/२५०) तिष्ठन्ति । कुण्डानि पश्य (म. भा. १.१०) । दधीनि । मधूनि । त्रपूणि[12] । जतूनि । सर्वनामस्थानप्रदेशाः ---'सर्वनामस्थाने चासम्बुद्धौ' (६.४.८/२५०) इत्येवमादयः ॥

## सुडनपुंसकस्य । (४३/२२९)

[13]सुट् इति पञ्च वचनानि सर्वनामस्थानसञ्ज्ञानि भवन्ति नपुंसकादन्यत्र । नपुंसके न विधिः, न प्रतिषेधः । तेन [14]जसः शेः सर्वनामस्थानसञ्ज्ञा पूर्वेण भवत्येव[15] । राजा, [16]राजानौ, राजानः । राजानम्, राजानौ (६.४.८/२५०) । सुट् इति किम् ? राज्ञः पश्य । अनपुंसकस्य इति किम् ? सामनी, [17]वेमनी ॥

## न वेति विभाषा । (४४/२४)

न इति प्रतिषेधः, वा इति विकल्पः । तयोः प्रतिषेधविकल्पयोः विभाषा इति [18]सञ्ज्ञा भवति । इतिकरणोऽर्थनिर्देशार्थः (म. भा. १.१०२) । विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये [19]पश्चाद् विकल्पः प्रवर्तते । उभयत्रविभाषाः[20] प्रयोजयन्ति । 'विभाषा श्वेः' (६.१.३०/२४२०) शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः[21] । विभाषाप्रदेशाः–'विभाषा श्वेः' (६.१.३०/२४२०) इत्येवमादयः ॥

## इग्यणः सम्प्रसारणम् । (४५/३२८)

इक् यो यणःस्थाने भूतो भावी वा तस्य संप्रसारणम् [22]इत्येषा सञ्ज्ञा भवति । यज्[23]--इष्टम् । [24]वप्--उप्तम् । [25]ग्रह--गृहीतम् । केचिदुभयथा सूत्रमिदं व्याचक्षते वाक्यार्थः सञ्ज्ञी, वर्णश्च इति । इग्यणः [26]यो वाक्यार्थः[27]स्थान्यादेशसम्बन्धलक्षणः [28]स सम्प्रसारणसञ्ज्ञो भवति, [29]यण्स्थानिक इग्वर्णः स सम्प्रसारणसञ्ज्ञो भवति इति । तत्र विधौ वाक्यार्थ उपतिष्ठते-

---

1. नास्ति अ, उपचयःकारः, उपचयःकामः ह. 2. वाक्यमिदं नास्ति अ. 3. तत्र नास्ति ग, अत्र ह. 4. इत्यादिना ह. 5. कार्यम् ग. 6. अर्थकार्यनियमः ई. 7. षष्ठी नास्ति क. ड. 8. शिः क. ड. 9. शब्दरूपं ग. फ. ह. 10. वाक्यमिदं नास्ति अ. ब. क. 11. शिरिति जस्शसोः आदेशः ड, जसिशसोः ग. ह. 12. त्रपूणि, जतूनि न स्तः ग. 13. वाक्यमिदं नास्ति क. 14. जस्शसोः पूर्वेण सञ्ज्ञा भवति क. ह, जस्शसोः पूर्वेण सञ्ज्ञा सिद्धा ग. फ, जसः शेः पूर्वेण सञ्ज्ञा भवति ड. 15. एव नास्ति ग. 16. राजानौ नास्ति फ. 17. विमनी ई. 18. इति इयं ग. ह. 19. पश्चात् नास्ति फ. 20. विभाषां ह. 21. शुशुवुः ग, शिश्वियुः ग. फ. ह, शुश्रुवुः ह. 22. इत्येषा नास्ति क. ड. 23. यजि क, इष्टः ह. 24. वपि क. ड, उप्तः ह. 25. ग्रहि क. ड, गृहीतः ह, ग्रहीतः फ. 26. योऽयं क, यो वाक्यार्थः अयं ग. ह. 27. स्थान्यादेशसम्बन्धः अ. ग. ई, स्थान्यादेशः सम्बन्धी क. 28. स नास्ति फ. 29 यण्स्थाने इक् अ. ब. ड, यण्स्थानिक य इक् अ, यणः स्थानिकः ई.

'ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे' (६.१.१३/१००३), [1]'वसोः सम्प्रसारणम्' (६.४.१३१/४३५) इति । अनुवादे वर्णः '[2]सम्प्रसारणाच्च' (६.१.१०८/३३०) इति । सङ्ख्यातानुदेशादिह न भवति–अदुहितराम् इति । [3]द्युभ्याम् इत्यत्र 'दिव उत्' (६.१.१३१/३३७) इति तपरकरणाद् दीर्घो[4] न भवति[5] । सम्प्रसारणप्रदेशाः–'वसोः सम्प्रसारणम्' (६.४.१३१/४३५) इत्येवमादयः ॥

## आद्यन्तौ टकितौ । (४६/३६)

[6]आदिः टित् भवति, अन्तः कित् भवति षष्ठीनिर्दिष्टस्य[7] । लविता[8] (७.२.३५/२१८४) । मुण्डो भीषयते[9] (७.३.४०/२५९५) । [10]टित्प्रदेशाः–'आर्धधातुकस्येड् वलादेः' (७.२.३५/२१८४) [11]इत्येवमादयः । कित्प्रदेशाः–'भियो हेतुभये षुक्' (७.३.४०./२५९५) इत्येवमादयः ॥

## मिदचोऽन्त्यात् परः । (४७/३७)

[12]अचः इति निर्धारणे षष्ठी[13] । जातौ चेदमेकवचनम् । अचां संनिविष्टानामन्त्यादचः परो मित् भवति । स्थाने-योग-प्रत्यय[14]परत्वस्य (३.१.१,२/१८०,१८१) अयमपवादः । [15]विरुणद्धि (३.१.७८/२५४३) । [16]मुञ्चति (७.१.५९/२५४२) । पयांसि[17] (७.१.७२/३१४) । मित्प्रदेशाः–'रुधादिभ्यः श्नम्' (३.१.७८/२५४३) इत्येवमादयः ।

[७] [18]मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम् । (म. भा. १.११५)
मग्नः (७.१.६०/२५१७) (८.२.२९/३८०) । मग्नवान् । मङ्क्ता । मङ्क्तुम्[19] ॥

## एच इग्घ्रस्वादेशे । (४८/३२३)

एचो[20] ह्रस्वादेशे कर्तव्ये [21]इक् एव ह्रस्वो[22] भवति, नान्यः । रै–[23]अतिरि । नौ–अतिनु[24] (१.२.४७/३१८) । गो–उप[25]गु (१.२.४८/६५६) । एचः इति किम् ? अतिखट्वः[26] । अतिमालः[27] । ह्रस्वादेशे इति किम् ? [28]दे३वदत्त (८.२.८६/९७) । देवद३त्त (६.१.१९८/३६५३) ॥

## षष्ठी स्थानेयोगा । (४९/३८)

परिभाषा इयं योगनियमार्था । इह शास्त्रे [29]या षष्ठी अनियतयोगा श्रूयते, सा स्थानेयोगैव भवति, नान्ययोगा । स्थानेयोगस्य निमित्तभूते सति सा प्रतिपत्तव्या । स्थानशब्दश्च प्रसङ्गवाची । [30]यथा–दर्भाणां स्थाने शरैः[31] प्रस्तरितव्यम् इति[32] दर्भाणां प्रसङ्गे इति गम्यते । एवमिहापि[33] अस्तेः स्थाने प्रसङ्गे [34]भूर्भवति । [35]भविता । भवितुम् । भवितव्यम् । [36]ब्रुवः प्रसङ्गे वचिर्भवति । वक्ता । वक्तुम् । वक्तव्यम् । प्रसङ्गे सम्बन्धस्य निमित्तभूते [37]ब्रुव इति षष्ठी ।

---

1. सूत्रमिदं नास्ति क. 2. संप्रसारणस्य ग. ब. फ. ह. 3. वाक्यमिदं नास्ति ग. फ. ब. ह. ई. 4. इह क. 5. हलः (६.४.२/२५५९) इति सम्प्रसारणदीर्घः इत्यधिकम् फ. 6. आद्यन्तौ एतौ टित्कितौ सञ्ज्ञौ भवतः ग, टिदागमः अ. फ. 7. इति इत्यधिकम् ह. 8. तरिता फ, तरीता ग. 9. भीषयति ब. ई, जटिलो भीषयते ग, जग्रहो भीषयते ह. 10. टित्-कित्प्रदेशाः फ. 11. इत्येवमादयः । कित्प्रदेशाः इत्येतन्नास्ति फ. ह. 12. अचः––एकवचनम् नास्ति ग. फ. ह. 13. निर्धारणषष्ठी ड. 14. योगपरत्वस्य चायमपवादः फ 15. रुणद्धि क. ड. ह. 16. मुञ्चति नास्ति ग.फ, मुञ्चन्ति ह. 17. कुण्डानि ग, हवींषि ग. फ, सर्पींषि, यशांसि ह. 18. मस्तेः ब. 19. मङ्क्तव्यम् अ. क. ड. फ. ग. 20. एचः स्थाने क. ह. 21. च इत्यधिकम् फ. 22. ह्रस्वो नास्ति ग. 23. अतिरै ग. 24. अतिनौ फ. 25. उपगौ फ. 26. अतिषट्वः ब. 27. अतिमालः नास्ति क. फ. 28. हे इत्यधिकम् फ, देवदत्त ३ ह, एतन्नास्ति ई. 29. अनियतयोगलक्षणा या षष्ठी फ, असंयोगलक्षणा या षष्ठी ग. 30. तद्यथा फ. 31. पारैः ब. 32. इत्युक्ते ह. 33. अस्तेर्भूः (२.४.५२/२४७०) ग. ह. 34. भूभावः ह. 35. भवितुः ग. 36. ब्रुवो वचिः (२.४.५३/२४५३) इति ग.फ. 37. सति इत्यधिकम् ह.

बह्वो हि षष्ठ्यर्थाः–[1]स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः। तत्र[2] यावन्तः शब्दे सम्भवन्ति तेषु सर्वेषु[3] प्राप्तेषु नियमः क्रियते [4]'षष्ठी स्थानेयोगा' इति। [5]स्थाने योगोऽस्याः इति व्यधिकरणो बहुव्रीहिः। [6]अत एव निपातनाच्च[7] सप्तम्या अलुक्॥

## स्थानेऽन्तरतमः। (५०/३९)

स्थाने प्राप्यमाणाना[8]मन्तरतम[9]आदेशो भवति सदृशतमः[10]। कुतश्च शब्दस्या[11]न्तर्यम्? स्थानार्थगुणप्रमाणतः। स्थानतः–'अकः सवर्णे दीर्घः' (६.१.१०१/८५)। दण्डाग्रम्। यूपाग्रम्[12]। [13]द्वयोरकारयोः कण्ठ्य एव दीर्घ[14] आकारो भवति। अर्थतः-[15]वतण्डी चासौ युवतिश्च[16]वातण्ड्ययुवतिः।[17]पुंवद्भावेन (६.३.४२/७४६) अन्तरतमः पुंशब्दोऽतिदिश्यते। गुणतः–पाकः। त्यागः। रागः। 'चजोः कु घिण्यतोः' (७.३.५२/२८६३) इति चकारस्या[18]ल्पप्राणस्याघोषस्य[19] तादृश एव ककारो [20]भवति। [21]जकारस्य घोषवतोऽल्पप्राणस्य तादृश[22]एव गकारः[23]। [24]प्रमाणतः–अमुष्मै। अमूभ्याम्। 'अदसोऽसेर्दादु दो मः' (८.२.८०/४१९) इति[25] ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः[26]। स्थाने इति वर्तमाने पुनः स्थाने[27]ग्रहणं किम्[28]? यत्रानेकमान्तर्यं [29]सम्भवति तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्[30]। चेता, स्तोता। प्रमाणतोऽकारो गुणः प्राप्तः, तत्र स्थानत[31] आन्तर्याद् [32]एकारौकारौ भवतः। [33]तमब्ग्रहणं किम्? वाग्घसति। [34]त्रिष्टुब्भसति। 'झयो होऽन्यतरस्याम्' (८.४.६२/११९) इति हकारस्य पूर्वसवर्णे क्रियमाणे 'सोष्मणः सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः, [35]तमब्ग्रहणाद् ये सोष्माणो नादवन्तश्च ते[36] भवन्ति चतुर्थाः (म.भा. १.१२०)॥

## उरण् रपरः। (५१/७०)

उः[37] स्थाने अण् प्रसज्यमान एव रपरो [38]वेदितव्यः। [39]कर्ता (७.३.८४/२१६८)। हर्ता। किरति (७.१.१००/२३९०)। गिरति। द्वैमातुरः (४.१.११५/१११८)। त्रैमातुरः[40]। उः इति किम्? [41]खेयम् (३.१.१११/२८६०)। गेयम् (६.४.६५/२८४३)। अण्ग्रहणं[42] किम्? 'सुधातुरकङ् च' (४.१.९७./१०९७)–सौधातकिः॥

## अलोऽन्त्यस्य। (५२/४२)

षष्ठीनिर्दिष्टस्य य उच्यते आदेशः, सोऽन्त्यस्यालः स्थाने [43]वेदितव्यः। 'इद् गोण्याः' (१.२.५०/१७०३)–पञ्चगोणिः। दशगोणिः॥

---

1. स्वस्वामिसम्बन्ध अ. क. ड़. फ. ग. ह. 2. तत्र नास्ति ग. 3. सर्वेषु नास्ति ड. फ. ह. 4. षष्ठी नास्ति ह. 5. स्थाने योगोऽस्याः इति नास्ति ई. ह. 6. अत एव नास्ति ग. फ. ह. 7. च नास्ति ड. 8. वर्णानाम् क.ड.ग.फ, स्थानेषु प्राप्यमाणानाम् ई. 9. एव इत्यधिकम् क. 10. सदृशतमः नास्ति अ. 11. आन्तरतम्यम् फ. ह. 12. खट्वाग्रं फ, क्षपाग्रं ब, क्षुराग्रं ग.ह. 13. कण्ठ्ययोः इत्यधिकम् अ.क.ड.फ.ह. 14. दीर्घः नास्ति ग, स्थानत भवत्याकारः ह. 15. वतण्डी चासौ युवतिश्च नास्ति फ. ह. 16. वातण्डीयुवतिः क, वतण्डीयुवतिः ह. 17. पुंवद्भावे अ. 18. अल्पप्राणत्वात् अ. 19. अघोषवतः ह. 20. स्यात् ग. 21. वाक्यमिदं नास्ति ई, जकारस्य नास्ति फ. 22. स्याद् गुणतः इत्यधिकम् ग. 23. भवति इत्यधिकम् ह. 24. प्रमाणम् ह. 25. उत्त्वमत्वे ह, ह्रस्वस्य ह्रस्वः दीर्घः ई. 26. प्रमाणतः इत्यधिकम् ग. 27. स्थानग्रहणं ह. ई. 28. किम् नास्ति ग. फ. ह. 29. सम्भवति नास्ति अ. ग. फ. ह. 30. इति इत्यधिकम् ह. 31. एव इत्यधिकम् ग. 32. एकारौ ग. 33. तमग्रहणं ब.फ.ग.ई. 34. त्र्युष्टुब् ग, नास्ति अ. क. 35. तमग्रहणम् ब.ग.फ. 36. ते नास्ति ह. 37. ऋवर्णस्य क.ग.ड. 38. भवति ग.फ.ह. 39. भर्ता ब.ह. 40. एतन्नास्ति अ. क. ई. 41. ई च खनः (३.१.१११/२८६०) इत्यधिकम् ग. फ. ह, गेयम् नास्ति ग. ह. न्या. पमं. 42. इति इत्यधिकम् ग. फ. 43. इति वेदितव्यम् फ, प्रत्येतव्यः ब. ई.

## ङिच्च। (५३/४३)

ङित् च य आदेशः सोऽनेकाल् अपि [1]अलोऽन्त्यस्य स्थाने भवति। 'आनङ् ऋतो द्वन्द्वे' (६.३.२५/९२१)—होतापोतारौ। मातापितरौ। तातङि[2] ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात् सर्वादेशः [3]तातङ् भवति। जीवताद् [4]भवान्। [5]जीवतात् (७.१.३५/२१९७) त्वम् ॥

## आदेः परस्य। (५४/४४)

परस्य [6]कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम्। क्व च परस्य [7]कार्यम् शिष्यते? यत्र पञ्चमीनिर्देशः। [8]तद् यथा—'ईदासः' (७.२.८३/३१०४)—आसीनो [9]यजते। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६.३.९७/९४१)-[10]द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम् ॥

## अनेकाल्शित् सर्वस्य। (५५/४५)

अनेकाल् य आदेशः शित् च, स सर्वस्य [11]षष्ठीनिर्दिष्टस्य स्थाने भवति। 'अस्तेर्भूः' (२.४.५२/२४७०)—भविता। भवितुम्। भवितव्यम्। [12]शित् खल्वपि—'[13]जश्शसोः शिः' (७.१.२०/३१२)—कुण्डानि तिष्ठन्ति। कुण्डानि पश्य[14] ॥

## स्थानिवदादेशोऽनल्विधौ। (५६/४१)

स्थान्यादेशयोः [15]पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोति [16]इत्ययमतिदेश आरभ्यते। [17]स्थानिना तुल्यं वर्तते इति स्थानिवत्[18]। स्थानिवदादेशो भवति स्थान्याश्रयेषु[19] कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि[20] वर्जयित्वा। न[21] अल्विधिरनल्विधिः इत्यर्थः। [22]किमुदाहरणम्? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः[23]। धात्वादेशो धातुवद् भवति। 'अस्तेर्भूः' (२.४.५२/२४७०)। 'ब्रुवो वचिः' [24] (२.४.५३/२४५३)। आर्धधातुकविषये[25] प्रागेवादेशेषु [26]कृतेषु 'धातोः' (३.१.९१/२८२९) इति तव्यादयो भवन्ति। भविता। भवितुम्। भवितव्यम्[27]। वक्ता। वक्तुम्। वक्तव्यम्[28]।

अङ्गादेशोऽङ्गवद् भवति[29]—केन। काभ्याम्। कैः। 'किमः कः' (७.२.१०३/३४२) इति कादेशे कृतेऽङ्गाश्रया इन-दीर्घत्व-ऐस्भावाः भवन्ति।

कृदादेशः कृद्वद् भवति[30]—प्रकृत्य। प्रहृत्य[31]। क्त्वो ल्यबादेशे कृते 'ह्रस्वस्य पिति कृति तुक्'[32] (६.१.७१/२८५८) इति तुग् भवति।

---

1. अलो नास्ति फ. ह, स्थाने नास्ति ई. ह, अल्स्थाने ग. 2. तातङो ड. 3. तातङ नास्ति अ.क.ह. 4. भवान् नास्ति ह. 5. भवतात् ह. 6. कार्यं नास्ति फ, विधीयमानं कार्यं क. 7. परस्य आदेरेव भवति ह, परस्य शिष्यते ग. 8. तद् यथा नास्ति ग. 9. यजेत क.' 10. द्वीपः। अन्तरीपः। प्रतीपः। समीपः क, प्रतीपम् नास्ति ग. फ. ह. न्या. पमं. 11. षष्ठी नास्ति ग. फ. 12. शितः फ, शित् खल्वपि नास्ति क. 13. जसः शी फ. 14. पश्यन्ति फ. 15. प्रथमत्वात् ह. 16. इत्यतिदेशः ग, इत्ययमारम्भः. अ 17. स्थानमस्यास्ति इति स्थानी इत्यधिकम् ह. 18. सादृश्ये वतिः इत्यधिकम् अ. 19. सत्सु इत्यधिकम् ड. 20. कार्याणि नास्ति फ. 21. अनल्विधिर-नेकाल्विधिरित्यर्थः अ. 22. किं प्रयोजनम्? फ. 23. प्रयोजनम् इत्यधिकम् ड.फ.ह. 24. ब्रुवो वचिः नास्ति ग, इति इत्यधिकम् ह. 25. विषयभूते प्रत्ययोत्पत्तेरविशेषेषु ग. 26. कृतेषु नास्ति ड. 27. एतन्नास्ति क, भवितव्यः अ 28. नास्ति क. 29-30. भवति नास्ति क. 31. नास्ति अ. क., प्रदूत्यं ब. 32. ङिति ह, तुक् नास्ति फ.

तद्धितादेशः तद्धितवद् भवति[1]–दाधिकम् । अद्यतनम् । 'कृत्तद्धितसमासाश्च' (१.२.४६/१७९) इति प्रातिपदिकसञ्ज्ञा भवति ।

अव्ययादेशोऽव्ययवद् भवति[2]–प्रस्तुत्य । [3]प्रहृत्य । उपहृत्य । उपस्तुत्य । 'अव्ययादाप्सुपः' (२.४.८२/४५२) इति [4]सुब्लुग् भवति ।

सुबादेशः सुब्वद् भवति–वृक्षाय । प्लक्षाय । 'सुपि च' (७.३.१०२/२०२) इति दीर्घत्वं भवति ।

तिङादेशः तिङवद् भवति–अकुरुताम् । अकुरुतम् । 'सुप्तिङन्तं पदम्' (१.४.१४/२९) इति पदसञ्ज्ञा भवति ।

[5]पदादेशः पदवद् भवति–ग्रामो वः स्वम् । जनपदो नः[6] स्वम् । 'पदस्य' (८.१.१६/४०१) इति रुत्वं भवति ।

वत्करणं किम् ? स्थानी आदेशस्य सञ्ज्ञा मा विज्ञायि इति । [7]स्वाश्रयमपि यथा स्यात् । 'आङो यमहनः' (१.३.२८/२६९५) - आहत, आवधिष्ट इति आत्मनेपदमुभयत्रापि भवति । आदेशग्रहणं किम् ? आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात् । पचतु[8] - '[9]एरुः' (३.४.८६/२१९६) । अनल्विधौ इति किम् ? [10]द्युपथितदादेशा न स्थानिवद् भवन्ति । द्यौः, पन्थाः, सः इति । 'हल्ङ्याब्भ्यो [11]दीर्घात् सुतिस्यपृक्तं हल्' (६.१.६८/२५२) इति[12] सुलोपो न भवति ॥

## अचः परस्मिन् पूर्वविधौ । (५७/५०)

[13]पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः । [14]अल्विध्यर्थमिदमारभ्यते । [15]आदेशः स्थानिवत् इति वर्तते । अचः इति स्थानिनिर्देशः । [16]परस्मिन् इति [17]निमित्तसप्तमी । पूर्वविधौ इति विषयसप्तमी[18]। [19]अजादेशः परनिमित्तकः [20]पूर्वविधौ कर्तव्ये स्थानिवद् भवति । पटयति[21]। अवधीत् । बहुखट्वकः [22](म. भा. १.१४५) । पटुमाचष्टे[23] इति णिचि टिलोपे कृते तस्य स्थानिवद्भावात् 'अत उपधायाः' (७.२.११६/२२८२) इति वृद्धिर्न भवति । अवधीत्[24]–अतो लोपस्य[25] (६.४.४८/२३०८) स्थानिवद्भावाद् 'अतो हलादेर्लघोः' (७.२.७./२२८४) इति हलन्तलक्षणा[26] वृद्धिर्न भवति । [27]बहुखट्वकः इति 'आपोऽन्यतरस्याम्' (७.४.१५/८९२) इति ह्रस्वस्य स्थानिवद्भावाद्[28] 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' (६.२.१७४/३९०८) इति[29] स्वरो न [30]भवति । अचः इति किम् ? प्रश्नः[31] । आक्राष्टाम्[32] । आगत्य । प्रश्नः इति प्रच्छेः[33] नङ्प्रत्यये 'च्छ्वोः शूडनुनासिके च' (६.४.१९/२५६१) इति छकारस्य शकारः परनिमित्तकस्तुकि [34]कर्तव्ये न स्थानिवद् भवति । [35]आक्राष्टाम् इति 'झलो झलि' (८.२.२६/२२८१) इति सिचो लोपः परनिमित्तकः [36]कृषेः षकारस्य 'षढोः कः सि' (८.२.४१/२९५) इति ककारे कर्तव्ये न स्थानिवद् भवति । [37]आगत्य इति 'वा ल्यपि' (६.४.३८/३३३४) इत्यनुनासिकलोपः परनिमित्तकः तुकि कर्तव्ये न स्थानिवद् भवति । परस्मिन् इति किम् ? [38]युवजानिः । [39]वधूटीजानिः । वैयाघ्रपद्यः । आदीध्ये (म.भा. १ .१४२) । युवजानिः [40]इति 'जायाया निङ्' (५.४.१३४/८७२) [41]न परनिमित्तकः, तेन यलोपे (६. १. ६६/८७३) न स्थानिवद् भवति । वैयाघ्रपद्यः इति[42] न परनिमित्तकः पादस्यान्तलोपः (५. ४. १३८/८७७) पद्भावं (६. ४. १३०/४१४) न प्रतिबध्नाति । आदीध्ये इति दीधीङ[43] उत्तमपुरुषै[44]कवचने टेरेत्वस्यापरनिमित्तकत्वाद् 'यीवर्णयोर्दीधीवेव्योः'

1-2. भवति नास्ति ड. 3. नास्ति क. ड. ब. फ. ह. 4. सुपो लुक् अ. ड. फ. ह. 5. पादादेशः फ. 6. वः ग. 7. स्वश्रयमपि ग. ह. 8. भवतु क. 9. नास्ति ड. 10. द्युपथिमथि इत्यादेशाः फ, द्युपथित्यदादेशाः क. 11. दीर्घात् नास्ति ग. 12. इत्यादिलोपो फ, हल्ङ्यादिलोपो ह. 13. पूर्वेण–-आरभ्यते नास्ति क. ड. ई, पूर्वेण सूत्रेण ग. फ. 14. अनल्विधौ इत्यस्य कार्यविशेषे बाधकमारभ्यते अ. 15. स्थानिवदादेशः फ. 16. वाक्यमिदं नास्ति अ. 17. निमित्तस्य सप्तमी फ. 18. सप्तमीनिर्देशः अ. 19. अजन्तादेशः अ, अनादेशः ब. 20. पूर्वस्य विधौ अ. ड. 21. पदयति ह, लघयति इत्यधिकम् अ. क. ड. 22. बहुमालकः इत्यधिकम् ग. फ. ह. 23. पटमाचष्टे फ, पदमाचष्टे अ, इति विगृह्य अति अभि टिलोपे ग. ह. 24. इत्यत्र इत्यधिकम् ग. ह. 25. इति इत्यधिकम् क. 26. विभाषा इत्यधिकम् अ. क. ड. फ. ह. 27. बहुखट्वः ग, 'शेषाद् विभाषा' (५.४.१५४/८९१) इति कपि कृते फ, बहुमालः । बहुमालकः ग. ह. 28. स्थानिवत्त्वात् फ. 29. इत्येव फ.ह. 30. प्राप्नोति ह. 31. विश्नः इत्यधिकम् ब.ग.ई. 32. कार्ष्टाम् फ, आकृष्य ह. 33. प्रच्छेः नास्ति अ, प्रच्छेः च्छ्वोः, फ. ह, प्रच्छेः नङ्प्रत्यये कृते ग.फ.ह. 34. कर्तव्ये नास्ति ग. ड. ह. 35. अकार्ष्टाम् फ. 36. सिचि विकल्पेनोपसंख्यानम् इत्यधिकम् अ. क. ड. फ, कृषि सिचि ग. 37. वाक्यमिदं नास्ति ई. 38. लक्ष्मीजानिः अ. 39. वधूजानिः अ. ई, नास्ति क. ग. ड. फ. 40. इति नास्ति क. ड. 41. स परनिमित्तको यलोपेन ग. फ. 42. इत्यत्र अ, इत्यप्यपरः फ; परनिमित्तकं क. 43. दीधीङ नास्ति ग. ह. 44. एकवचनं ह.

(७.४.५३/२४८८) इति[1] लोपो न भवति। पूर्वविधौ इति [2]किम्? हे गौः। बाभ्रवीयाः। नैधेयः। (म.भा. १. १४२) हे गौः इति वृद्धिरजादेशः[3] (७.१.९०/२८४) सम्बुद्धिलोपे कर्तव्ये न स्थानिवद् भवति। बाभ्रवीयाः इति बाभ्रव्यस्यामी[4] छात्राः इति[5] 'वृद्धाच्छः' (४.२.११४/१३३७) इति [6]छः। 'हलस्तद्धितस्य' (६.४.१५०/४७२) इति [7]यकारलोपे कर्तव्ये अवादेशो न स्थानिवद् भवति। नैधेयः–'आतो लोप इटि च' (६.४.६४/२३७२) इत्याकारलोपः, 'इतश्चानिञः' (४.१.१२२/११२५) इति द्व्यज्लक्षणे[8] प्रत्ययविधौ न स्थानिवद् भवति[9]॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु। (५८/५१)

पूर्वेणातिप्रसक्तः [10]स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। [11]पदान्तविधिं प्रत्यजादेशो न स्थानिवद् भवति। [12]कौ स्तः। यौ स्तः। [13]तानि सन्ति। यानि सन्ति। श्नसोरल्लोपः क्ङिति सार्वधातुके[14] (६.४.१११/२४६९) इति परनिमित्तकः, [15]स पूर्वविधावावादेशे यणादेशे च कर्तव्ये स्थानिवत् स्यात्, अस्माद् वचनान्न[16] भवति।

द्विर्वचनविधिः––द्विर्वचनविधिं प्रति (अजादेशः) न स्थानिवद् भवति। दद्ध्यत्र। मद्ध्वत्र। यणादेशः परनिमित्तकः, तस्य [17]स्थानिवद्भावात् 'अनचि च' (८.४.४७/४८) इति [18]धकारस्य द्विर्वचनं न स्यादस्माद् वचनाद् भवति।

वरेविधिः––[19]वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद् भवति। अप्सु [20]यायावरः [21]प्रवपेत पिण्डान्। यातेः यङन्तात् 'यश्च [22]यङः' (३.२.१७६/३१५६) इति वरचि कृते अतो लोपः (६.४.४८/२३०८) परनिमित्तकः, तस्य [23]स्थानिवत्त्वाद् 'आतो लोप इटि च' (६.४.६४/२३७२) इत्याकारलोपः स्याद्, अस्माद् वचनान्न भवति।

यलोपविधिः––यलोपविधिं [24]प्रत्यजादेशो न स्थानिवद् भवति। कण्डूतिः। [25]कण्डूयतेः क्तिनि कृते, अतो लोपः (६.४.४८/२३०८) परनिमित्तकः, 'लोपो व्योर्वलि' (६.१.६६/८७३) इति यलोपे स्थानिवत् स्यादस्माद् वचनान्न भवति।

स्वरविधिः––स्वरविधिं प्रति अजादेशो न स्थानिवद् भवति। चिकीर्षकः। जिहीर्षकः। [26]ण्वुलि कृते अतो लोपः (६.४.४८/२३०८) परनिमित्तकः, 'लिति'[27] (६.१.१९३/३६७६) प्रत्ययात् [28]पूर्वमुदात्तम्, इति [29]स्वरे कर्तव्ये न स्थानिवद् भवति इति[30]।

सवर्णविधिः––सवर्णविधिं प्रति अजादेशो[31] न स्थानिवद् [32]भवति। [33]शिण्ढि। पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने[34] 'रुधादिभ्यः श्नम्' (३.१.७८/२५४३)। [35]हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु, श्नसो[36]रल्लोपः क्ङिति सार्वधातुके (६.४.१११/२४६९) परनिमित्तकः, [37]अनुस्वारस्य ययि परसवर्णे (८.४.५८/१२४) कर्तव्ये न स्थानिवद् भवति[38]।

---

1. इकारलोपः ग. 2. किम् नास्ति ग. 3. परनिमित्तकः इत्यधिकम् अ.ग.ड.फ. 4. इमे ग.फ.ह. 5. विगृह्य इत्यधिकम् ग.फ. 6. छः नास्ति अ.क.ड, छप्रत्ययो भवति ह. 7. इति यलोपे अ.क.ड.फ.ह. 8. द्व्यच्लक्षणप्रतिविधौ फ. ह. 9. भवति नास्ति फ. 10. स्थानिवत् ह, एषु विधिषु ग. फ., एतेषु प्रतिषिध्यते ह. 11. पदान्तविधौ न स्थानिवत् फ, तत्र भावात् ड. 12. कौ स्तः नास्ति फ. 13. तानि सन्ति नास्ति फ, कानि सन्ति ग. ह. 14. क्ङिति सार्वधातुके नास्ति ग. 15. स नास्ति ग. फ. ह. 16. प्रतिषिध्यते ग. 17. स्थानिवत्त्वात् क. ड. 18. धकारस्य नास्ति ग. 19. वरेऽचि परत्वे ग. 20. यायापर ग. 21. प्रवपते फ. 22. यङः नास्ति ह. 23. स्थानिवद्भावात् ग. 24. प्रत्यादेशः फ, अजादेशः नास्ति ह. 25. कण्डूतेः क्तिनि तु ग, क्तिचि अ. 26. ण्वुलि कृते नास्ति क. ड, ण्विलि ह. 27. लितीति क. 28. पूर्वमुदात्तः ग. ह. 29. उदात्तस्वरे ड. 30. ककारस्य स्वरः ह, ककारादीनां स्वरः ग, ईकारे स्वरः क. फ. 31. आदेशः नास्ति ड. फ. ह. 32. भवति नास्ति फ. 33. शिण्डि, पिण्डि ग. 34. कृते इत्यधिकम् ग. फ. 35. हित्व इति ग. 36. रलोपः ग. 37. अनुस्वारययि ग. 38. ततो झरो झरि इति ङकारस्य लोपः इत्यधिकम् ड.

अनुस्वारविधिः--अनुस्वारविधिं प्रति [1]अजादेशो न स्थानिवद् भवति। शिंषन्ति। पिंषन्ति। 'नश्चापदान्तस्य झलि' (८.३.२४/१२३) इति[2] अनुस्वारे कर्तव्ये श्नसोरल्लोपः (६.४.१११/२४६९) [3]न स्थानिवद् भवति[4]।

दीर्घविधिः--दीर्घविधिं प्रति [5]अजादेशो न स्थानिवद् भवति। प्रतिदीव्ना। प्रतिदीव्ने। [6]प्रतिदिवन् इत्येतस्य 'भस्य' (६.४.१२९/२३३) इत्यधिकृत्य तृतीयैकवचने[7] चतुर्थ्येकवचने च 'अल्लोपोऽनः' (६.४.१३४/२३४) इत्यकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् 'हलि च' (८.२.७७/३५४) [8]इति दीर्घत्वं न स्यात्, न ह्ययं वकारो हल्परः इति, अस्माद् वचनाद् भवति।

जश्विधिः--[9]जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति। 'सग्धिश्च मे सपीतिश्च मे' (वा.सं. १८.९)। 'बब्धां ते हरी धानाः' (नि. ५.१२)। अदेः क्तिनि[10]'बहुलं छन्दसि' (२.४.३९/३३९८) इति घस्लादेशः। 'घसिभसोर्हलि च' (६.४.१००/३५५०) इत्युपधालोपः। 'झलो झलि' (८.२.२६/२२८१) इति सकारलोपः। 'झषस्तथोर्धोऽधः' (८.२.४०/२२८०) इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् 'झलां जश् झशि' (८.४.५३/५२) इति घकारस्य जश्त्वं न स्यात्, अस्माद् वचनाद् भवति। [11]समाना ग्धिः। समानस्य[12] सभावः। सग्धिः[13]। बब्धाम् इति भसेर्लोड्द्विवचने[14] शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'घसिभसोर्हलि च' (६.४.१००/३५५०) इति उपधालोपः, 'झलो झलि' (८.२.२६/२२८१) इति सकारलोपः, 'झषस्तथोर्धोऽधः' (८.२.४०/२२८०) इति धत्वम्। उपधालोपस्य स्थानिवत्त्वात् 'झलां जश् झशि' (८.४.५३/५२) इति[15] जश्त्वं न स्यात्, अस्माद् वचनाद् भवति[16]।

चर्विधिः--[17]चर्विधिं प्रति [18]अजादेशो न स्थानिवद् भवति। जक्षतुः। [19]जक्षुः। 'अक्षन् पितरोऽमीमदन्त[20] पितरः' (वा. सं. १९.३६)[21]। लिड्द्विवचनबहुवचनयोरदेर्घस्लादेशः। 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६.४.९८/२३६३) इति[22] उपधालोपः, द्विर्वचनम्, अभ्यासकार्यम्। तत्र उपधालोपस्य [23]स्थानिवत्त्वात् 'खरि च' (८.४.५५/१२१) इति घकारस्य चर्त्वं न [24]स्याद्, अस्माद् वचनाद् भवति[25]। '[26]शासिवसिघसीनां च' (८.३.६०/२४१०) [27]इति षत्वम्। अक्षन् इति अदेः [28]लुङ्बहुवचने घस्लादेशः, [29]च्लेरागतस्य 'मन्त्रे घसह्वर[0]' (२.४.८०/३४०२) इति लुक्। 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६.४.९८/२३६३) इत्युपधालोपः, तस्य [30]स्थानिवत्त्वात् 'खरि च' (८.४.५५/१२१) इति चर्त्वं न स्यात्, अस्माद् वचनाद् भवति[31]।

स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवति। [32]अन्यत्र स्थानिवदेव। [33]तेन [34]बहुखट्वकः, [35]किर्योः, गिर्योः, वाय्वोः इति [36]स्थानिवत्त्वात् [37]स्वरदीर्घयलोपा न भवन्ति॥

---

1. अजादेशः नास्ति अ.ग. ड. फ. ह. 2. इति नास्ति क. 3. इति उक्तलक्षणेन इत्यधिकम् ह. 4. भवति नास्ति क. 5. अजादेशो नास्ति क. ग. ड. फ. ह. 6. प्रतिदिवन् नास्ति ह, एतस्य नास्ति फ. 7. कृते इत्यधिकम् अ. 8. उपधायां च फ, उपधायाश्च ग. ह. 9. जश्त्वविधि ह, अजादेशः नास्ति ह. 10. कृते इत्यधिकम् फ. 11. समाना चासौ जग्धिश्च ह. 12. छन्दसि अमूर्धप्रभृत्युदकेष्विति इत्यधिकम् ह. 13. नास्ति अ. 14. तसस्तामि क. ड, तामादेशः अ, द्विवचनं तां ई. 15. भस्य ह, धकारस्य क. ड. 16. बब्धाम् इति इत्यधिकम् ह. 17 चर्तुविधि ग. 18 अजादेशः नास्ति क. ड. ह. 19. जरक्षुः ग. 20. हि इत्यधिकम् ग. 21. इति फ. 22. इत्यादिना ह. 23. स्थानिवद्भावात् ग. ह. 24. स्याद् नास्ति ह. 25. शासिवसि–भवति नास्ति ग. ह. 26. इत्यनेन ड. 27. जक्षतुः जक्षुः जक्षन् इत्यधिकम् ह. 28. लुङि क. ड. फ. 29. श्लेरङ्गस्य फ. 30. स्थानिवद्भावात् अ. 31. अक्षन् इत्यधिकम् ई. 32. अन्यश्च ड. फ. 33. तेन नास्ति फ. 34. बहुमालकः फ. ह. 35. शिर्योः ग. 36. स्थानिवद्भावात् ह, नास्ति फ. 37. स्वरदीर्घलोपाः ह.

## द्विर्वचनेऽचि। (५९/२२४३)

[1]द्विर्वचननिमित्तेऽचि अजादेशः [2]स्थानिवद् भवति, द्विर्वचन एव कर्तव्ये। रूपातिदेशश्चायं[3] नियतकालः। तेन[4] कृते द्विर्वचने पुनरादेश[5]रूपमेवावतिष्ठते। आल्लोपोपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्। (म.भा. १. १५७)।

आल्लोपः—पपतुः। पपुः। 'आतो लोप इटि च' (६.४.६४/२३७२) इति आकारलोपे कृते तस्य[6] स्थानिवद्भावात् 'एकाचो द्वे प्रथमस्य' (६.१.१/२१७५) इति द्विर्वचनं भवति।

उपधालोपः—जघ्नतुः। जघ्नुः[7]। 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६.४.९८/२३६३) इत्युपधालोपे कृते [8]अनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद् वचनाद् भवति।

णिलोपः—[9]आटिटत्। अटतेः णिचि लुङि चङि णिलोपे[10]कृते तस्य [11]स्थानिवत्त्वाद् 'अजादेर्द्वितीयस्य' (६.१.२/२१७६) इति [12]टिशब्दस्य द्विर्वचनं भवति।

यण्—चक्रतुः। चक्रुः। करोतेः अतुसि उसि च यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न स्यात्, [13]स्थानिवत्त्वाद् भवति।

[14]अयवायावादेशाः—निनय, निनाय। लुलव, लुलाव। नयतेः लुनातेश्च उत्तमे[15] णलि गुणे कृते[16] वृद्धौ च अयवायावादेशाः, तेषां [17]स्थानिवत्त्वान् ने नै लो लौ इति द्विर्वचनं भवति[18]। द्विर्वचने[19] कर्तव्य इति किम्? जग्ले, मम्ले। श्रवणमाकारस्य न भवति[20]। द्विर्वचननिमित्ते इति किम्? दुद्यूषति। [21]ऊठि यणादेशो न स्थानिवद् भवति। अचि इति किम्? जेघ्रीयते, देध्मीयते। 'ई घ्राध्मोः' (७.४.३१/२६४८), [22]'यङि च' (७.४.३०/२६३३) इति ईकारादेशः, तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात्, अज्ग्रहणान्न भवति॥

## अदर्शनं लोपः। (६०/५३)

अदर्शनम्, अश्रवणम्, अनुच्चारणम्, अनुपलब्धिः, [23]अभावो, वर्णविनाशः इत्यनर्थान्तरम्। एतैः शब्दैर्योऽर्थोऽभिधीयते, तस्य[24] लोपः इतीयं[25] सञ्ज्ञा भवति। अर्थस्येयं सञ्ज्ञा,[26] न शब्दस्य। [27]प्रसक्तस्यादर्शनं लोपसञ्ज्ञं भवति। 'गोधाया ढ्रक्' (४.१.१२९/११३५)—गौधेरः (६.१.६६/८७३)। पचेरन्। 'जीवे रदानुक्' (द. उ. १.१६३) जीरदानुः [सिषासति] (ऋ. ८.६२.३)। 'स्रिवेर्मनिन्' [28]आस्रेमाणम् (म. भा. १.५१)। यकारवकारयो[29]रदर्शनमिह उदाहरणम्। अपरस्या[30]नुबन्धादेः प्रसक्तस्य। लोपप्रदेशाः—'लोपो व्योर्वलि' (६.१.६६/८७३) इत्येवमादयः॥

---

1. द्विर्वचनेऽचि यो अ. फ. ह, अचि यो अजादेशः द्विर्वचने एव भवति सः ग. 2. सः इत्यधिकम् क. ह. 3. न तु इत्यधिकम् ह. 4. तेन नास्ति ब. क. फ. ह. ई. 5. पुनरादेश एव ग. 6. तस्य नास्ति फ. 7. हन्तेरतुस्युसि च इत्यधिकम् ह. 8. अनच्कत्वस्य क. 9. आटत् ह, आशिषत् इत्यधिकं ग. 10. च इत्यधिकम् क. 11. स्थानिवद्भावात् क. ह. 12. टिशब्दस्य नास्ति ह. 13. स्थानिवद्भावात् ह. 14. अयवादेश : ह. 15. उत्तमपुरुषैकवचने ह. 16. कृते नास्ति ह, वृद्धौ कृतायाम् क. ग. ड. ह. 17. स्थानिवद्भावात् ग. 18. ह्रस्वत्वं च इत्यधिकम् ह. 19. द्विर्वचनम् ई. 20. परेण च सह वृद्धिरेचि इति वृद्धिर्न भवति इत्यधिकं ब. क. ड. फ. ई. 21. सुस्याषति। ऊडि ग. 22. ङि चेति ईकारादेशस्य ह. 23. अभावो, वर्णविनाशः नास्ति ई. 24. अर्थस्य इत्यधिकम् ग. 25. इति सञ्ज्ञा विधीयते फ, इत्यर्थलोपसञ्ज्ञा अनेन विधीयते ह. 26. एषा अर्थस्य सञ्ज्ञा क. ड., वाक्यमिदं नास्ति ह. 27. वाक्यमिदं नास्ति ग. फ. ह. 28. आस्रेवमाणम् ह. 29. प्रसक्तयोः इत्यधिकम् ड, यकारवकारादर्शनम् ह. 30. अपरस्य च ग. ड. फ, अपरस्यापि ह.

## प्रत्ययस्य लुक्श्लुलुपः । (६१/२६०)

अदर्शनम् इति वर्तते । प्रत्ययादर्शनस्य लुक्, श्लु, लुप् इत्येताः सञ्ज्ञा भवन्ति । अनेकसञ्ज्ञाविधानाच्च [1]तद्भावितग्रहणमिह विज्ञायते । [2]लुक्सञ्ज्ञाभावितं प्रत्ययादर्शनं लुक्सञ्ज्ञं भवति, [3]श्लुसञ्ज्ञाभावितं श्लुसञ्ज्ञं भवति, लुप्सञ्ज्ञा[4]भावितं [5]लुप्सञ्ज्ञं भवति । तेन सञ्ज्ञानां सङ्करो न [6]भवति । विधिप्रदेशेषु [7]च भाविनी सञ्ज्ञा [8]विज्ञायते । अत्ति (२.४.७२/२४२३) । जुहोति (२.४.७५/२४८९) । वरणाः[9] (४.२.८२/१३०१) । प्रत्ययग्रहणम् किम् ? अगस्तयः । कुण्डिनाः (२. ४. ७०/११५२) । लुक्श्लुलुप्प्रदेशाः–'लुक्तद्धितलुकि' (१.२.४९/१४०८), 'जुहोत्यादिभ्यः श्लुः' (२.४.७५/२४८९), 'जनपदे लुप्' (४.२.८१/१२९३) इत्येवमादयः ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् । (६२/२६२)

प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं नु[10]नाम स्यात् इति सूत्र[11]मिदमारभ्यते । प्रत्ययलोपे कृते[12] प्रत्ययलक्षणं [13]प्रत्ययहेतुकं कार्यं भवति । अग्निचित्, [14]सोमसुत्, [15]अधोक् इत्यत्र सुप्तिङोः लुप्तयोः 'सुप्तिङन्तं पदम्' (१.४.१४/२९) इति पदसञ्ज्ञा भवति । अधोक् इति दुहेः लङि [16]तिपि शब्लुकि तिलोपे[17] घत्व[18]-भष्भाव-जश्त्व- चर्त्वेषु [19]कृतेषु रूपम् । प्रत्यय[20] इति वर्तमाने पुनः प्रत्ययग्रहणं किम् ? कृत्स्नप्रत्ययलोपे यथा स्यात् । इह मा भूत्—आघ्नीय[21] । सङ्ग्मीय[22] (का.सं. ६.९) । हनिगम्यो[23]र्लिङात्मनेपदे 'लिङः सलोपोऽनन्त्यस्य' (७.२.७९/२२११) इति [24]सीयुट्सकारलोपः [25]प्रत्ययैकदेशलोपः, तत्र[26] [27]प्रत्ययलक्षणेन झलि इत्यनुनासिकलोपो न भवति (६.४.३७/२४२८) । प्रत्ययलक्षणम् इति किम् ? रायः [28]कुलं रैकुलम् । गवे हितम् गोहितम् (म.भा. १. १६१) । आयवादेशौ न भवतः [29]वर्णाश्रयत्वात् ॥

## न लुमताऽङ्गस्य । (६३/२६३)

पूर्वेण अतिप्रसक्तं[30] प्रत्यय[31]लक्षणम् इति विशेषे प्रतिषेधः उच्यते । लुमता [32]शब्देन लुप्ते[33] प्रत्यये यदङ्गं, तस्य प्रत्ययलक्षणं कार्यं न भवति । गर्गाः[34] । मृष्टः । जुहुतः । [35]यञ्शपोर्लुमता लुप्तयोरङ्गस्य [36]वृद्धिगुणौ न भवतः । लुमता इति किम् ? कार्यते । हार्यते (६.४.५१/२३१३) । अङ्गस्य इति किम् ? पञ्च । सप्त[37] । पयः । साम[38] ॥

## अचोऽन्त्यादि टि । (६४/७९)

अचः इति निर्धारणे षष्ठी । जातावेकवचनम् । अचां सन्निविष्टानां योऽन्त्योऽच् तदादि [39]शब्दरूपं टिसञ्ज्ञं भवति । अग्निचित्–इच्छब्दः । सोमसुत्–उच्छब्दः । आताम्, आथाम्–आम्शब्दः । पचेते, पचेथे । टिप्रदेशाः–'टित आत्मनेपदानां टेरे' (३.४.७९/२२३३) इत्येवमादयः ॥

---

1. तद्भावितस्य फ. 2. लुक्संज्ञया क.ड.फ.ह. 3. श्लुसंज्ञया क.ड.फ, प्रत्ययादर्शनं इत्यधिकम् ह. 4. लुप्सञ्ज्ञया क. 5. प्रत्ययादर्शनम् इत्यधिकम् ह. 6. भविष्यति इति क.ड. 7. च नास्ति फ, भाविनीयं अ. 8. विज्ञास्यते ह. 9. वरुणाः ह. 10. नु नास्ति ग. ब. फ, यथा स्यात् ह. 11. इदं नास्ति अ. ग. ड. 12. सति ग. फ, प्रत्ययलोपे तु ह. 13. प्रत्ययहेतुकार्यं ह. 14. नास्ति ग. फ. ह. 15. अधूमः ह. 16. तिप्शपो लुकि ड. 17. तिपो लुकि ड. 18. धत्व ड. 19. कृतेषु नास्ति ग. 20. प्रत्ययग्रहणेऽनुवर्तमाने क. ड. 21. आघ्नीत ग. ड. फ. ई. 22. सं रायस्पोषेण ग्मीय (का. सं. ६.९), संग्मीत क. 23. लिङि आत्मनेपदे ड. 24. सीयुटः क, सीयुट्सकारस फ. 25. प्रत्ययैकदेशस्य फ. ह. 26. अत्र ग. 27. प्रत्ययलक्षणेऽङ्गुली क, प्रत्ययलक्षणे ड. 28. कुशलं, रैकुशलं क, रायः कुलम् नास्ति ग. 29. आश्रयत्वात् ग. 30. इति फ, पूर्वेण इति प्रसक्तं ग, पूर्वेणातिप्रसक्तस्य विशेषप्रतिषेध उच्यते ह. अ. क. 31. प्रत्यय नास्ति फ. 32. शब्देन नास्ति फ. ह. 33. लुप्ते नास्ति ह. 34. विदाः ह. 35. शब्यञोः अ. क. 36. गुणवृद्धी अ.ब.क.ड.ड्.फ.ग. 37. नव, दश फ, नव ग. 38. सामः ग. 39. शब्दस्वरूपं क.

## अलोऽन्त्यात् पूर्व उपधा । (६५/२४९)

धात्वादौ वर्णसमुदायेऽन्त्यादलः [1]पूर्वो यो वर्णः सो[2]ऽल् एव उपधासञ्ज्ञो भवति । पच्, पठ्–अकारः । [3]भिद्, छिद्–इकारः । बुध्, युध्[4]–उकारः । वृत्, वृध्–ऋकारः । अलः इति किम्? शिष्टः[5], शिष्टवान् (म.भा. १. १६६) । समुदायात् पूर्वस्य मा भूत् । [6]उपधाप्रदेशाः– 'अत उपधायाः' (७.२.११५/२२८२) इत्येवमादयः ॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य । (६६/४०)

तस्मिन् इति [7]सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य । 'इको यणचि' (६.१.७७/४७)–दध्युदकम् । [8]मध्विदम् । पचत्योदनम् । निर्दिष्टग्रहणमान[9]न्तर्यार्थम् । अग्निचिदत्र इति व्यवहितस्य मा भूत् ॥

## तस्मादित्युत्तरस्य । (६७/४१)

निर्दिष्टग्रहणम् [10]अनुवर्तते । तस्मात् इति पञ्चम्य[11]र्थनिर्देश उत्तरस्यैव कार्यं भवति, न पूर्वस्य । 'तिङ्ङतिङः' (८.१.२८/३९३५)–[12]ओदनं पचति । इह न[13] भवति– पचत्योदनम् [14]इति ॥

## स्वं रूपं शब्दस्याशब्दसञ्ज्ञा । (६८/२५)

[15]शास्त्रे स्वमेव [16]रूपं शब्दस्य ग्राह्यं बोध्यं[17] प्रत्याय्यं भवति,[18] न[19] बाह्योऽर्थः, शब्दसञ्ज्ञां वर्जयित्वा । शब्देनार्था[20]वगतेरर्थे कार्यस्या[21]सम्भवात् तद्वाचिनां शब्दानां सम्प्रत्ययो मा भूत् इति सूत्रमि[22]दमारभ्यते । 'अग्नेर्ढक्' (४.२.३३/१२३६)–'आग्नेयमष्टाकपालं[23] निर्वपेत्' (वै.श्रौ.सू. १.१९) । अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न[24] ज्वलनः, पावकः, धूमकेतुः इति । नातः प्रत्ययो भवति । '[25]उदश्वितोऽन्यतरस्याम्' (४.२.१९/१२२०)– औदश्वित्कम्[26] । औदश्वितम् । तक्रम्, अरिष्टं, [27]कालशेयं, दण्डाहतं, [28]मथितम् इति नातः प्रत्ययो भवति । अशब्दसञ्ज्ञा इति किम्? 'दाधा घ्वदाप्' (१.१.२०/२३७३), 'तरप्तमपौ घः' (१.१.२३/२००३), [29]घुग्रहणेषु घग्रहणेषु च सञ्ज्ञिनां[30] ग्रहणम्, न सञ्ज्ञायाः ।

[८] सित्तद्विशेषाणां वृक्षाद्यर्थम् । (म.भा. १.१७६)

[31]सिन्निर्देशः कर्तव्यः । ततो वक्तव्यम् तद्विशेषाणां ग्रहणं भवति इति । किं प्रयोजनम्? वृक्षाद्यर्थम् । 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' (२.४.१२/९१६) इति–प्लक्षन्यग्रोधम्[32], प्लक्ष-न्यग्रोधाः ।

---

1. पूर्वोऽलेव क. ड. फ, पूर्वो वर्णः ह. 2. स उपधासञ्ज्ञः ब, नास्ति ह. 3. भिदि । छिदि ग. 4. युध् नास्ति फ. 5. शिष्टः नास्ति ग. 6. तेन शकारस्य इकारो न भवति इत्यधिकम ग, तेन शकारस्य संश्रयो न भवति इत्यधिकम् ह. 7. सप्तमीनिर्देशे ड, सप्तम्यर्थे निर्देशे ह. 8. नास्ति ग. 9. आनन्त्यस्यार्थम् ग. 10. इह इत्यधिकम् ह. 11. पञ्चम्यन्तनिर्देशे उत्तरस्यैव ह. 12. इति इत्यधिकम् फ, तिङः ह. 13. तु न फ. 14. इति नास्ति फ. 15. इह इत्यधिकम् ग. ड. फ. ह. 16. स्वं रूपमेव ग. 17. बोद्धव्यं ग. ह. 18. इत्यर्थः इत्यधिकम् ह. 19. न तु ग. 20. अर्थगतेः क. 21. असंभाविनां शब्दानाम् ह. 22. इदं नास्ति क. 23. पुरोडाशं इत्यधिकम् ड. 24. न नास्ति ब. क, न अनलः ग. 25. उदश्वितो—नातः प्रत्ययो भवति नास्ति ब. 26. नास्ति अ.क, औदश्वित्कः ग. ह, औदश्वितम् नास्ति ह. 27. कालसेयं ड, नास्ति ग. 28. दण्डाहत्याशेषम् ग. 29. इति इत्यधिकम् ग. 30. संज्ञिनः क. ड. 31. सिनिर्देशः क. ह. 32. नास्ति ब, प्लक्षश्चासौ न्यग्रोधश्च प्लक्षन्यग्रोधौ ह.

[९] पित्पर्यायवचनस्य[1] च स्वाद्यर्थम्। (म.भा. १.१७७)

[2]पिन्निर्देशः कर्तव्यः। ततो वक्तव्यं [3]पर्यायवचनस्य ग्रहणं भवति, चकारात्[4] स्वस्य रूपस्य[5] तद्विशेषाणां च इति। किं प्रयोजनम्? स्वाद्यर्थम्। 'स्वे पुषः' (३.४.४०/३३६१)। स्वपोषं पुष्टः[6]। रैपोषम्[7]। धनपोषम्। अश्वपोषम्। गोपोषम्।

[१०] जित्पर्यायवचनस्यैव राजाद्यर्थम्। (म.भा. १.१७७)

जिन्निर्देशः कर्तव्यः। [8]ततो वक्तव्यम् पर्यायवचनस्यैव ग्रहणं भवति [9]इति, न स्वरूपस्य, नापि [10]तद्विशेषाणाम्। किं प्रयोजनम्? राजाद्यर्थम्। 'सभा राजाऽमनुष्यपूर्वा' (२.४.२३/८२६) –इनसभम्। ईश्वरसभम्। [11]तस्यैव न भवति– राजसभा। तद्विशेषाणां च[12] न भवति–[13]पुष्यमित्रसभा। चन्द्रगुप्तसभा।

[११] [14]झित्तद्विशेषाणां च मत्स्याद्यर्थम्। (म.भा. १.१७७)

झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम् तस्य च ग्रहणं भवति तद्विशेषाणां च [15]इति। किं प्रयोजनम्? [16]मत्स्याद्यर्थम्। 'पक्षिमत्स्यमृगान् हन्ति' (४.४.३५/१५८५) इति ठक्–[17]पाक्षिकः। मात्स्यिकः[18]। तद्विशेषाणाम्[19]–[20]शाकुनिकः। पर्यायाणां न भवति–अजिह्मान् हन्ति, अनिमिषान्[21] हन्ति इति। [22]अथैकस्येष्यते (म.भा. १ १७७), मीनान् हन्ति इति[23] मैनिकः[24]॥

## अणुदित् सवर्णस्य चाप्रत्ययः। (६९/१४)

परेण णकारेण प्रत्याहारग्रहणम्[25]। अण्[26] गृह्यमाण उदिच्च [27]सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा। 'आद् गुणः' (६.१.८७/६९), 'अस्य च्वौ' (७.४.३२/२११८), 'यस्येति च' (६.४.१४८/३११)। स्वरानुनासिक्यकालभिन्नस्य[28] ग्रहणं भवति। (म.भा. १. १७८)। उदित् खल्वपि। 'चुटू' (१.३.७/१८९), 'लशक्वतद्धिते' (१.३.८/१९५)। [29]चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति। अप्रत्ययः इति किम्? [30]'सनाशंसभिक्ष उः' (३.२.१६८/३१४८), 'अ साम्प्रतिके' (४.३.९/१३७९), दीर्घो न भवति॥

## तपरस्तत्कालस्य। (७०/१५)

[31]तः परो [32]यस्मात् सोऽयं तपरः, तादपि परः तपरः। तपरो वर्णस्तत्कालस्य, आत्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति, स्वस्य च रूपस्य। विध्यर्थमिदम्[33]। अण् इति [34]नानुवर्तते। अणामन्येषां च तपराणाम् इदमेव

---

1. अन्यरूपस्य तद्विशेषाणाम् इत्यधिकम् ह. 2. निर्देशः क.ड. 3. पित्पर्याय ग.ह., पर्यायस्य ग, पर्यायस्य च ड. 4. च इत्यधिकं ड.ह. ई. 5. रूपस्य नास्ति ग. 6. पुष्टः नास्ति क. 7. नास्ति ड. 8. वाक्यमिदं नास्ति ह. 9. इति नास्ति क. 10. तद् नास्ति फ. 11. स्वस्यैव ग. 12. च नास्ति फ. 13. पुष्पमित्रसभा क.फ. 14. झित् तस्य च ह. 15. ग्राहकं इत्यधिकम् ह, ग्रहणं इत्यधिकम् ग. 16. नास्ति ड. 17. नास्ति क.ड.फ.ह. 18. मात्सकः फ, मात्सिकः ह, मार्गिकः अ. 19. च इत्यधिकम् क. फ. 20. शाकुलिकः क, शाकलिकः, शाष्कुलिकः ह. 21. अनिर्दिष्टान् ह. 22. अस्यैकस्य पर्यायवचनस्येष्यते ब. क. ड. ह. ई. 23. इति नास्ति क. ड. ह, मीनान्––मैनिकः नास्ति ह. 24. इति इत्यधिकम् फ. 25. भवति इत्यधिकम् ग. 26. अनुदिच्च गृह्यमाणः क. 27. सवर्णस्य ग.फ.ह. 28. अपि इत्यधिकम् क. ड. फ, नासिक्यकाले भिन्नस्य च ग. ह. 29. चवर्गस्य टवर्गस्य ह. 30. चिकीर्षुः इत्यधिकम् क. ड. 31. तः परो यस्मात् स तपरः। तादपि परः तपरः। तपरो यो वर्णः तत्कालस्य आत्मनः तुल्यकालस्य ह. 32. अस्मात् क. ड. 33. सूत्रम् इत्यधिकम् क. ग. 34. न वर्तते ग.

[1]ग्रहणकशास्त्रम्। 'अतो भिस ऐस्' (७.१.९/२०३) इत्येवमादिषु [2]पूर्वग्रहणकशास्त्रं न [3]प्रवर्तत एव। अतपरा [4]अणस्तस्यावकाशः[5]। किमुदाहरणम्? 'अतो भिस ऐस्' (७.१.९/२०३)–वृक्षैः। प्लक्षैः[6]। 'विड्वनोरनुनासिकस्यात्' (६.४.४१/२९८२)–अब्जाः, गोजाः (ऋ.४.४०.५)। तत्कालस्य इति किम्? खट्वाभिः। मालाभिः॥

## [7]आदिरन्त्येन सहेता। (७१/२)

[8]आदिरन्त्येन इत्सञ्ज्ञकेन सह गृह्यमाणस्तन्मध्य[9]पतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य। अण्। अक्। अच्[10]। हल्। सुप्। तिङ्[11]। अन्त्येन इति किम्? सुट् इति [12]तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत्[13]॥

## येन विधिस्तदन्तस्य। (७२/२६)

येन [14]विशेषणेन विधिर्विधीयते स तदन्तस्य [15]आत्मान्तस्य समुदायस्य [16]ग्राहको भवति, स्वस्य च रूपस्य। 'एरच्' (३.३.५६/३२३१), इवर्णान्ताद्[17] अच्प्रत्ययो भवति---चयः। जयः[18]। अयः। 'ओरावश्यके' (३.१.१२५/२८८६), उवर्णान्ताद् ण्यद्[19] भवति–अवश्यलाव्यम्। [20]अवश्यपाव्यम्।

[१२] [21]समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः[22]। (म.भा. १.१८४)

[23]द्वितीयान्तं श्रितादिभिः सह समस्यते (२.१.२४/६८६)–कष्टश्रितः। इह मा भूत्–कष्टं परमश्रित [24]इति। प्रत्ययविधौ–'[25]नडादिभ्यः फक्' (४.१.९९/११०१), नडस्यापत्यं नाडायनः। इह मा भूत्–सूत्रनडस्यापत्यं[26] सौत्रनाडिः। किमविशेषेण? न इत्याह (म.भा. १.१८३)।

[१३] उगिद्वर्णग्रहणवर्जम् [27]इति वाच्यम्। (म.भा. १.१८५)

'उगितश्च' (४.१.६/४५५) इति ङीप्प्रत्ययः तदन्तादपि[28] भवति---भवती,[29] अतिभवती। [30]वर्णग्रहणम्[31]---'अत इञ्' (४.१.९५/१०९५), दाक्षिः। प्लाक्षिः।

[१४] यस्मिन् विधिस्तदादावल्ग्रहणे[32]। (म.भा. १.१८८)

[33]अल्ग्रहणेषु यस्मिन् विधिस्तदादौ [34]इति वक्तव्यम्। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६.४.७७/२७१) इति---श्रियः। भ्रुवः[35]॥

---

1. ग्राहकशास्त्रम् ह. 2. पूर्वं ड. ह. ई, पूर्वग्राहकशास्त्रम् ह. 3. प्रवृत्तमेव अ. क. 4. अणः नास्ति ग. 5. इति इत्यधिकम् क. ड. 6. प्लक्षैः नास्ति ई. 7. आदिः नास्ति क. 8. आदिर्वर्णोऽन्त्येन इता सह ग, अन्त्येन इता इत्सञ्ज्ञकेन क. ड. 9. मध्यवर्तिनाम् ड. ह. 10. अच् नास्ति फ. 11. आदिग्रहणं स्पष्टार्थम् इत्यधिकम् ग. फ. 12. तृतीयैकवचने फ. 13. इति इत्यधिकम् फ. 14. शब्देन ग. फ. 15. आत्मान्तस्य नास्ति ह. 16. सञ्ज्ञा क. ग. 17. धातोः इत्यधिकम् अ, इवर्णान्तात् प्रत्ययो भवति ब. 18. जयः, अजः ह, जपः ब, अयः नास्ति फ. 19. ण्यत्प्रत्ययः ग. फ. ह. 20. अवश्यभाव्यम् अ. इ. फ. ह, अवश्यवाच्यम् ह. 21. प्रतिषेधः समासविधौ प्रत्ययविधौ च तदन्तविधिः क. ड. फ, तदन्तविधौ प्रतिषेधः ग. 22. वक्तव्यः नास्ति फ. 23. द्वितीया श्रितादिभिः ई. 24. इति नास्ति क. ड. फ. 25. सूत्रमिदं नास्ति ह. 26. इति इत्यधिकम् ग. ह, सौत्रनाडिः नास्ति फ. ह. 27. इति नास्ति क. ड. फ, वाच्यम् नास्ति ह. 28. अपि नास्ति ह. 29. भवती नास्ति फ, महती। अतिमहती क. ड. 30. वर्णग्रहणे ह. 31. इति किम्? इत्यधिकं क. ग. फ. 32. इति वक्तव्यम् इत्यधिकम् ग. ह. 33. अल्ग्रहणे ड, वाक्यमिदं नास्ति ग. ह. 34. इति नास्ति फ. 35. श्रियौ, भ्रुवौ क. फ.

## वृद्धिर्यस्याचामादिस्तद् वृद्धम् । (७३/१३३५)

यस्य इति समुदाय उच्यते । अचां मध्ये यस्य वृद्धिसञ्ज्ञक आदिभूतः, [1]तच्छब्दरूपं वृद्धसञ्ज्ञं भवति । अचाम् इति[2] जातौ[3] बहुवचनम् । शालीयः । मालीयः । औपगवीयः । कापटवीयः[4] (४.२.११४/१३३७) । आदिः इति किम् ? सभासन्नयने भवः साभासन्नयनः (४.३.५३/१४२८) । (म.भा. १.१८९)

[१५] वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या । (म.भा. १.१८९)

देवदत्तीयाः । दैवदत्ताः[5] (४.३.१२०/१५००) ।

[१६] गोत्रान्तादसमस्तवत्प्रत्ययो भवतीति वक्तव्यम् । (म.भा. १.१९०)

घृतप्रधानो रौढिः घृतरौढिः । तस्य छात्रा घृतरौढीयाः । ओदनप्रधानः पाणिनिः ओदनपाणिनिः । तस्य छात्रा ओदनपाणिनीयाः । [6]वृद्धाम्भीयाः । [7]वृद्धकाश्यपीयाः ।

[१७] जिह्वाकात्यहरितका[8]त्यवर्जम् । (म.भा. १.१९०)

जैह्वाकाताः । [9]हारितकाताः (४.३.१२०/१५००) ॥

## त्यदादीनि च । (७४/१३३६)

यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते । इह तु न सम्बध्यते । त्यदादीनि शब्दरूपाणि वृद्धसञ्ज्ञानि भवन्ति । [10]त्यदीयम् । तदीयम् । एतदीयम् । इदमीयम् । अदसीयम् । [11]त्वदीयम् । [12]त्वादायनिः (४.१.१५७/११८१) । मदीयम् । मादायनिः[13] । भवदीयम् । किमीयम्[14] ॥

## एङ् प्राचां देशे । (७५/१३३८)

यस्याचामादिग्रहणम[15]नुवर्तते । एङ यस्य अचामादिः तत्[16] प्राचां देशाभिधाने वृद्धसञ्ज्ञं भवति । [17]एणीपचनीयः । [18]भोजकटीयः । [19]गोनर्दीयः । एङ इति किम् ? [20]आहिच्छत्रः । कान्यकुब्जः । प्राचाम् इति किम् ? देवदत्तो नाम वाहीकेषु ग्रामः, तत्र [21]भवः दैवदत्तः । देशे इति किम् ? गोमत्यां भवा मत्स्याः [22]गौमताः ॥

प्रागुदञ्चौ विभजते हंसः क्षीरोदके[23] यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः[24] पातु शरावती ॥

इति [25]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य प्रथमः पादः ॥

---

1. तत् नास्ति ह, तत्प्रातिपदिकं ग. 2. निर्धारणे षष्ठी इत्यधिकम् फ. 3. चेदं इत्यधिकं अ. फ. 4. नास्ति फ. 5. दैवदत्तः ग. 6. वृद्धाम्बीयाः अ. 7. वृद्धकाश्यपेयः ग. 8. हरितका इत्येव वर्जम् ग. 9. हारीतकाताः ह. 10. यदीयं क. ड, त्यदीयः, ददीयः ग, तदीयम्, एतदीयम् इति न स्तः क, एतीयम् ग. 11. त्वदीयम्, मदीयम् न स्तः क. 12. त्वदायनिः मदायनिः ग. 13. उदिचां गोत्राद् इति फिञ् इत्यधिकम् ग. 14. एकीयम्, द्वीयम्, युष्मदीयम्, अस्मदीयम् इत्यधिकम् अ, त्यदादिः सर्वाद्यन्तर्गणः इति । अथ त्यदादिगणः—त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत्, किम् इति त्यदादिः ड. 15. इह इत्यधिकम् इ, इत्यनुवर्तते फ. 16. तच्छब्दरूपं ग. ह. 17. एणीपचनीयम् अ. ब, एनीपचनीयाः ह. 18. भोजकाटीयः ब, भोजकटीयम् ग. 19. गोनगरीयः अ. ड, गोनर्दीयम् ग, गोनदीयाः ह. 20. आहिच्छत्रम्, कान्यकुब्जम् ह. 21. तत्र भवं देवदत्तम् ह. 22. गोमत्याः क. 23. क्षीरोदकं क. ड. फ. ह. 24. पुनातु सरस्वती क. 25. जयादित्यकाशिकायां ई.

## प्रथमाध्यायस्य द्वितीयः पादः

### गाङ्कुटादिभ्योऽञ्णिन्ङित्। (१/२४६१)

अतिदेशोऽयम्। गाङ इति [1]इङादेशो (२.४.४९/२४५९) गृहयते, न 'गाङ गतौ' (धा. पा. ९५०) इति, ङकारस्यानन्यार्थत्वात्। कुटादयोऽपि[2] 'कुट कौटिल्ये' (धा. पा. १३६७) इत्येत[3]दारभ्य यावत् 'कुङ शब्दे' (धा. पा. १४०२) [4]इति। एभ्यो गाङकुटादिभ्यः परे अञ्णितः प्रत्यया ङितो भवन्ति [5]ङिद्वद् भवन्ति इत्यर्थः। गाङः—अध्यगीष्ट (६.४.६६/२४६२)। अध्यगीषाताम्। अध्यगीषत। कुटादिभ्यः[6]—कुटिता[7] (१.१.५/२२१७)। [8]कुटितुम्। कुटितव्यम्। उत्पुटिता। उत्पुटितुम्। उत्पुटितव्यम्। अञ्णित् इति किम्? उत्कोटयति (३.१.२६/२५७६)। [9]उच्चुकोट (३.४.८२/२१७३)। उत्कोटकः[10] (३.१.१३३/२८९५)। उत्कोटो[11] (३.३.१८/३१८४) वर्तते।

[१८] व्यचेः कुटादित्वमनसीति वक्तव्यम्।

[12]विचिता। विचितुम्। विचितव्यम्। अनसि इति किम्? उरुव्यचाः[13] (ऋ.१.१०४.९)॥

### विज इट्। (२/२५३६)

'ओविजी भयचलनयोः' (धा.पा. १२९०), अस्मात्[14] परः इडादिः[15] प्रत्ययो [16]ङिद्वद् भवति। उद्विजिता[17]। उद्विजितुम्। उद्विजितव्यम्। [18]इट् इति किम्? [19]उद्वेजनम् (३.३.११३/२८४१)। उद्वेजनीयम् (३.१.९६/२८३४)॥

### विभाषोर्णोः। (३/२४४७)

इट् इति वर्तते। [20]'ऊर्णुञ् आच्छादने' (धा. पा. १०३९), अस्मात्[21] परः इडादिः[22] प्रत्ययो विभाषा[23] ङिद्वद् भवति। प्रोर्णुविता। प्रोर्णविता[24]। इट् इत्येव। प्रोर्णवनम्[25]। प्रोर्णवनीयम्॥

### सार्वधातुकमपित्। (४/२२३४)

सार्वधातुकं यद्[26] अपित् तन् ङिद्वद्[27] भवति। कुरुतः[28]। कुर्वन्ति। चिनुतः। चिन्वन्ति। सार्वधातुकम् इति किम्? कर्ता[29]। कर्तुम्। कर्तव्यम्। अपित्[30] इति किम्? करोति। करोषि[31]। करोमि।

### असंयोगाल्लिट् कित्। (५/२२४२)

अपित् इति[32] वर्तते। [33]असंयोगान्ताद् धातोः परो [34]लिट् प्रत्ययः अपित् किद्[35] भवति। [36]बिभिदतुः। बिभिदुः। चिच्छिदतुः। चिच्छिदुः। ईजतुः[37]। ईजुः। असंयोगात् इति किम्? सस्रंसे। [38]दध्वंसे। अपित् इत्येव[39]। बिभेद[40]॥

---

1. गाङादेशो ह. 2. अपि नास्ति क. ड. 3. इत्यत आरभ्य ड. 4. इति एतेभ्यः ड. फ. 5. ङिद्वद् नास्ति क. 6. कुटादिभ्यम् ग. 7. उत्कु० क. ड. ह. 8. नास्ति ग. 9. कुरुतः ब, नास्ति ग. 10. नास्ति ग. 11. उत्कटो ब. 12. उद्वि० फ. ग. ह. 13. उरुचाः फ. 14. धातोः इत्यधिकम् ग. 15. इडादिप्रत्ययः ग. 16. ङिद् फ. 17. उद्विजितौ ह. 18. उसिनि निम् ग. 19. नास्ति फ. ई, उद्विननीयम् ग, उद्वेनकः ह. 20. ऊर्ण ग. 21. अन्यात् परः ग. 22. इडादिप्रत्ययः क. ह. 23. विभाषा नास्ति फ. 24. प्रोर्णुवितुम्। प्रोर्णवितुम् फ. ग. ह, प्रोर्णवितव्यं ग. ह. 25. प्रोर्णवनीयः ह. 26. यत् नास्ति ह. 27. ङित् फ. 28. कुरुतः, कुर्वन्ति नास्ति ह. 29. हर्ता अ. क, कर्तुम् नास्ति अ. क. ड. 30. अपीत् ग. 31. करोषि करोमि नास्ति क. ड. 32. इत्येव क. 33. असंयोगात् ग. 34. लिट्प्रत्ययोऽपि ह. 35. किद्वत् अ. 36. नास्ति ग. 37. ईजतुः ईजुः नास्ति ग. 38. दध्वंसि ग. 39. इति किम्? ग. 40. बिभेदिथ ब. फ. ह.

## इन्धिभवतिभ्यां च । (६/३३९३)

इन्धि भवति इत्येताभ्यां [1]परो [2]लिट् प्रत्ययः किद् भवति । '[3]समीधे दस्यु[4]हन्तमम्' (ऋ.६.१६.१५)। पुत्र ईधे अथर्वणः' (ऋ. ६.१६.१४)। [5]भवतेः खल्वपि—बभूव । बभूविथ । इन्धेः संयोगार्थं [6]ग्रहणम् । भवतेः पिदर्थम्[7] (म. भा. १.१९४)।[8]अत्रेष्टिः—

[१७] [9]श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम् ।

[10]श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुः । देभतुः, देभुः । [11]परिषस्वजे, [12]परिषस्वजाते ॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा । (७/३३२३)

मृड मृद गुध कुष क्लिश वद वस इत्येतेभ्यः [13]परः [14]क्त्वाप्रत्ययः [15]किद् भवति । 'न क्त्वा सेट्'(१.२.१८/३३२२) इति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः । गुध-[16]कुष-क्लिशीनां तु 'रलो [17]व्युपधाद्धलादेः संश्च' (१.२.२६/२६१७) इति विकल्पे प्राप्ते [18]नित्यार्थं वचनम् । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । [19]क्लिशित्वा । उदित्वा । उषित्वा ॥

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । (८/२६०९)

रुद विद मुष ग्रहि स्वपि प्रच्छ इत्येतेभ्यः[20] संश्च क्त्वा च [21]कितौ भवतः । रुद-विद-मुषीणां 'रलो व्युपधाद्धलादेः संश्च' (१.२.२६/२६१७) इति विकल्पे प्राप्ते नित्यार्थं [22]ग्रहणम् । ग्रहेर्विध्यर्थमेव । स्वपिप्रच्छ्योः सन्नर्थं [23]ग्रहणम्। किदेव हि क्त्वा । रुदित्वा, रुरुदिषति । विदित्वा, विविदिषति । मुषित्वा, मुमुषिषति । गृहीत्वा, जिघृक्षति । सुप्त्वा, सुषुप्सति । पृष्ट्वा, पिपृच्छिषति । ग्रहादीनां कित्त्वात् सम्प्रसारणं भवति । '[24]किरश्च पञ्चभ्यः' (७.२.७५/२६११) इति प्रच्छेरिडागमः ॥

## इको झल् । (९/२६१२)

सन् इत्यनुवर्तते । क्त्वा इति निवृत्तम् । इगन्ताद् धातोः परो झलादिः सन् किद् भवति । चिचीषति । [25]तुष्टूषति । [26]चिकीर्षति । इकः इति किम् ? पिपासति । [27]तिष्ठासति । झल् इति किम् ? [28]शिशयिषते । [29]किमर्थमिदमुच्यते ? गुणो मा भूत् इति । 'अज्झनगमां सनि' (६.४.१६/२६१४) इति दीर्घत्वं[30]गुणस्य बाधकं भविष्यति? यथैव [31]तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि [32]बाधेत । तस्माद् [33]दीर्घत्वस्यावकाश[34]दानाय कित्त्व[35]मिदमारभ्यते । [36]चिचीषति इत्यादिषु [37]सावकाशं दीर्घत्वं परत्वाद् णिलोपेन बाध्यते । [38]ज्ञीप्सति (६.४.५१/२३१३) ।

---

1. परतो ग. 2. पित्प्रत्ययः ह. 3. समीये ग. 4. हनम् ब. 5. भवतिः ग.,
श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं किंचित् पञ्चैतानि न यङ्लुकि ॥ इत्यधिकम् फ. ग, इति ग.
6. वचनम् क.ड.फ. 7. वचनम् इत्यधिकम् अ.क.ड.फ, षिदर्थम् ग. 8. अत्रेष्टिः नास्ति फ. 9. ग्रन्थिर्दम्भिस्वजीनाम् ग. 10. श्रेधतुः । श्रेधुः । ग्रेधतुः ग्रेधुः । देहतुः । देहुः ग. 11. नास्ति अ. 12. परिषस्वजिरे फ. ग. ह. 13. परत्वात् ग. 14. सेट् प्रत्ययः ह. 15. किद्वत् ग. 16. क्लिशानां ग. 17. प्युपधाद् ग. 18. नित्यार्थं नास्ति ह. 19. क्लिशित्वा नास्ति फ. 20. परः इत्यधिकम् फ. ग. ह. 21. कितौ नास्ति ग. 22-23. वचनम् क.ग.ह.ड.फ. 24. तिरश्च ह. 25. तुतूषति फ, नास्ति ह. 26. चिचीर्षति ग.ह, जिहीर्षति क. फ. ह. 27. तितिष्ठासति ह. 28. शिशयिषति क, शिशैषते ह. 29. किमर्थं पुनरिदं ड. फ. ग. 30. गुणबाधकं फ. 31. हि इत्यधिकम् ह, यथैवं क. 32. बाधते ह. 33. द्वित्त्वस्य फ.ग. 34. प्रदानाय फ.ग, प्रदर्शनाय ह. 35. °दमुच्यते ग. 36. चिकीर्षति क. ह, इत्यादौ ड. फ. 37. सावकाशदीर्घत्वापरत्वलोपेन ग. ह. 38. नास्ति ग, ज्ञीप्सतीति फ.

इकः [1]कित्त्वं गुणो मा भूद् दीर्घारम्भात् कृते भवेत् ।
[2]अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥ १ ॥

सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ॥ २ ॥ (म. भा. १. १९७)

## हलन्ताच्च । (१०/२६१३)

इकः सन् झल् [3]कित् इति वर्तते । समीपवचनो[4]ऽन्तशब्दः । हल् चासावन्तश्च हलन्तः । [5]इगन्तादिक्समीपाद् हलः परः सन् [6]झलादिः किद् भवति । बिभित्सति । बुभुत्सते । इकः इत्येव । [7]यियक्षते । झल् इत्येव । [8]विवर्तिषते । दम्भेर्हल्ग्रहणस्य जाति[9]वाचकत्वात् सिद्धम् (म. भा. १.१९७), [10]धीप्सति, धिप्सति (६.४.२४/४१५) ॥

## लिङ्सिचावात्मनेपदेषु । (११/२३००)

हलन्तादिको [11]झल् कित् इति वर्तते । सन् इति निवृत्तम् । इगन्ताद् [12]इक्समीपाद्धलःपरौ [13]झलादी लिङ्सिचौ [14]आत्मनेपदेषु परतः कितौ भवतः । [15]भित्सीष्ट, भुत्सीष्ट । [16]सिचि खल्वपि––अभित्त, अबुद्ध । इकः इत्येव । [17]यक्षीष्ट, अयष्ट । [18]सम्प्रसारणं (६.१.१५/२४०९) [19]हि स्यात् । आत्मनेपदेषु इति किम् ? अस्राक्षीत् । अद्राक्षीत् । 'सृजिदृशोर्झल्यमकिति' (६.१.५८/२४०५) इत्यमागमो न स्यात् । [20]हलन्तात् इत्येव । चेषीष्ट, अचेष्ट । गुणो न स्यात् । झल् इत्येव । वर्तिषीष्ट, [21]अवर्तिष्ट । गुणो न स्यात् । [22]लिङ्सिचौ इति किम् ? द्वेष्टा । द्वेक्ष्यति ॥

## उश्च । (१२/२३६८)

ऋवर्णान्ताद्धातोः परौ लिङ्सिचौ आत्मनेपदेषु झलादी कितौ भवतः । [23]कृषीष्ट । हृषीष्ट । [24]सिचः खल्वपि-अकृत । अहृत । झल् इत्येव । वरिषीष्ट । अवरिष्ट । '[25]वृतो वा' (७.२.३८/२३९१) [26]अवरीष्ट ॥

## वा गमः । (१३/२७००)

लिङ्सिचावात्मनेपदेषु इति वर्तते । गमेर्धातोः परौ[27] लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः । [28]संगसीष्ट, संगसीष्ट । [29]सिचः खल्वपि––समगंस्त, समगत । [30]कित्त्वपक्षे अनुनासिकलोपो भवति [31]'अनुदात्तोपदेशवनतितनोत्यादीनाम् (६.४.३७/२४२८) इति ॥

---

1. कित्त्वाद् गुणो भवेत् ह. 2. अनर्थकं––प्रयोजनम् नास्ति ग. 3. कित् नास्ति फ, इति च वर्तते ह. 4. अन्तः शब्दः क. 5. इगन्तादिक्समीपगतात् क. 6. झलादिः सन् ह. फ. 7. इयक्षते ह. 8. विवर्धिषते क. ह. ग. 9. वाचित्वात् ह. 10. धीप्सति नास्ति क.ड. 11. झलिति वर्तते फ. ग. 12. इकः समीपगतात् क. 13. झलि ग, नास्ति ह. 14. आत्मने ब, आत्मनेपदेषु परेषु क. 15. भित्सीष्टा ग, भुत्सीष्ट नास्ति ब. 16. सिचः अ. क. फ. ह. ड. 17. पक्षीष्ट । अपष्ट ब, अवर्तिषीष्ट ह, विवक्षति ड. 18. संप्रसारणं––द्वेक्ष्यति नास्ति ह, कित्त्वं फ, कित्त्वे ग. 19. हि नास्ति फ. ग. 20. हलन्तात्–– स्यात् नास्ति फ. 21. अवर्तिष्ट नास्ति फ. 22. लिङ्सिचौ––द्वेक्ष्यति नास्ति ड. 23. संगसीष्ट ग. 24. सिच् ब. क. ड. 25. वृतो नास्ति अ. क. ड. ब. फ. 26. ससूत्रमुदाहरणमिदं नास्ति ह. 27. यौ इत्यधिकम् फ. 28. संगसीष्ट नास्ति ड. २९. वाक्यमिदं नास्ति ब, सिच् क. 30. सित्त्वपक्षे ग. 31. सूत्रमिदं नास्ति ह.

## हनः सिच्। (१४/२६९७)

हन्तेर्धातोः परः सिच् किद् भवति[1]। आहत, [2]आहसाताम्, आहसत। सिचः कित्त्वादनुनासिकलोपः (६.४.३७/२४२८)। सिज्ग्रहणं लिङः[3]निवृत्त्यर्थम्। उत्तरत्रानुवृत्तिर्मा भूत्[4]। आत्मनेपदग्रहणमुत्तरार्थमनुवर्तते। इह तु [5]परस्मैपदे हन्तेर्वधभावस्य [6]नित्यत्वात् कित्त्वस्य प्रयोजनं नास्ति ॥

## यमो गन्धने। (१५/२६९८)

[7]सिच आत्मनेपदेषु इति वर्तते। यमेर्धातोर्गन्धने वर्तमानात् परः सिच्[8]प्रत्ययः किद् भवति आत्मनेपदेषु परतः। गन्धनं सूचनं, [9]परेण प्रच्छाद्यमानस्या[10]वद्यस्याविष्करणम्[11]। अनेकार्थत्वाद् धातूनां यमिस्तत्र वर्तते। उदायत, उदायसाताम्, उदायसत। सूचितवान् इत्यर्थः। सिचः कित्त्वादनुनासिकलोपः (६.४.३७/२४२८)। 'आङो यमहनः' (१.३.२८/२६९५) इत्यात्मनेपदम्। गन्धन इति किम्? [12]उदायंस्त पादम्। उदायंस्त कूपाद् [13]उदकम्। [14]उध्दृतवान् इत्यर्थः। सकर्मकत्वेऽपि 'समुदाङ्भ्यो यमोऽग्रन्थे' (१.३.७५/२७४२) इत्यात्मनेपदम् ॥

## विभाषोपयमने। (१६/२७३०)

यमः सिजात्मनेपदेषु इति वर्तते। यमे[15]र्धातोः उपयमने वर्तमानात् परः [16]सिच्प्रत्ययो विभाषा किद् भवति आत्मनेपदेषु परतः। उपायत कन्याम्, उपायंस्त कन्याम्। [17]उपायत भार्याम्, उपायंस्त भार्याम्। उपयमनं [18]स्वीकरणं, विवाहः, दारकर्म, पाणिग्रहणम् [19]इत्यर्थः। 'उपाद्यमः [20]स्वकरणे' (१.३.५६/२७२९) इत्यात्मनेपदम् ॥

## स्थाघ्वोरिच्च। (१७/२३८९)

सिजात्मनेपदेषु इति [21]वर्तते। तिष्ठतेर्धातोः घुसञ्ज्ञकानां च इकारश्चा[22]न्तादेशः सिच्च[23] किद् भवति आत्मनेपदेषु परतः। उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसञ्ज्ञकानाम्—[24]अदित। अधित।

इच्च [25]कस्य तकारेत्त्वं [26]दीर्घो मा भूदृतेऽपि सः।
[27]अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥ (म. भा. १.१९९)

## न क्त्वा सेट्। (१८/३३२२)

क्त्वा प्रत्ययः सेण् न किद् भवति। देवित्वा। [28]वर्तित्वा। सेट् इति किम्? कृत्वा। [29]हुत्वा। [30]क्त्वाग्रहणं किम्? निगृहीतिः (का.सं.२०.५)। उपस्निहितिः। निकुचितिः।

---

1. आत्मनेपदेषु परतः इत्यधिकम् ह. 2. आहसतां ह. 3. लिङो फ. 4. इति इत्यधिकम् फ, मा भूय इति ह 5. परस्मैपदेषु अ.ड.ह. 6. ङित्त्वात् फ. 7. सिचः अ.ब.इ.ग. 8. प्रत्ययः नास्ति क.ड.फ.ह. 9. परेण–आविष्करणम् नास्ति फ. 10. अर्थस्य इत्यधिकम् ह. 11. इत्यर्थः इत्यधिकम् ग. 12. आयंस्त फ.ह. 13. रज्जुम् अ.क.ड.फ.ग.ह. 14. नास्ति फ. 15. धातोः नास्ति ह. 16. सिज् वा ग, सिअसपो ब. 17. उदाहरणमिदं नास्ति फ. 18. स्वीकरणे ब, स्वीकारः ड. ह. 19. इति यावत् ग. 20. स्वीकरणं क. 21. अनुवर्तते ग. 22. अन्त्यादेशः फ. ह. 23. च नास्ति फ. 24. आदित ग. फ, आधित फ, आदिषाताम् आदिषत। आधिषाताम् आधिषत ह. 25. कारस्य क. 26. दीर्घो नास्ति क. 27. अनन्तप्लुतो अ. क. 28. वर्धित्वा क. ह, सेवित्वा क. ड. फ. ग. ह. 29. हुत्वा क. ड. ग. ह. फ. 30. क्त्वेति किम्? ग, क्त्वाग्रहणे ब.

न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न [1]परोक्षायां सनि झल्ग्रहणं विदुः ॥
[2]इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं [3]किदतीदेशान्नि[4]गृहीतिः प्रयोजनम् ॥ (म. भा. १.२००)

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । (१९/३०५२)

न सेट् [5]इति वर्तते । शीङ स्विदि मिदि क्ष्विदि [6]धृष् इत्येतेभ्यः परो निष्ठाप्रत्ययः सेण् न किद् भवति । शयितः, शयितवान् । [7]प्रस्वेदितः, प्रस्वेदितवान् । प्रमेदितः, प्रमेदितवान् । [8]प्रक्ष्वेदितः, प्रक्ष्वेदितवान् । प्रधर्षितः प्रधर्षितवान् । सेट् [9]इत्येव । स्विन्नः, स्विन्नवान् । स्विदादीनाम् 'आदितश्च' (७.२.१६/३०३६) इति निष्ठायामिट् प्रतिषिध्यते । 'विभाषा भावादिकर्मणोः' (७.२.१७/३०५४) इति [10]पक्षेऽभ्यनुज्ञायते स विषयः कित्त्वप्रतिषेधस्य ॥[11]

## मृषस्तितिक्षायाम् । (२०/३०५५)

मृषे[12]र्धातोः तितिक्षायामर्थे [13]निष्ठा सेण् न किद् भवति । तितिक्षा [14]क्षमा । [15]मर्षितः, मर्षितवान् ॥ [16]तितिक्षायाम् इति किम् ? [17]अपमृषितं वाक्यमाह ॥

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । (२१/३०५६)

निष्ठा सेण् न कित् इति वर्तते । [18]उदुपधाद् धातोः [19]परो भावे आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययः [20]सेडन्यतरस्यां न किद् भवति । द्युतितमनेन, द्योतितमनेन । प्रद्युतितः, प्रद्योतितः । [21]मुदितमनेन, [22]मोदितमनेन । प्रमुदितः, प्रमोदितः । उदुपधात् [23]इति किम्? [24]लिखितमनेन । भावादिकर्मणोः [25]इति किम्? रुचितं कार्षापणं [26]ददाति । सेट् [27]इत्येव । [28]प्रभुक्त ओदनः । व्यवस्थितविभाषा चेयम् । तेन शब्-विकरणानामेव भवति । 'गुध परिवेष्टने' (धा. पा. ११२०), [29]गुधितम् इत्यत्र न भवति ॥

## पूङः क्त्वा च । (२२/३०५१)

अन्यतरस्याम् इति न [30]स्वर्यते । उत्तरसूत्रे [31]पुनर्वावचनात् । [32]न सेट् इति वर्तते । [33]पूङश्च इड् विहितः 'क्लिशः क्त्वानिष्ठयोः' (७.२.५०/३०४९), 'पूङश्च' (७.२.५१/३०५०) इति । पूङः [34]परो निष्ठाप्रत्ययः क्त्वा च सेण् न किद् भवति । पवितः, पवितवान् । क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' (१.२.१८/३३२२) इति सिद्ध एव प्रतिषेधः । [35]तस्य ग्रहणमुत्तरार्थम् । तथा चोक्तं 'नित्यमकित्त्वमिडाद्योः [36]क्त्वानिष्ठयोः क्त्वाग्रहणमुत्तरार्थम्' इति (म. भा. १. २०१) ॥

---

1. परोक्षाणां ब. 2. उत्त्वं ह. 3. किदतिदेशात् ह. 4. क्त्वा च विग्रहात् ग. 5. किदिति अनुवर्तते ब.क.ड.ह. 6. धृष्ट ब. 7. प्रस्वेदितम् ग. 8. उदाहरणमिदं नास्ति ग. 9. इति किम् ह. 10. पक्षे इट् ग. 11. शीङोऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । तेन शेश्यितः, शेश्यितवान् इति इत्यधिकम् ड. 12. धातोः नास्ति फ. 13. अर्थवन्निष्ठाभावात् परः फ, वर्तमानात् ग. ह. 14. क्षान्तिः अ. क. फ. ह. ग. 15. मर्षिता ग. 16. तितिक्षायाम्—आह नास्ति ह. 17. अपमृषिं न वाक्यम् ब. 18. उकारोपधात् ग. 19. परो नास्ति फ. 20. सेण् न किद् भवत्यन्यतरस्याम् अ.क. 21. प्रमुदितम् फ. 22. नोदितमनेन ब. 23. इति नास्ति ह. 24. विदितमेनेन अ. फ, प्रलिखितः ह, प्रतिलिखितं ग. 25. इत्येव क. 26. ददाति नास्ति ड. फ., रुचिताः कार्षापणाः ह. 27. इति फ. 28. भुक्तमनेन । प्रभुक्त ओदनः ह. ग. 29. निगुधितम् क. ड. अ. 30. स्मर्यते क. ह, निवार्यते ग. 31. पुनर्वचनात् ग, वाग्रहणात् ह. 32. न नास्ति ह. 33. पूङश्चेतीड् ड. 34. परः क्त्वाप्रत्ययः निष्ठा च क. ड. फ, निष्ठाप्रत्ययः अ. 35. तस्य नास्ति फ. ग. ह. 36. क्त्वानिष्ठयोः नास्ति ब.क.ड.ग.ह.

## नोपधात् थफान्ताद्वा । (२३/३३२४)

निष्ठा इति निवृत्तम् । नकारोपधाद् धातोः थकारान्तात् फकारान्ताच् च [1]परः क्त्वा प्रत्ययः सेड् वा न किद् भवति । [2]ग्रथित्वा, ग्रन्थित्वा । श्रथित्वा, [3]श्रन्थित्वा । गुफित्वा, [4]गुम्फित्वा । नोपधात् इति किम् ? [5]रेफित्वा । [6]गोफित्वा । थफान्तात् इति किम्? [7]स्रंसित्वा । ध्वंसित्वा ॥

## वञ्चिलुञ्च्यृतश्च । (२४/३३२५)

वञ्चि लुञ्चि ऋत् इत्येतेभ्यः परः क्त्वा प्रत्ययः सेड् वा न किद् भवति । [8]वचित्वा, वञ्चित्वा । [9]लुचित्वा, लुञ्चित्वा । ऋतित्वा, [10]अर्तित्वा । ऋतेरीयङ् (३.१.२९/२४२२) आर्धधातुके विकल्पितः (३.१.३१/२३०५) । स यत्र पक्षे नास्ति तत्रेदमुदाहरणम् । सेट् इत्येव । वक्त्वा ॥

## तृषिमृषिकृशेः काश्यपस्य । (२५/३३२६)

'न क्त्वा सेट्' (१.२.१८/३३२२) इति प्रतिषेधे प्राप्ते कित्त्वं विकल्प्यते । तृषि मृषि कृशि इत्येतेभ्यः परः क्त्वा प्रत्ययः सेट् काश्यपस्याचार्यस्य [11]मते वा न किद् भवति । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृशित्वा, कर्शित्वा । काश्यपग्रहणं पूजार्थम् । वा इत्येव हि वर्तते (म. भा. १.२०१) ॥

## रलो व्युपधाद्धलादेः संश्च । (२६/२६१७)

वा इति वर्तते सेट् इति च । उश्च इश्च वी । [12]वी उपधे यस्य स व्युपधः। उकारोपधादिकारोपधाच् च धातो रलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा [13]कितौ भवतः । द्युतित्वा, द्योतित्वा । [14]दिद्युतिषते, दिद्योतिषते[15] । लिखित्वा, लेखित्वा । लिलिखिषति, लिलेखिषति । [16]रलः इति किम् ? देवित्वा, दिदेविषति । व्युपधात् इति किम्? वर्तित्वा, विवर्तिषते । हलादेः इति किम् ? एषित्वा, [17]एषिषिषति । सेट् इत्येव । भुक्त्वा, [18]बुभुक्षते ॥

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः । (२७/४)

ऊ इति [19]त्रयाणामयं 'मात्रिक-द्विमात्रिक-त्रिमात्रिकाणां [20]प्रश्लिष्टनिर्देशः' (तै.प्रा. १.३१) । ह्रस्वदीर्घप्लुतः इति द्वन्द्वैकवद्[21]भावे पुंल्लिङ्गनिर्देशः । [22]उ ऊ ऊ३ [23]इत्येवंकालो अज् यथाक्रमं ह्रस्वदीर्घप्लुतः इत्येवंसञ्ज्ञो भवति । उकालो ह्रस्वः—दधि । मधु । ऊकालो दीर्घः—कुमारी । गौरी । ऊ३कालः प्लुतः—देवदत्त३ [24]अत्र न्वसि । कालग्रहणं परिमाणार्थम् । दीर्घप्लुतयोः ह्रस्वसञ्ज्ञा मा भूत् । आलूय, प्रलूय, 'ह्रस्वस्य [25]पिति कृति तुक्' (६.१.७१/२८५८) इति

---

1. परतः क. 2. ग्रहीत्वा ग. 3. श्रन्थित्वा नास्ति फ. 4. गुम्फित्वा नास्ति फ. 5. रिफित्वा ब, नास्ति ग.ह. 6. नास्ति अ.क.फ.ग.ह. 7. श्रंसित्वा अ. 8. चित्वा ह. 9. लुचित्वा नास्ति क. 10. अर्त्रित्वा ब. 11. मतेन अ.क.ड.फ.ह. 12. ते उपधे अ.क.ह, इत्येतौ उपधे फ, तौ उपधे ग. 13. न इत्यधिकम् ड. 14. विदिद्युषते ह, विदिद्योतिषते फ. ह. 15. द्युति च व्योः संप्रसारणम् इत्यधिकम् फ. 16. रेलः क. 17. एषिषति क. ह. 18. बभक्षते क. 19. त्रयाणां वर्णानाम् फ, त्रयाणामेष ड, त्रयाणामेक अ. क. ह. 20. प्रश्लेषनिर्देशः अ. ब. क, प्रश्लेषः ड, प्रश्लिष्टनिर्देशः क्रियते ग. 21. भावपक्षे फ. 22. उऊऊभ्यः ग. 23. एवंकाला अचः यथाक्रमं ह्रस्वदीर्घप्लुतसञ्ज्ञा भवन्ति फ. ग. ह, यथाक्रमेण ह. 24. अत्रासि ड.फ.ग, अत्र त्वमसि ह, अत्र वसि ब. 25. पिति कृति तुक् नास्ति ड. फ. ग.

तुङ् न भवति। अज्-ग्रहणं संयोगा[1]च्समुदायनिवृत्त्यर्थम् (म. भा. १.२०६)। प्रतक्ष्य, [2]प्ररक्ष्य, ह्रस्वाश्रय[3]स्तुङ् मा भूत्। तितउच्छत्रम्, 'दीर्घात्'(६.१.७५/१४८), 'पदान्ताद् वा' (६.१.७६/१४९) इति विभाषा तुङ् मा भूत्[4] (म. भा. १.२०६)। ह्रस्वदीर्घप्लुतप्रदेशाः--'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७/३१८)। 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५/२२९८)। 'वाक्यस्य टेः प्लुत उदात्तः' (८.२.८२/९३)[5]॥

## अचश्च। (२८/३९)

[6]परिभाषा इयं स्थानिनियमार्था। ह्रस्वदीर्घप्लुताः स्वसञ्ज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः। [7]वक्ष्यति 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७/३१८)[8], रैं--अतिरि। नौ--अतिनु। गो--उपगु। अचः इति किम्? [9]सुवाग् ब्राह्मणकुलम्। 'अकृत्सार्वधातुकयोर्दीर्घः' (७.४.२५/२२९८)[10] --चीयते। [11]श्रूयते। अचः इति किम्? भिद्यते। छिद्यते (म. भा. १.२०५)। 'वाक्यस्य टेः प्लुत उदात्तः'(८.२.८२/९३)--[12]देवदत्त३। यज्ञदत्त३। अचः इति किम्? [13]अग्निचि३त्। सोमसु३त्। तकारस्य मा भूत्। [14]स्वसञ्ज्ञया विधाने नियमः (म. भा. १.२०६)। अच् [15]इति वर्तते। इह मा भूत्। द्यौः। पन्थाः। [16]सः। द्युभ्याम्। द्युभिः। [17]अत्र नियमो [18]नास्ति॥

## उच्चैरुदात्तः। (२९/९)

[19] अच् इति वर्तते। उदात्तादि[20]शब्दाः स्वरे वर्णधर्मे लोकवेदयोः [21]प्रसिद्धा एव। [22]ते इह तद्गुणेऽचि [23]परिभाष्यन्ते। उच्चैरुपलभ्यमानो [24]योऽच् [25]स उदात्तसञ्ज्ञो भवति। उच्चैः इति च श्रुतिप्रकर्षो न गृह्यते, उच्चैर्भाषते, [26]उच्चैः पठति इति। किं तर्हि? स्थानकृत[27]मुच्चत्वं [28]सञ्ज्ञिनो विशेषणम्। ताल्वादिषु हि [29]भागवत्सु स्थानेषु वर्णा[30]निष्पद्यन्ते। तत्र यः समाने [31]स्थाने ऊर्ध्वभागनिष्पन्नोऽ[32]च् स उदात्तसञ्ज्ञो भवति। यस्मिन्नुच्चार्यमाणे[33] गात्राणामायामो निग्रहो भवति, रूक्षता [34]अस्निग्धता स्वरस्य, संवृतता कण्ठविवरस्य[35] (म. भा. १.२०७)। ये। ते। [36]के। उदात्तप्रदेशाः--'आद्युदात्तश्च' (३.१.३/३७०८) इत्येवमादयः॥

## नीचैरनुदात्तः। (३०/६)

अच् इति वर्तते। नीचैरुपलभ्यमानो [37]योऽच् सोऽनुदात्तसञ्ज्ञो भवति। [38]समाने स्थाने [39]नीचभागे निष्पन्नोऽच् अनुदात्तः। यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो मार्दवं [40]भवति, स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्य उरुता [41]महत्ता (म. भा. १.२०७)। त्व सम सिम नेम[42]इत्यनुच्चानि। नमस्ते रुद्र नीलकण्ठ सहस्राक्ष। अनुदात्तप्रदेशाः-'अनुदात्तौ सुप्पितौ' (३.१.४/३७०९) इत्येवमादयः॥

---

1. समुदायस्य क. 2. नास्ति अ. 3. तुक् क, तु ह, तुग् अ. 4. इति इत्यधिकम् क. फ. 5. इत्येवमादयः इत्यधिकम् अ.क.ड.फ.ह. 6. वाक्यमिदं नास्ति फ.ग.ह. 7. वक्ष्यति नास्ति ह. 8. इति इत्यधिकम् फ. 9. सुवाग ह. 10. इति दीर्घः इत्यधिकम् ग. 11. स्तूयते अ. उ, सूयते क. 12. देवदत्त ३र्न ह, यज्ञदत्त३नास्ति ड. 13. अतिश्वी३त् ह. 14. संज्ञया क. ड. 15. हि अ. 16. इयम् फ. 17. वाक्यमिदं नास्ति क. फ. ह. 18. न भवति ग. 19. अच्--वर्तते नास्ति ह. 20. शब्दा नास्ति क. ड. 21. प्रसिद्ध क. ड. 22. ते नास्ति अ. फ, स क. 23. विपरिभाष्यते ह. 24. यो नास्ति ह. 25. स नास्ति फ. 26. नीचैः भाषते ह. 27. उच्चैस्त्वं ह. 28. संज्ञिन उदात्तस्य ड. 29. भगवत्सु ह. 30. निषद्यंते ह. 31. स्थाने नास्ति फ. 32. अच् नास्ति ह. 33. उच्चार्यमाण आयामो गात्राणाम् ब. क, आयमः ब, आयामः नास्ति ह. 34. अस्निग्धता नास्ति क. ड. 35. कण्ठविहारस्य ग, च इति ह, इति क. 36. के नास्ति ह. 37. यो सो नास्ति अ. क. फ. 38. समानस्थाने क. 39. नीचभागनिष्पन्नः ब. क. फ. ड, नीचैर्भागनिष्पन्नः ह. 40. भवति नास्ति ह. 41. महत्त्वं फ. ग. 42. इति समुच्चानि ब.

## समाहारः स्वरितः । (३१/७)

अच् इति वर्तते । उदात्तानुदात्तस्वर[1]समाहारो [2]योऽच् स स्वरितसञ्ज्ञो भवति । सामर्थ्याच् चात्र [3]लोकवेदयोः प्रसिद्धौ [4]गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाऽचौ । [5]तौ समाह्रियेते यस्मिन्नचि तस्य [6]स्वरितः इत्येषा संज्ञा [7]विधीयते । शिक्यम् । [8]कन्या । सामन्यः[9] । क्व । स्वरितप्रदेशाः—'तित् स्वरितम्' (६.१.१८५/३७२९) इत्येवमादयः ॥

## तस्यादित उदात्तमर्धह्रस्वम् । (३२/८)

[10]उदात्तानुदात्तस्वरसमाहारः [11]स्वरितः इत्युक्तम् । [12]तत्र न ज्ञायते [13]कस्मिन्नंशे उदात्तः [14]कस्मिन्ननुदात्तः, कियान् [15]वा उदात्तः कियान् वा अनुदात्तः इति। तदुभयम[16]नेनाख्यायते । [17]तस्य स्वरितस्य [18]आदावर्धह्रस्वमुदात्तम्, परिशिष्टमनुदात्तम्[19] । अर्धह्रस्वम् इति [20]चार्धमात्रोपलक्ष्यते । ह्रस्वग्रहणमतन्त्रम् । सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष[21] स्वरविभागः । शिक्यम् इत्यत्रार्धमात्रा आदित उदात्ता, [22]अपरार्धमात्रा अनुदात्ता, एकश्रुतिर्वा । कन्या इत्यत्रार्धमात्रा आदित उदात्ता [23]अध्यर्धमात्रा अनुदात्ता । माणवक३ माणवक (८.२.१०३/३६२२) इत्यत्रार्धमात्रा आदित उदात्ता [24]अर्धतृतीयमात्रा अनुदात्ता ॥

## एकश्रुति दूरात्सम्बुद्धौ । (३३/३६६२)

त्रैस्वर्ये[25] पदानां प्राप्ते दूरात् सम्बुद्धा[26]वैकश्रुत्यं विधीयते । एका श्रुतिर्यस्य तदिदमेकश्रुति । [27]एकश्रुति वाक्यं भवति । [28]दूरात् सम्बोधयति येन [29]वाक्येन तत् सम्बोधनं सम्बुद्धिः । न एकवचनं [30]सम्बुद्धिः । स्वराणामुदात्तादीनामविभागो [31]भेदतिरोधानमेकश्रुतिः । आगच्छ भो माणवक देवदत्त३ । दूरात् इति किम् ? [32] आगच्छ भो माणवक देवदत्त ॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु । (३४/३६६३)

त्रैस्वर्येण वेदे मन्त्राः पठचन्ते । तेषां[33]यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते जपन्यूङ्खसामानि वर्जयित्वा । यज्ञकर्मणि मन्त्राणामै[34]कश्रुत्यं भवति । 'अग्निर्मूर्धा दिवः [35]ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म्' (ऋ. ८.४४.१६) । यज्ञकर्मणि इति किम्? सम्पाठे मा भूत् । अजपेष्विति किम्? 'ममाग्ने वर्चो विहवेष्वस्तु' (ऋ. १०.१२८.१) । जपोऽ[36]नुकरणमन्त्र उपांशुप्रयोगः । [37]अन्यूङ्खेति किम् ? [38]न्यूङ्खा ओकाराः

---

1. स्वर नास्ति फ, उदात्तानुदात्तयोः ह. 2. योऽच् स नास्ति अ. क. ह. 3. लोके वेदे च फ, लोकवेदप्रसिद्धौ ह. 4. गुणौ नास्ति ब. ह. 5. तावेतौ ड. 6. स्वरितसञ्ज्ञा भवति फ. 7. धीय धीय ह. 8. कन्यम् फ. 9. सामान्यः क. ह., सामन्यं ड. 10. उदात्तानुदात्तसमाहारः ड. फ, उदात्तानुदात्तयोः ह. 11. स्वरित नास्ति ह. 12. अत्र फ. 13. कस्मिन्नवकाशे फ.ह. 14. कस्मिन्नवकाशे फ. 15. भागः इत्यधिकम् फ. ह. 16. अनेन नास्ति क.फ. 17. तस्य स्वरितस्य नास्ति क.ड.फ. 18. आदावुदात्तमर्धह्रस्वम् ह. 19. इति इत्यधिकम् क.ड.फ. 20. अर्धमात्राकालो लक्ष्यते फ. ह, अर्धमात्रा लक्ष्यते क. 21. एव इत्यधिकम् ड. 22. अपरा नास्ति अ. क. 23. अपरा इत्यधिकम् ह. 24. अपरा इत्यधिकम् ह. 25. एव इत्यधिकम् फ. 26. °वेकश्रुत्यं ड. 27. एकश्रुति नास्ति ह. 28. दूरात् सम्बोधयति नास्ति क. 29. वाक्येन नास्ति क. 30. सम्बुद्धिः नास्ति फ. 31. अभेदतिरोधानम् ब, उदात्तादीनां विभागो ह. 32. समीपे मा भूत् क. 33. यज्ञकर्मणि फ. 34. ऐकश्रुतिः ग. 35. ककुप् क. 36. अकरणमन्त्रः ब, अन्तःकरणमन्त्रः पमं. 37. अन्यूङ्खेष्विति क. फ. 38. न्यूङ्खे ओकाराः षट् तेषु केचिदुदात्ताः, केचिदनुदात्ताः ओ ओ ओ ओ ओ ओ म् । असामसु इति किम् 'परे ममाग्ने वर्चो विहवेष्वस्तु क, ओंकाराः फ.

षोडश। तेषु केचिदुदात्ताः केचिदनुदात्ताः[1]। [2]असामसु इति किम्? विश्वं समत्रिणं दह (जै.सं.अ.११)। सामानि वाक्य[3]विशेषस्थगीतय [4]उच्यन्ते । तत्रैकश्रुतिर्न भवति ॥

## उच्चैस्तरां वा वषट्कारः। (३५/३६६४)

यज्ञकर्मणि इति वर्तते । यज्ञकर्मणि वषट्कारः उच्चैस्तरां वा भवति एकश्रुतिर्वा । वषट्शब्देना[5]त्र वौषट् शब्दो लक्ष्यते । वौषट् [6]इत्यस्यैवेदं स्वरविधानम् । यद्येवं वौषड्ग्रहणमेव कस्मान् न कृतम्[7]? [8]वैचित्र्यार्थम् । विचित्रा हि सूत्रस्य कृतिः पाणिनेः । '[9]सोमस्याग्ने वीही३ वौ३षट् । सोमस्याग्ने [10]वीही३ वौ३षट्' (ऐ.ब्रा. ३.५.४.६.) ॥

## विभाषा छन्दसि। (३६/३६६५)

छन्दसि विषये विभाषा एकश्रुतिर्भवति । [11]पक्षान्तरे त्रैस्वर्यमेव [12]भवति । वा इति प्रकृते विभाषाग्रहणं यज्ञकर्मणि इत्यस्य निवृत्त्यर्थम् । [13]तेनायं [14]स्वाध्यायकालेऽपि पाक्षिक [15]ऐकश्रुत्यविधिर्भवति । 'इषे त्वोर्जे त्वा' । 'इषे त्वोर्जे त्वा' (वा सं. १.१.१)। 'अग्न आयाहि वीतये'। 'अग्न आयाहि वीतये' (ऋ.६.१६.१०) । 'अग्निमीळे पुरोहितम्'। 'अग्निमीळे पुरोहितम्' (ऋ. १.१.१)। 'शं नो देवीरभिष्टये'। 'शं नो देवीरभिष्टये' (ऋ. १०.९.४)[16] ॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः। (३७/३६६६)

सुब्रह्मण्या नाम निगदस्तत्र यज्ञकर्मणि (१.२.३४/३६६३) इति[17] 'विभाषा छन्दसि' (१.२.३६/३६६५) इति च एकश्रुतिः प्राप्ता प्रतिषिध्यते । सुब्रह्मण्यायामेकश्रुतिर्न भवति । यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति । 'सुब्रह्मण्योम् । इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्' (श. ब्रा. ३.३.१.१९)[18] । [19]अत्र सुब्रह्मण्योम् इत्यो[20]कारस्तित्स्वरेण स्वरितस्तस्योदात्तो विधीयते। इन्द्र आगच्छ इत्यामन्त्रितमाद्युदात्तम्। द्वितीयो [21]वर्णोऽनुदात्तः । [22]उदात्तादनुदात्तस्य स्वरितः (८.४.६६/३६६०) इति [23]स्वरितः प्रसक्तस्तस्यानेनोदात्तः क्रियते। तेन द्वावप्युदात्तौ [24]सम्पन्नौ। आगच्छ [25]इत्याकार उदात्तः ततः परोऽनुदात्तः स्वरितस्तस्यानेनोदात्तः क्रियते । [26]तदेवम् इन्द्र आगच्छ इति चत्वार उदात्ताः। पश्चिम एकोऽनुदात्तः । [27]हरिव आगच्छ इत्यनयैव प्रक्रियया चत्वार उदात्ताः द्वावनुदात्तौ । मेधातिथेः[28] इति षष्ठयन्तं परमामन्त्रितमनुप्रविशति[29] 'सुबामन्त्रिते पराङ्गवत्स्वरे' (२.१.२/३६५६) इति । ततः सकलस्या[30]मन्त्रिताद्युदात्तत्वे [31]कृते द्वितीयमक्षरमनुदात्तं, [32]तस्य 'उदात्तादनुदात्तस्य स्वरितः' (८.४.६६/३६६०) इति [33]स्वरितत्वे प्राप्ते इदमुदात्तत्वं

---

1. वृषा कपौ इत्यधिकम् ह. 2. असामेषु ग. ह. 3. विशेषस्था ड. ह. फ. 4. उच्यन्ते नास्ति फ. ह. 5. वात्र ह. 6. एतद् तस्येदं ह. 7. भवति इत्यधिकम् ग. 8. नास्ति ब. ड. फ. ह. 9. एते उदाहरणे न स्तः ग. 10. व्रीहौ ब. 11. पक्षे क. 12. भवति नास्ति क. 13. तेनेयं पाक्षिकी एकश्रुतिर्भवति ह. 14. स्वाध्यायाध्ययनकाले ड. 15. ऐकश्रुत्यविभक्तिः क. 16. व्यवस्थितविभाषाविकल्पोऽयम् इति केचित् । व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यं, ब्राह्मणदले नित्यमैकश्रुत्यम् इति । 'इच्छासंहितयोरार्षे छन्दो वेदे च छन्दसि' इति नानार्थकोशात् । छन्दसि वर्णसंहितायाम् इति भट्टाचार्यचरणा इति। भाषायामप्येकश्रुतिर्विभाषा भवति इति सिद्धम् इत्यधिकं मुद्रितपुस्तकेषु 17. च इत्यधिकम् ग. 18. इति इत्यधिकम् फ. 19. अत्र–उदात्तः नास्ति ह. ग. 20. ओंकारस्तित्स्वरेण क. ड. 21. वर्णो नास्ति ब. 22. तस्य इत्यधिकम् ड. 23. स्वरितप्रसक्तः क. 24. भवतः फ. 25. इत्यत्राकारः फ. 26. द्वावप्युदात्तौ संपन्नौ इत्यधिकम् फ. 27. हरव ह. 28. मेष ह. 29. इति ह. 30. आमान्त्रितस्याद्युदात्तत्वे फ. 31. कृते नास्ति ह. 32. भवति फ. 33. स्वरितत्वे प्राप्ते इदम् नास्ति ह.

विधीयते। [1]तेन द्वावप्युदात्तौ भवतः। शेषमनुदात्तम्। वृषणश्वस्य मेने इति समानं पूर्वेण। गौरावस्कन्दिन् इति तथैव द्वे आद्ये अक्षरे उदात्ते, शेषमनुदात्तम्[2]। अहल्यायै जार इति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः। द्वावुदात्तौ शेषमनुदात्तम्। कौशिकब्राह्मण इति [3]समस्तमामन्त्रितमाद्युदात्तं [4]तत्र पूर्ववद् [5]द्वावुदात्तौ [6]शेषमनुदात्तम्। एवं गौतमब्रुवाण इति [7]द्वावुदात्तौ शेषमनुदात्तम्। श्वः सुत्यामागच्छ मघवन् इति [8]श्वः-शब्द उदात्तः सुत्यामित्यन्तोदात्तः। [9]'सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (३.३.९९/३२७६) इति क्यपो विधाने उदात्तः इति वर्तते[10]। आगच्छ इति द्वावुदात्तौ। अन्त्योऽनुदात्तः। मघवन् इति [11]पदात् परमामन्त्रितं निहन्यते ॥

## देवब्रह्मणोरनुदात्तः। (३८/३६६७)

सुब्रह्मण्यायामेव 'देवा ब्रह्माणः' इति पठ्यते, [12]तत्र पूर्वेण स्वरितस्यो[13]दात्ते प्राप्तेऽनेनानुदात्तो विधीयते। [14]देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति। 'देवा ब्रह्माण आगच्छत'[15] (श. ब्रा. ३.३.१.२०)। द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे[16] [17]शेषनिघाते चोदात्तादनुदात्तस्य [18]स्वरितः कृतस्तस्यानुदात्तो भवति ॥

## स्वरितात् संहितायामनुदात्तानाम्। (३९/३६६८)

एकश्रुतिः इति[19]वर्तते। संहितायां विषये स्वरितात् परेषामनुदात्तानामेकश्रुतिर्भवति। 'इमं मे गङ्गे यमुने सरस्वति [20]शुतुद्रि' (ऋ. १०.७५.५)। माणवक जटिलकाध्यापक [21]क्व गमिष्यसि। इमम् इत्य[22]न्तोदात्तं, मे इति [23]अनुदात्तं [24]विधिकाल एव [25]निघातविधानात्। [26]तत् पुनः '[27]उदात्तादनुदात्तस्य स्वरितः' (८.४.६६/३६६०) इति [28]स्वरितं सम्पद्यते। तस्मात् स्वरितात् परेषामनुदात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति। सर्व एते आमन्त्रित[29]निघातेनानुदात्ताः। माणवक जटिलक[30] इति प्रथममामन्त्रितमाद्युदात्तं, [31]तस्य द्वितीयमक्षरं स्वरितं, ततः परेषामनुदात्तानामेकश्रुतिर्भवति। संहिताग्रहणं किम्? अवग्रहे मा भूत्। इमम् मे गङ्गे यमुने सरस्वति (ऋ. १०.७५.५) ॥

## उदात्तस्वरितपरस्य सन्नतरः। (४०/३६६९)

अनुदात्तग्रहण[32]मनुवर्तते। उदात्तः परो यस्मात् स उदात्तपरः। स्वरितः परो यस्मात् स [33]स्वरितपरः। उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति। अनुदात्ततरः इत्यर्थः। 'देवा [34]मरुतः पृश्निमातरोऽपः' (मै. ३.३१.१)। [35]मातरः इत्यनुदात्तः। अपः इत्यन्तोदात्तः 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (६.१.१७१/३७१७) इति। तत्रानुदात्तयोरेकादेश [36]ओकारोऽनुदात्तः। तस्यो[37]दात्ते परभूते सन्नतर आदेशो भवति। [38]'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि'

---

1. तेन नास्ति ह. 2. भवति इत्यधिकम् फ. 3. सर्वम् ग. 4. ततः परं ड. 5. द्वावुदात्तौ नास्ति ह. 6. शेषम् नास्ति ह. 7. द्वावप्यत्रोदात्तौ फ. 8. श्वः शब्दः––निहन्यते नास्ति अ. 9. सञ्ज्ञायां नास्ति क. ड. 10. श्रूयते अ. 11. पदान्तात् ड. 12. तस्य ग.फ. 13. उदात्तः प्राप्तः अ.क.ग.ह. 14. देवब्राह्मणोः ग. 15. आगच्छत आगच्छत क. ह. 16. कृते इत्यधिकम् अ. क. ग. 17. शेषस्य निघाते फ. ग. 18. स्वरित इति स्वरितस्य ग, कृतः नास्ति फ. 19. अनुवर्तते अ.क. 20. शुतुद्रि नास्ति फ.ग. 21. क्व गमिष्यसि नास्ति ग.ह. 22. अन्तोदात्तः ग. ह. फ. 23. अनुदात्तः फ. ग. 24. विधानकाले ग, विधिघात एव फ. 25. निघातात् फ. 26. तत् नास्ति ह. 27. उदात्तानुदात्तस्य ड. 28. स्वरितः क. ह. इति स्वरितं नास्ति फ. 29. °निपातेन ब. क, °निघातानुदात्ताः ड, °निघातेऽनुदात्ताः ह. 30. अध्यापक अ. क. फ. ग. जटिलक नास्ति ह. 31. तत्र ड. 32. °मिहानुवर्तते फ. 33. स्वरितः ह. 34. मारुतः ह. 35. इति पृश्निमातरः इत्योकारः ब. क. 36. इतरो ह. 37. उदात्तत्वे ह. 38. उदाहरणमिदं नास्ति फ.

(ऋ. १०.७५.५)। इकारोऽनुदात्तः। शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान् न निहन्यते, 'अनुदात्तं सर्वमपादादौ' (८.१.१८/४०३) इति। तस्य [1]प्रथममक्षरमुदात्तं तस्मिन् [2]परभूते पूर्वस्य [3]सरस्वति इति इकारस्य सन्नतर आदेशो भवति। माणवक जटिलकाध्यापक क्व गमिष्यसि। [4]क्व इति स्वरितस्तस्मिन् परभूते क इति अनुदात्तस्तस्य सन्नतर आदेशो भवति॥

## अपृक्त एकाल्प्रत्ययः। (४१/२५१)

अपृक्तः इति इयं सञ्ज्ञा भवति[5] एकाल् यः प्रत्ययस्तस्य। [6]असहायवाची एकशब्दः। 'स्पृशोऽनुदके क्विन्' (३.२.५८/४३२) – [7]घृतस्पृक्। 'भजो ण्विः' (३.२.६२/२९७६)–अर्धभाक्। पादभाक्। एकाल् इति किम्? दर्विः (उ. ५०२)। जागृविः (उ. ५०३) (म. भा. १.२१३)। प्रत्यय इति किम्? सुराः[8]। अपृक्तप्रदेशाः–– 'वेरपृक्तस्य' (६.१.६७/३७५) [9]इत्येवमादयः॥

## तत्पुरुषः समानाधिकरणः कर्मधारयः। (४२/७४५)

तत्पुरुषः (२.१.२२/६८४) इति समासविशेषस्य [10]सञ्ज्ञां वक्ष्यति।[11]स तत्पुरुषः [12]समानाधिकरणपदः कर्मधारयसञ्ज्ञो भवति। अधिकरणशब्दोऽभिधेयवाची। समानाधिकरणः समानाभिधेयः। परमराज्यम्। उत्तमराज्यम्। '[13]अकर्मधारये राज्यम्' (६.२.१३०/३८६४) इत्युत्तरपदाद्युदात्तं न भवति। [14]पाचकवृन्दारिका (६.३.४२/७४६)। तत्पुरुषः इति किम्? पाचिकाभार्यः (६.३.३७/८३८)। समानाधिकरणः इति किम्? ब्राह्मणराज्यम्। कर्मधारयप्रदेशाः–'[15]कर्मधारयेऽनिष्ठा' (६.२.४६/३७८०) इत्येवमादयः॥

## प्रथमानिर्दिष्टं समास उपसर्जनम्। (४३/६५३)

प्रथमया विभक्त्या यन् निर्दिश्यते समासशास्त्रे तदुपसर्जनसञ्ज्ञं भवति। समासे इति [16]समासविधायि शास्त्रं गृह्यते। वक्ष्यति–'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.२४/६८६) इति। द्वितीयासमासे द्वितीया इत्येतत् प्रथमानिर्दिष्टं, तृतीयासमासे तृतीया [17]इति, चतुर्थीसमासे चतुर्थी इति, पञ्चमीसमासे पञ्चमी इति, षष्ठीसमासे षष्ठी इति, सप्तमीसमासे सप्तमी इति। कष्टश्रितः। [18]शङ्कुलाखण्डः (२.१.३०/६९२)। यूपदारु (२.१.३६/६९८)। [19]वृकभयम् (२.१.३७/६९९)। राजपुरुषः (२.२.८/७०२)। [20]अक्षशौण्डः (२.१.४०/७१७)। उपसर्जनप्रदेशाः– 'उपसर्जनं पूर्वम्' (२.२.३०/६५४) इत्येवमादयः॥

## एकविभक्ति चापूर्वनिपाते। (४४/६५५)

एका विभक्तिर्यस्य तदि[21]दमेकविभक्ति। समासे विधीयमाने यन् नियतविभक्तिकं, द्वितीये सम्बन्धिनि [22]बहुभिर्विभक्तिभिर्युज्यमानेऽप्येकयै[23]व विभक्त्या युज्यते तदुपसर्जनसञ्ज्ञं भवति अपूर्वनिपाते, [24]पूर्वनिपातं पूर्वनिपाताख्य-

---

1. भवति इत्यधिकम् ग. 2. परभूते नास्ति फ. 3. सरस्वतीकारस्य क. ड. ह. 4. क्व इति स्वरितः नास्ति फ. 5. कस्य इत्यधिकम् क, यः एकाल् प्रत्ययः सोऽपृक्तसञ्ज्ञो भवति फ. 6. असाहायवाची फ. 7. दलस्पृक् क, तैलस्पृक् फ, तिलस्पृक् ड, जलस्पृक् ह. 8. सुरां सुनोति इति णिप्। सुरासुतमाचष्टे इति णिचि टिलोपः, क्विप् सिलोपः। अत्र धातुसकारस्य 'हल्ङ्याब्भ्यः' इति लोपो न भवति इत्यधिकम् ड.ग.ह. 9. इत्यादयः ह. 10. सञ्ज्ञा वक्ष्यते फ.ग.ह. 11. स नास्ति फ. 12. समानाधिकरणं पदः ग. 13. अकर्मधारये––भवति नास्ति क. ड. फ. ग. 14. पाचिकवृन्दारिका ड. ह. 15. पुंवत् कर्मधारयजातीयदेशीयेषु' (६.३.४३/७४६) अ. क. 16. समासविधायकं फ. 17. इत्येतत् क. 18. शङ्कुलया खण्डः इत्यधिकम् ग. 19. वृक्षभयम् ग. 20. नास्ति ह. 21. इदं नास्ति क. 22. बह्वीभिः ग. 23. एव नास्ति फ. 24. पूर्वनिपातं नास्ति ड.

मु[1]पसर्जनकार्यं वर्जयित्वा। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (वा. १३३९/७८०)। पूर्वपदे नानाविभक्ति[2]केऽप्युत्तरपदं पञ्चम्यन्तमेव [3]भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। [4]निष्क्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। [5]निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। [6]एवं निर्वाराणसिः। [7]एकविभक्ति इति किम्? राजकुमारी। अपूर्वनिपाते इति किम्? न हि भवति [8]कौशाम्बीनिः इति॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। (४५/१७८)

अभिधेयवचनोऽर्थशब्दः। अर्थवच्छब्दरूपं प्रातिपदिकसञ्ज्ञं भवति [9]धातुप्रत्ययौ वर्जयित्वा। [10]डित्थः। [11]कपित्थः। कुण्डम्। [12]पीठम्। [13]अर्थवत् इति किम्? वनम्, धनम् इति नान्तस्यावधेर्मा भूत्। [14]नलोपो हि स्यात् (८.२.७/२३६)। अधातुः इति किम्? हन्ते[15]र्लङ्। अहन्। नलोपः [16]स्यात्। अप्रत्ययः इति किम्? काण्डे। [17]कुड्ये (म. भा. १.२१७)। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७/३१८) इति [18]ह्रस्वः स्यात्। [19]अनर्थकस्यापि निपातस्य प्रातिपदिकसञ्ज्ञा [20]इष्यते (म.भा. १.२२०)। अध्यागच्छति। प्रलम्बते। प्रातिपदिकप्रदेशाः—'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७/३१८) इत्येवमादयः॥

## कृत्तद्धितसमासाश्च। (४६/१७९)

[21]कृतस्तद्धिताः समासाश्च प्रातिपदिकसञ्ज्ञा भवन्ति। अप्रत्ययः इति [22]पूर्वत्र पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसञ्ज्ञा विधीयते। अर्थवत्समुदायानां समासग्रहणं नियमार्थम् (म.भा. १.२२२)। कृत्—कारकः। [23]हारकः। कर्ता। [24]हर्ता। [25]तद्धितः—औपगवः। [26]कापटवः। समासः—राजपुरुषः। [27]ब्राह्मणकम्बलः। समासग्रहणस्य नियमार्थत्वाद् [28]वाक्यस्यार्थवतः सञ्ज्ञा न भवति[29]॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य। (४७/३१८)

नपुंसकलिङ्गेऽर्थे यत् प्रातिपदिकं वर्तते तस्य ह्रस्वो भवति आदेशः[30] अलोऽन्त्यस्य [31]अचः। अतिरि कुलम्[32]। [33]अतिनु कुलम्। नपुंसके इति किम्? ग्रामणीः। सेनानीः। प्रातिपदिकस्य इति किम्? काण्डे तिष्ठतः। [34]कुड्ये तिष्ठतः। प्रातिपदिकग्रहणसामर्थ्यात् एकादेशः पूर्वस्यान्तवन्न भवति॥

## गोस्त्रियोरुपसर्जनस्य। (४८/६५६)

प्रातिपदिकस्य इति वर्तते। गो इति [35]स्वरूपग्रहणं, स्त्री इति प्रत्ययग्रहणं स्वरितत्वात्। उपसर्जनग्रहणं तयोर्विशेषणम्। गोरुपसर्जनस्य स्त्रीप्रत्ययान्तस्यो[36]पसर्जनस्य इति। [37]ताभ्यां प्रातिपदिकस्य तदन्तविधिः। उपसर्जनगोशब्दा-

---

1. उपसर्जनसञ्ज्ञाकार्यं ह. 2. °युक्ते फ, °विभक्तेऽपि ब. 3. भवति नास्ति फ. 4. उदाहरणमिदं नास्ति फ. 5. निष्क्रान्ताय—राजकुमारी नास्ति ह. 6. एवं नास्ति क.ड. 7. एकविभक्ति—राजकुमारी नास्ति ड. ग. 8. कौशाम्बिनिः ब. क. ड. 9. धातुप्रत्ययान्तं च वर्जयित्वा ह. 10. अर्थः फ. 11. डवित्थः ब. क. ड, डिवित्थः फ. 12. नास्ति ह. 13. अर्थवद्ग्रहणं ह. 14. वाक्यमिदं नास्ति ब. 15. लङि क, लिङि ह. 16. हि इत्यधिकम् ह. 17. कुण्डे ग. 18. ह्रस्वत्वं ग. ह. 19. अनर्थकस्य—प्रलम्बते नास्ति क. फ. ग. ह. 20. वाच्या ड. 21. कृदन्ताः तद्धितान्ताः समासान्ताश्च ग.ह. 22. पूर्वत्र नास्ति क, पूर्वपर्युदासात् ड, पूर्वसूत्रेण ह. 23. नास्ति अ.क.ड.फ. 24. नास्ति ड.फ. 25. तद्धितः नास्ति अ.ग. 26. नास्ति अ.ग. 27. नास्ति अ. 28. वाक्यस्य ब, वाक्यस्यार्थवतः प्रातिपदिकसञ्ज्ञा ड. फ. क. 29. देवदत्त गामभ्याज शुक्लां दण्डेनेति इत्यधिकम् ग. ह. 30. स च इत्यधिकम् ग. 31. अचः नास्ति फ. ग. ह. 32. अतिकुलं इत्यधिकम् ह. 33. अतिनु जलम् अ, उदाहरणमिदं नास्ति ग. 34. कुण्डे क. ड. 35. शब्दस्वरूप° ड. 36. चोप° ड. 37. द्वाभ्यां ग.

न्तस्य उपसर्जनस्त्रीप्रत्ययान्तस्य [1]च प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। [2]शबलगुः। [3]स्त्रियाः—निष्कौशाम्बिः। [4]निर्वाराणसिः। [5]अतिखट्वः। अतिमालः। उपसर्जनस्य इति किम्? राजकुमारी। [6]स्वरितत्वं किम्? [7]अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः॥

[१८] ईयसो बहुव्रीहेः प्रतिषेधो [8]वक्तव्यः। (म. भा. २.१२४)

[9]बहुश्रेयसी। [10]विद्यमानश्रेयसी॥

## लुक्तद्धितलुकि। (४९/१४०८)

स्त्रीग्रहणमनुवर्तते उपसर्जनस्येति च। पूर्वेण [11]ह्रस्वत्वे प्राप्ते लुग् विधीयते। [12]तद्धितलुकि सति स्त्रीप्रत्ययस्य उपसर्जनस्य लुग् भवति। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। [13]दशेन्द्रः (४.२.२४/१२२६) (४.१.८८/१०८०)। पञ्चभिः शष्कुलीभिः क्रीतः[14] पञ्चशष्कुलः (५.१.३७/१७०२) (५.१.२८/१६९३)। आमलक्याः [15]फलमामलकम् (४.३.१४४/१५२४) (४.३.१६३/१५४१)। [16]बदरम्। कुवलम्। [17]तद्धितग्रहणं किम्? [18]गार्ग्याः कुलं गार्गीकुलम्। लुकि [19]इति किम्? [20]गार्गीत्वम्। उपसर्जनस्य इत्येव। अवन्ती। कुन्ती। कुरूः॥

## इद्गोण्याः। (५०/१७०३)

पूर्वेण लुकि प्राप्ते इकारो विधीयते। गोण्यास्तद्धितलुकि सति इकारादेशो भवति। पञ्चभिर्गोणीभिः क्रीतः पटः [21]पञ्चगोणिः। दशगोणिः। [22]इत् इति योगविभागः[23]। पञ्चभिः सूचीभिः क्रीतः[24] पञ्चसूचिः। दशसूचिः। स च [25]एवंविषय एव॥

## लुपि युक्तवद्व्यक्तिवचने। (५१/१२९४)

लुपि इति [26]लुप्सञ्ज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते। तत्र [27]लुपि युक्तवद्व्यक्तिवचने[28] भवतः। युक्तवत् इति निष्ठाप्रत्ययेन [29]क्तवतुना प्रकृत्यर्थ उच्यते। स हि प्रत्ययार्थमात्मना युनक्ति। तस्य [30]युक्तवतो व्यक्तिवचने[31] लुबर्थे विधीयेते। अथ वा युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्धः, तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे वतिः। व्यक्तिवचने इति [32]च लिङ्गसङ्ख्ययोः [33]पूर्वाचार्यनिर्देशः, तदीयमेवेदं सूत्रम्। तथा चास्य प्रत्याख्यानं [34]भविष्यति, 'तदशिष्यं सञ्ज्ञाप्रमाणत्वात्' (१.२.५३/१२९५) इति। व्यक्तिः—स्त्रीपुंनपुंसकानि। वचनम्—एकत्वद्वित्व[35]बहुत्वानि। पञ्चालाः क्षत्रियाः पुंलिङ्गा बहुवचनविषयाः। तेषां निवासो जनपदः (४.२.८१/१२९३)। यथा तेषु क्षत्रियेषु व्यक्तिवचने [36]तद्वज्जनपदे भवतः। पञ्चालाः। कुरवः। [37]मगधाः। मत्स्याः। अङ्गाः। [38]वङ्गाः। [39]सुह्माः। पुण्ड्राः।

---

1. च नास्ति क.फ, °प्रत्ययान्तप्रातिपदिकस्य ड. 2. नास्ति ह. 3. स्त्री अ. क. ड. फ. 4. नास्ति ह. 5. अतिखट्वी फ, नास्ति अ. 6. स्वरितत्वविज्ञानं अ. क. ह. 7. अतितन्त्रि ह. 8. वक्तव्यः नास्ति ड. 9. अवनिपालः इत्यधिकम् क. 10. निर्धनः इत्यधिकम् अ. क. 11. ह्रस्वे अ. ब. क. ह. 12. क्वचित् इत्यधिकम् ह. 13. नास्ति फ. 14. कटः ह, दशशष्कुलः इत्यधिकम् ब.क.ड.फ.ह. पंचशष्कुलो देशः क. 15. विकारः ह. 16. बिम्बम् फ, कुलम् ह. 17. तद्धित इति अ. 18. गार्ग्याः कुलम् नास्ति फ.ह.ग, गार्गीकुलम् नास्ति ब. 19. इति नास्ति ड. 20. गर्गीत्वम् ग. 21. पञ्चगौणिः दशगौणिः क, दशगोणिः नास्ति अ. 22. इत् इति—दशसूचिः नास्ति फ. 23. पञ्चसूच्याद्यर्थं इत्यधिकम् ह, सूच्याद्यर्थं इत्यधिकम् अ. 24. पटः इत्यधिकम् अ.ह. 25. एवंविधिः फ. 26. लुप्तसञ्ज्ञया अ. ड. इ. 27. लुपि नास्ति अ. क. फ. ह. 28. °न लुबर्थे इत्यधिकम् ग. 29. काक्तवतुना फ. 30. युक्तवत् फ. 31. ते अ. ह. 32. च नास्ति ड. फ. 33. पूर्वाचार्यसञ्ज्ञानिर्देशः फ.ह. 34. करिष्यते. अ. क, करिष्यति ह. 35. °बहुवचनानि अ. 36. तथा जनपदेष्वपि फ. ह. 37. नास्ति क. फ. ग. 38. नास्ति फ. 39. सुह्माः पुण्ड्राः नास्ति ह.

लुपि [1]इति किम् ? लुकि मा भूत् । लवणः सूपः । लवणा यवागूः । [2]लवणं शाकम्[3] (४.२.२२,२४/१५७२, १५७४) (म. भा. १.२२७) । व्यक्तिवचने इति किम् ? शिरीषाणाम[4]दूरभवो ग्रामः (४.२.७०/१२८२) (४.२.८२/१३०१) [5]शिरीषाः, तस्य वनं शिरीषवनम् (म.भा.१.२२६)। 'विभाषौषधिवनस्पतिभ्यः' (८.४.६/१०५१) इति णत्वं न भवति ।

[१९] हरीतक्यादिषु व्यक्तिः । (म. भा. १.२२८)
हरीतक्याः फलानि हरीतक्यः (४.३.१६७/१४५६) फलानि ।[6]

[२०] खलतिकादिषु वचनम् । (म.भा. १.२२९)
खलतिकस्य पर्वतस्यादूरभवानि वनानि (४.२.७०/१२८२) (४.२.८२/१३०१) [7]खलतिकं वनानि ॥

## विशेषणानां चाजातेः । (५२/१३००)

[8]लुपि इति वर्तते । लुबर्थस्य यानि विशेषणानि तेषामपि [9]च युक्तवद् व्यक्तिवचने भवतः जातिं वर्जयित्वा । पञ्चालाः रमणीयाः, [10]बह्वन्नाः, बहुक्षीर[11]घृताः, बहुमाल्यफलाः । गोदौ रमणीयौ, [12]बह्वन्नौ, बहुक्षीरघृतौ, [13]बहुमाल्यफलौ[14] । अजातेः इति किम् ? [15]पञ्चालाः जनपदः । गोदौ ग्रामः । जात्यर्थस्य [16]चायं युक्तवद्भावप्रतिषेधः । तेन जातिद्वारेण यानि विशेषणानि तेषामपि [17]युक्तवद्भावो न भवति । पञ्चालाः जनपदो रमणीयो, [18]बह्वन्नः । गोदौ ग्रामो रमणीयो, बह्वन्नः इति ।

[२१] मनुष्यलुपि प्रतिषेधो [19]वक्तव्यः । (म.भा. १.२२९)
[20]चञ्चा अभिरूपः । [21]वर्ध्रिका (५.३.९६,९८/२०५१,२०५३) दर्शनीयः (म. भा. १.२२९) ॥

## तदशिष्यं सञ्ज्ञाप्रमाणत्वात् । (५३/१२९५)

तत् इति प्रकृतं [22]युक्तवद्भावलक्षणं निर्दिश्यते । [23]तदशिष्यं न वक्तव्यम् । [24]कस्मात्? सञ्ज्ञाप्रमाणत्वात् । सञ्ज्ञाशब्दा हि नाना[25]लिङ्गसङ्ख्याः [26]प्रमाणम् । पञ्चालाः, वरणा इति [27]च, नैते [28]योगशब्दाः । किं तर्हि? [29]जनपदादीनां सञ्ज्ञा एताः । तत्र लिङ्गं वचनं [30]च [31]स्वभावसंसिद्धमेव न यत्नप्रतिपाद्यम्, यथा आपः, दाराः, गृहाः, सिकताः, वर्षाः इति ॥

## लुब् योगाप्रख्यानात् । (५४/१२९६)

लुबप्यशिष्यः । योऽयं 'जनपदे लुप्' (४.२.८१/१२९३), 'वरणादिभ्यश्च' (४.२.८२/१३०१) इति

1. इति नास्ति ह. 2. लवणं शाकम् नास्ति ह. 3. संसृष्टमित्यनेन विहितस्य ठको लवणाल् लुक् इति लुक् इत्यधिकम् ड. 4. ⁰अदूरे भवः ड. 5. शिरीषः क. 6. हरीतक्यादिभ्यश्च (४.३.१६७/१५४६) इति लुप् इत्यधिकम् ड, वचनं त्वभिधेयवशं इत्यधिकम् अ. 7. खलतिका ग, खलतिकवनानि ह. 8. लुपि लुपि ब. 9. च युक्तवत् नास्ति अ. ब.इ.ग. 10. बह्वन्नाः नास्ति क. 11. ⁰धनाः ब. 12. बह्वन्नौ नास्ति फ. 13. बहुमूलफलौ ह. 14. वृत्तौ इत्यधिकम् फ. 15. उदाहरणमिदं नास्ति ह. 16. अयं नास्ति ह. 17. युक्तवद्भावप्रतिषेधो भवति अ. ड, निषेधो भवति क. 18. बह्वन्नः नास्ति ह. 19. वक्तव्यः नास्ति अ. क. फ. 20. चर्चाभिरूपः ब, चञ्चा नास्ति ह. 21. बह्वीका ब. क, वद्धिका क. 22. युक्तवल्लक्षणं प्रतिनिर्दिश्यते क.ड.फ, भावरूपपं प्रमेयं अ, भाववचनं ह. 23. तदेतदशिष्यं अ. क,अवक्तव्यम् फ. ह. ग. 24. कुतः अ. क. 25. ⁰सङ्गसंख्याः अ. 26. प्रमाणत्वं प्रतिपादकत्वं ड. 27. च नास्ति अ. क. फ. 28. योगजनपदादेः क्षत्रियादिभिः सम्बन्धः तस्याप्रत्याख्यानादनुपलब्धेः इत्यर्थः ड. 29. जनपदानाम् ह. 30. च नास्ति फ. 31. स्वभावत एव फ.

लुबुच्यते, [1]अयं न वक्तव्यः। [2]किं कारणम्? योगाप्रख्यानात्। [3]न हि पञ्चाला वरणाः इति [4]योगः सम्बन्धः [5]प्रख्यायते। नैतदुपलभामहे [6]वृक्षयोगान्नगरे वरणाः इति[7]। किं तर्हि? सञ्ज्ञा एताः। तस्मादत्र 'तस्य निवासः' (४.२.६९/१२८१), 'अदूरभवश्च' (४.२.७०/१२८२) इति [8]तद्धितो नैवोत्पद्यते, किं लुपो विधानेन॥

## योगप्रमाणे च तदभावेऽदर्शनं स्यात्। (५५/१२९७)

[9]पञ्चालादयः सञ्ज्ञाशब्दाः, न योगनिमित्ताः इत्युक्तम्। तच्चावश्यमेवाभ्युपगन्तव्यम्। योगप्रमाणे हि तदभावेऽदर्शनं स्यात्[10]। यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य [11]वाचकः स्यात् ततस्त[12]दभावेऽदर्शनमप्रयोगः स्यात्। दृश्यते च सम्प्रति विनैव [13]क्षत्रियसम्बन्धेन जनपदेषु [14]पञ्चालादिशब्दाः,[15]ततोऽवसीयते नायं [16]योगनिमित्तकः। किं तर्हि? [17]रूढिरूपेणैव तत्र [18]प्रवृत्तः इति॥

## प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्। (५६/१२९८)

अशिष्यम् इति वर्तते। प्रधानं [19]समासे किंचित् पदं, प्रत्ययस्तव्यदादिः। ताभ्यामर्थवचनमर्थाभिधान[20]मनेन प्रकारेण भवति [21]इति पूर्वाचार्यैः परिभाषितम्। 'प्रधानोपसर्जने च प्रधानार्थं सह ब्रूतः' '[22]प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति। तत् पाणिनिराचार्यः प्रत्याचष्टे, अशिष्यमेतत् अर्थस्यान्यप्रमाणत्वात् [23]इति। अन्यः इति शास्त्रापेक्षया [24]लोको व्यपदिश्यते। शब्दैरर्थाभिधानं [25]स्वाभाविकं न [26]पारिभाषिकमशक्यत्वात्। लोकत एवा[27]र्थावगतेः। यैरपि व्याकरणं न श्रुतं तेऽपि राजपुरुषमानय इत्युक्ते राजविशिष्टं पुरुषमानयन्ति न राजानं नापि [28]पुरुषमात्रम्। औपगवमानय इत्युक्ते उपगुविशिष्टमपत्यमानयन्ति, नोपगुं नाप्यपत्यमात्रं, [29]नोभौ। यश्च लोकतोऽर्थः सिद्धः किं [30]तत्र यत्नेन॥

## कालोपसर्जने च तुल्यम्। (५७/१२९९)

अशिष्यम् [31]इति वर्तते। कालोपसर्जने चाशिष्ये। [32]कस्मात्? अर्थस्यान्यप्रमाणत्वात्। तुल्यशब्दो हेत्वनुकर्षणार्थः। [33]अशिष्यविशेषणं चैतत्। कालोपसर्जने च तुल्यमशिष्ये भवतः। इहान्ये वैयाकरणाः कालोपसर्जनयोः [34]परिभाषां कुर्वन्ति। आन्याय्यादुत्थानादान्याय्याच्च संवेशनात्, एषोऽद्यतनः कालः[35]। अपरे[36] पुनराहुः। अहरुभयतोऽर्धरात्रम्, एषोऽद्यतनः कालः इति। तयोपसर्जनपरिभाषां कुर्वन्ति अप्रधानमुपसर्जनम् इति। तत् पाणिनिराचार्यः प्रत्याचष्टे [37]लोकतोऽ[38]र्थावगतेः। यैरपि व्याकरणं [39]न श्रुतं तेऽप्याहुरिदमस्माभिरद्य कर्तव्यमिदं श्वः कर्तव्यमिदं ह्यः कृतम् इति। [40]नैवं व्युत्पाद्यन्ते[41]। तथोपसर्जनम्, वयमत्र [42]गृहे ग्रामे वा [43]उपसर्जनमप्रधानम् इति गम्यते। यश्च [44]लोकतोऽर्थः सिद्धः किं तत्र [45]यत्नेन। यद्येवं पूर्वसूत्र एव कालोपसर्जनग्रहणं कस्मान् न क्रियते? किमर्थो[46]योगविभागः? प्रदर्शनार्थः। अन्यदप्येवंजातीयकमशिष्यम् इति। तथा [47]च पूर्वाचार्याः परिभाषन्ते '[48]मत्वर्थे बहुव्रीहिः, पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वन्द्वः' इत्येवमादि, [49]तदशिष्यम् इति॥

---

1. तन्न वक्तव्यम् फ, नास्ति ह. 2. को कारणम् ग. 3. स ग. 4. च इत्यधिकम् ग.क. 5. प्रत्याख्यायते तदुपालभामहे ग. 6. वृक्षयागान्नगरे चणाः ब. 7. शब्दाः इति अ. 8. तद्धिताः ह. 9. यदि ड. 10. इति फ. 11. वाचकं ह. 12. योगाभावेऽदर्शनम् अ. ब. ड, तदभावे तस्य फ. 13. क्षत्रियसम्बन्धजनपदे क. ड, क्षत्रियादिसम्बन्धे पदे ह. 14. पंचालशब्दः अ. क. 15. तदेतदवसीयते फ. 16. योगनिमित्तः इति ह. 17. रूढिनिमित्तेनैव फ. ह. 18. प्रवर्तते ह. 19. पदं समासे ग. 20. ॰मनेक॰ ह. 21. इति नास्ति ड. ग, पूर्वाचार्यैः परिभाषितम्--------ब्रूत इति नास्ति ब. 22. प्रकृतिप्रत्ययार्थे सह ड, प्रकृतिप्रत्ययार्थं सह ब्रूतः फ, प्रकृतिप्रत्ययौ प्रत्ययार्थं ह. 23. इति नास्ति अ. ड. 24. लोके ह. 25. स्वाभाविकत्वात् अ. 26. परिभाषितव्यं अ. क. ड. ग. ह, अशक्यं ह. 27. अर्थगतेः अर्थन्यायात् ड, अर्थावगतिः इति फ. ह. 28. पुरुषमात्रकम् फ. 29. नोभौ नास्ति अ. क. ड. फ. 30. तत्र नास्ति अ. 31. इत्यनुवर्तते ड. 32. कुतः अ. 33. अशिष्ये ह, अशिष्य – भवतः नास्ति क, पूर्वाभ्यामिति स एवान्यप्रमाणत्वादिति इहापि हेतुः फ. ह, आशिषि अपूर्वाभ्याम् ग. 34. भाषां क. 35. इति ग. 36. तु अ. क. ड. 37. लोकत एव ग. 38. अर्थगतेः क. ड. 39. न नास्ति ह. 40. न च अ. क. ड.फ. व्युत्पद्यन्ते ग. 41. प्रस्तावादर्थवौचित्याद्देशकालविभागतः। शब्दैरर्थाः प्रतीयन्ते न शब्दादेव केवलात्। ड. 42. गृहेण वा ब. ह, गृहे कामे वा ग. 43. उपसर्जनभूतोऽप्रधानम् ग. 44. लोक एव प्रसिद्धं ग, अर्थासिद्धः ब, अर्थसिद्धः क. 45. प्रयत्नेन क. 46. योगविभागप्रदर्शनार्थः ग. 47. हि अ.क.ड.फ.ह. 48. मत्वर्थीयः क. 49. तदप्यशिष्टम् ह.

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । (५८/८१७)

[1]अशिष्यम् इति निवृत्तम् । [2]जातिर्नामायमेकोऽर्थः । तदभिधाने एकवचनमेव प्राप्तमत इदमुच्यते । [3]जातेराख्या जात्याख्या । [4]जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति । जात्यर्थो[5] बहुवद् भवति इति यावत् । तेन तद्विशेषणानाम[6]जातिशब्दानामपि सम्पन्नादीनां बहुवचनमुपपद्यते । [7]सम्पन्नो यवः, सम्पन्ना यवाः । सम्पन्नो व्रीहिः, सम्पन्ना व्रीहयः । पूर्ववया ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः । जातिग्रहणं किम् ? देवदत्तः । यज्ञदत्तः । [8]आख्यायाम् इति किम् ? [9]काश्यपप्रतिकृतिः काश्यपः । भवत्ययं जातिशब्दो न त्वनेन जातिराख्यायते । किं तर्हि ? [10]प्रतिकृतिः । एकस्मिन् इति किम् ? व्रीहियवौ ।

[२२] सङ्ख्याप्रयोगे प्रतिषेधो वक्तव्यः । (म. भा. १.२३०)

एको[11] व्रीहिः सम्पन्नः[12] सुभिक्षं करोति ॥

## अस्मदो द्वयोश्च । (५९/८१८)

[13]अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति । अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूवः, वयं ब्रूमः ।

[२३] [14]सविशेषणस्य प्रतिषेधो वक्तव्यः ।

अहं देवदत्तो ब्रवीमि । अहं गार्ग्यो ब्रवीमि । अहं [15]पटुर्ब्रवीमि (म. भा. १.२३०)[16] ।

[२४] [14]युष्मदि गुरावेकेषाम् ।

त्वं मे गुरुः, यूयं मे गुरवः[17] ॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे । (६०/८१९)

चकारो द्वयोः इत्यनुकर्षणार्थः । फल्गुन्यो[18]र्द्वयोः प्रोष्ठपदयोश्च द्वयोर्नक्षत्रयोर्बहुवचन[19]मन्यतरस्यां भवति । कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः [20]प्रोष्ठपदाः । नक्षत्रे इति किम् ? फल्गुन्यौ माणविके[21] ॥

## छन्दसि पुनर्वस्वोरेकवचनम् । (६१/३३८७)

अन्यतरस्याम् [22]इत्यनुवर्तते । द्वयोर्द्विवचने प्राप्ते[23] पुनर्वस्वोश्छन्दसि विषये एकवचनमन्यतरस्यां भवति । 'पुनर्वसुर्नक्षत्रमदितिर्देवता' (मै. सं. २.१३.२.) । 'पुनर्वसू [24]नक्षत्रमदितिर्देवता' (तै. सं. ४.४.१०) । नक्षत्रे इत्येव । पुनर्वसू माणवकौ । [25]छन्दसि इति किम् ? पुनर्वसू इति ॥

---

1. वाक्यमिदं नास्ति ब. क. ड. फ. ह. 2. जातिर्नामापरो ब, एकार्थः ह. 3. जातिराख्या फ. 4. तस्यां क.ड.ह. 5. वा इत्यधिकम् फ. 6. अजातिशब्दानाम् नास्ति ह. 7. संपन्नः–यवाः नास्ति ह. 8. आख्याग्रहणं क. ड. ह. 9. काश्यपस्य प्रतिकृतिः ग. 10. प्रकृतिः ह. 11. यो इत्यधिकम् ब. 12. किम् इत्यधिकम् ग. 13. अस्मद एकत्वे अ. ब. क. ड. फ, अस्मदः प्रयोगे ग. 14. एते वार्तिके न स्तः अ. 15. पटु ब्रवीमि ब, बटुर्ब्रवीमि क. ह, साधु ब्रवीमि ग. 16. अहं पण्डितो ब्रवीमि इत्यधिकम् क. ड. फ. 17. इति इत्यधिकम् फ. 18. द्वयोः नास्ति ड. 19. अन्यतराणाम् ब, इति ग. 20. प्रोष्ठपादाः फ. 21. माणवकौ क. ड. 22. इति वर्तते अ. क. ड. ह. 23. एकवचनं विधीयते इत्यधिकम् अ. 24. नक्षत्रे अदिती देवते अ, नास्ति ब. क. 25. छन्दसि इति––इति नास्ति अ. क. ड. फ.

## विशाखयोश्च । (६२/३३८८)

छन्दसि इति वर्तते । [1]द्विवचने प्राप्ते[2] छन्दसि विषये विशाखयोरेकवचनमन्यतरस्यां भवति । 'विशाखं नक्षत्रमिन्द्राग्नी [3]देवता' (मै.सं. २.१३.२०) । [4]विशाखे नक्षत्रमिन्द्राग्नी देवता' (तै. सं. ४.४.१०.२) ॥

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । (६३/८२०)

छन्दसि इति निवृत्तम् । तिष्यः एकः, पुनर्वसू द्वौ, तेषां द्वन्द्वो बह्वर्थः । तत्र बहुवचने प्राप्ते द्विवचनं विधीयते । तिष्यपुनर्वस्वोः [5]नक्षत्रविषये द्वन्द्वे [6]बहुवचनप्रसङ्गे नित्यं द्विवचनं भवति । उदितौ तिष्यपुनर्वसू [7]दृश्येते । तिष्यपुनर्वस्वोः इति किम् ? [8]विशाखानुराधाः । नक्षत्रे इति किम् ? तिष्यश्च माणवकः, पुनर्वसू[9] माणवकौ, तिष्यपुनर्वसवो माणवकाः । [10]ननु च प्रकृतमेव नक्षत्रग्रहणं किमर्थं [11]पुनरुच्यते । पर्यायाणामपि यथा स्यात् । तिष्यपुनर्वसू । पुष्यपुनर्वसू । [12]सिद्धचपुनर्वसू । द्वन्द्वे इति किम्? यस्तिष्यस्तौ पुनर्वसू येषां त इमे 'तिष्यपुनर्वसवः'(वा.सं. २.६९)। उन्मु[13]ग्धाः तिष्यादय एव [14]विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते । [15]तेन नक्षत्रसमास एवायम् । बहुवचनस्य इति किम् ? एकवचनस्य मा भूत् । तिष्यपुनर्वसु इदम् इति । 'सर्वो द्वन्द्वो [16]विभाषा एकवद् भवति' (व्या. प. ९१) इत्यस्यैतदेव ज्ञापकम् (म. भा. १.२३२) । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ॥

## सरूपाणामेकशेष एकविभक्तौ । (६४/१८८)

समानं रूपमे[17]षाम् [18]इति सरूपाः । सरूपाणां शब्दानां एकविभक्तौ परत एकशेषो भवति । एकः शिष्यते इतरे निवर्तन्ते । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः । प्रत्यर्थं शब्दनिवेशान् नैकेनानेकस्याभिधानम् । [19]तत्रानेकार्थाभिधानेऽनेकशब्दत्वं [20]प्राप्तं तस्मादेकशेषः (म. भा. १.२३३)। सरूपाणाम् इति किम् ? [21]प्लक्षन्यग्रोधाः । रूपग्रहणं किम् ? भिन्नेऽप्यर्थे यथा स्यात् । अक्षाः । पादाः । माषाः[22] । एकग्रहणं किम् ? द्विबह्वोः [23]शेषो मा भूत् । शेषग्रहणं किम् ? आदेशो मा भूत् । एकविभक्तौ इति किम् ? पयः पयो जरयति[24] । ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि (म. भा. १.२३३) ॥

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । (६५/९३१)

शेषः इति वर्तते । [25]यूना इति सहयोगे तृतीया । वृद्धो यूना सहवचने शिष्यते युवा निवर्तते । वृद्धशब्दः [26]पूर्वाचार्यसञ्ज्ञा गोत्रस्य 'अपत्यमन्तर्हितं वृद्धम्' इति । वृद्धयूनोः सहवचने वृद्धः शिष्यते [27]तल्लक्षणश्चेदेव [28]विशेषः । तद् इति [29]वृद्धयूनोर्निर्देशः । लक्षणशब्दो निमित्तपर्यायः । चेच्छब्दो [30]यद्यर्थे । एवकारोऽ[31]वधारणे । विशेषो वैरूप्यम् । वृद्धयुवनिमित्तकमेव यदि वैरूप्यं भवति ततो वृद्धः शिष्यते, [32]युवा निवर्तते । समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते ।

---

1. द्वयोः इत्यधिकम् ग. 2. एकवचनं विधीयते इत्यधिकम् अ. 3. देवते अ. 4. विशाखे नक्षत्रे इन्द्राग्नी देवते अ. 5. नक्षत्रयोः विषये फ. 6. बहुवचनस्य फ. ह. ड. 7. दृश्यते ग. 8. विशाखोनुराधाः ब, राधानुराधाः अ. ह. 9. च इत्यधिकम् अ. ड. 10. ननु नास्ति फ. 11. पुनरिदमुच्यते फ. ग. ह. 12. नास्ति फ. 13. उन्मुखाः ब. क. ड. ई., मुहेः कर्तरि क्तः अविविक्ताः इत्यर्थः ड, तिष्यादयः–मा भूत् नास्ति ह. 14. विपर्यासेन क. 15. तेन नास्ति फ. 16. विभाषया ड. 17. येषाम् क. अ. 18. ते ग. 19. अनेकस्यार्थस्याभिधाने अनेकशब्दत्वं क.ड.अ. 20. प्राप्तं नास्ति फ. 21. वृक्षप्लक्षौ अ.क.ड, प्लक्षन्यग्रोधौ ग.ह. 22. इति इत्यधिकम् ड.क.अ. 23. शेषो नास्ति फ. 24. इति इत्यधिकम् क. 25. यूना–निवर्तते नास्ति ड. 26. पूर्वाचार्याणां सञ्ज्ञा अ. 27. युवा निवर्तते इत्यधिकम् 28. विशेषो भवति क. ड. अ. 29. वृद्धयुवनिर्देशः फ. 30. यद्यर्थः ड. 31. अवधारणार्थः ड. 32. युवा निवर्तते नास्ति अ. ड. फ. ह. क. ब.

गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। वृद्धः इति किम्? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ। यूना इति किम्? [1]गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ। [2]तल्लक्षणः इति किम्? गार्ग्यवात्स्यायनौ। एवकारः किमर्थः? भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ। [3]कुत्सा सौवीरत्वं च [4]भागवित्तिकस्यापरो विशेषो विद्यते ॥

## स्त्री पुंवच्च। (६६/९३२)

शेषः इति वर्तते, वृद्धो यूना [5]इति च सर्वम्। स्त्री वृद्धा यूना सहवचने शिष्यते, तल्लक्षणश्चेदेव विशेषो भवति[6]। पुंसः [7]इवास्याः कार्यं भवति। स्त्र्यर्थः पुमर्थवद् भवति[8]। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायणश्च [9]दाक्षी ॥

## पुमान् स्त्रिया। (६७/९३३)

तल्लक्षणश्चेदेव विशेषः इति वर्तते। वृद्धो यूना इति निवृत्तम्। स्त्रिया सहवचने पुमान् शिष्यते [10]स्त्री निवर्तते। [11]स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। कुक्कुटश्च कुक्कुटी च कुक्कुटौ[12]। तल्लक्षणश्चेदेव विशेष इत्येव। [13]कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ। एवकारः किमर्थः? इन्द्रश्च इन्द्राणी च इन्द्रेन्द्राण्यौ। 'पुंयोगादाख्यायाम्' (४.१.४८/५०४) इत्यपरो विशेषः। पुमान् इति किम्? प्राक् च प्राची च प्राक्प्राच्यौ। प्राक् इत्यव्ययमलिङ्गम् ॥

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। (६८/९३४)

यथासङ्ख्यं [14]भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम्। स्वस्रा सहवचने भ्रातृशब्दः शिष्यते। भ्राता च स्वसा च भ्रातरौ। दुहित्रा सहवचने पुत्रशब्दः शिष्यते। पुत्रश्च दुहिता च पुत्रौ ॥

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्। (६९/९३५)

तल्लक्षणश्चेदेव विशेषः इति वर्तते। नपुंसकानपुंसकमात्रकृते विशेषेऽनपुंसकेन सहवचने नपुंसकं शिष्यते, [15]एकवच्चास्य कार्यं भवति अन्यतरस्याम्। शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रं, तदिदं शुक्लम्। तानि इमानि शुक्लानि (म.भा. १.२४९)। अनपुंसकेन इति किम्? शुक्लं च शुक्लं च शुक्लं च शुक्लानि[16]। एकवच्च [17]इति न भवति ॥

## पिता मात्रा। (७०/९३६)

अन्यतरस्याम् इति वर्तते, [18]न एकवत् इति। मात्रा सहवचने पितृशब्दः शिष्यते[19]ऽन्यतरस्याम्। [20]माता च पिता च पितरौ, मातापितरौ [21]इति वा ॥

---

1. गार्ग्यश्च गर्गश्च नास्ति ड. ह. अ, गार्ग्यगर्गौ नास्ति फ. 2. तल्लक्षणश्चेदिति ड. अ. क. 3. कुत्सनं ह. 4. भागवित्तिशब्दस्य फ, भागवित्तिकस्यापरौ विशेषौ विद्येते ह. 5. तल्लक्षणः इति च सर्वं ह. 6. स्त्रीपुंसलक्षणे एव चेद् विशेषौ भवतः इत्यर्थः इत्यधिकम् फ, विशेषो वर्तते भवतीत्यर्थः ह. 7. एवास्याः ड, चास्याः क. 8. इति इत्यधिकम् क. फ, इति यावत् इत्यधिकम् ह. 9. दाक्षौ ड, दाक्ष्यौ अ. 10. स्त्री निवर्तते नास्ति फ. ग. ह. 11. स्त्रीपुंलिङ्गलक्षणः अ. ड. 12. मयूरः च मयूरी च मयूरौ इत्यधिकम् फ. 13. कुक्कुटश्च मयूरौ च नास्ति फ. 14. भ्रातृपुत्रौ ड. फ. ह. 15. एकं च ग. 16. वस्त्राणि इत्यधिकम् ग. 17. इति नास्ति फ. ह. 18. तेनैकवत् ह. 19. अन्यतरस्याम् नास्ति फ, अन्यतरस्यामिति फ. 20. पिता च माता च पितरौ क.ड.ह. 21. इति वा नास्ति फ, इति च ब.ड.

## श्वशुरः श्वश्र्वा । (७१/९३७)

[1]अन्यतरस्याम् इति वर्तते । श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यते [2]अन्यतरस्याम् । श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वश्रूश्वशुरौ [3]इति वा ॥

## त्यदादीनि सर्वैर्नित्यम् । (७२/९३८)

त्यदादीनि [4]शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च । सर्वग्रहणं साकल्यार्थम् । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । [5]स च देवदत्तश्च तौ । यश्च देवदत्तश्च यौ ।

[२७] त्यदादीनां मिथो [6]यद्यत् परं तत्तच् छिष्यते ।

स च यश्च यौ । यश्च कश्च कौ ॥

## ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । (७३/९३९)

ग्राम्याणां पशूनां सङ्घाः [7]ग्राम्यपशुसङ्घाः । [8]एतेषु सहविवक्षायां स्त्री शिष्यते । 'पुमान् स्त्रिया' (१.२.६७/९३३) इति पुंसः शेषे प्राप्ते स्त्रीशेषो[9] विधीयते । [10]अतरुणग्रहणं सामर्थ्यात् [11]पशुविशेषणम् । गाव इमाः । [12]अजा इमाः । ग्राम्यग्रहणं [13]किम्? रुरव इमे । [14]पृषता इमे । पशुषु इति किम्? [15]ब्राह्मणाः । क्षत्रियाः । सङ्घेषु इति किम्? एतौ गावौ चरतः । अतरुणेषु इति किम्? वत्सा इमे । [16]बर्करा इमे ।

[२८] अनेकशफेष्विति वक्तव्यम् । (म.भा.१.२५२)

इह मा भूत् । अश्वा इमे[17] ॥

इति [18]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

प्रथमाध्यायस्य द्वितीयः पादः ॥

----( ० )----

---

1. वाक्यमिदं नास्ति फ. ह. 2. अन्यतरस्याम् नास्ति फ. 3. इति वा नास्ति फ, वा नास्ति क, इति च ड. 4. शैब्दरूपाणि ई. 5. यज्ञदत्तः अ. फ. 6. यद्यदुत्तरं अ, तच्छिष्यते क. 7. ग्राम्यसङ्घाः फ. 8. तेषु क. ड, तेषां ह. 9. अयमित्यधिकम् क. अ. 10. अतरुणं ह. 11. पशूनां क. ड. अ. 12. उदाहरणमिदं नास्ति अ. 13. किमर्थं फ. 14. पृषत इमे अ. ह, वृषत इमे ड, उदाहरणमिदं नास्ति फ. 15. बाह्मणा इमे, क्षत्रिया इमे ह. 16. उदाहरणमिदं नास्ति अ. 17. गर्दभा इमे इत्यधिकम् अ. क. ड. फ. ग, अश्वाः गर्दभाः ह. 18. श्रीजयादित्यविरचितायां नास्ति ब. क. फ. ग. ह, जयादित्यकाशिकायां ड.

## प्रथमाध्यायस्य तृतीयः पादः

### भूवादयो[1] धातवः । (१/१८)

भू इत्येवमादयः शब्दाः [2]क्रियावचना [3]धातुसञ्ज्ञा भवन्ति। 'भू' (धा.पा. १)–भवति । 'एध' (धा.पा. २)–एधते । 'स्पर्ध' (धा.पा. ३)–स्पर्धते । धातुशब्दः पूर्वाचार्यसञ्ज्ञा । [4]ते च क्रियावचनानां [5]सञ्ज्ञां कृतवन्तः । तदिहापि [6]पूर्वाचार्यसञ्ज्ञाश्रयणात् क्रियावाचिनामेव भूवादीनां धातुसञ्ज्ञा विधीयते ।

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
[7]भूवो वार्थं वदन्तीति भ्वर्था [8]वा वादयः स्मृताः ॥ (म.भा. १.२५३)

[9]धातुप्रदेशाः–'धातोः' (३.१.९१/२८२९) इत्येवमादयः ॥

### उपदेशेऽजनुनासिक इत् । (२/३)

उपदिश्यतेऽनेन इत्युपदेशः शास्त्रवाक्यानि, सूत्रपाठः, [10]खिलपाठश्च । तत्र योऽच् अनुनासिकः स इत्सञ्ज्ञो भवति । [11]एध । स्पर्ध । [12]'प्रतिज्ञानुनासिक्याः पाणिनीयाः' (व्या.प. १२१) । उपदेशे इति किम्? 'अभ्र आँ अपः' (ऋ. ५.४८.१) । [13]अच् इति किम्? 'आतो मनिन्क्वनिब्वनिपश्च' (३.२.७४/३४१८)[14] । अनुनासिकः इति किम्? सर्वस्याचो मा भूत् । इत्प्रदेशाः –'आदितश्च' (७.२.१६/३०३६) इत्येवमादयः ॥

### हलन्त्यम् । (३/१)

उपदेशे इति वर्तते[15] । अन्ते भवमन्त्यम् । धात्वादेः [16]समुदायस्य यदन्त्यं हल्, तद् इत्सञ्ज्ञं भवति । अइउण्–णकारः । [17]ऋलृक्–ककारः । [18]एओङ्–ङकारः । [19]ऐऔच्–चकारः । उपदेशे इत्येव । अग्निचित् । सोमसुत् । ह्रस्य ल् [20]हल् इति [21]द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं [22]द्रष्टव्यम् । तेन प्रत्याहारपाठे हल् इत्यत्र लकारस्य इत्सञ्ज्ञा क्रियते । तथा [23]च सति हलन्त्यम् इत्यत्र प्रत्याहारे नेतरेतराश्रयदोषो[24] भवति ॥

### न विभक्तौ तुस्माः । (४/१९०)

पूर्वेण [25]प्राप्तायामित्सञ्ज्ञायां विभक्तौ [26]वर्तमानानां तवर्गसकारमकाराणां प्रतिषेध उच्यते । तवर्गः, 'टाङसिङसामिनात्स्याः' (७.१.१२/२०१)[27]–वृक्षात्, [28]प्लक्षात् । सकारः, जस् (४.१.२/१८३)–ब्राह्मणाः ।

1. यावत् सिद्धं साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते। श्रीनरहरये नमः इत्यधिकम् अ. 2. क्रियावाचिनः अ. क. ड. ह. 3. धातुसञ्ज्ञकाः ड. 4. ते क्रियावाचिनामेव फ. ग. 5. एव धातूनामित्यधिकम् फ. 6. पूर्वाचार्यसंज्ञाग्रहणात् अ. क. फ, °संज्ञाश्रवणात् ह. ड. 7. प्रबोधार्थ ब. 8. भूवादयः फ. 9. वाक्यमिदं नास्ति ह. 10. गणपाठः अ. 11. एध एधते, स्पर्ध स्पर्धते ह. 12. प्रतिज्ञानुनासिकाः ह. 13. अ इति क. 14. इत्यत्र मकार इत्संज्ञो न भवति इत्यधिकम् ड.फ. 15. उदिति च इत्यधिकम् ग. 16. वर्णसमुदायस्य च फ. 17. उदाहरणामिदं नास्ति अ. ग. 18. उदाहरणमिदं नास्ति अ. 19. उदाहरणमिदं नास्ति अ. ड. 20. हल् हल् इति फ. 21. न हलस्येति अधिकम् ग. 22. द्रष्टव्यम् नास्ति ग. 23. च नास्ति क. 24. °दोषः प्राप्नोति ड. 25. इत्संज्ञायां प्राप्तायाम् फ. 26. वर्तमानाः तवर्गसकारमकाराः इत्संज्ञा न भवन्ति इति प्रतिषेधः फ. 27. इति इत्यधिकम् फ. 28. प्लक्षात् नास्ति अ. ड.

तस् (३.४.७८/२१५४)–पचतः। [1]थस्–पचथः। मकारः–अपचताम्, अपचतम्। (३.४.१०१/२१९९) विभक्तौ इति किम्? 'अचो यत्' (३.१.९७/२८४२),[2] 'ऊर्णाया युस्' (५.२.१२३/१९२९),[3] 'रुधादिभ्यः श्नम्' (३.१.७८/२५४३)[4]। 'किमोऽत्' (५.३.१२/१९५९), [5]'इटोऽत्' (३.४.१०६/२२५७) [6]इत्यत्र प्रतिषेधो न भवति,[7] अनित्यत्वादस्य [8]प्रतिषेधस्य। 'इदमस्थमुः' (५.३.२४/१९७२) इत्युकारानुबन्धनिर्देशादनित्यत्व-मुपलक्ष्यते ॥

## आदिर्ञिटुडवः। (५/२२८९)

इत् इति वर्तते। आदिशब्दः प्रत्येकमभिसम्बध्यते। [9]ञिटुडु इत्येतेषां समुदायानामादितो वर्तमानानाम् इत्सञ्ज्ञा भवति। ञि, 'ञिमिदा' (धा.पा. ७४३)–मिन्नः (३.२.१८७/३०८८)। 'ञिधृषा' (धा.पा. १२७०) –धृष्टः[10]। 'ञिक्ष्विदा' (धा.पा. ७४०)–क्ष्विण्णः[11]। '[12]ञिइन्धी (धा.पा. १४४९)–इद्धः। टु, 'टुवेपृ'[13] (धा.पा. ३६७)–[14]वेपथुः (३.३.८९/३२६७)। [15]'टुओश्वि' (धा.पा. १०१०) –श्वयथुः[16]। डु, 'डुपचष्' (धा.पा. ९९६)–पक्त्रिमम् (३.३.८८/३२६६)। [17]'डुवप्' (धा.पा. १००३)–उप्त्रिमम्। 'डुकृञ्' (धा.पा. १४७३) कृत्रिमम्। आदिः इति किम्? पटूयति (५.१.१२२/१७८४)। कण्डूयति (३.१.२७/२६७८)। उपदेशे इत्येव–ञिकारीयति ॥

## षः प्रत्ययस्य। (६/४७४)

[18]षकारः प्रत्ययस्यादिः इत्सञ्ज्ञः भवति। 'शिल्पिनि ष्वुन्' (३.१.१४५/२९०७)–नर्तकी, [19]रजकी। प्रत्ययस्य इति किम्? षोडः, षण्डः, षडिकः। आदिः इत्येव–'अविमह्यो[20]ष्टिषच्' (उणादि १.४५)–[21]अविषः, महिषः ॥



## चुटू। (७/१८९)

चवर्गटवर्गौ [22]प्रत्ययस्यादी इत्सञ्ज्ञौ भवतः। 'गोत्रे कुञ्जादिभ्यश्च्फञ्' (४.१.९८/१०९९)–कौञ्जायनः। [23]छस्य ईयादेशं वक्ष्यति (७.१.२/४७५)। [24]जस्–ब्राह्मणाः (४.१.२/१८३)। झस्यान्तादेशं वक्ष्यति[25] (७.१.३/२१६९)। [26]'शण्डिकादिभ्यो ञ्यः' (४.३.९२/१४७२)–शाण्डिक्यः। [27]टवर्गः, 'चरेष्टः' (३.२.१६/२९३०)–कुरुचरी, मद्रचरी। ठस्य इकादेशं वक्ष्यति[28] (७.३.५०/११७०)। [29]'सप्तम्यां जनेर्डः' (३.२.९७/३००७)–उपसरजः, मन्दुरजः। ढस्य एयादेशं वक्ष्यति (७.१.२/४७५)। [30]'अन्नाण्णः' (४.४.८५/१६३७)–आन्नः।

---

1. थस् ग. 2. चेयम् इत्यधिकम् ड. 3. ऊर्णायुः इत्यधिकम् ड. 4. रुणद्धि इत्यधिकम् ड. 5. इटोऽत् नास्ति ब. 6. इति वा ड, इति चात्र ब. 7. इति इत्यधिकम् ग. 8. प्रतिषेधस्य नास्ति फ. 9. ञिटुडु इत्येते समुदाया आदितो वर्तमानाः इत्संज्ञा भवन्ति क.ह. 10. सृष्टः ग. 11. ञिष्विदा स्नेहने (धा.पा. ९७८) स्विन्नः इत्यधिकम् अ.क.ह. 12. ञिइन्धी नास्ति क.ड. 13. विचलने इत्यधिकम् ड. 14. प्रवेपथुः ग. 15. उदाहरणमिदं नास्ति फ, विश्वयथुः ग. 16. टुक्षु क्षयथुः इत्यधिकम् ग. 17. उदाहरणमिदं नास्ति क. 18. आदिरिति वर्तते इत्यधिकम् अ.क.फ. 19. खनकी अ.क.ड.फ.ह. 20. °टिषन् ड. 21. अविषम् ग. 22. प्रत्ययस्य आदितो वर्तमानौ अ.क.ड.फ.ग.ह. 23. छकारस्य ग. 24. जकारः ग. 25. झोऽन्तः इति इत्यधिकम् क. फ. 26. ञकारस्य इत्यधिकम् फ. 27. टवर्गस्य फ. 28. 'ठस्येकः' इति इत्यधिकम् क. 29. डकारस्य इत्यधिकम् ग. 30. णकारस्य इत्यधिकम् ग.

[1]पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम् । 'तेन वित्तश्चुञ्चुप्चणपौ' (५.२.२६/१८२७)–केशचुञ्चुः, केशचणः । 'अवात्कुटारच्च' (५.२.३०/१८३१)[2], [3]'नते नासिकायाः सञ्ज्ञायां टीटञ्नाटज्भ्रटचः' (५.२.३१/१८३२)–अवटीटः[4] । [5]आदिः इत्येव । 'कर्मणि घटोऽठच्' (५.२.३५/१८३६)–कर्मठः ॥

## लशक्वतद्धिते । (८/१९५)

[6]तद्धितवर्जितस्य प्रत्ययस्यादितो वर्तमाना लकारशकारकवर्गा इत्सञ्ज्ञा भवन्ति । लकारः, '[7]ल्युट् च' (३.३.११५/३२९०)–चयनम्, [8]जयनम् । शकारः, 'कर्तरि शप्' (३. १. ६८/२१६७) – भवति, [9]पचति । कवर्गः, 'क्तक्तवतू निष्ठा' (१.१.२६/३०१२) – भुक्तः, भुक्तवत् । 'प्रियवशे वदः खच्' (३.२.३८/२९५३) – प्रियंवदः, वशंवदः । '[10] ग्लाजिस्थश्च ग्स्नुः' (३.२.१३९/३११९)–[11]ग्लास्नुः, जिष्णुः, [12]भूष्णुः । 'भञ्जभासमिदो घुरच्' (३.२.१६१/३१४१)–भङ्गुरम्[13] । 'टाङसिङसामिनात्स्याः' (७.१.१२/२०१)–वृक्षात्, वृक्षस्य । अतद्धिते इति किम् ? चूडालः (५.२.९६/१९०३) । [14]लोमशः (५.२.१००/१९०७) । कर्णिका (४.३.६५/१४४४) ॥

## तस्य लोपः । (९/६२)

[15]तस्य इत्सञ्ज्ञकस्य लोपो भवति । तथा [16]चैवोदाहृतम् । तस्यग्रहणं सर्वलोपार्थम्, 'अलोऽन्त्यस्य' (१.१.५२/४२) मा भूत् 'आदिर्ञिटुडवः' (१.३.५/२२८९) इति ॥

## यथासङ्ख्यमनुदेशः समानाम् । (१०/१२८)

सङ्ख्याशब्देन क्रमो लक्ष्यते । यथासङ्ख्यं यथाक्रममनुदेशो भवति । अनुदिश्यते इति अनुदेशः । पश्चादुच्चार्यते इत्यर्थः । समानां समसङ्ख्यानां समपरिपठितानामुद्देशिनाम[17]नुदेशिनां च यथाक्रम[18]मुद्देशिभिरनुदेशिनः सम्बध्यन्ते । 'तूदीशलातुरवर्मतीकूचवाराड् ढक्छण्ढञ्यकः' (४.३.९४/१४७४) । [19]प्रथमात् प्रथमः, द्वितीयाद् द्वितीयः इत्यादि । [20]तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः । समानाम् इति किम् ? 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (१.४.९०/५५२) । लक्षणादयश्चत्वारोऽर्थाः[21], प्रत्यादयस्त्रयः, सर्वेषां सर्वत्र कर्मप्रवचनीयसञ्ज्ञा भवति । इह कस्मान् न भवति 'वेशोयशआदेर्भगाद्यल्' (४.४.१३१/३४७७) ख च' (४.४.१३२/३४७८) इति ? स्वरितेन लिङ्गेन यथासङ्ख्यम्[22] । यत्र नेष्यते, तत्र स्वरितत्वं न प्रतिज्ञायते । '[23]स्वरितेनाधिकारः' (१.३.११/४६) इति स्वरितग्रहणं पूर्वेणापि सम्बध्यते ॥

## स्वरितेनाधिकारः । (११/४६)

स्वरितेन इति इत्थम्भूतलक्षणे (२.३.२१/५६६) तृतीया । स्वरितो नाम [24]स्वरविशेषो वर्णधर्मः । तेन चिह्नेना[25]धिकारो वेदितव्यः । अधिकारो विनियोगः । स्वरितगुणयुक्तं शब्दरूपमधिकृतत्वादुत्तरत्रोपतिष्ठते । 'प्रतिज्ञास्वरिताः पाणिनीयाः' (व्या.प.१२२) । 'प्रत्ययः' (३.१.१/१८०)[26] । 'धातोः' (३.१.९१/२८२९) । 'ङ्याप्प्रातिपदिकात्' (४.१.१/१८२) । 'अङ्गस्य' (६.४.१/२००) । 'भस्य' (६.४.१२९/२३३) । 'पदस्य' (८.१.१६/४०१)[27] ॥

---

1. पृथग्योग–चणपौ नास्ति क. 2. अवकूटारः, अवकटः इत्यधिकम् क. 3. नते–कर्मठः नास्ति ग. 4. अवनाटः, अवभ्रटः इत्यधिकम् क. 5. आदिः–कर्मठः नास्ति क. 6. तद्धितवर्जप्रत्ययस्यादितो लकारशकारकवर्गा इत्संज्ञका अ. ड. 7. सूत्रमिदं नास्ति फ. 8. पवनम् अ. 9. पचति नास्ति अ. क. 10. सूत्रमिदं नास्ति ग. 11. ग्लास्नुः नास्ति ड. 12. भूष्णुः नास्ति फ. 13. भासुरम् मेदुरम् इत्यधिकम् ब. इ. क. 14. रोमशः ड. 15. इत्सञ्ज्ञस्य ड, यस्य इत्सञ्ज्ञा तस्य फ. 16. चैवमुदाहृतम् ड. 17. अनुदेशिनां नास्ति अ. 18. उद्देशिभिः सह अ. 19. वाक्यमिदं नास्ति अ. 20. तूदी अभिजनोऽस्य इत्यधिकम् क. ड. 21. अर्थाः नास्ति फ. 22. इष्यते इत्यधिकम् फ. 23. स्वरितादधिकारः ग. 24. स्वरदोषो न्या, स्वरविशेषो नास्ति प. मं, स्वरविशेषो वर्णधर्मः न स्वरधर्मः फ. 25. अधिकारे ब. 26. परश्च इत्यधिकम् फ. 27. इत्येवमादयः इत्यधिकम् ग.

## अनुदात्तङित आत्मनेपदम्। (१२/२१९७)

अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते, तत्रायं नियमः क्रियते। अनुदात्तेतो ये धातवो ङितश्च, तेभ्य एव [1]आत्मनेपदं भवति नान्येभ्यः। अनुदात्तेद्भ्यः, 'आस' (धा.पा. १०२२)–आस्ते। 'वस' (धा.पा.१०२४)–वस्ते। ङिद्भ्यः [2]खल्वपि, 'षूङ्' (धा.पा. १०३२)–सूते। 'शीङ' (धा.पा. १०३३)–शेते[3]॥

## भावकर्मणोः। (१३/२६७९)

'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९/२१५२) इति भावकर्मणोर्विहितस्य लस्य तिबादयः सामान्येन वक्ष्यन्ते। तत्रेदमुच्यते, भावे कर्मणि[4] चात्मनेपदं भवति। भावे–ग्लायते भवता, [5]सुप्यते भवता, [6]आस्यते भवता। कर्मणि–क्रियते [7]कटः, ह्रियते भारः। कर्मकर्तरि, लूयते केदारः स्वयमेव [8]इति, परस्मैपदं न भवति। तस्य विधाने द्वितीयं कर्तृग्रहणमनुवर्तते। [9]तेन कर्तैव यः कर्ता तत्र परस्मैपदं भवति[10] (१.३.१४/२६८० १.३.७८/२१५९)॥

## कर्तरि कर्मव्यतिहारे। (१४/२६८०)

कर्मशब्दः क्रियावाची। व्यतिहारो विनिमयः। यत्रान्यसम्बन्धिनीं क्रियामन्यः करोति, इतरसम्बन्धिनीं चेतरः, स कर्मव्यतिहारः। तद्विशिष्ट[11]क्रियावचनाद् धातोरात्मनेपदं भवति। [12]व्यतिलुनते। [13]व्यतिपुनते। कर्मव्यतिहारे इति किम्? लुनन्ति[14]। कर्तृग्रहणमुत्तरार्थं 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८/२१५९) इति॥

## न गतिहिंसार्थेभ्यः। (१५/२६८१)

पूर्वेणात्मनेपदं प्राप्तं प्रतिषिध्यते। गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे आत्मनेपदं न भवति। व्यतिगच्छन्ति। व्यतिसर्पन्ति[15]। हिंसार्थेभ्यः––व्यतिहिंसन्ति। व्यतिघ्नन्ति।

[२९] [16]प्रतिषेधे हसादीनामुपसङ्ख्यानम्। (म.भा. १. २७८)
व्यतिहसन्ति। [17]व्यतिजल्पन्ति। व्यतिपठन्ति।

[३०] हरतेरप्रतिषेधः। (म.भा. १. २७९)
संप्रहरन्ते [18]राजानः॥

## इतरेतरान्योन्योपपदाच्च। (१६/२६८२)

इतरेतरः, अन्योन्यः इत्येवमुपपदाद्[19] धातोः कर्मव्यतिहारे आत्मनेपदं न भवति। इतरेतरस्य [20]व्यतिलुनन्ति। अन्योन्यस्य व्यतिलुनन्ति।[21]

---

1. पदस्य लकारस्यैव स्थाने इत्यधिकम् फ. 2. खल्वपि नास्ति क. 3. अनुदात्तमध्येपतितङितः सिद्धमेवात्मनेपदम्। पृथक्करणं 'अनुदात्तेतश्च हलादेः' (3.2.147/3127) विशेषणं ङितो युज् न भवति इत्यधिकम् क, अनुदात्तङितः इति किम्? भवति, चेतति इत्यधिकम् अ, भवति, नयति क, भवति ड. फ. 4. विहितस्य लस्य इत्यधिकम् फ. ह. 5. सुप्यते भवता नास्ति क. 6. आस्यते भवता नास्ति फ. 7. घटः फ.ग. 8. इति नास्ति फ. 9. तेन नास्ति ड. 10. इति इत्यधिकम् ड. 11. °क्रियात् ब. 12. लुनते ब, लुनीते फ. 13. पुनीते फ. 14. पुनन्ति इत्यधिकम् क.ड.अ. 15. इति इत्यधिकम् ब. 16. गत्यर्थानां इत्यधिकम् ब. ड. फ.ग. 17. व्यतिजपन्ति ब, नास्ति फ. 18. जनाः ग, क्षत्रियाः फ, प्रहरन्ते क्षत्रियाः ह. 19. च इत्यधिकम् अ.क. 20. व्यतिपुनन्ति फ. 21. अन्योन्यस्य व्यतिपुनन्ति इत्यधिकम् ग.

[३१] परस्परोपपदाच्चेति वक्तव्यम् ।· (म.भा. १. २७९)

परस्परस्य व्यतिलुनन्ति ॥

## नेर्विशः । (१७/२६८३)

'शेषात् कर्तरि परस्मैपदम्' (१.३.७८/२१५९) [1]इति परस्मैपदे प्राप्ते निपूर्वाद् विश आत्मनेपदं विधीयते । नेः परस्माद् विश आत्मनेपदं भवति । [2]निविशते । निविशन्ते । नेः इति किम्? [3]प्रविशति । '[4]यदागमास्तद्ग्रहणेन गृह्यन्ते' (प. ११) तेनाटा[5] नास्ति व्यवधानम् । न्यविशत[6] । नेरुपसर्गस्य ग्रहणम्, 'अर्थवद्-ग्रहणे नानर्थकस्य ग्रहणम्' (व्या.प. १) इति । [7]तस्मादिह न भवति, मधुनि विशन्ति भ्रमराः[8] ॥

## परिव्यवेभ्यः क्रियः । (१८/२६८४)

'डुक्रीञ् द्रव्यविनिमये' (धा.पा. १४७४) । ञित्वात् कर्त्रभिप्राये क्रियाफले सिद्धमात्मनेपदम् । अकर्त्र-भिप्रायार्थोऽयमारम्भः । [9]परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति । परिक्रीणीते । [10]विक्रीणीते । अवक्रीणीते । पर्यादय उपसर्गा गृह्यन्ते तेनेह न भवति, बहुवि क्रीणाति वनम्[11] ॥

## विपराभ्यां जेः । (१९/२६८५)

'शेषात् कर्तरि परस्मैपदम्' (१.३.७८/२१५९) इत्यस्यापवादः । [12]विपरापूर्वाज्जयतेर्धातोरात्मनेपदं [13]भवति । विजयते । पराजयते । विपराशब्दावुपसर्गौ गृह्येते साहचर्यात् । तेनेह न भवति, बहुवि[14] जयति वनम्, परा जयति सेना (म.भा. १.२७९) इति[15] ॥

## आङो दोऽनास्यविहरणे । (२०/२६८६)

अकर्त्रभिप्रायार्थोऽयमारम्भः । आङ्पूर्वाद् [16]ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति । विद्यामा-दत्ते[17] । अनास्यविहरणे इति किम्? आस्यं व्याददाति ।

[३२] आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः । (म.भा. १.२७९)

विपादिकां व्याददाति । [18]कूलं व्याददाति (म.भा. १.२७९) ।

[३३] स्वाङ्गकर्मकाच्चेति वक्तव्यम् । (म.भा. १.२७९)

इह मा भूत्, व्याददते पिपीलिकाः पतङ्गस्य मुखम्[19] (म.भा. १.२७९) ॥

---

1. इति नास्ति फ, परस्मैपदे नास्ति ग. 2. निविशेते क.ड. 3. आविशति फ.ग. 4. तदागमाः क.ह, ग्रहणेनैव ब.क. 5. अटा नास्ति ग, अटा व्यवधानेऽपि भवति फ. 6. इति इत्यधिकम् क. 7. तस्मात् नास्ति अ. 8. इति इत्यधिकम् फ.ह. 9. परि वि अव इत्येभ्यः क्रीणातेः फ. 10. विक्रीणीते नास्ति ब. 11. इति इत्यधिकम् क.ह, परिव्यवेभ्यः इति किम्? निष्क्रीणाति इत्यधिकम् ह. 12. वि परा इत्येवंपूर्वात् जयतेरात्मनेपदं फ. 13. विधीयते ग. 14. जयते ब. 15. विपराभ्यामिति किम्? जयति, अभिजयति इत्यधिकम् अ. 16. दाञः अ.न्या. प.मं., ददातेः नास्ति फ. 17. धनमादत्ते इत्यधिकम् क.ड.ग.ह. 18. उदाह-रणमिदं नास्ति फ. 19. इति इत्यधिकम् क.ड.फ.

क्रीडोऽनुसंपरिभ्यश्च । (२१/२६८७)

'क्रीड़ विहारे' (धा.पा. ३५०), [1]एतस्माद् अनु सम् परि इत्येवंपूर्वाद् आङ्पूर्वाच्चात्मनेपदं भवति । अनुक्रीडते । [2]सङ्क्रीडते । परिक्रीडते । [3]आङः खल्वपि, आक्रीडते । समा साहचर्यादन्वादि[4]रुपसर्गो गृह्यते, [5]तेनेह कर्मप्रवचनीयप्रयोगे न भवति, माणवकमनु क्रीडति[6] (म.भा. १.२८१) ।

[३४] समोऽकूजने इति वक्तव्यम् । (म.भा. १.२८०)

[7]सङ्क्रीडन्ति शकटानि ।

[३५] [8]आगमेः क्षमायामात्मनेपदं वक्तव्यम् । (म.भा. १.२८०)

क्षमा उपेक्षा, कालहरणम् इति यावत् । आगमयस्व तावन्माणवकम् (म.भा. १.२८०) ।

[३६] शिक्षेर्जिज्ञासायाम् । (म. भा. १.२८०)

विद्यासु शिक्षते[9] (म. भा. १.२८०) ।

[३७] आशिषि नाथः । (म. भा. १.२८०)

[10]सर्पिषो नाथते । मधुनो नाथते (म. भा. १.२८०) । आशिषि इति किम् ? माणवकमनुनाथति ।

[३८] [11]हरतेर्गतताच्छील्ये । (म. भा. १.२८०)

पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते (म. भा. १.२८०) । गतताच्छील्ये इति किम् ? मातुरनुहरति[12] ।

[३९] किरतेर्हर्षजीविकाकुलायकरणेष्विति [13]वक्तव्यम् । (म.भा. १.२८०)

अपस्किरते [14]वृषभो हृष्टः । [15]जीविकायाम्—अपस्किरते कुक्कुटो भक्षार्थी । कुलायकरणे—अपस्किरते श्वा आश्रयार्थी (म. भा. १.२८०) । [16]हर्षादिषु इति किम् ? अपकिरति कुसुमम्[17] ।

[४०] आङि नुप्रच्छयोरुपसङ्ख्यानम् । (म.भा. १.२८०)

आनुते शृगालः । आपृच्छते गुरुम् ।

[४१] शप [18]उपलम्भन इति वक्तव्यम् । (म. भा. १.२८०)

वाचा शरीरस्पर्शनमुपलम्भनम् । देवदत्ताय शपते । यज्ञदत्ताय शपते (म.भा. १.२८०) । [19]उपलम्भने इति किम् ? शपति ॥

---

1. अस्मात् अ. 2. सङ्क्रीडते नास्ति फ. 3. आङः खल्वपि नास्ति ग. 4. उपसर्गाः गृह्यन्ते ग. 5. तेन नास्ति फ. 6. इति इत्यधिकम् ह. 7. इह मा भूत् इत्यधिकम् अ. ग. ह. 8. क्षमायामागमेः क. 9. धनुषि शिक्षते इत्यधिकम् अ. क. ड. फ. ग. प. मं. 10. उदाहरणमिदं नास्ति ग. 11. गतिताच्छील्ये ब. क. ड. ग. न्या. प. मं. 12. पितुरनुहरति इत्यधिकम् ह. 13. वक्तव्यम् नास्ति क. 14. वृषभो नास्ति फ. 15. जीविकायाम् नास्ति फ. 16. हर्षादिषु—कुसुमम् नास्ति ग. 17. इह तङसुटौ न। हर्षादिमात्रसत्त्वे तु यद्यपि तङ प्राप्तः तद्विधौ चतुष्पाच्छकुनिकर्तृकस्य आलेखनस्य चानिमित्तत्वात् तथापि शब्दशक्तिस्वाभाव्यात् सुडभावो नेष्यते । तेन गजोऽपकिरति इत्येवमाहुः । 'ऋत इद्धातोः' अपशब्दाच्छकुनिषु आलेखने इति सुट् इत्यधिकम् अ. 18. उपालम्भने ड. 19. उपालम्भने ड.

## समवप्रविभ्यः स्थः । (२२/२६८९)

सम् अव प्र वि इत्येवंपूर्वात् तिष्ठते[1]रात्मनेपदं भवति । संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ।

[४२] आङः स्थः प्रतिज्ञाने इति वक्तव्यम् । (म.भा. १.२८०)

अस्ति [2]सकारमातिष्ठते[3] । आगमौ गुणवृद्धी आतिष्ठते (म.भा. १.२८०) ॥

## प्रकाशनस्थेयाख्ययोश्च । (२३/२६९०)

स्वाभिप्रायकथनं प्रकाशनम्[4] । स्थेयस्याख्या स्थेयाख्या । तिष्ठत्यस्मिन्निति स्थेयः । [5]विवादपदनिर्णेता लोके स्थेयः इति [6]प्रसिद्धः । तस्य प्रतिपत्त्यर्थमाख्याग्रहणम् । प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति । प्रकाशने तावत्––तिष्ठते कन्या छात्रेभ्यः । तिष्ठते वृषली [7]ग्रामपुत्रेभ्यः । प्रकाशयत्यात्मानम् इत्यर्थः । स्थेयाख्यायाम्––त्वयि तिष्ठते । [8]मयि तिष्ठते । 'संशय्य कर्णादिषु तिष्ठते यः' (कि. ३.१४) ॥

## उदोऽनूर्ध्वकर्मणि । (२४/२६९१)

उत्पूर्वात् तिष्ठतेरनूर्ध्वकर्मणि वर्तमानादात्मनेपदं [9]भवति । कर्मशब्दः क्रियावाची । [10]अनूर्ध्वताविशिष्ट-क्रियावचनात् तिष्ठते[11]रात्मनेपदं भवति । गेहे [12]उत्तिष्ठते । कुटुम्बे [13]उत्तिष्ठते । तदर्थं[14]यतते इत्यर्थः ।

[४३] उद ईहायामिति वक्तव्यम् । (म.भा. १.२८१)

इह मा भूत्, अस्माद् ग्रामात् शतमुत्तिष्ठति । शतमुत्पद्यते इत्यर्थः । ईहाग्रहणमनूर्ध्वकर्मण एव विशेषणं, नापवादः । अनूर्ध्वकर्मणि इति किम्? आसनादुत्तिष्ठति[15] ॥

## उपान्मन्त्रकरणे । (२५/२६९२)

उपपूर्वात् तिष्ठतेर्मन्त्रकरणेऽ[16]र्थे वर्तमानादात्मनेपदं भवति । ऐन्द्र्या गार्हपत्यमु[17]पतिष्ठते । आग्नेय्या आग्नीध्रमुपतिष्ठते । मन्त्रकरणे इति किम्? भर्तारमुपतिष्ठति यौवनेन ।

[४४] उपाद्देवपूजा[18]सङ्गतकरण[19]मित्रकरणपथिष्विति वाच्यम् । (म.भा. १.२८१)

देवपूजायाम्––आदित्यमुपतिष्ठते । [20]सङ्गतकरणे––रथिकानुपतिष्ठते[21] । [22]मित्रकरणे––महामात्रानु-पतिष्ठते । मित्रकरण[23]सङ्गतकरणयोः को विशेषः[24]? [25]सङ्गतकरण[26]मुपश्लेषः । तद्यथा, गङ्गा यमुनामुपतिष्ठते । मित्रकरणं [27]तु विनाप्युपश्लेषेण मैत्रीसम्बन्धः । पथि––अयं पन्थाः [28]स्रुघ्नमुपतिष्ठते ।

---

1. धातोः इत्यधिकम् अ.क. 2. सकारमात्रम् इ.फ.ह. 3. आपिशलः सः इत्यधिकम् ग. 4. उच्यते इत्यधिकम् फ. 5. विवादनिर्णयकर्ता निर्णेता अ.क. 6. रूढः क.ग, रूढिः अ. 7. ग्रामपुत्रकेभ्यः ड. 8. उदाहरणमिदं नास्ति क. 9. भवति नास्ति क. 10. अनूर्ध्वत्रिशिष्ट° क, अनूर्ध्वक्रियतावचनात् ह, अनूर्ध्वकर्मविशिष्टात् क्रियावचनात् न्या. 11. धातोः इत्यधिकम् क. 12, 13. उत्तिष्ठताम् ग. 14. घटते अ.क.ड, पठते ब. 15. शयनादुत्तिष्ठति इत्यधिकम् ह. 16. अर्थे नास्ति अ. 17. उपतिष्ठति क. 18. संगति ब.क.ग. 19. मित्रीकरण इ.ग.ह. 20. संगतिकरणे ब.क.ग. 21. पथिकानुपतिष्ठते इत्यधिकम् क. 22. मैत्रकरणे अ. 23. °संगति ब.क.ग. 24. अस्ति इत्यधिकम् ग. 25. संगति° ब.क.ग. 26. उपश्लेषणं ड. 27. हि ग. 28. विघ्नं ह.

[४५] वा लिप्सायामिति वक्तव्यम्। (म.भा. १.२८१)

भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठति इति वा (म.भा. १.२८१)॥

## अकर्मकाच्च। (२६/२६९३)

उपात् इति वर्तते। उपपूर्वात् तिष्ठतेरकर्मकात् अकर्मकक्रियावचनादात्मनेपदं भवति। यावद्भुक्तमुपतिष्ठते। यावदोदनमुपतिष्ठते। भुक्तम् इति भावे [1]क्तप्रत्ययः। भोजने भोजने[2] सन्निधीयते इत्यर्थः। अकर्मकात् इति किम्? राजानमुपतिष्ठति॥

## उद्विभ्यां तपः। (२७/२६९४)

अकर्मकात् इति वर्तते। उत् वि इत्येवंपूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति। उत्तपते। वितपते। दीप्यते इत्यर्थः। अकर्मकात् इत्येव। उत्तपति सुवर्णं सुवर्णकारः। वितपति [3]पृथ्वीं सविता।

[४६] स्वाङ्गकर्मकाच्चेति वक्तव्यम्। (म.भा. १.२८१)

उत्तपते पाणिम्, उत्तपते पृष्ठम्। वितपते पाणिम्, वितपते पृष्ठम्। स्वाङ्गं चेह न पारिभाषिकं गृह्यते "[4]अद्रवं मूर्तिमत् स्वाङ्गम्' इति। किं तर्हि? स्वमङ्गं स्वाङ्गम्[5]। तेनेह न भवति, देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपति इति। उद्विभ्याम् इति किम्? निष्टपति॥

## आङो यमहनः। (२८/२६९५)

अकर्मकात् इति वर्तते। 'यम उपरमे' (धा.पा. ९८४), 'हन हिंसागत्योः' (धा.पा. १०९२) [6]इति परस्मैपदिनौ। ताभ्यामकर्मकक्रियावचनाभ्याम् आङ्पूर्वाभ्यामात्मनेपदं भवति। आयच्छते, [7]आयच्छेते आयच्छन्ते। हनः खल्वपि—आहते, [8]आघ्नाते, आघ्नते। अकर्मकात् इत्येव। आयच्छति कूपाद् रज्जुम्। आहन्ति [9]वृषलं पादेन (म.भा. १.२८२)।

[४७] स्वाङ्गकर्मकाच्चेति वक्तव्यम्। (म.भा. १.२८२)

आयच्छते पाणिम्। आहते शिरः (म.भा. १.२८२)। स्वाङ्गं चेह न पारिभाषिकं गृह्यते। [10]किं तर्हि? स्वमङ्गं स्वाङ्गम्। तेनेह न भवति, आहन्ति शिरः परकीयम् इति॥

## [11]समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः। (२९/२६९९)

अकर्मकात् इति वर्तते। 'शेषात् कर्तरि परस्मैपदम्' (१.३.७८/२१५९) इति प्राप्ते[12] सम्पूर्वेभ्यो गमि ऋच्छि [13]प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्यो[14]ऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति। सङ्गच्छते।

---

1. क्तः ग. 2. च इत्यधिकम् क. 3. पृष्ठं इ. फ. ग., पृष्ठीं ब. ई. 4. अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथायुतम् क. ग. 5. इति इत्यधिकम् फ. 6. एतौ ड, उभौ अ. 7. आयच्छेते नास्ति अ. 8. आघ्नाते नास्ति अ. 9. वृषीं ब. 10. किं तर्हि? स्वमंगं स्वाङ्गं नास्ति अ., किं तर्हि—इति नास्ति ग. 11. 'समोगम्यृच्छिभ्याम्' इत्येव सूत्रपाठः, वार्त्तिकप्रक्षेपेणायं पाठः काशिकाकारैः स्वीकृतः 12. आत्मनेपदं विधीयते इत्यधिकम् अ. 13. प्रच्छि नास्ति ड, स्वृ अर्ति क. 14. अकर्मकेभ्यो धातुभ्यः नास्ति ड.

समृच्छते। संपृच्छते। संस्वरते। सङ्कल्पा अस्य समरन्त। अर्तेर्लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' (३.१.५६/२३८२) इत्यङादेशः। तत्र [1]परस्मैपदेषु (३.१.५५/२३४३) [2]इत्येतन्नाश्रीयते। 'बहुलं छन्दस्यमाङ्योगेऽपि' (६.४.७५/३५४६) [3]इत्याट् प्रतिषध्यते। 'ऋदृशोऽङि गुणः' (७.४.१६/३४०६) इति [4]गुणः—समरन्त। संशृणुते। संवित्ते। ऋच्छेरनादेशस्य ग्रहणम्, समृच्छिष्यते। अर्त्यादेशस्य त्वर्तीत्येव [5]सिद्धमात्मनेपदम्। अर्तिरुभयत्र पठ्यते, 'ऋ गतिप्रापणयोः' (धा.पा. ९३६) इति [6]भ्वादौ, 'ऋ सृ गतौ' (धा.पा. १०९८–१०९९) इति जुहोत्यादौ। [7]विशेषाभावाद् [8]द्वयोरपि ग्रहणम्। विदेर्ज्ञानार्थस्य ग्रहणम्[9] (धा. पा. १०६५), परस्मैपदिभिर्गमादिभिः साहचर्यात्, न लाभार्थस्य [10]स्वरितेत्त्वादुभयतोभाषस्य (धा.पा. १४३३)।

[४८] दृशेश्चेति वक्तव्यम्। (म.भा. १.२८२)

संपश्यते। अकर्मकात् इत्येव। ग्रामं संपश्यति[11]॥

## निसमुपविभ्यो ह्वः। (३०/२७०३)

अकर्मकात् इति निवृत्तम्। [12]अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम्। नि सम् उप वि इत्येवंपूर्वात् ह्वयते[13]र्धातोरात्मनेपदं भवति। निह्वयते। संह्वयते। उपह्वयते। विह्वयते। अकर्त्रभिप्रायार्थोऽयमारम्भः। [14]अन्यत्र हि ञित्त्वात् सिद्धमेवात्मनेपदम्।

[४९] उपसर्गादस्यत्यूह्योर्वा वचनम्। (म.भा. १.२८२)

निरस्यति, निरस्यते। समूहति, समूहते॥

## स्पर्धायामाङः। (३१/२७०४)

अकर्त्रभिप्रायार्थोऽयमारम्भः। स्पर्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति। स्पर्धा सङ्घर्षः, पराभिभवेच्छा, स विषयो धात्वर्थस्य। धातुस्तु शब्दक्रिय एव। मल्लो मल्लमाह्वयते। छात्रश्छात्रमाह्वयते। स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः। स्पर्धायाम् इति किम्? गामाह्वयति [15]गोपालः॥

## गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः। (३२/२७०५)

[16]कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। गन्धनादिष्वर्थेषु वर्तमानात् करोते[17]रात्मनेपदं भवति। गन्धनमपकारप्रयुक्तं हिंसात्मकं सूचनम्। तथाहि, '[18]बस्त गन्ध अर्दने' (धा.पा. १६८४–१६८५), 'अर्द हिंसायाम्' (धा. पा. १८२९) इति[19] चुरादौ पठ्यते। अवक्षेपणं भर्त्सनम्। सेवनमनुवृत्तिः। साहसिक्यं साहसिकं कर्म। प्रतियत्नः सतो गुणान्तराधानम्। प्रकथनं प्रकर्षेण कथनम्। उपयोगो धर्मादि[20]प्रयोजनो विनियोगः। गन्धने तावत्—उत्कुरुते। [21]उदाकुरुते। सूचयति इत्यर्थः। अवक्षेपणे—श्येनो वर्तिका[22]मुदाकुरुते। भर्त्सयति इत्यर्थः। सेवने—गणकानुपकुरुते। महामात्रानु[23]पकुरुते। सेवते इत्यर्थः।

1. हि इत्यधिकम् ड. 2. एतत् नास्ति अ. 3. आट् नास्ति फ. 4. गुणः नास्ति फ. 5. सिद्धमेव क. 6. भूवादौ अ.ड.ह. 7. विशेषणाभावात् ह. 8. उभयोः क.फ. 9. भवति इत्यधिकम् फ. 10. स्वरितत्वात् क. 11. ग्रामं संगच्छति इत्यधिकम् अ.ह.ई, संगच्छते ब, संगच्छति ग्रामे ग. 12. इतः अ.ग. 13. धातोः नास्ति फ. 14. तत्र हि अ.क.फ, नास्ति ड. 15. गोपालः नास्ति अ, गोधुक् ह. 16. कर्त्रभिप्रायक्रियाफले ड. 17. धातोः इत्यधिकम् अ.क.फ. 18. वस्त नास्ति अ, वस् क, बन्धगर्ध ह. 19. च इत्यधिकम् क. 20. °प्रयोजने ब.ड. 21. उदाकुरुते नास्ति अ.ह. 22. अवकुरुते अ, अपकुरुते, निर्भर्त्सयति क. 23. प्रकुरुते क.

साहसिक्ये—परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते इत्यर्थः। प्रतियत्ने—एधो दकस्योपस्कुरुते। [1]काण्डं गुडस्योपस्कुरुते। [2]तस्य सतो गुणान्तराधानं करोति इत्यर्थः। [3]षष्ठीसुटौ [4]करोतेः प्रतियत्न एव विधीयेते (२.३.५३/६१४) (६.१.१३९/२५५२)। प्रकथने—गाथाः प्रकुरुते। जनापवादान् प्रकुरुते। प्रकर्षेण कथयति इत्यर्थः। उपयोगे—शतं प्रकुरुते। [5]सहस्रं प्रकुरुते। [6]धर्मार्थं शतं विनियुङ्क्ते इत्यर्थः। [7]एतेषु इति किम्? कटं करोति॥

## अधेः प्रसहने। (३३/२७०६)

[8]अकर्त्रभिप्रायार्थोऽयमारम्भः। अधिपूर्वात् करोतेः प्रसहने वर्तमानात् आत्मनेपदं भवति। प्रसहनमभिभवः अपराजयो वा। [9]तमधिचक्रे। तम[10]भिबभूव, न तेन पराजितः [11]इत्यर्थः। प्रसहने इति किम्? अर्थमधिकरोति[12]। पृथग्योगकरणमुपसर्गविशेषणार्थम्॥

## वेः शब्दकर्मणः। (३४/२७०७)

कृञः [13]इत्यनुवर्तते। विपूर्वात् करोते[14]रकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति। कर्मशब्द इह कारकाभिधायी, न[15] क्रियावचनः। क्रोष्टा विकुरुते स्वरान्। ध्वाङ्क्षो विकुरुते स्वरान्। शब्दकर्मणः इति किम्? विकरोति पयः॥

## अकर्मकाच्च। (३५/२७०८)

वेः कृञ इत्यनुवर्तते। विपूर्वात् करोते[16]रकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। विकुर्वते सैन्धवाः। साधु दान्ताः शोभनं वलगन्ति इत्यर्थः। ओदनस्य पूर्णाश्छात्रा विकुर्वते। निष्फलं चेष्टन्ते इत्यर्थः[17]॥

## सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। (३६/२७०९)

'णीञ् प्रापणे' (धा.पा. ९०१)। अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। [18]णीञ् प्रापणे इत्येतस्मात् धातोरात्मनेपदं भवति सम्माननादिषु [19]विशेषणेषु सत्सु। सम्माननं पूजनम्—[20]नयते चार्वी लोकायते। चार्वी बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी। स लोकायते [21]शास्त्रे पदार्थान् नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति। ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति। उत्सञ्जनमुत्क्षेपणम्—माणवकमुदानयते। [22]उत्क्षिपति इत्यर्थः। आचार्यकरणमाचार्यक्रिया—माणवकमीदृशेन विधिना आत्मसमीपं प्रापयति यथा स उपनेता स्वयमाचार्यः सम्पद्यते। माणवकमुपनयते। आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं प्रापयति इत्यर्थः। ज्ञानं प्रमेयनिश्चयः—नयते चार्वी लोकायते। तत्र प्रमेयं निश्चिनोति इत्यर्थः। भृतिर्वेतनम्—कर्मकरानुपनयते। भृतिदानेन [23]समीपं करोति इत्यर्थः। विगणनमृणादे[24]र्निर्यातनम्—मद्राः [25]करं विनयन्ते। निर्यातयन्ति इत्यर्थः। व्ययो धर्मादिषु विनियोगः। शतं विनयते। सहस्रं विनयते। धर्माद्यर्थं शतं [26]विनियुङ्क्ते इत्यर्थः। एतेषु इति किम्? अजां नयति ग्रामम्॥

---

1. काण्डगुणस्य अ, काण्डं गुणस्य ब. क. ड. ह. 2. तस्य नास्ति ब. ड. 3. षष्ठी च सुट् च अ. ब. ह. 4. कृञः अ. क, उपात् प्रतियत्ने इति सुट् अ. 5. उदाहरणमिदं नास्ति ड. फ. 6. धर्माद्यर्थं क. 7. एषु फ. 8. अकर्त्रभिप्रायार्थे फ. 9. तं ह्यधिचक्रे क. 10. अभिभूतवान् ह. 11. इति वा अ.ड. 12. कथम् इत्यधिकम् फ. 13. इति वर्तते फ. 14. धातोः इत्यधिकम् ड. 15. च इत्यधिकम् ड. 16. अकर्मकात् नास्ति फ. 17. अकर्मणः इति किम्? कटं विकरोति इत्यधिकम् अ.ड.फ.ह. 18. नयतेर्धातोः ह. 19. विशेषेषु क. 20. नियते ब. 21. शास्त्रे नास्ति अ. 22. ऊर्ध्वं प्राप्रयतीत्यर्थः क. 23. समीपीकरोति अ.क.ह, प्रापयति फ. 24. प्रतिनिर्यातनम् फ. 25. कारं ह. 26. सहस्रं वा इत्यधिकम् अ.

## कर्तृस्थे चाशरीरे कर्मणि । (३७/२७१०)

[1]नयतेः कर्ता देवदत्तादिर्लकारवाच्यः । [2]कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति । शरीरं [3]प्राणिकायः, तदेकदेशोऽपि शरीरम् । क्रोधं विनयते । मन्युं विनयते[4] । कर्तृस्थे इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति । अशरीरे इति किम्? [5]गडुं विनयति । [6]घाटां विनयति । कर्मणि इति किम्? बुद्ध्या विनयति । प्रज्ञया विनयति ॥

## वृत्तिसर्गतायनेषु क्रमः । (३८/२७११)

शेषात् कर्तरि परस्मैपदे (१.२.७८/२१५९) प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति । वृत्तिर-प्रतिबन्धः । सर्ग उत्साहः । तायनं स्फीतता । वृत्तौ तावत्—[7]ऋक्ष्वस्य क्रमते बुद्धिः । न प्रतिहन्यते इत्यर्थः । [8]यजुःष्वस्य क्रमते बुद्धिः । [9]सर्गे—[10]व्याकरणाध्ययनाय क्रमते । उत्सहते इत्यर्थः । तायने—अस्मिन् [11]शास्त्राणि क्रमन्ते । [12]स्फीतीभवन्ति इत्यर्थः । [13]एतेषु इति किम् ? अपक्रामति[14] ॥

## उपपराभ्याम् । (३९/२७१२)

वृत्तिसर्गतायनेषु इति वर्तते । [15]उपपरापूर्वात् क्रमतेर्वृत्त्यादिष्वर्थेषु वर्तमानादात्मनेपदं भवति । किमर्थं तर्हीदमुच्यते ? उपसर्गनियमार्थम् । सोपसर्गादुपपरापूर्वादेव, नान्यपूर्वात् इति । उपक्रमते । पराक्रमते । उपपराभ्याम् इति किम् ? सङ्क्रामति । वृत्त्यादिष्वित्येव । उपक्रामति । पराक्रामति[16] ॥

## आङ उद्गमने । (४०/२७१३)

आङ्पूर्वात् क्रमतेरुद्गमने वर्तमानादात्मनेपदं भवति । [17]आक्रमते आदित्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि । उद्गमने इति किम् ? आक्रामति माणवकः [18]कुतुपम् ।

[५०] ज्योतिरुद्गमने इति वक्तव्यम् । (म.भा. १.२८२)

इह मा भूत्, आक्रामति धूमो [19]हर्म्यतलात् (म.भा. १.२८२) ॥

## वेः पादविहरणे । (४१/२७१४)

विपूर्वात् क्रमतेः पादविहरणेऽ[20]र्थे वर्तमानादात्मनेपदं भवति । विहरणं विक्षेपः । [21]सुष्ठु विक्रमते । साधु विक्रमते । अश्वादीनां गतिविशेषो [22]विक्रमणमुच्यते । यद्यपि [23]क्रमिः पादविहरण[24] एव पठ्यते, [25]'क्रमु पादविक्षेपे' (धा.पा. ४७३) इति, तथाप्यनेकार्थत्वाद् धातूनामेवमुक्तम् । पादविहरणे इति किम् ? विक्रामत्य-जिनसन्धिः ॥

---

1. णीञ् इति वर्तते इत्यधिकम् फ. 2. तत्तस्थे फ. 3. प्राणि नास्ति क. 4. शमयति इत्यर्थः इत्यधिकम् ह. 5. गदं ब. 6. षण्ढं ब, कण्डूं क, नास्ति फ. 7. ऋचि अस्य ड. 8. उदाहरणमिदं नास्ति फ. 9. सर्गः क. 10. लोकायताध्ययनाय क. फ. ह. 11. शास्त्रसहस्राणि क. 12. स्फीतानि अ. ह. 13. एतेषु—अपक्रामति नास्ति फ. ह, एतेषु इत्यस्य स्थाने वृत्त्यादिषु प. मं. 14. 'क्रमः परस्मैपदेषु' (7.3.76/2322) इति दीर्घः इत्यधिकम् अ. 15. उपपरा इत्येवंपूर्वात् ड. 16. 'क्रमः परस्मैपदेषु' (7.3.76/2322) इति दीर्घः इत्यधिकम् अ. 17. उदाहरणमिदं नास्ति फ. 18. कुतपम् ब. फ. ई. ड. 19. हर्म्यतलम् अ. ब. ई, तलमिति फ. 20. अर्थे नास्ति क. 21. सुष्ठु नास्ति फ. 22. विहरणं फ. 23. च इत्यधिकम् क. 24. अर्थे इत्यधिकम् क, एव नास्ति फ. 25. क्रमु पादविक्षेपे इति नास्ति फ.

## प्रोपाभ्यां समर्थाभ्याम् । (४२/२७१५)

प्र उप इत्येताभ्यां[1] परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ तुल्यार्थौ भवतः। क्व चानयोस्तुल्यार्थता? आदिकर्मणि। प्रक्रमते भोक्तुम्। उपक्रमते भोक्तुम्। समर्थाभ्याम् इति किम्? पूर्वेद्युः प्रक्रामति। गच्छति इत्यर्थः। [2]अपरेद्युरुपक्रामति। आगच्छति इत्यर्थः। अथ 'उपपराभ्याम्' (१.३.३९/२७१२) इत्यनेनात्मनेपदमत्र[3] कस्मान् न भवति? वृत्त्यादिग्रहणं [4]तत्रानुवर्तते। ततोऽन्यत्रेदं प्रत्युदाहरणम्॥

## अनुपसर्गाद्वा । (४३/२७१६)

क्रमः इति वर्तते। अप्राप्तविभाषेयम्। [5]उपसर्गवियुक्तात् क्रमतेरात्मनेपदं वा भवति। क्रमते। क्रामति। अनुपसर्गात् इति किम्? सङ्क्रामति॥

## अपह्नवे ज्ञः । (४४/२७१७)

शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते [6]जानातेरपह्नवे वर्तमानाद् आत्मनेपदं भवति। अपह्नवोऽ[7]पह्नुतिरपलापः। सोपसर्गश्चायमपह्नवे वर्तते, न केवलः। शतमपजानीते। सहस्रमपजानीते। अपलपति इत्यर्थः। अपह्नवे इति किम्? न त्वं [8]किञ्चिदपि जानासि[9]॥

## अकर्मकाच्च । (४५/२७१८)

अकर्त्रभिप्रायार्थमिदम्। कर्त्रभिप्राये हि '[10]अनुपसर्गाज्ज्ञः' (१.३.७६/२७४३) इति[11] वक्ष्यति। जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। सर्पिषो जानीते। मधुनो जानीते। कथं चायमकर्मकः? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन। तथा च 'ज्ञोऽविदर्थस्य करणे' (२.३.५१/६१२) इति षष्ठी विधीयते--सर्पिषो जानीते, [12]मधुनो जानीते। सर्पिषा [13]उपायेन प्रवर्तते इत्यर्थः। अकर्मकात् इति किम्? स्वरेण पुत्रं जानाति॥

## संप्रतिभ्यामनाध्याने । (४६/२७१९)

ज्ञः [14]इति वर्तते। सकर्मकार्थमिदम्। सम् प्रति इत्येवंपूर्वाज् जानातेरनाध्याने वर्तमानादात्मनेपदं भवति। आध्यानमुत्कण्ठा[15]स्मरणम्। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते। सहस्रं प्रतिजानीते। अनाध्याने इति किम्? [16]मातुः सञ्जानाति। पितुः सञ्जानाति[17]। उत्कण्ठते इत्यर्थः (२.३.५२/६१३)॥

## भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः । (४७/२७२०)

शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते भासनादिषु [18]विशेषणेषु सत्सु वदतेरात्मनेपदं भवति। भासनं दीप्तिः--वदते चार्वी लोकायते। भासमानो दीप्यमानस्तत्र पदार्थान् [19]व्यक्तीकरोति इत्यर्थः।

---

1. उपसर्गाभ्यां इत्यधिकम् क.ह. 2. अपरे....इत्यर्थः नास्ति फ. 3. अत्र नास्ति क. 4. हि इत्यधिकम् ह. 5. उपसर्गविमुक्तात् क्रमेः ड. 6. इदं विधीयते इत्यधिकम् अ. 7. निह्नुतिः अ.ह. 8. किमपि अ. 9. मूढः इत्यधिकम् क.फ.ह. 10. इत्युपसर्गात् ब, नास्ति फ, त्वनुपसर्गात् ड. 11. तङ् इत्यधिकम् ड. 12. उदाहरणमिदं नास्ति फ. 13. उपायभूते फ. 14. ज्ञाने इत्यधिकम् फ. 15. स्मरणम् नास्ति फ. 16. स्मृतौ मा भूत् इत्यधिकम् अ. 17. 'अधीगर्थदयेशां कर्मणि' इति षष्ठी इत्यधिकम् फ. 18. अर्थेषु फ, न्या. 19. वक्रीकरोति ड, वक्ति इत्यर्थः अ.

उपसम्भाषा उपसान्त्वनम्–कर्मकरानुपवदते । उपसान्त्वयति इत्यर्थः । ज्ञानं सम्यगवबोधः––वदते चार्वी लोकायते । [1]जानाति वदितुम् इत्यर्थः । यत्न उत्साहः––क्षेत्रे वदते । [2]गेहे वदते । तद्विषयमुत्साहमाविष्करोति इत्यर्थः । विमतिर्नानामतिः–क्षेत्रे विवदन्ते । गेहे विवदन्ते । [3]विमतिपतिता विचित्रं भाषन्ते इत्यर्थः । उपमन्त्रणं रहस्युपच्छन्दनम्–[4]कुलभार्यामुपवदते । परदारान् उपवदते । [5]उपच्छन्दयति इत्यर्थः । [6]एतेषु इति किम् ? यत् किञ्चिद् वदति ॥

## व्यक्तवाचां समुच्चारणे । (४८/२७२१)

वदः इति वर्तते । [7]व्यक्तवाचां समुच्चारणं सहोच्चारणम् । तत्र वर्तमानाद् वदतेरात्मनेपदं भवति । ननु[8] 'वद व्यक्तायां वाचि' (धा. पा. १००९) इत्येव पठ्यते, तत्र किं व्यक्तवाचाम् इति[9] विशेषणेन ? प्रसिद्ध्युपसंग्रहार्थ[10]मेतत् । व्यक्तवाचः इति [11]हि मनुष्याः प्रसिद्धाः । तेषां समुच्चारणे यथा स्यात् । संप्रवदन्ते ब्राह्मणाः । संप्रवदन्ते क्षत्रियाः । व्यक्तवाचाम् इति किम् ? [12]संप्रवदन्ति कुक्कुटाः (म. भा. १.२८३) । समुच्चारणे इति किम् ? [13]ब्राह्मणो वदति । क्षत्रियो वदति ॥

## अनोरकर्मकात् । (४९/२७२२)

वदः इति, व्यक्तवाचाम् इति [14]च वर्तते । अनुपूर्वाद् वदतेरकर्मकाद् [15]व्यक्तवाग्विषयादात्मनेपदं भवति । अनुवदते कठः [16]कलापस्य । अनुवदते [17]मौद्गः पैप्पलादस्य । अनुः सादृश्ये । यथा [18]कलापोऽधीयानो वदति तथा कठः इत्यर्थः । अकर्मकात् इति किम् ? पूर्वमेव यजुरुदितमनुवदति । [19]व्यक्तवाचाम् इत्येव । अनुवदति वीणा ॥

## विभाषा विप्रलापे । (५०/२७२३)

वदः इति वर्तते, व्यक्तवाचां समुच्चारणे इति च । [20]विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्तमानाद् वदतेरात्मनेपदं भवति विभाषा । प्राप्तविभाषेयम् । विप्रवदन्ते [21]सांवत्सराः, विप्रवदन्ति सांवत्सराः । विप्रवदन्ते [22]मौहूर्ताः, विप्रवदन्ति मौहूर्ताः । युगपत् [23]परस्पर[24]प्रतिषेधेन विरुद्धं [25]वदन्ति इत्यर्थः । विप्रलापे इति किम्? [26]संप्रवदन्ते ब्राह्मणाः । व्यक्तवाचाम् इत्येव । विप्रवदन्ति शकुनयः । समुच्चारणे [27]इत्येव । क्रमेण मौहूर्ता [28]मौहूर्तेन सह [29]विप्रवदन्ति ॥

---

1. ज्ञानं वदति इत्यर्थः अ, प्रमितुं इत्यर्थः ह. 2. उदाहरणमिदं नास्ति अ. 3. विमतिप्रतिपन्ना ड. 4. गुरुभार्यामुपवदते अ. 5. रहसि इत्यधिकम् क. ह. 6. तेषु ड. 7. व्यक्ता वाचो येषां ते व्यक्तवाचस्तेषां इत्यधिकम् फ. 8. च इत्यधिकम् फ. ह. 9. अनेन इत्यधिकम् ड. 10. इदम् फ. 11. हि नास्ति फ. 12. वरतनु इत्यधिकम् ब. ड. ह,

'अयि विजहीहि दृढोपगूहनं त्यज नवसंगमभीरु वल्लभम् ।
अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः ॥' क.
'अपनय पादसरोजमंकतः शिथिलय बाहुलतां गलादृताम् ।
क्व च वदनेंऽशुकमाकुलीकृतं वरतनु संप्रवदन्ति कुक्कुटाः ॥' पदमं.

13. उदाहरणमिदं नास्ति अ. 14. च नास्ति ह. 15. व्यक्तवाग्विशेषविषयात् क. 16. कालापस्य क. 17. मोदेः ब, मोदः क. ड. फ. 18. अधीयमानो फ. 19. व्यक्तवाचम् ब. 20. विरुद्धः प्रलापो विप्रलापः इत्यधिकम् अ. क. ह. 21. सांवत्सरिकाः ह. 22. मौहूर्तिकाः क. फ. ह. 23. परस्परं अ. ड. 24. विप्रतिषेधेन क. 25. भाषन्ते फ. 26. उदाहरणमिदं नास्ति अ. 27. इति किम् फ. 28. मौहूर्तिकेन क, मौहूर्तिकैः फ. 29. प्रवदन्ते फ.

## अवाद् ग्रः । (५१/२७२४)

'[1]गॄ निगरणे' (धा.पा. १४१०) इति तुदादौ पठ्यते, तस्येदं ग्रहणम् । न [2]तु 'गॄ शब्दे' (धा.पा. १४९८) [3]इति क्र्यादिपठितस्य । [4]तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति (म.भा. १.२८३) । शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते अवपूर्वाद् गिरतेरात्मनेपदं भवति । अवगिरते, [5]अवगिरेते, अवगिरन्ते । अवात् इति किम्? गिरति ॥

## समः प्रतिज्ञाने । (५२/२७२५)

[6]ग्रः इति वर्तते । संपूर्वात् गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति । प्रतिज्ञानम् अभ्युपगमः[7] । शतं संगिरते[8] । नित्यं शब्दं संगिरते[9] । प्रतिज्ञाने इति किम्? सङ्गिरति ग्रासम् ॥

## उदश्चरः सकर्मकात् । (५३/२७२६)

शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते उत्पूर्वाच् चरतेः सकर्मकक्रियावचनादात्मनेपदं भवति । गेहमुच्चरते । कुटुम्बमुच्चरते । [10]गुरुवचनमुच्चरते । उत्क्रम्य गच्छति इत्यर्थः । सकर्मकात् इति किम्? [11]बाष्पमुच्चरति ॥

## समस्तृतीयायुक्तात् । (५४/२७२७)

सम्पूर्वाच् चरतेस्तृतीयायुक्तादात्मनेपदं भवति । [12]तृतीया इति तृतीयाविभक्तिर्गृह्यते, तया चरतेरर्थद्वारको योगः । अश्वेन सञ्चरते[13] । तृतीयायुक्तात् इति किम्? उभौ लोकौ सञ्चरसि इमं चामुं च [14]देवल (म.भा. १.२८३) । यद्यप्यत्र तदर्थयोगः सम्भवति, तृतीया तु न श्रूयते, इति प्रत्युदाहरणं भवति ॥

## दाणश्च सा चेच्चतुर्थ्यर्थे । (५५/२७२८)

'दाण् दाने' (धा.पा. ९३०) परस्मैपदी । ततः [15]सम्पूर्वात् तृतीयायुक्तात् आत्मनेपदं भवति, सा चेत् तृतीया चतुर्थ्यर्थे [16]भवति । कथं पुनस्तृतीया चतुर्थ्यर्थे स्यात्? वक्तव्यमे[17]वैतत्—

[५१] अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति[18] वक्तव्यम् ।

दास्या संप्रयच्छते[19] । [20]वृषल्या संप्रयच्छते (म.भा.१.२८४) । [21]कामुकः सन् दास्यै ददाति इत्यर्थः । चतुर्थ्यर्थे इति किम्? पाणिना संप्रयच्छति । समः प्रशब्देन व्यवधाने [22]कथमात्मनेपदं भवति? समः इति [23]विशेषणे षष्ठी, न पञ्चमी[24] ॥

---

1. गृ ह. 2. तेन फ. 3. इत्यादि ब, क्रियादि फ. 4. तस्य नास्ति ह, हि नास्ति अ. 5. उदाहरणमिदं नास्ति अ. ब. फ. 6. गिरः फ. 7. प्रतिश्रवोऽङ्गीकरणं इत्यधिकम् अ. क. फ. ह. 8. शतं प्रतिजानीते इत्यधिकम् अ.ह. 9. वैयाकरणः इत्यधिकम् क.फ.ह, सन्तं च सर्वत्र संगिरन्ते शिष्याः इत्यधिकम् फ. 10. गुरुवचः ह. 11. वाष्प उच्चरति ड. 12. वाक्यमिदं नास्ति ड. 13. रथेन सञ्चरते इत्यधिकम् क. ड. फ. ह. ई. 14. नारद अ. 15. च इत्यधिकम् क. 16. वर्तते ड. 17. एव नास्ति फ. 18. इति वक्तव्यम् नास्ति क.ड.फ. 19. मालाम् इत्यधिकम् फ. प मं न्या. 20. उदाहरणमिदं नास्ति फ. 21. कामुकः सः ड. 22. कथं न तृतीयात्मनेपदं फ. 23. विशेषणषष्ठी क. ड. ह. ई. प मं. 24. अशिष्टव्यवहारे इति किम्? मात्रे संप्रयच्छति इत्यधिकम् क.

## उपाद्यमः स्वकरणे । (५६/२७२९)

शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते उपपूर्वात् [1]यमः स्वकरणे वर्तमानादात्मनेपदं भवति । पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम् । भार्यामुपयच्छते[2] । स्वकरणे इति किम् ? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति ॥

## ज्ञाश्रुस्मृदृशां सनः । (५७/२७३१)

ज्ञा श्रु स्मृ दृश् इत्येतेषां सन्नन्तानामात्मनेपदं भवति । तत्र जानातेः 'अपह्नवे ज्ञः' (१.३.४४/२७१७) [3]इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि 'समो गम्यृच्छि[04]' (१.३.२९/२६९९) इत्यत्र [5]विहितम् । [6]तस्मिन् विषये 'पूर्ववत् सनः' (१.३.६२/२७३४) [7]इत्येव सिद्धमात्मनेपदम् । ततोऽन्यत्रानेन विधीयते । [8]स्मरते पुनरप्राप्त एव विधानम् । धर्मं जिज्ञासते । गुरुं शुश्रूषते । नष्टं सुस्मूर्षते । नृपं दिदृक्षते । सनः इति किम् ? जानाति, शृणोति, [9]स्मरति, पश्यति ॥

## नानोर्ज्ञः । (५८/२७३२)

पूर्वेण योगेन प्राप्तमात्मनेपदं [10]प्रतिषिध्यते । अनुपूर्वाज् जानातेः सन्नन्तादात्मनेपदं न भवति । तथा च सति सकर्मकस्यै[11]वायं प्रतिषेधः सम्पद्यते[12] । पुत्रमनुजिज्ञासति[13] । अनोः इति किम् ? धर्मं जिज्ञासते[14] ॥

## प्रत्याङ्भ्यां श्रुवः । (५९/२७३३)

प्रति आङ इत्येवंपूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति । प्रतिशुश्रूषति । आशुश्रूषति[15] । [16]उपसर्गग्रहणं चेदं, तस्मादिह [17]प्रतिषेधो न भवति, [18]देवदत्तं प्रति शुश्रूषते ॥

## शदेः शितः । (६०/२३६२)

'शद्लृ शातने' (धा. पा. १८५५) परस्मैपदी, तस्मादात्मनेपदं विधीयते । शदिर्यः शित्, शिद्भावी,: शितो वा सम्बन्धी तस्मादात्मनेपदं भवति । शीयते, शीयेते, शीयन्ते । शितः इति किम् ? [19]अशत्स्यत् । [20]शत्स्यति । [21]शिशत्सति ॥

---

1. यमेः फ. 2. कन्यामुपयच्छते इत्यधिकम् अ. क. ड. फ. 3. इत्यादि ड. 4. पृच्छि इत्यधिकम् क. 5. तत्रैव दृशेरपि संपूर्वात् दृशेश्च इति वक्तव्यं इति वर्तते इत्यधिकम् फ. 6. तद्विषये अ. 7. एव नास्ति फ. 8. स्मृतेः ब. 9. स्मरति नास्ति ह, पश्यति नास्ति फ. 10. तत् इत्यधिकम् फ. 11. एव नास्ति फ. 12. नोत्तरेण विधीयमानस्याकर्मकस्य पूर्ववत्सनः इत्यस्य इत्यधिकम् क. 13. शिष्यमनुजिज्ञासति इत्यधिकम् क, भार्यामनुजिज्ञासति इत्यधिकम् अ. ह. 14. सकर्मकस्य प्रतिषेधादिह न भवति सर्पिष्यनुजिज्ञासते इति इत्यधिकम् क. 15. प्रत्याङभ्याम् इति किम् अनुशुश्रूषते इत्यधिकम् क. 16. उपसर्गे क. 17. प्रतिषेधो नास्ति फ. 18. देवदत्तो यज्ञदत्तं प्रति शुश्रूषते क. ह. 19. लुङि इत्यधिकम् क, अशत्स्यत् नास्ति फ. 20. लृटि इत्यधिकम् क. 21. सनि इत्यधिकम् क.

## म्रियतेर्लुङ्लिङोश्च । (६१/२५३८)

'मृङ प्राणत्यागे' (धा.पा. १४०४)। ङित्त्वादात्मनेपदमत्र सिद्धमेव। [1]नियमार्थ[2]मिदं वचनम्। म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति। अमृत। मृषीष्ट। शितः खल्वपि–म्रियते, [3]म्रियेते, म्रियन्ते। नियमः किमर्थः ? मरिष्यति। अमरिष्यत्[4] ॥

## पूर्ववत् सनः। (६२/२७३४)

सनः पूर्वो यो धातुः आत्मनेपदी, [5]तद्वत् सन्नन्तादात्मनेपदं भवति। [6]येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सन्नन्तादपि भवति। '[7]अनुदात्तङित आत्मनेपदम्' (१. ३. १२/२१५७)[8]––आस्ते, [9]शेते। सन्नन्तादपि तदेव निमित्तम्–[10]आसिसिषते, शिशयिषते ( म. भा. १. २८८ )। 'नेर्विशः' (१. ३. १७/२६८३) ––निविशते, निविविक्षते। 'आङ उद्गमने' (१.३.४०/२७१३)––आक्रमते, आचिक्रंसते।

[11]इह न भवति, शिशत्सति, मुमूर्षति। न हि शदिम्रियतिमात्रमात्मने[12]पदनिमित्तम्। किं तर्हि ? शिदाद्यपि, तच्चेह नास्ति। यस्य च पूर्वत्रैव निमित्तभावः प्रतिषिध्यते, तत् सन्नन्तेष्वप्यनिमित्तम्––अनुचिकीर्षति। [13]पराचिकीर्षति।

इह जुगुप्सते, मीमांसते इति ? [14]अनुदात्तङित इत्येव [15]सिद्धमात्मनेपदम् (१.३.१२/२१५७)। अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति (म.भा. १. २८९) इति ॥

## आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य। (६३/२२४०)

अकर्त्रभिप्रायार्थोऽयमारम्भः। आम्प्रत्ययो यस्मात्[16] सोऽयमाम्प्रत्ययः। आम्प्रत्ययस्येव धातोः कृञोऽ[17]नु-प्रयोगस्यात्मनेपदं भवति। ईक्षाञ्चक्रे। ईहाञ्चक्रे। यदि विध्यर्थमेतत्, तर्हि [18]उदुब्जाञ्चकार, उदुम्भाञ्चकार इति कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्नोति। [19]नैष दोषः। उभयमनेन क्रियते, विधिः नियमश्च। कथम् ? पूर्ववत् इति वर्तते। [20]स द्वितीयो [21]यत्नो नियमार्थो भविष्यति। कृञः इति किम्? ईक्षामास। ईक्षाम्बभूव। कथं [22]पुनरस्यानुप्रयोगः यावता 'कृञ्चानुप्रयुज्यते लिटि' (३.१.४०/२२३९) इत्युच्यते? कृञ् इति प्रत्याहारग्रहणं तत्र विज्ञायते। क्व संनिविष्टानां प्रत्याहारः? 'अभूततद्भावे कृभ्वस्तियोगे[23] सम्पद्यकर्तरि च्विः' (५.४.५०/२११७) इति कृशब्दादा-रभ्य यावत् 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५.४.५८/२१२९) इति [24]अकारम् ॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु। (६४/७२५३)

'युजिर् योगे' (धा.पा. १४४५) स्वरितेत्। तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्र-भिप्रायार्थोऽयमारम्भः। प्र उप इत्येवंपूर्वात् युजेरयज्ञ[25]पात्रप्रयोगविषयादात्मनेपदं भवति। प्रयुङ्क्ते। उपयुङ्क्ते। अयज्ञपात्रेषु इति किम् ? 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति (देवसंयुक्तानि)' (आप.गृ.१.१.१६)।

---

1. इति इत्यधिकम् ब.ड.ग.ई. 2. तु इत्यधिकम् क, इदं नास्ति फ. वचनम् नास्ति अ. 3. म्रियेते नास्ति अ. 4. मुमूर्षति इत्यधिकम् फ. 5. तद्वान् ह. 6. येन . . . तेनैव नास्ति क. 7. अनु . . . . ०नेपदम् नास्ति ड. 8. इति इत्यधिकम् फ. 9. वस्ते फ. 10. असिषते ब, विवसिषते फ. 11. पूर्ववत् सनः इति किम् इत्यधिकम् फ. 12. ०पदस्य फ. 13. पराचिकीर्षति नास्ति फ. 14. अनुदात्तेत इत्येव अ.ब.ड. 15. सिद्धं नास्ति फ. 16. विहितः इत्यधिकम् क. 17. अनुप्रयुज्यमानस्य क. 18. उदुब्जा . . . . इति नास्ति ब.ड.फ. 19. नैष दोषः नास्ति फ.ह. 20. स नास्ति फ. 21. योगः फ. 22. पुनरनयोरप्रयोगः ड. फ. 23. इति इत्यधिकम् फ. 24. ञकारेण क, ञकारेण प्रत्याहारः फ, अनुप्रयोग इति किम्? चकार इत्यधिकम् फ. 25. ०पात्रविषयात् क.फ.ह. 26. षट् पात्राणि अनुप्रयुनक्ति धीरः फ, धीरः क.ड.ह.

[५२] स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । (म.भा. १. २९०)

उद्युङ्क्ते । नियुङ्क्ते । [1]स्वराद्यन्तोपसृष्टात् इति किम्? संयुनक्ति ॥

## समः क्ष्णुवः । (६५/२७३६)

'क्ष्णु तेजने' (धा.पा. १०३७) परस्मैपदी । [2]ततः सम्पूर्वात्[3] आत्मनेपदं भवति । 'समो गम्यृच्छि°' (१.३.२९.२६९९) इत्यत्रैव[4] कस्मान् न [5]पठितः? अकर्मकात् इति [6]तत्र वर्तते[7] । संक्ष्णुते शस्त्रम् । संक्ष्णुवाते, [8]संक्ष्णुवते ॥

## भुजोऽनवने । (६६/२७३७)

'भुज पालनाभ्यवहारयोः' (धा.पा. १४५५) इति रुधादौ पठ्यते । तस्मादनवनेऽपालने वर्तमानादात्मनेपदं भवति । भुङ्क्ते, भुञ्जाते, भुञ्जते । अनवने इति किम्? भुनक्त्येनमग्निराहितः । अनवन इति [9]प्रतिषेधेन रौधादिकस्यैव ग्रहणं [10]विज्ञायते, [11]न तौदादिकस्य 'भुजो कौटिल्ये' (धा.पा. १४१८) इत्यस्य । तेनेह न भवति, [12]विभुजति पाणिम् ॥

## णेरणौ यत् कर्म णौ चेत् स कर्ताऽनाध्याने । (६७/२७३८)

'णिचश्च' (१.३.७४/२५६४) इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तादात्मनेपदं भवति । [13]कथम्? अणौ यत् कर्म णौ चेत् [14]तदेव कर्म, स एव कर्ता [15]भवति, अनाध्याने आध्यानं वर्जयित्वा[16] । आरोहन्ति हस्तिनं हस्तिपकाः (म.भा. १. २९१), आरोहयते हस्ती स्वयमेव । उपसिञ्चन्ति हस्तिनं [17]हस्तिपकाः, [18]उपसेचयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम् (म.भा. १. २९१), दर्शयते राजा स्वयमेव । णेः इति किम्? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति[19] । अणौ इति किम्? गणयति [20]गणं गोपालकः, गणयति गणः स्वयमेव (म.भा. १. २९१) । कर्मग्रहणं किम् ? लुनाति दात्रेण, लावयति दात्रं स्वयमेव । णौ चेद्ग्रहणं [21]समानक्रियार्थम्––आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेण । यत्सग्रहणमनन्यकर्मार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्[22] । कर्ता इति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, [23]तानारोहयति महामात्रः । अनाध्याने इति किम् ? स्मरति [24]वनगुल्मस्य कोकिलः, स्मरयत्येनं वनगुल्मः स्वयमेव (म.भा. १. २९२) ।

ननु चात्र कर्मकर्तरि मूलोदाहरणानि । तत्र [25]कर्मवद्भावेनैव सिद्धमात्मनेपदम् । किमर्थमिदमुच्यते ? कर्मस्थभावकानां कर्मस्थक्रियाणां च[26] कर्मवदतिदेशो विज्ञायते । कर्तृस्थार्थोऽयमारम्भः । [27]तथा च रुहिः कर्तृस्थक्रियः,[28] दृशिः कर्तृस्थभावकः उदाहृतः ॥

---

1. स्वराद्यन्तग्रहणम् ड, स्वरादिति किम्? निर्युनक्ति, दुर्युनक्ति फ. 2. तस्मात् ह. 3. क्ष्णु इत्येतस्माद् धातोः इत्यधिकम् फ. 4. एव नास्ति फ. 5. पठितम् फ, कस्मादयं न ड. 6. तु इत्यधिकम् फ. 7. सकर्मकार्थमिदं वचनम् इत्यधिकम् फ. 8. संक्षुर्वते ई. 9. अवनप्रतिषेधे ब, अवनप्रतिषेधेन क.ड. 10. विज्ञायते नास्ति ड. 11. न....इत्यस्य नास्ति फ. 12. भुजति निर्भुजति अ.ह, पाणिः ड. 13. कथम् नास्ति ब.फ. 14. तदेव नास्ति ब. 15. यदि भवति तदा फ. 16. आध्यानमुत्कण्ठापूर्वकं स्मरणम् इत्यधिकम् ड.फ. 17. सेचकाः अ. 18. सेचयते ड.फ. 19. स्थलम् इत्यधिकम् क. 20. गोगणं अ. 21. किम् इत्यधिकम् अ. 22. मनुष्यान् नास्ति क, मनुष्यान् इति फ. 23. तानारोहयन्ति महामात्राः अ.ड. 24. च इत्यधिकम् ब. 25. ततश्च कर्मणा तुल्यक्रियः इति इत्यधिकम् फ. 26. स इत्यधिकम् अ, कर्मवदित्यतिदेशः क.ड.फ. 27. तथा हि क. 28. विज्ञायते इत्यधिकम् ब.

## भीस्म्योर्हेतुभये । (६८/२५९४)

णेः इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये । हेतुः प्रयोजकः कर्ता लकारवाच्यः, ततश्चेद् भयं भवति । भयग्रहणमुपलक्षणार्थम्, विस्मयोऽपि तत एव । [1]जटिलो भीषयते । मुण्डो भीषयते । जटिलो विस्मापयते । मुण्डो विस्मापयते[2] । हेतुभये इति किम् ? [3]कुञ्चिकयैनं भाययति । रूपेण [4]विस्माययति । [5]अत्र कुञ्चिका भयस्य करणम्[6], न हेतुः ॥

## गृधिवञ्च्योः प्रलम्भने । (६९/२७३९)

णेः इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । 'गृधु अभिकाङ्क्षायाम्' (धा.पा. १२४७), 'वञ्चु गतौ' (धा. पा. १८९) [7]इत्येतयोर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनम् विसंवादनं, मिथ्याफलाख्यानम् । माणवकं गर्धयते । [8]माणवकं वञ्चयते । प्रलम्भने इति किम् ? श्वानं [9]गर्धयति । गर्धनमस्योत्पादयति इत्यर्थः । अहिं वञ्चयति । परिहरति इत्यर्थः ॥

## लियः संमाननशालीनीकरणयोश्च । (७०/२५९२)

णेः इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । 'लीङ् श्लेषणे' (धा. पा. ११३९) इति दिवादौ पठ्यते 'ली श्लेषणे' (धा.पा.१५०१)इति[10]च क्र्यादौ । विशेषाभावाद् द्वयोरपि[11] ग्रहणम् । लियो ण्यन्तात् संमानने शालीनीकरणे च वर्तमानादात्मनेपदं भवति । चशब्दात् प्रलम्भने च । सम्माननं [12]पूजनम्–जटाभिरालापयते । पूजां [13]समधिगच्छति इत्यर्थः । [14]शालीनीकरणं न्यग्भावनम्–श्येनो वर्तिकामुल्लापयते । न्यक्करोति इत्यर्थः । प्रलम्भने[15]–कस्त्वामुल्लापयते । [16]विसंवादयति इत्यर्थः । 'विभाषा लीयतेः' (६.१.५१/२५०९) इति [17]वा आत्वं विधीयते । तदस्मिन् विषये नित्यमन्यत्र विकल्पः । व्यवस्थितविभाषा हि सा[18] । सम्माननादिषु इति किम् ? बालकमुल्लापयति ॥

## मिथ्योपपदात् कृञोऽभ्यासे । (७१/२७४०)

णेः इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तात् करोतेर्मिथ्योपपदादात्मनेपदं भवति अभ्यासे । [19]अभ्यासः [20]पुनः पुनः करणम्, आवृत्तिः । पदं मिथ्या कारयते । [21]सापचारं स्वरादिदुष्टमसकृदुच्चारयति इत्यर्थः । [22]मिथ्योपपदात् इति किम् ? पदं सुष्ठु कारयति । कृञः इति किम् ? पदं मिथ्या वाचयति । अभ्यासे इति किम् ? पदं मिथ्या कारयति । [23]सकृदुच्चारयति ॥

---

1. भियो हेतुभये षुक् (7. 3. 40/2595) इत्यधिकम् क. 2. नित्यं स्मयतेः इत्याकारः इत्यधिकम् अ. क. ड. 3. कुञ्चिकयैनं भापयति व. ई, भीषयति अ. 4. विस्मापयति व. ड. 5. अत्र––हेतुः नास्ति ब. क. फ. ई. 6. कारणम् ड. 7. एतयोः नास्ति क, ण्यन्तयोः नास्ति ड. फ. 8. उदाहरणमिदं नास्ति ड. 9 बन्धयते ब. 10. च नास्ति फ, इति च क्र्यादौ पठ्यते अ. ह. 11. अपि नास्ति फ. 12. संपूजनम् अ. 13. अधिगच्छति फ. 14. शालीनीकरणस्य भावनं अ, शालीनीकरणे फ. 15. खल्वपि इत्यधिकम् क. 16. कोऽपि विसंवादयति नित्यं वादयति क. 17. अणा वा व, इत्यात्वं णौ विभाषा क. ड. ह. 18. असौ फ, सा नास्ति ई, व्यवस्थितविभाषया ह्यसौ क. 19. अभ्यासः–आवृत्तिः नास्ति क. 20. पुनर्ग्रहणं क, युगकरणम् ब. 21. सापचारे ब. ई, सदोषं अ. पमं, सदोषं सापचारं क. 22. मिथ्योपपदात्–उच्चारयति नास्ति अ. 23. उच्चरति क, उच्चारति इति ब.

## स्वरितञितः कर्त्रभिप्राये क्रियाफले। (७२/२५५१)

णेः इति निवृत्तम्। शेषात् कर्तरि परस्मैपदे (१.३.७८/२१५९) प्राप्ते स्वरितेतो ये धातवो ञितश्च तेभ्यः आत्मनेपदं भवति, [1]कर्त्तारं चेत् क्रियाफलमभिप्रैति। क्रियायाः फलं [2]क्रियाफलं प्रधानभूतम्, यदर्थमसौ क्रिया आरभ्यते तच् चेत् कर्तुर्लकारवाच्यस्य भवति। [3]यजते। पचते। [4]ञितः खल्वपि–सुनुते। कुरुते। [5]स्वर्गादि प्रधानफलमिह कर्तारमभिप्रैति। कर्त्रभिप्राये इति किम्? यजन्ति याजकाः। पचन्ति पाचकाः। [6]कुर्वन्ति कर्मकराः। यद्यपि दक्षिणा भृतिश्च कर्तुः फलमिहास्ति तथापि न तदर्थः क्रियारम्भः॥

## अपाद्वदः। (७३/२७४१)

कर्त्रभिप्राये[7] इति वर्तते। अपपूर्वाद् वदतेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। धनकामो [8]न्यायमपवदते[9]। [10]न्यायापवादेन धनमर्जयिष्यामि इति मन्यते। कर्त्रभिप्राये क्रियाफले इत्येव, अपवदति[11]॥

## णिचश्च। (७४/२५६४)

कर्त्रभिप्राये [12]क्रियाफले इति [13]वर्तते। णिजन्तादात्मनेपदं भवति कर्त्रभिप्राये क्रियाफले। कटं कारयते। ओदनं पाचयते। कर्त्रभिप्राये इत्येव, कटं कारयति [14]परस्य॥

## समुदाङ्भ्यो यमोऽग्रन्थे। (७५/२७४२)

कर्त्रभिप्राये [15]इति वर्तते। सम् उद् आङ इत्येवंपूर्वाद् [16]यमेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति,[17] ग्रन्थविषयश्चेत् प्रयोगो न [18]भवति। व्रीहीन् संयच्छते। [19]भारमुद्यच्छते। वस्त्रमायच्छते। आङ्पूर्वादकर्मकात् 'आङो यमहनः' (१.३.२८/२६९५) इति सिद्धमे[20]वात्मनेपदम्। सकर्मकार्थमिदं[21] पुनर्ग्रहणम्। अग्रन्थे इति किम्? उद्यच्छति चिकित्सां वैद्यः। कर्त्रभिप्राये इत्येव, संयच्छति। [22]उद्यच्छति। आयच्छति॥

## अनुपसर्गाज् ज्ञः। (७६/२७४३)

कर्त्रभिप्राय इति वर्तते। अनुपसर्गाज् जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। गां जानीते। [23]अश्वं जानीते। अनुपसर्गात् इति किम्? [24]स्वर्गं लोकं न [25]प्रजानाति मूढः। कर्त्रभिप्राये इत्येव, देवदत्तस्य गां जानाति[26]॥

---

1. कर्त्रभिप्राये क्रियाफले गम्यमाने अ.फ. 2. क्रियाफलं नास्ति फ. 3. यजति ई. 4. स्वरितेतः इति किम्? तरति क, अतति, तरति अ. 5. स्वर्गादिकं अ. 6. कर्म इत्यधिकम् क, उदाहरणमिदं नास्ति फ. 7. क्रियाफले इत्यधिकम् फ. 8. न्याय्यम् ब. 9. यादृच्छिकमुपवदति इत्यर्थः इत्यधिकम् फ. 10. न्यायाद् फ. 11. अपवदन्ति इत्यधिकम् फ. 12. क्रियाफले नास्ति फ. 13. अनुवर्तते अ.क. 14. परस्य नास्ति फ. 15. इत्यादि अ. 16. यमः अ. 17. अग्रन्थे इत्यधिकम् अ.क.फ. 18. भवति नास्ति अ. 19. भारमायच्छते। वस्त्रमुद्यच्छते अ. 20. एव नास्ति अ.फ. 21. इदं नास्ति फ. 22. उद्यच्छति आयच्छति नास्ति अ. 23. उदाहरणमिदं नास्ति अ. 24. स्वर्गलोकं क. 25. प्रतिजानाति ब, प्रजानासि मूढ अ.फ. 26. यज्ञदत्तः इत्यधिकम् क.ह.

## विभाषोपपदेन प्रतीयमाने । (७७/२७४४)

'स्वरितञितः' (१.३.७२/२३५८) [1]इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले [2]द्योतिते विहितम् । [3]तदुपपदेन द्योतिते न प्राप्नोति इति [4]वचनमारभ्यते । समीपे श्रूयमाणं शब्दान्तरमुपपदम् । तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषा आत्मनेपदं भवति । स्वं यज्ञं यजते, [5]स्वं यज्ञं यजति । स्वं कटं कुरुते, [6]स्वं कटं करोति । स्वं पुत्रमपवदते, स्वं पुत्रमपवदति । एवं [7]पञ्चसूत्र्यामुदाहार्यम् ॥

## शेषात् कर्तरि परस्मैपदम् । (७८/२१५९)

पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न [8]परस्मैपदनियमः । तत् सर्वतः प्राप्नोति, तदर्थमिदमुच्यते । येभ्यो धातुभ्यो [9]येन विशेषणेनात्मनेपदमुक्तं[10] [11]ततो यदन्यत् स शेषः । शेषात् कर्तरि परस्मैपदं भवति । शेषादेव नान्यस्मात् । अनुदात्तङित आत्मनेपदम् (१.३.१२/२१५७) उक्तम्––आस्ते । शेते । ततोऽन्यत्र परस्मैपदं भवति––याति । [12]वाति । [13]नेर्विशः (१.३.१७/२६८३) आत्मनेपदमुक्तम्––[14]निविशते । ततोऽन्यत्र परस्मैपदम्––आविशति । प्रविशति । कर्तरि इति किम् ? [15]पच्यते । गम्यते । कर्मकर्तरि [16]कस्मात् परस्मैपदं न भवति, पच्यते [17]ओदनः स्वयमेव[18] ? 'कर्तरि कर्मव्यतिहारे' (१.३.१४/२६८०) [19]इति द्वितीयं कर्तृग्रहणमनुवर्तते, तेन कर्तैव यः कर्ता (म. भा. १.२९२) तत्र परस्मैपदं [20]भवति, कर्मकर्तरि न भवति[21] ॥

## अनुपराभ्यां कृञः । (७९/२७४५)

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं [22]विहितम् । तदपवादः [23]परस्मैपदं विधीयते । अनु परा इत्येवंपूर्वात् करोतेः परस्मैपदं भवति । अनुकरोति । [24]पराकरोति ॥

## अभिप्रत्यतिभ्यः क्षिपः । (८०/२७४६)

'क्षिप प्रेरणे' (धा. पा. १२८६) स्वरितेत् । [25]ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । अभि प्रति अति इत्येवंपूर्वात् क्षिपः परस्मैपदं भवति । अभिक्षिपति । प्रतिक्षिपति । अतिक्षिपति । अभिप्रत्यतिभ्यः इति किम् ? आक्षिपते । द्वितीयमपि कर्तृग्रहणमनुवर्तते, तेनेह न भवति, अभिक्षिप्यते स्वयमेव ॥

---

1. इत्यादिभिः अ. 2. द्योत्ये फ. ह. 3. तदपवादेन फ. 4. इदं इत्यधिकम् अ. क. फ. ह. 5. स्वं नास्ति अ. 6. स्वं नास्ति फ. 7. सूत्र्यामपि अ. 8. परस्मैपदं नियतमतः सर्वत्र फ. ह. 9. येन येन क. 10. विहितम् क. 11. ततोऽन्यः शेषः क, अतो यदन्यः अ, शेषः नास्ति ब. 12. श्राति फ. 13. निपूर्वात्-विशः क. फ. 14. निविशते नास्ति फ. 15. पठ्यते फ. पमं. 16. कस्मात् नास्ति अ. ड. फ. 17. ओदनः नास्ति फ. 18. इति इत्यधिकम् क. फ. 19. अतः फ. 20. भवति नास्ति ब. ड. इ. ग. ह. 21. इति इत्यधिकम् ह. 22. उक्तं क. फ. 23. परस्मैपदे ब. ह. ई. 24. पराकरोति नास्ति अ. 25. अतः ब, ततः नास्ति क.

## प्राद्वहः । (८१/२७४७)

'वह प्रापणे' ( धा. पा. १००४ ) स्वरितेत् । [1]तत्र कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । प्रपूर्वाद् वहतेः परस्मैपदं भवति । [2]प्रवहति, [3]प्रवहतः, प्रवहन्ति । प्रात् इति किम् ? आवहते ॥

## परेर्मृषः । (८२/२७४८)

'मृष तितिक्षायाम्' (धा. पा. ११६५) स्वरितेत् । ततः[4]तथैवात्मनेपदे प्राप्ते परस्मैपदं विधीयते । परिपूर्वाद् [5]मृष्यतेः परस्मैपदं भवति । [6]परिमृष्यति, [7]परिमृष्यतः, परिमृष्यन्ति । परेः इति किम् ? आमृष्यते । [8]वहतिमपि केचिदत्रानुवर्तयन्ति–परिवहति ॥

## व्याङ्परिभ्यो रमः । (८३/२७४९)

'रमु क्रीडायाम्' (धा. पा. ८५४) । अनुदात्तेत्त्वा[9]दात्मनेपदे प्राप्ते परस्मैपदं विधीयते । वि आङ परि इत्येवंपूर्वात् रमतेः परस्मैपदं भवति । विरमति । आरमति । परिरमति । [10]एतेभ्यः इति किम् ? अभिरमते[11] ॥

## उपाच्च । (८४/२७५०)

रमः [12]इत्येव । उपपूर्वात् रमतेः परस्मैपदं भवति । देवदत्तमुपरमति । यज्ञदत्तमुपरमति । उपरमयति इति यावत् । अन्तर्भावितण्यर्थोऽत्र [13]रमिः । पृथग्योगकरणमुत्तरार्थम् । अकर्मकाद् विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात् ॥

## विभाषाऽकर्मकात् । (८५/२७५१)

रमः उपात् इति [14]च वर्तते । पूर्वेण नित्ये परस्मैपदे प्राप्ते [15]विकल्प आरभ्यते । उपपूर्वाद् रमतेरकर्मकाद् विभाषा परस्मैपदं भवति । यावद्भुक्तमुपरमति, यावद्भुक्तमुपरमते । [16]निवर्तते इत्यर्थः ॥

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । (८६/२७५२)

'णिचश्च' (१.३.७४/२५६४) इति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । बुध युध नश जन इङ प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्रावयति ।

---

1. ततः क, तत्रैव कर्त्रभिप्राये क्रियाफले फ. 2. प्रवहति गङ्गा अ. 3. प्रवहतः प्रवहन्ति नास्ति अ. फ. 4. पूर्ववत् क. 5. मृषेः धातोः अ. 6. परिमृषति अ. 7. परिमृष्यतः, परिमृष्यन्ति नास्ति अ. क. 8. वह इति क. फ. 9. आत्मनेपदी ततः क. फ, आत्मनेपदी अनुदात्तेत् ह. 10. वि-आङ परिभ्यः क. फ. 11. आसने इत्यधिकम् फ. 12. इत्यनुवर्तते क, इति वर्तते फ. 13. रमतिः फ. 14. च नास्ति ड. 15. विभाषा क. फ. 16. तावत् इत्यधिकम् अ.

[1]येऽत्राकर्मकास्तेषाम् 'अणावकर्मकाच्चित्तवत्कर्तृकात्' (१.३.८८/२७५४) इत्येवं सिद्धे[2] वचनमिदम[3]चित्तवत्कर्तृकार्थम्। [4]बोधयति पद्मम्। [5]योधयन्ति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्।

[6]येऽत्र चलनार्था अपि [7]तेषां 'निगरणचलनार्थेभ्यश्च' (१.३.८७/२७५३) इति सिद्धे यदा [8]न चलनार्थास्तदर्थं [9]वचनम्। [10]प्रवते। [11]प्राप्नोति इति गम्यते। अयो [12]द्रवति। विलीयते इत्यर्थः। कुण्डिका [13]स्रवति। [14]स्यन्दते इत्यर्थः। तद्विषयाण्युदाहरणानि [–प्रावयति। द्रावयति। स्रावयति]॥

## निगरणचलनार्थेभ्यश्च। (८७/२७५३)

णेः इति वर्तते। [15]कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते। निगरणम् अभ्यवहारः। चलनं कम्पनम्। [16]निगरणार्थेभ्यश्चलनार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। निगारयति। आशयति। भोजयति। चलनार्थेभ्यः—चलयति। चोपयति। कम्पयति। अयमपि योगः सकर्मकार्थः, [17]अचित्तवत्कर्तृकार्थश्च।

[५३] अदेः प्रतिषेधो वक्तव्यः।

अत्ति देवदत्तः, आदयते देवदत्तेन॥

## अणावकर्मकाच्चित्तवत्कर्तृकात्। (८८/२७५४)

णेः इति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्षायामा[18]त्मनेपदापवादः परस्मैपदं विधीयते। अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात् परस्मैपदं भवति। आस्ते देवदत्तः, आसयति देवदत्तम्। [19]शेते देवदत्तः, शाययति देवदत्तम्। अणौ इति किम्? चेतयमानं प्रयोजयति [20]चेतयते, इति केचित् प्रत्युदाहरन्ति तदयुक्तम्। हेतुमण्णिचो विधिः। प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः। तस्मादिह चेतयति इति परस्मैपदेनैव[21] भवितव्यम्। इदं तु प्रत्युदाहरणम्—आरोहयमाणं प्रयुङ्क्ते आरोहयते[22]। अकर्मकात् इति किम्? कटं कुर्वाणं [23]प्रयुङ्क्ते [24]कारयते। चित्तवत्कर्तृकात् इति किम्? शुष्यन्ति व्रीहयः, [25]शोषयते व्रीहीनातपः॥

## न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः। (८९/२७५५)

— पूर्वेण [26]योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामा[27]त्मनेपदापवादः परस्मैपदं विहितम्। तस्य प्रतिषेधोऽयमुच्यते। यत् कर्त्रभिप्राय[28]विषयमात्मनेपदं [29]तदवस्थितमेव, [30]न प्रतिषिध्यते। पा दमि आङ्यम आङ्यस

1. ये चात्र पुनरकर्मकाः फ. 2. परस्मैपदे इत्यधिकम् क. 3. अचित्तवदर्थम् फ. 4. बोधयति ग्रन्थम् ब, उदाहरणमिदं नास्ति ह. 5. योधयति काष्ठम् फ. 6. प्रु द्रु स्रु इत्यादयः इत्यधिकम् फ. 7. तेभ्यः अ, तेषामपि ह. 8. अचलनार्थाः अ.ब.फ. 9. ग्रहणं फ, भवति इत्यधिकम् ब. 10. प्रवते नास्ति ब, प्रावयति क.फ.ह.ड, पवति ई. 11. प्राप्यते ई. 12. द्रावयति क.फ.ह. 13. स्रावयति क.ड.फ. 14. स्यन्दति ब. 15. कर्त्रभिप्राये क्रियाफले आत्मनेपदे प्राप्ते फ. 16. निगरणार्थे चलनार्थे च फ. 17. अचित्तकर्तृकार्थश्च ब. 18. आत्मनेपदे प्राप्ते क. 19. उदाहरणमिदं नास्ति ह. 20. चेतय इति ह. 21. एव नास्ति ह. 22. इति इत्यधिकम् क. फ. 23. प्रयोजयति अ. 24. कटं कारयते अ. 25. शोषयति क. फ. 26. निगरणचलनार्थेभ्यश्च, अणावकर्मकात् इत्यनेन इत्यधिकम् अ.क. 27. आत्मनेपदे प्राप्ते तदपवादः फ. 28. °क्रियाफलमात्मनेपदं फ, °विषयं परस्मैपदं अ.क.ड. 29. तदनेन अ. 30. न नास्ति ह.

परिमुह रुचि नृति वद वस इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न [1]भवति। [2]'णिचश्च' (१.३.७४/२५६४) इत्यात्मनेपदं[3] भवति। [4]तत्र पिबतिर्निगरणार्थः। दमिप्रभृतयश्चित्तवत्कर्तृकाः। नृतिश्चलनार्थोऽपि। [5]एषां परस्मैपदं न भवति। पा--पाययते। दमि–दमयते। आङ्यम–आयामयते। 'यमोऽपरिवेषणे' (ग.सू. १९३) इति मित्सञ्ज्ञा प्रतिषिध्यते। आङ्यस–आयासयते। [6]परिमुह–परिमोहयते। रुचि–रोचयते। नृति–नर्तयते। वद–वादयते। वस–वासयते।

[५४] पादिषु धेट उपसङ्ख्यानम्[7]। (म.भा. १.२९५)

धापयेते शिशुमेकं समीची (ऋ. १.१९६.५)॥

## वा क्यषः। (९०/२६६९)

'लोहितादिडाज्भ्यः क्यष्' (३.१.१३/२६६८) इति वक्ष्यति। [8]तदन्ताद् धातो[9]र्वा परस्मैपदं [10]भवति। लोहितायति, लोहितायते। पटपटायति, पटपटायते। [11]अथात्र परस्मैपदेन मुक्ते कथमा[12]त्मनेपदं लभ्यते, यावता 'अनुदात्तङित आत्मनेपदम्' (१.३.१२/२१५७) [13]इत्येवमादिना प्रकरणेन तन् नियतम्? एवं तर्हि आत्मनेपदमेवात्र विकल्पितं [14]विधीयते, [15]तच्चानन्तरं परस्मैपदप्रतिषेधेन सन्निधापितमिह[16] सम्बध्यते। तेन मुक्ते, शेषात् कर्तरि परस्मैपदम् (१.३.७८/२१५९) भवति॥

## द्युद्भ्यो लुङि। (९१/२३४५)

वा [17]इत्येव। 'द्युत दीप्तौ' (धा.पा. ७४१)। तत्साहचर्याद् [18]लुठादयोऽपि 'कृपू' (धा.पा. ७६२) पर्यन्तास्तथैव व्यपदिश्यन्ते। बहुवचननिर्देशादाद्यर्थो [19]भवति। अनुदात्तेत्त्वान् नित्यमेवात्मनेपदे प्राप्ते [20]द्युतादिभ्यो लुङि [21]वा परस्मैपदं भवति। व्यद्युतत्, व्यद्योतिष्ट। [22]अलुठत्, अलोठिष्ट। लुङि इति किम्? [23]द्योतते॥

## वृद्भ्यः स्यसनोः। (९२/२३४७)

[24]द्युतादिष्वेव वृतादयः पठ्यन्ते। 'वृतु वर्तने' (धा.पा. ७५८), 'वृधु वृद्धौ' (धा.पा. ७५९) 'शृधु शब्दकुत्सायाम्' (धा.पा. ७६०), 'स्यन्दू प्रस्रवणे' (धा.पा. ७६१), 'कृपू सामर्थ्ये' (धा.पा. ७६२), [25]एतेभ्यो धातुभ्यः स्ये सनि च [26]परतो वा परस्मैपदं भवति। वृत्–वर्त्स्यति। अवर्त्स्यत्। [27]विवृत्सति। वर्तिष्यते। अवर्तिष्यत। विवर्तिषते। [28]वृध्–वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। वर्धिष्यते। अवर्धिष्यत। विवर्धिषते[29]। स्यसनोः इति किम्? वर्तते॥

---

1. विधीयते अ, भवति नास्ति फ. 2. वाक्यमिदं नास्ति ड. 3. एव इत्यधिकम् अ. 4. तत्र नास्ति अ. 5. तेभ्यः अ. 6. उदाहरणमिदं नास्ति फ. 7. कर्तव्यम् इत्यधिकम् फ. 8. तस्येदं ग्रहणं, क्यषन्ताद् धातोः ह. 9. विभाषा फ. 10. भवति नास्ति फ. 11. शेषादिति नित्ये प्राप्ते विकल्पार्थं वचनम् इत्यधिकम् अ.क. 12. आत्मनेपदेन ह. 13. इत्यादिना क.फ.ह. 14. विधीयते नास्ति फ. 15. तच्चात्र फ. 16. अत्र ड, अभिसम्बध्यते क.फ. 17. इत्यनुवर्तते अ.क, इति अनुगम्यते फ. 18. नित्ये आत्मनेपदे प्राप्ते इत्यधिकम् अ.क.फ, द्युतादयः ब, लुडादयः ह. 19. अन्तर्भवति ह, गम्यते फ. 20. वचनमिदमारभ्यते इत्यधिकम् अ. 21. च फ. 22. अलुटत् अलोटिष्ट ब.ह, अत्यलुठत् क. 23. विद्योतते क.फ. 24. वा इत्येव इत्यधिकम् ड. 25. इति इत्यधिकम् अ.ह. 26. परतो नास्ति अ.ड.फ.ह. 27. विवृत्स्यति फ. 28. वृधु ड. 29. एवं शृधादिषु द्रष्टव्यम्, शृध्––शर्त्स्यति। अशर्त्स्यत्। शिशृत्सति। शर्धिष्यते। अशर्धिष्यत। शिशर्धिषते। स्यन्द्––स्यन्त्स्यति। अस्यन्त्स्यत्। सिस्यन्त्सति। स्यन्दिष्यते। अस्यन्दिष्यत। सिस्यन्दिषते। कृप्––कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। कल्पिष्यते। अकल्पिष्यत। चिकल्पिषते। वृद्भ्यश्चतुर्भ्य इति परस्मैपदेषु इट्प्रतिषेधः इत्यधिकम्. अ.

## लुटि च क्लृपः । (९३/२३५१)

[1]वृतादित्वादेव स्यसनोर्विकल्पः सिद्धो लुटि [2]विधीयते । चकारस्तर्हि स्यसनोरनुकर्षणार्थो [3]न वक्तव्यः, एवं तर्हीयं प्राप्तिः पूर्वां प्राप्तिं बाधेत, तस्माच् चकारः स्यसनोर[4]नुकर्षणार्थः क्रियते । लुटि [5]च स्यसनोश्च क्लृपेः [6]परस्मैपदं वा भवति[7] । कल्प्ता, कल्प्तारौ, कल्प्तारः । [8]कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । कल्पिता । कल्पिष्यते । अकल्पिष्यत । चिकल्पिषते[9] ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

प्रथमाध्यायस्य तृतीयः पादः ॥

———(०)———

1. क्लृपेः इत्यधिकम् अ.क.ह. 2. तु इत्यधिकम् क. 3. अनुकर्तव्यः क, क्रियते अ. 4. अनुकर्षणार्थं ब.अ. 5. च नास्ति फ. 6. धातोः इत्यधिकम् क.ह. 7. इति इत्यधिकम् अ. 8. कल्प्स्यति नास्ति क. 9. यत्र परस्मैपदं तत्र तासि च क्लृप इतीट्प्रतिषेधः । यत्र आत्मनेपदं तत्रेड् भवत्येव इत्यधिकम् अ.क.फ.

## प्रथमाध्यायस्य चतुर्थः पादः

### आ कडारादेका सञ्ज्ञा । (१/२३२)

'कडाराः कर्मधारये' (२.२.३८/७५१) इति वक्ष्यति । आ एतस्मात् [1]सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र [2]एका सञ्ज्ञा भवति [3]इति वेदितव्यम् । का पुनरसौ ? या परा अनवकाशा [4]च । अन्यत्र सञ्ज्ञासमावेशान् नियमार्थं [5]वचनम् [6]एकैव सञ्ज्ञा भवति इति । [7]वक्ष्यति–'ह्रस्वं लघु' (१.४.१०/३१), [8]भिदि, छिदि–[9]भेत्ता, छेत्ता (७.३.८६/२१८९) । 'संयोगे गुरु' (१.४.११/३२), [10]शिक्षि, भिक्षि–शिक्षा, भिक्षा (३.३.१०३/३२८०) । संयोगपरस्य ह्रस्वस्य लघुसञ्ज्ञा प्राप्नोति, [11]गुरुसञ्ज्ञा च । एका सञ्ज्ञा इति वचनाद् गुरुसञ्ज्ञा एव भवति । अततक्षत्, [12]अरक्षत्, '[13]सन्वल्लघुनि चङ्परेऽनग्लोपे' (७.४.९३/२३१६) इत्येष विधिर्न भवति ॥

### विप्रतिषेधे परं कार्यम् । (२/१७५)

[14]तुल्यबलविरोधो विप्रतिषेधः । यत्र [15]द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत् प्राप्नुतः, [16]स तुल्यबलविरोधो विप्रतिषेधः (म. भा. १.३००) । तस्मिन् विप्रतिषेधे [17]परं कार्यं भवति ।

उत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गेषु तुल्यबलता नास्ति इति नायमस्य योगस्य विषयः । बलवतैव तत्र भवितव्यम् । [18]अप्रवृत्तौ, पर्यायेण [19]वा प्रवृत्तौ प्राप्तायां [20]वचनमारभ्यते । 'अतो दीर्घो यञि' (७.३.१०१/२१७०)[21], 'सुपि च' (७.३.१०२/२०२) इत्यस्यावकाशः – वृक्षाभ्याम्, [22]प्लक्षाभ्याम् । 'बहुवचने झल्येत्' (७.३.१०३/२०५) [23]इत्यस्यावकाशः – वृक्षेषु, [24]प्लक्षेषु । इहोभयं प्राप्नोति–वृक्षेभ्यः, प्लक्षेभ्यः इति । परं[25] भवति विप्रतिषेधेन ॥

### यू स्त्र्याख्यौ नदी । (३/२६६)

ई च ऊ च यू । अविभक्तिको[26] निर्देशः । स्त्रियमाचक्षाते[27] स्त्र्याख्यौ । मूलविभुजादि[28]दर्शनात् (३.२.५/२९१९ वा.) कप्रत्ययः । ईकारान्तमूकारान्तं च [29]स्त्र्याख्यं शब्दरूपं नदीसञ्ज्ञं भवति । ईकारान्तम्–कुमारी । [30]गौरी । लक्ष्मीः । [31]शार्ङ्गरवी । ऊकारान्तम्–[32]ब्रह्मबन्धूः । यवागूः । यू इति किम् ? मात्रे[33] । दुहित्रे । स्त्र्याख्यौ इति किम् ? ग्रामणीः । [34]सेनानीः । खलपूः । आख्याग्रहणं किम् ? शब्दार्थे स्त्रीत्व [35]एव यथा स्यात्, [36]पदान्तराख्ये मा भूत्, [37]ग्रामण्ये स्त्रियै (म. भा. १.३१३) । [38]खलप्वे स्त्रियै । नदीप्रदेशाः–'आण्नद्याः' (७.३.११२/२६८) [39]इत्येवमादयः ॥

---

1. कडारसूत्रावधेः क, °वधेर्यानि इत अ, यान् इत ह. 2. एकस्य क, एकसञ्ज्ञा अ. 3. इत्येवं ड.ह. 4. च नास्ति ह. 5. एतद्वचनम् ह. 6. एकस्यैव फ, एकैव च ह. 7. वक्ष्यति नास्ति ड. ह. 8. भिद् छिद् क. 9. भेत्ता छेत्ता नास्ति अ. ई. फ. 10. शिक्ष, भिक्ष क. 11. चन्द्रिकासञ्ज्ञा ह. 12. अररक्षत् नास्ति ब. 13. सन्वल् नास्ति फ. 14. तुल्यबल नास्ति ब. ड. ह. फ. ई. 15. च इत्यधिकम् फ. 16. स विप्रतिषेधः ब. ड. 17. परे क. 18. अप्राप्तौ अ. 19. चाप्रवृत्तौ ब, वा प्राप्ते ह. 20. वचनमिदमा° अ, इदमारभ्यते फ. 21. वृक्षाय इत्यधिकम् क. 22. प्लक्षाभ्याम् नास्ति ह. 23. इत्यस्यायम् क. 24. प्लक्षेषु नास्ति फ. 25. एत्वं भवति अ. 26. °कोऽयं क. ड. ह. 27. यौ तौ इति इत्यधिकम् क, इति इत्यधिकम् अ. ड. ह. 28. °दिषु क. 29. स्त्रियाख्यं ह. 30. किशोरी क. फ. 31. नास्ति ब. फ. ई. 32. वीरबन्धूः अ, जीवबन्धूः क. 33. मात्रे देहि अ, दुहित्रे नास्ति अ. 34. नास्ति अ. क. फ. 35. एव नास्ति ह. 36. पदान्तरद्योत्ये अ. क. ड. फ. 37. ग्रामण्यै फ. ह. 38. उदाहरणमिदं नास्ति ह. 39. अम्बार्थनद्योर्ह्रस्वः इत्यधिकम् अ.

## नेयङुवङ्स्थानावस्त्री । (४/३०३)

पूर्वेणातिप्रसक्ता नदीसञ्ज्ञा प्रतिषिध्यते । स्थितिः स्थानम्[1] । इयङुवङोः स्थानमनयोः इतीयङुवङस्थानौ, तौ [2]यू नदीसञ्ज्ञौ न भवतः, स्त्रीशब्दं (६.४.७९/३०१) वर्जयित्वा । हे श्रीः । [3]हे भ्रूः । (६.४.७७/२७१) । अस्त्री इति किम् ? हे स्त्रि (७.३.१०७/२६७)[4] ॥

## वाऽऽमि । (५/३०४)

पूर्वेण नित्ये प्रतिषेधे प्राप्ते [5]आमि विकल्पः क्रियते । [6]इयङुवङस्थानौ यू आमि[7] परतो [8]वा नदीसञ्ज्ञौ न भवतः । [9]श्रियाम् (६.४.७७/२७१), श्रीणाम् (७.१.५४/२०८) । भ्रुवाम्, भ्रूणाम् । अस्त्री इत्येव, स्त्रीणाम् ॥

## ङिति ह्रस्वश्च । (६/२९६)

दीर्घस्य [10]नदीसञ्ज्ञा विहिता, ह्रस्वस्य न प्राप्नोति, इयङुवङस्थानयोश्च प्रतिषिद्धा[11] । तस्मान् ङिति वा विधीयते । ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी [12]यः स्त्र्याख्यः, स्त्र्याख्यौ इयङुवङस्थानौ च यू वा नदीसञ्ज्ञौ भवतः । कृत्यै (७.३.११२/२६८), कृतये (७.३.१११/२४५) । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे । अस्त्री इत्येव, स्त्रियै । स्त्र्याख्यौ [13]इत्येव, अग्नये । [14]वायवे । भानवे ॥

## शेषो घ्यसखि । (७/२४३)

ह्रस्वः इति वर्तते । शेषोऽ[15]त्र घिसञ्ज्ञो भवति, सखिशब्दं वर्जयित्वा । कश्च शेषः ? ह्रस्वम् इवर्णोवर्णान्तं [16]यन्न स्त्र्याख्यम्, स्त्र्याख्यं च यन्न नदीसञ्ज्ञकं, स शेषः । अग्नये (७.३.१११/२४५) । वायवे । कृतये । धेनवे । असखि इति किम् ? सख्या । सख्ये । सख्युः । सख्यौ । [17]घिप्रदेशाः—'द्वन्द्वे घि' (२.२.३२/९०३) इत्येवमादयः ॥

## पतिः समास एव । (८/२५७)

पतिशब्दस्य घिसञ्ज्ञायां सिद्धायामयं[18] नियमः क्रियते, पतिशब्दः समासे एव घिसञ्ज्ञो भवति[19] । प्रजापतिना । प्रजापतये[20] । समासे इति किम् ? पत्या । पत्ये[21] । [22]एवकार इष्टतो[23]ऽवधारणार्थः । दृढमुष्टिना । दृढमुष्टये ॥

---

1. नाम इत्यधिकम् फ. 2. यू नास्ति ह. 3. हे भ्रूः नास्ति फ. 4. स्थानग्रहणम् किम् ? प्रध्यै, वर्षाभ्वै इत्यधिकम् क. 5. आमि नास्ति ह, आमि विकल्प्यते अ. 6. इयङुवङौ आमि परतः फ. 7. षष्ठी बहुवचने इत्यधिकम् अ. 8. वा नास्ति क. ह. 9. श्रियाम् नास्ति फ. 10. विहिता नदीसंज्ञा फ. 11. प्रतिषेधात् ह, तदर्थं च वचनम् इत्यधिकम् अ. 12. यः नास्ति ब. ड. 13. इत्यपि व. 14. वायवे नास्ति ह, भानवे नास्ति फ. 15. अत्र नास्ति फ. ह. 16. यदस्त्र्याख्यं अ. 17. वाक्यमिदं नास्ति व. ह. ई. 18. अयं नास्ति ड. फ. ह. 19. नान्यत्र इत्यधिकम् फ. 20. सेनापतिना, सेनापतये इत्यधिकम् क. 21. पत्युः, पत्यौ । कथमन्यत्र पतिना सह । तत्रानिर्दिष्टत्वात् । अथवा छन्दसि सर्वे विधयो विकल्प्यन्ते । छान्दसोऽयं प्रयोगः इत्यदोषः । इत्यधिकम् अ. क. 22. एवकारकरणं अ. क. 23. अवधारणार्थं क.

## षष्ठीयुक्तश्छन्दसि वा। (९/३३८९)

पतिः इति वर्तते। पूर्वेण [1]नियमेन असमासे न प्राप्नोति [2]इति वचनमारभ्यते। षष्ठ्यन्तेन[3] युक्तः पतिशब्दः छन्दसि विषये वा घिसञ्ज्ञो भवति। 'कुलुञ्चानां पतये नमः' (तै.सं. ४.५.३७), कुलुञ्चानां पत्ये नमः[4]। [5]षष्ठीग्रहणं किम्? 'मया पत्या जरदष्टि[6]र्यथासः' (ऋ. १०.८६.३६)। छन्दसि [7]इति किम्? ग्रामस्य पत्ये॥

## ह्रस्वं लघु। (१०/३१)

मात्रिकस्य [8]ह्रस्वसञ्ज्ञा कृता (१.२.२७/४) तस्यानेन लघुसञ्ज्ञा विधीयते। ह्रस्वमक्षरं लघुसञ्ज्ञं भवति। भेत्ता। छेत्ता (७.३.८६/२१८९)। अचीकरत्। अजीहरत् (७.४.१, ९३/२३१४, २३१६)। लघुप्रदेशाः—'पुगन्तलघूपधस्य च' (७.३.८६/२१८९)[9] इत्येवमादयः॥

## संयोगे गुरु। (११/३२)

ह्रस्वम् इति वर्तते। पूर्वेण लघुसञ्ज्ञायां प्राप्तायां गुरुसञ्ज्ञा[10] विधीयते। संयोगे परतो ह्रस्वमक्षरं गुरुसञ्ज्ञं भवति।[11]कुण्डा। हुण्डा। [12]शिक्षा। भिक्षा (३.३.१०३/३२८०)। गुरुप्रदेशाः—'गुरोश्च हलः' (३.३.१०३/३२८०) इत्येवमादयः॥

## दीर्घं च। (१२/३३)

संयोगे इति नानुवर्तते। सामान्येन [13]सञ्ज्ञाविधानम्। दीर्घं [14]चाक्षरं गुरुसञ्ज्ञं भवति। ईहाञ्चक्रे। [15]ईक्षाञ्चक्रे (३.१.३६/२२३७)॥

## यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। (१३/१९९)

यस्मात् प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद् वा तदादि शब्दरूपं प्रत्यये परतोऽङ्गसञ्ज्ञं भवति। [16]कर्ता। हर्ता। करिष्यति। हरिष्यति। [17]अकरिष्यत् (७.३.८४/२१६८)। औपगवः। [18]कापटवः (७.२.११७/१०७५)। यस्मात् इति [19]सञ्ज्ञिनिर्देशार्थम्, तदादि इति सम्बन्धात्। प्रत्ययग्रहणं किम्? न्यविशत। व्यक्रीणीत। 'नेर्विशः' (१.३.१७/२६८३) इत्युपसर्गाद् विधिरस्ति, तदादेरङ्गसञ्ज्ञा स्यात्। विधिग्रहणं किम्? [20]प्रत्ययपरत्वमात्रे मा भूत्। स्त्री इयती (म.भा. १.३१५)।

[५५] तदादिवचनं स्यादिनुमर्थम्। (म.भा. १.३१६)

---

1. नियमात् क.फ, नियमो न प्राप्नोति ह. 2. इतीदं फ.ह. 3. शब्देन इत्यधिकम् क.ड.ह. 4. क्षेत्रस्य पतये नमः। क्षेत्रस्य पत्ये नमः इत्यधिकम् ड. 5. षष्ठीयुक्तः अ. 6. ययासत् ह. 7. इति नास्ति ड. 8. अचः इत्यधिकम् अ.क.ड.ह. 9. दीर्घो लघोः (7.4.81/2317) इत्यधिकम् अ.क. 10. अनेन इत्यधिकम् क.फ.ह. 11. कुण्डा हुण्डा नास्ति अ, हुण्डा नास्ति ब. 12. शिक्षा नास्ति फ. 13. सञ्ज्ञाविधाने अ, सामान्येन सञ्ज्ञाविधानम् नास्ति ब. ई, सामान्येन विधानमेतत् ह. 14. च नास्ति फ. 15. ऊहांचक्रे अ. क. 16. कारकः फ, हर्ता नास्ति फ, हरिष्यति नास्ति ह. 17. नास्ति अ.ब. 18. नास्ति फ. 19. सन्धि° ह. 20. प्रत्यय नास्ति फ.ह.

[1]करिष्यावः। करिष्यामः (७.३.१०१/२१७०)। कुण्डानि। पुनः प्रत्ययग्रहणं [2]किमर्थम्? [3]लुप्तप्रत्यये मा भूत्। [4]श्र्यर्थम्। [5]भ्रवर्थम् (म. भा. १.३१७)। अङ्गप्रदेशाः – 'अङ्गस्य' (६.४.१/२००) इत्येवमादयः॥

## सुप्तिङन्तं पदम्। (१४/२९)

सुप् तिङ इति प्रत्याहारग्रहणम्। सुबन्तं तिङन्तं च [6]शब्दरूपं [7]पदसञ्ज्ञं भवति। ब्राह्मणाः [8]पठन्ति। पदसञ्ज्ञायामन्त[9]ग्रहणमन्यत्र सञ्ज्ञाविधौ प्रत्ययग्रहणे [10]तदन्तविधेः प्रतिषेधार्थम् (म. भा. १.३१८)। [11]गौरी ब्राह्मणितरा। पदप्रदेशाः – 'पदस्य' (८.१.१६/४०१), '[12]पदात्' (८.१.१७/४०२) इत्येवमादयः॥

## नः क्ये। (१५/२६५९)

क्ये इति क्यच्–क्यङ–[13]क्यषां सामान्यग्रहणम्। नान्तं शब्दरूपं क्ये परतः पदसञ्ज्ञं भवति। क्यच्–राजीयति। क्यङ–राजायते। क्यष्–चर्मायति, चर्मायते (८.२.७/२३६)[14]। 'सिद्धे सत्यारम्भो नियमार्थः' (का. प. ५९)। नान्तमेव[15] क्ये परतः [16]पदसञ्ज्ञं भवति, नान्यत्। वाच्यति। स्रुच्यति (म. भा. १.३१९)॥

## सिति च। (१६/१२५२)

'यचि भम्' (१.४.१८/२३१) इति वक्ष्यति। तस्यायं पुरस्ताद्[17]अपवादः। सिति प्रत्यये परतः पूर्वं पदसञ्ज्ञं भवति। 'भवतष्ठक्छसौ' (४.२.११५/१३३९)–[18]भवदीयः (८.२.३९/८४)। 'ऊर्णाया युस्' (५.२.१२३/१९२९)–[19]ऊर्णायुः। 'ऋतोरण्' (५.१.१०५/१७६९)[20], 'छन्दसि घस्' (५.१.१०६/३४९५)– ऋत्वियः॥

## स्वादिष्वसर्वनामस्थाने। (१७/२३०)

स्वादिषु इति [21]सुशब्दादेकवचनात् (४.१.२/१८३) आरभ्य आ कपः (५.४.१५१/८८९) प्रत्यया गृह्यन्ते। स्वादिषु प्रत्ययेषु परतः [22]सर्वनामस्थानवर्जितेषु पूर्वं पदसञ्ज्ञं भवति। राजभ्याम्। राजभिः। राजत्वम्। (६.४.१४२/३११) [23]राजता। राजतरः। [24]राजतमः। असर्वनामस्थाने इति किम्? [25]राजानौ। राजानः॥

## यचि भम्। (१८/२३१)

स्वादिष्वसर्वनामस्थाने [26]इति वर्तते। पूर्वेण पदसञ्ज्ञायां प्राप्तायां तदपवादो भसञ्ज्ञा विधीयते। यकारादावजादौ च स्वादौ [27]सर्वनामस्थानवर्जिते [28]प्रत्यये परतः पूर्वं भसञ्ज्ञं भवति। यकारादौ––गार्ग्यः। वात्स्यः। अजादौ–दाक्षिः। [29]प्लाक्षिः (६.४.१४८/३११)।

---

1. करिष्यावः नास्ति अ.फ.ह, करिष्यामः नास्ति फ. 2. किम् फ.ह. 3. लुप्ते प्रत्यये ब.क.ड.ई, नास्ति अ.फ.ह. 4. स्त्रयर्थम् अ.क. 5. भ्वर्थम् क.ग.फ. 6. यत् इत्यधिकम् ह. 7. तत् इत्यधिकम् फ.ह. 8. पचन्ति अ.ड.ह. 9. अन्तवचनम् फ. 10. तदन्तविधिप्रतिषेधार्थम् फ.ह. 11. गौरी ब्राह्मणितमा फ, गौरीतरा, ब्रह्मबन्धुतरा ह. 12. सूत्रमिदं नास्ति फ.ह. 13. क्यष्सामान्यग्रहणम् ब, सामान्येन ग्रहणम् क.फ.ह. 14. वर्मायति वर्मायते क.न्या. 15. शब्दरूपं इत्यधिकम् फ. 16. पदसंज्ञा ह. 17. अपकर्षः अ.ब.क.फ.ह.ई. 18. भवदीयम् ड. 19. नास्ति ह. 20. आर्तवम् इत्यधिकम् क. 21. सुपाशब्दात् ब. 22. सर्वनामस्थानवर्जितेषु नास्ति ह. 23. नास्ति फ. 24. राजतनुः ब. 25. राजा इत्यधिकम् फ.ह. 26. इत्येव ह. 27. असर्वनामस्थाने अ.फ. 28. ङिति प्रत्यये क, प्रत्यये नास्ति फ.ह. 29. नास्ति फ.ह.

[५६] नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम् । (म. भा. १.३२०)

नभ इव नभस्वत् । अङ्गिरा इव अङ्गिरस्वत् । मनुरिव मनुष्वत् ।

[५७] वृषण्वस्वश्वयोः । (म. भा. १.३२०)

वृषन् इत्ये[1]तत् वस्वश्वयोः परतो भसञ्ज्ञं भवति छन्दसि विषये। वृषण्वसुः ( ऋ. १.१११.१ ) । 'वृषणश्वस्य मेनासीत्' (मै. २.५.५) ।

भप्रदेशाः—'भस्य' (६.४.१२९/२३३) इत्येवमादयः ॥

## तसौ मत्वर्थे । (१९/१८९६)

भम् इति वर्तते । तकारान्तं सकारान्तं[2] शब्दरूपं मत्वर्थे प्रत्यये परतो भसञ्ज्ञं भवति । उदश्वित्वान् घोषः । विद्युत्वान् बलाहकः । [3]सकारान्तम्—[4]पयस्वी । यशस्वी । तसौ इति किम् ? तक्षवान् ग्रामः ॥

## अयस्मयादीनि छन्दसि । (२०/३३९०)

अयस्मयादीनि शब्दरूपाणि छन्दसि विषये साधूनि भवन्ति । [5]भपदसञ्ज्ञाधिकारे विधानात् तेन मुखेन[6] साधुत्वमयस्मयादीनां विधीयते । अयस्मयं वर्म (पै.१.३७.५) । [7]अयस्मयानि पात्राणि (कौ.सू.८१.१८) । क्वचिदुभयमपि भवति । स सुष्टुभा स ऋक्वता गणेन (ऋ. ४.५०.५) । पदत्वात् कुत्वं, भत्वाज् जश्त्वं न भवति । छन्दसि इति किम् ? अयोमयं [8]वर्म । [9]आकृतिगणोऽयम् ॥

## बहुषु बहुवचनम् । (२१/१८७)

ङ्याप् प्रातिपदिकात् [10]स्वादयः, लस्य तिबादयः इति [11]सामान्येन बहुवचनं विहितं, तस्यानेन [12]बहुत्वसङ्ख्या वाच्यत्वेन विधीयते । बहुषु बहुवचनं भवति । बहुत्वमस्य वाच्यं भवति [13]इति यावत् । कर्मादयोऽ[14]प्यपरे विभक्तीनाम[15]र्था वाच्याः । तदीये बहुत्वे बहुवचनम्[16] । [17]कर्मादिषु बहुषु बहुवचनम् इत्यर्थः । ब्राह्मणाः [18]पठन्ति । यत्र च सङ्ख्या [19]सम्भवति तत्रायमुपदेशः । अव्ययेभ्यस्तु निःसङ्ख्येभ्यः [20]सामान्यविहिताः स्वादयो विद्यन्त एव ॥

## द्व्येकयोर्द्विवचनैकवचने । (२२/१८६)

द्वित्वैकयोरर्थयोः[21]द्विवचनैकवचने भवतः । एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम्[22] । द्वित्वे [23]द्विवचनं भवति । एकत्वे एकवचनं [24]भवति । ब्राह्मणौ [25]पठतः । ब्राह्मणः [26]पठति ॥

---

1. एतत् नास्ति ब. क. 2. च इत्यधिकम् अ. क. फ. ह. 3. सान्तः ह, नास्ति अ. ड. 4. ओजस्वी अ, तरस्वी फ. 5. भसंज्ञाधिकारवचनात् अ. ड. ह. 6. एव इत्यधिकम् फ, मुखेन नास्ति ब. 7. अयस्मयीभिः फ. 8. चर्म ब. क. 9. नास्ति अ. ब. क. ड. ई. ह. 10. इति इत्यधिकम् ड. 11. सामान्येन नास्ति फ. 12. बहुत्वं वाच्यं ह. 13. इत्यर्थः स. ह. 14. अपि नास्ति अ. 15. अर्थाः नास्ति क. फ. ह. 16. भवति इत्यधिकम् ह. 17. कर्मादिगतबहुषु, क, बहुषु नास्ति ई. 18. पचन्ति अ. ड. ह. 19. अस्ति ह. 20. सामान्येन विहिताः फ. 21. विवक्षितयोः इत्यधिकम् अ. 22. भवति इत्यधिकम् अ. 23. द्विर्वचनं ब. 24. भवति नास्ति ह, भवतीति फ. 25. पचतः ब. 26. पचति ब. क. ह. ई.

## कारके। (२३/५३४)

कारके इति विशेषणमपादानादि[1]सञ्ज्ञाविषयमधिक्रियते। कारके इत्यधिकारो वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः कारके इत्येवं [2]तद् वेदितव्यम्। कारकशब्दश्च निमित्तपर्यायः। कारकम् [3]हेतुः इत्यनर्थान्तरम्। कस्य हेतुः? क्रियायाः[4]। वक्ष्यति, 'ध्रुवमपायेऽपादानम्' (१.४.२४/५८६)—ग्रामादागच्छति। पर्वतादवरोहति। कारके इति किम्? वृक्षस्य पर्णं पतति। [5]कुडयस्य पिण्डः पतति। '[6]अकथितं च' (१.४.५१/५३९), [7]अकथितं च कारकं कर्मसञ्ज्ञं भवति—माणवकं पन्थानं पृच्छति। [8]कारके इति किम्? माणवकस्य पितरं पन्थानं पृच्छति। [9]कारकसंशब्दनेषु चानेन [10]एव विशेषणेन[11] व्यवहारो [12]विज्ञायते॥

## ध्रुवमपायेऽपादानम्। (२४/५८६)

ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत् कारकमपादानसञ्ज्ञं भवति। [13]ग्रामादागच्छति। पर्वतादवरोहति। सार्थाद्धीनः। रथात् [14]पतितः।

[५८] जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्। (म.भा. १.३२६)

अधर्माज् जुगुप्सते। [15]अधर्माद् विरमति। धर्मात् प्रमाद्यति। अपादानप्रदेशाः—'अपादाने पञ्चमी' (२.३.२८/५८७) इत्येवमादयः॥

## भीत्रार्थानां भयहेतुः। (२५/५८८)

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतु[16]र्यः स्तत् कारकमपादानसञ्ज्ञं भवति। चौरेभ्यो बिभेति। चौरेभ्य [17]उद्विजते। त्रायत्यर्थानाम्—चौरेभ्यस्त्रायते। चौरेभ्यो रक्षति। भयहेतुः इति किम्? अरण्ये बिभेति। अरण्ये त्रायते॥

## पराजेरसोढः। (२६/५८९)

[18]परापूर्वस्य जयतेः प्रयोगेऽसोढो, योऽर्थः सोढुं न शक्यते, तत् कारकमपादानसञ्ज्ञं भवति। अध्ययनात् पराजयते[19]। असोढः इति किम्? शत्रून् पराजयते॥

## वारणार्थानामीप्सितः। (२७/५९०)

वारणार्थानां धातूनां प्रयोगे य ईप्सितोऽ[20]र्थः तत् कारकमपादानसञ्ज्ञं भवति। [21]प्रवृत्तिविघातो वारणम्। यवेभ्यो गा वारयति। [22]यवेभ्यो गा [23]निवर्तयति। ईप्सितः इति किम्? यवेभ्यो गा [24]वारयति क्षेत्रे॥

---

1. °सञ्ज्ञायामधिक्रियते क. 2. तद् नास्ति अ. 3. निमित्तं क. ह, निमित्तं करणं फ. 4. इति इत्यधिकम् अ. 5. कुडये ई. 6. सूत्रमिदं नास्ति ह. 7. वाक्यमिदं नास्ति अ. 8. कारके .... पृच्छति नास्ति ह. 9. कारकशब्दनेषु फ. 10. एव नास्ति अ. 11. एव इत्यधिकम् क. 12. वेदितव्यः अ. 13. उदाहरणमिदं नास्ति फ. 14. पतति फ. 15. धर्माद् ड. 16. यत् क.फ. 17. त्रस्यते अ. 18. पराजयतेः ह. 19. भोजनात्पराजयते इत्यधिकम् फ. 20. अर्थः नास्ति फ. 21. प्रवृत्ति नास्ति क. 22. तिलेभ्यो ड. 23. निषेधयति अ. 24. निवारयति फ, रक्षति अ.

## अन्तर्धौ येनादर्शनमिच्छति । (२८/५९१)

व्यवधानम् अन्तर्धिः । अन्तर्धिनिमित्तं येनादर्शनमात्मन इच्छति तत् कारकमपादानसञ्ज्ञं भवति । उपाध्यायादन्तर्धत्ते । उपाध्यायान्निलीयते । मा [1]मामुपाध्यायो द्राक्षीत् इति निलीयते । अन्तर्धौ इति किम् ? चौरान् न दिदृक्षते । इच्छतिग्रहणं किम् ? अदर्शनेच्छायां सत्यां [2]सत्यपि दर्शने यथा स्यात् ॥

## आख्यातोपयोगे । (२९/५९२)

आख्याता प्रतिपादयिता । उपयोगः नियमपूर्वकं विद्याग्रहणम् । उपयोगे [3]साध्ये य आख्याता तत् कारकमपादानसञ्ज्ञं भवति । उपाध्यायादधीते । उपाध्यायादागमयति । उपयोगे इति किम्? नटस्य [4]शृणोति (म.भा. १.३२९) ॥

## जनिकर्तुः प्रकृतिः । (३०/५९३)

जनेः कर्ता [5]जनिकर्ता । जन्यर्थस्य जन्मनः कर्ता [6]जायमानः, तस्य[7] या प्रकृतिः [8]कारणम्, हेतुः, तत् कारकमपादानञ्ज्ञं भवति । शृङ्गाच्छरो जायते । गोमयाद् वृश्चिको जायते (म.भा. १.३२९) ॥

## भुवः प्रभवः । (३१/५९४)

कर्तुः इति वर्तते । भवनं भूः । प्रभवत्यस्मात् इति प्रभवः । [9]भूकर्तुः प्रभवो यः[10], तत् कारकमपादानसञ्ज्ञं भवति । हिमवतो गङ्गा [11]प्रभवति (म.भा. १.३३०) । [12]काश्मीरेभ्यो वितस्ता प्रभवति । प्रथमत उपलभ्यते इत्यर्थः ॥

## कर्मणा यमभिप्रैति स सम्प्रदानम् । (३२/५६९)

कर्मणा करणभूतेन कर्ता [13]यमभिप्रैति [14]तत् कारकं सम्प्रदानसञ्ज्ञं भवति । अन्वर्थसञ्ज्ञा[15]विज्ञानाद् ददातिकर्मणा इति विज्ञायते । उपाध्यायाय गां ददाति (म.भा. १.३३०) । [16]माणवकाय भिक्षां ददाति ।

[५९] क्रियाग्रहणमपि[17] कर्तव्यम् । (म. भा. १.३३०)

क्रिययाऽपि [18]यमभिप्रैति स [19]सम्प्रदानम् । श्राद्धाय [20]निगर्हते । युद्धाय सन्नह्यते । पत्ये शेते (म. भा. १.३३०) ।

सम्प्रदानप्रदेशाः–'चतुर्थी सम्प्रदाने' (२.३.१३/५७०) इत्येवमादयः ।

[६०] कर्मणः करणसञ्ज्ञा वक्तव्या सम्प्रदानस्य च कर्मसञ्ज्ञा । (म. भा. १.३३१)

पशुना रुद्रं यजते । पशुं रुद्राय ददाति इत्यर्थः (म. भा. १.३३१) ॥

---

1. मामसौ उपाध्यायः अ. 2. सत्यपि दर्शने नास्ति ह. 3. वाच्ये ह. 4. गाथां इत्यधिकम् ह. न्या, ग्रंथिकस्य शृणोति अ. फ. 5. जनिकर्ता नास्ति फ. 6. यः इत्यधिकम् ह. 7. जायमानस्य इत्यधिकम् ड. 8. करणं ब. क, कारकं फ. 9. भुवः कर्तुः क. ह. 10. अर्थः इत्यधिकम् फ. 11. प्रवहति फ. 12. कश्मीरेभ्यो क. 13. यमर्थमभिप्रैति अ. क. ड. फ. ह. ई. 14. स सम्प्रदानसञ्ज्ञो भवति ह. 15. °विधानाद् ड. 16. उदाहरणमिदं नास्ति फ. 17. अपि नास्ति फ. 18. यमर्थम् फ. ड. 19. संप्रदानसंज्ञो भवति अ. फ. ह 20. निगलभयते ह.

## रुच्यर्थानां प्रीयमाणः। (३३/५७१)

रुचिना समानार्थाः रुच्यर्थाः। अन्यकर्तृकोऽभिलाषो रुचिः। रुच्यर्थानां धातूनां प्रयोगे [1]प्रीयमाणो योऽर्थः, तत् कारकं सम्प्रदानसञ्ज्ञं भवति। देवदत्ताय [2]रोचते मोदकः। यज्ञदत्ताय स्वदतेऽ[3]पूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता। प्रीयमाणः इति किम्? देवदत्ताय रोचते मोदकः पथि॥

## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः। (३४/५७२)

श्लाघ ह्नुङ् स्था शप इत्येतेषां ज्ञीप्स्यमानो योऽर्थः, तत् कारकं सम्प्रदानसञ्ज्ञं भवति। ज्ञीप्स्यमानः [4]ज्ञपयितुमिष्यमाणः, बोधयितुमभिप्रेतः। देवदत्ताय श्लाघते[5]। देवदत्तं श्लाघमानस्तां श्लाघां [6]तमेव ज्ञपयितुमिच्छति इत्यर्थः। [7]एवम्–देवदत्ताय [8]ह्नुते। यज्ञदत्ताय ह्नुते। देवदत्ताय तिष्ठते। [9]यज्ञदत्ताय तिष्ठते। देवदत्ताय शपते। यज्ञदत्ताय शपते। ज्ञीप्स्यमानः इति किम्? [10]देवदत्ताय श्लाघते पथि॥

## धारेरुत्तमर्णः। (३५/५७३)

धारयतेः [11]प्रयोगे उत्तमर्णो योऽर्थः, तत् कारकं सम्प्रदानसञ्ज्ञं भवति। उत्तममृणं यस्य स उत्तमर्णः। कस्य चोत्तममृणम्? यदीयं धनम्। धनस्वामी प्रयोक्ता उत्तमर्णः, [12]स सम्प्रदानसञ्ज्ञो भवति। देवदत्ताय शतं धारयति। [13]यज्ञदत्ताय शतं धारयति। उत्तमर्णः इति किम्? देवदत्ताय शतं [14]धारयति ग्रामे॥

## स्पृहेरीप्सितः। (३६/५७४)

'स्पृह ईप्सायाम्' (धा.पा. १८७२) चुरादावदन्तः पठ्यते। [15]तस्य ईप्सितो योऽर्थः, तत् कारकं सम्प्रदानसञ्ज्ञं भवति। ईप्सितः इत्यभिप्रेतः उच्यते। पुष्पेभ्यः स्पृहयति। फलेभ्यः स्पृहयति। ईप्सितः इति किम्? पुष्पेभ्यो वने [16]स्पृहयति॥

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः। (३७/५७५)

[17]अमर्षः क्रोधः। अपकारो द्रोहः। अक्षमा ईर्ष्या। गुणेषु दोषाविष्करणम् असूया। [18]क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः, तत् कारकं सम्प्रदानसञ्ज्ञं भवति। क्रोधस्तावत् कोप एव। द्रोहादयोऽपि [19]कोपप्रभवा एव गृह्यन्ते। तस्मात् सामान्येन विशेषणं यं प्रति कोपः इति। देवदत्ताय क्रुध्यति। देवदत्ताय द्रुह्यति। देवदत्ताय ईर्ष्यति। देवदत्तायासूयति। यं प्रति कोपः इति किम्? भार्यामीर्ष्यति, मा एनामन्यो द्राक्षीत् इति॥

---

1. प्रियमाणे ब. 2. रोचयते ह. 3. मोदकः अ, दधि ड. 4. ज्ञापयितुम् अ. ब. क. ड. फ. ई. 5. यज्ञदत्ताय श्लाघते इत्यधिकम् फ. 6. श्लाघन्तम् क, ज्ञापयितुं अ. ब. क. ड. फ. 7. एवम् नास्ति फ. 8. अपह्नुते फ. 9. उदाहरणमिदं नास्ति क. 10. देवदत्तं श्लाघते अ. फ, देवदत्तः श्लाघते पमं. 11. धातोः इत्यधिकम् अ, प्रयोगे नास्ति ह. 12. स नास्ति ड. 13. उदाहरणमिदं नास्ति ब. 14. धारयते ग्रामे ह, धारयति शते ब, देवदत्तः शतं धारयति अ. 15. तस्य य ईप्सितोऽर्थः ड, ईप्सितोऽर्थः क. 16. संस्पृहयति फ. 17. अनर्थः ब. 18. क्रुधाद्यर्थानां धातूनां अ. ह, क्रोधाद्यर्थानां ब. फ. ई. 19. कोपप्रभावाः ब.

## क्रुधद्रुहोरुपसृष्टयोः कर्म । (३८/५७६)

पूर्वेण सम्प्रदानसञ्ज्ञायां प्राप्तायां [1]कर्मसञ्ज्ञा विधीयते । क्रुधद्रुहोरुपसृष्टयोरुपसर्गसम्बद्धयोः[2]यं प्रति कोपः, तत् कारकं कर्मसञ्ज्ञं भवति । देवदत्तमभिक्रुध्यति । [3]देवदत्तमभिद्रुह्यति । उपसृष्टयोः इति किम् ? देवदत्ताय क्रुध्यति । [4]यज्ञदत्ताय द्रुह्यति ॥

## राधीक्ष्योर्यस्य विप्रश्नः । (३९/५७७)

राधेरीक्षेश्च [5]कारकं [6]सम्प्रदानसञ्ज्ञं भवति । कीदृशम् ? यस्य विप्रश्नः । विविधः प्रश्नः विप्रश्नः । [7]स कस्य भवति? [8]यस्य शुभाशुभं पृच्छयते । देवदत्ताय राध्यति । देवदत्ताय ईक्षते । [9]नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं [10]पर्यालोचयति इत्यर्थः[11] ॥

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । (४०/५७८)

प्रति आङ इत्येवंपूर्वस्य शृणोतेः [12]कारकं सम्प्रदानसञ्ज्ञं भवति । [13]कीदृशम् ? [14]पूर्वस्य कर्ता । प्रतिपूर्व आङ्पूर्वश्च शृणोति[15]रभ्युपगमे प्रतिज्ञाने वर्तते । स चा[16]भ्युपगमः परेण प्रयुक्तस्य सतो भवति । [17]तत्र प्रयोक्ता [18]पूर्वस्याः क्रियाया कर्ता सम्प्रदानसञ्ज्ञो भवति । देवदत्ताय गां प्रतिशृणोति । [19]देवदत्ताय गामाशृणोति । प्रतिजानीते इत्यर्थः ॥

## अनुप्रतिगृणश्च । (४१/५७९)

पूर्वस्य कर्ता इति वर्तते । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः [20]कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसञ्ज्ञं भवति । होत्रेऽनुगृणाति[21] । होता प्रथमं शंसति, तमन्यः [22]प्रोत्साहयति । अनुगरः, [23]प्रतिगरः इति [24]हि शंसितुः प्रोत्साहने वर्तते । होत्रेऽनुगृणाति,[25] होतारं शंसन्तं प्रोत्साहयति इत्यर्थः ॥

## साधकतमं करणम् । (४२/५८०)

क्रियासिद्धौ यत् प्रकृष्टोपकारकं विवक्षितं तत् साधकतमं [26]कारकं करणसञ्ज्ञं भवति । दात्रेण लुनाति । परशुना छिनत्ति । तमब्ग्रहणं किम् ? गङ्गायां घोषः । कूपे गर्गकुलम् (म. भा. १.३३२) । [27]करणप्रदेशाः— 'कर्तृकरणयोस्तृतीया' (२.३.१८/५६१) इत्येवमादयः ॥

---

1. अनेन इत्यधिकम् क. 2. प्रयोगे इत्यधिकम् क. 3. यज्ञदत्तमभिद्रुह्यति ह. 4. देवदत्ताय अ. फ, उदारणमिदं नास्ति ह. 5. यत् इत्यधिकम् फ. 6. तत् कारकं इत्यधिकम् फ, स इत्यधिकम् ह. 7. स नास्ति फ. 8. यत्संबन्धि ड.फ. 9. नैमित्तकः ड. 10. पर्यालोचयते इति ड. 11. विप्रश्नः इति किम्? देवदत्ताय राध्यति दैवम् इत्यधिकम् अ. 12. यत् कर्ता तत् फ. 13. कीदृशः ह. 14. पूर्वः ह. 15. अभ्युपगमप्रतिज्ञाने ब, प्रतिज्ञानेऽभ्युपगमे अ. 16. अभ्युपगमपरेण ह. 17. तत्र नास्ति फ. 18. पूर्वस्यां क्रियायाम् ह. 19. यज्ञदत्ताय गां प्रतिशृणोति, यज्ञदत्ताय गामाशृणोति क, उदाहरणमिदं नास्ति फ. 20. कारकं नास्ति फ. 21. होत्रे प्रतिगृणाति इत्यधिकम् ह. 22. प्रतिगृणाति इत्यर्थः फ. 23. प्रतिगरः नास्ति ब. 24. हि नास्ति ड.फ. 25. होत्रे प्रतिगृणाति इत्यधिकम् अ. फ. 26. कारकं नास्ति ड.फ.ह. 27. वाक्यमिदं नास्ति ब.क.ड.फ.ई.ह.

## दिवः कर्म च। (४३/५६२)

पूर्वेण करणसञ्ज्ञायां प्राप्तायां कर्मसञ्ज्ञा विधीयते। दिवः साधकतमं यत् कारकं [1]तत् कर्मसञ्ज्ञं भवति, चकारात् करणसञ्ज्ञं च। अक्षान् दीव्यति, अक्षैर्दीव्यति॥

## परिक्रयणे सम्प्रदानमन्यतरस्याम्। (४४/५८०)

साधकतमम् इति वर्तते। [2]पूर्वेण करणसञ्ज्ञायां [3]प्राप्तायां सम्प्रदानसञ्ज्ञा [4]पक्षे विधीयते। परिक्रयणे [5]साधकतमं कारकम[6]न्यतरस्यां सम्प्रदानसञ्ज्ञं भवति। परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्, नात्यन्तिकः क्रय [7]एव। शतेन परिक्रीतोऽनुब्रूहि, शताय परिक्रीतोऽनुब्रूहि। सहस्रेण परिक्रीतोऽनुब्रूहि, सहस्राय परिक्रीतोऽनुब्रूहि॥

## आधारोऽधिकरणम्। (४५/६३२)

[8]आध्रियन्तेऽस्मिन् क्रियाः इत्याधारः। कर्तृकर्मणोः क्रियाश्रयभूतयोः[9]धारणक्रियां प्रति य आधारः, तत् कारकमधिकरणसञ्ज्ञं भवति। कटे आस्ते। [10]कटे शेते। स्थाल्यां[11] पचति। अधिकरणप्रदेशाः—'सप्तम्यधिकरणे च' (२.३.३६/६३३) इत्येवमादयः॥

## अधिशीङ्स्थासां कर्म। (४६/५४२)

पूर्वेणाधिकरणसञ्ज्ञायां प्राप्तायां कर्मसञ्ज्ञा [12]विधीयते। अधिपूर्वाणां शीङः स्था आस् इत्येतेषामाधारो यः, तत् कारकं कर्मसञ्ज्ञं भवति। ग्राममधिशेते। ग्राममधितिष्ठति। [13]पर्वतमध्यास्ते॥

## अभिनिविशश्च। (४७/५४३)

अभिनि[14]पूर्वस्य विशतेराधारो यः, तत् कारकं कर्मसञ्ज्ञं भवति। ग्राममभिनिविशते[15]। कथं कल्याणेऽभिनिवेशः, [16]पापेऽभिनिवेशः, या या [17]सञ्ज्ञा यस्मिन् यस्मिन् [18]सञ्ज्ञिन्य[19]भिनिविशते इति[20]? अन्यतरस्याम् [21]इति वर्तते, 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' (१.४.४४/५८०) इत्यतः। सा च व्यवस्थितविभाषा विज्ञायते॥

---

1. तत्कारकं ड. 2. पूर्वेण नास्ति फ. 3. प्राप्तायां नास्ति ह. 4. अनेन ह, नास्ति फ. 5. यत् इत्यधिकम् अ. फ. ह. 6. तत् इत्यधिकम् अ. फ. ह. 7. एव नास्ति फ. 8. आध्रियतेऽस्मिन् क्रिया क. फ, क्रिया नास्ति ह. 9. धारणाम् ड. फ. 10. शकटे ड. फ. ह. 11. ओदनं इत्यधिकम् अ. 12. अनेन इत्यधिकम् फ. 13. ग्राममध्यास्ते फ. 14. इत्येवं इत्यधिकम् ह. 15. पर्वतमभिनिविशते इत्यधिकम् फ. 16. पापेऽभिनिवेशः नास्ति फ. 17. क्रिया ह. 18. संज्ञिनि नास्ति अ.ब.फ.ह. 19. अभिनिविशति क. 20. च इत्यधिकम् ह. 21. °ग्रहणमिहानुवर्तते फ. ह.

## उपान्वध्याङ्वसः । (४८/५४४)

उप अनु अधि आ इत्येवंपूर्वस्य वसतेराधारो यः, तत् कारकं कर्मसञ्ज्ञं भवति । ग्राममुपवसति सेना । पर्वतमु[1]पवसति । ग्राममनुवसति[2] । ग्राममधिवसति[3] । ग्राममावसति[4] ।

[६१] [5]वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । (म. भा. १.३३२)

[6]ग्रामे उपवसति । भोजननिवृत्तिं करोति इत्यर्थः ॥

## कर्तुरीप्सिततमं कर्म । (४९/५३५)

कर्तुः क्रियया यदाप्तुमिष्टतमं [7]तत् कारकं कर्मसञ्ज्ञं भवति । [8]कटं करोति । ग्रामं गच्छति । कर्तुः इति किम् ? माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न कर्तुः[9] । [10]तमब्ग्रहणं किम् ? पयसा ओदनं भुङ्क्ते । कर्म (१.४.४६/५४२) इत्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । [11]इतरथा आधारस्यैव [12]हि स्यात् गेहं प्रविशति इति । ओदनं [13]पचति, सक्तून् पिबति इत्यादिषु न स्यात् । पुनः कर्मग्रहणात् सर्वत्र सिद्धं भवति । कर्मप्रदेशाः—'कर्मणि द्वितीया' (२.३.२/५३७) इत्येवमादयः ॥

## तथायुक्तं चानीप्सितम् । (५०/५३८)

येन प्रकारेण कर्तुरी[14]प्सिततमं क्रियया युज्यते, तेनैव [15]चेत् प्रकारेण [16]यदनीप्सितं युक्तं भवति, तस्य कर्मसञ्ज्ञा विधीयते[17] । ईप्सितादन्यत् [18]सर्वमनीप्सितम् (म. भा. १. ३३३), द्वेष्यम्, इतरच्च । विषं भक्षयति । चौरान् पश्यति । ग्रामं गच्छन् वृक्षमूलान्यु[19]पसर्पति ॥

## अकथितं च । (५१/५३९)

अकथितं [20]च यत् कारकं तत् कर्मसञ्ज्ञं भवति । केनाकथितम् ? अपादानादिविशेषकथाभिः । परिगणनं [21]कर्तव्यम् —

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥ (म. भा. १.३३४)

उपयुज्यते इत्युपयोगः पयःप्रभृति । तस्य निमित्तं गवादि । तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्य गवादेः कर्मसञ्ज्ञा विधीयते । पाणिना कांस्यपात्र्यां [22]गां दोग्धि पयः[23] । पाण्यादिकमप्युपयोगनिमित्तं, तस्य

---

1. उपवसते ब, सेना इत्यधिकम् फ. 2. 3. 4. सेना इत्यधिकम् फ. 5. वसतेः ह, अनश्यर्थस्य अ. 6. पर्वते उपवसति फ. 7. तत् नास्ति ब. 8. ओदनं पचति क. ड. फ. ह. 9. ईप्सितग्रहणं किम् ? अग्नेर्माणवकं तारयते इत्यधिकम् अ. 10. तमग्रहणं क. ड. 11. इतरथा नास्ति अ. ब. क. ह, अन्यथा इत्येवादिषु फ. 12. हि नास्ति फ. 13. पचते फ. 14. ईप्सितं ड. 15. चेत् नास्ति क. 16. अनीप्सितमपि ड. फ. ह. 17. कर्तुः क्रियया युक्तं यदनीप्सितं तत् कारकं कर्म भवति इत्यधिकम् फ. 18. सर्व नास्ति ह. 19. उपवसति ह. 20. च नास्ति ड. 21. कर्तव्यम् नास्ति ड. 22. गां नास्ति ब. क. 23. इति । ननु इत्यधिकम् ड.

कस्मान् न भवति ? नैतदस्ति । विहिता हि [1]तत्र करणादिसञ्ज्ञा । तदर्थमाह–अपूर्वविधौ इति । ब्रुविशासिगुणेन च यत् सचते । ब्रुविशास्योर्गुणः[2] साधनं, प्रधानं कर्म, धर्मादिकम्, तेन [3]यत् सम्बध्यते, तदकीर्तितमाचरितं कविना, तदकथितमुक्तं सूत्रकारेण । दुहि–गां दोग्धि पयः । याचि–पौरवं गां याचते । रुधि–गामवरुणद्धि व्रजम् । प्रच्छि–माणवकं पन्थानं पृच्छति । भिक्षि–पौरवं गां भिक्षते । चिञ्–वृक्षमवचिनोति फलानि । ब्रुवि–माणवकं धर्मं ब्रूते । शासि–माणवकं धर्ममनुशास्ति ॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ । (५२/५४०)

अर्थशब्दः प्रत्येकमभिसम्बध्यते । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां, तथा शब्दकर्मकाणामकर्मकानां च अण्यन्तानां यः कर्ता, स ण्यन्तानां कर्मसञ्ज्ञो भवति । गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम् । याति माणवको ग्रामम्, यापयति माणवकं ग्रामम् ।

[६२] [4]गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः । (म.भा. १.३३५)

नयति भारं देवदत्तः, नाययति भारं देवदत्तेन । वहति भारं देवदत्तः, वाहयति भारं देवदत्तेन । (म. भा. १. ३३५)

[६३] [5]वहेरनियन्तृकर्तृकस्येति वक्तव्यम् । (म.भा. १. ३३७)

इह प्रतिषेधो मा भूत्, वहन्ति यवान् बलीवर्दाः, वाहयति यवान् बलीवर्दान् इति [6](म.भा. १.३३७) । [7]बुद्धिः–बुध्यते माणवको धर्मम्, बोधयति माणवकं धर्मम् । वेत्ति माणवको धर्मम्, वेदयति माणवकं धर्मम्[8] । प्रत्यवसानमभ्यवहारः । भुङ्क्ते माणवक ओदनम्, भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम्, आशयति माणवकमोदनम् ।

[६४] [9]आदिखाद्योः प्रतिषेधो वक्तव्यः । (म.भा. १. ३३७)

अत्ति माणवक [10]ओदनम्, आदयते माणवकेन [10]ओदनम् । खादति माणवकः, खादयति माणवकेन ।

[६५] भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः । (म.भा. १. ३३७)

भक्षयति [11]पिण्डीं देवदत्तः, [12]भक्षयति पिण्डीं देवदत्तेन इति । अहिंसार्थस्य इति किम्? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति बलीवर्दान् सस्यम् ।

शब्दकर्मणाम्––अधीते माणवको वेदम्, अध्यापयति माणवकं वेदम् । पठति माणवको वेदम् । पाठयति माणवकं वेदम् । अकर्मकाणाम्–आस्ते देवदत्तः, आसयति देवदत्तम् । [13]शेते देवदत्तः, शाययति देवदत्तम्[14] । [15]एतेषामिति किम्? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेन इति । अण्यन्तानाम् इति किम् ? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः ॥

---

1. अत्र फ. 2. ब्रुविशासिगुणः इत्यधिकम् अ. क. ड. 3. च यत् सचते अ, यत् संवर्ध्यते ब. 4. गत्यर्थेषु .... देवदत्तेन नास्ति क. 5. वहेस्तु ड. 6. इति गत्यर्थाः इत्यधिकम् अ. 7. बुद्ध्यर्थाः अ. 8. इति बुद्ध्यर्थाः इत्यधिकम् अ. 9. अदि° फ. ह. 10. ओदनम् नास्ति फ. 11. पिण्डं ड. 12. भक्षयते ड. 13. उदाहरणमिदं नास्ति फ. 14. इति अकर्मकार्थाः इत्यधिकम् क. 15. एषाम् अ. क.

## हृक्रोरन्यतरस्याम् । (५३/५४२)

अणि कर्ता स णौ इति वर्तते । हरतेः करोतेश्च अण्यन्तयोर्यः कर्ता स ण्यन्तयोरन्यतरस्यां कर्मसञ्ज्ञो भवति । हरति भारं माणवकः, हारयति भारं माणवकं, माणवकेन इति वा । करोति कटं देवदत्तः, कारयति कटं देवदत्तं, देवदत्तेन इति वा ।

[६६] अभिवादिदृशोरात्मनेपद उपसङ्ख्यानम् । (म.भा.१.३३८)

अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तं, देवदत्तेन इति वा । पश्यन्ति भृत्या [2]राजानम्, दर्शयते भृत्यान् राजानम्, [3]भृत्यैः इति वा । [4]आत्मनेपदे इति किम्? दर्शयति चैत्रं मैत्रमपरः । प्राप्तविकल्पत्वाद् द्वितीयैव । अभिवादयति गुरुं माणवकेन पिता । अप्राप्तविकल्पत्वात् तृतीयैव ॥

## स्वतन्त्रः कर्ता । (५४/५५९)

स्वतन्त्रः इति [5]प्रधानभूत उच्यते । [6]अगुणीभूतो, यः क्रियासिद्धौ स्वातन्त्र्येण [7]विवक्ष्यते, तत् कारकं कर्तृसञ्ज्ञं भवति । [8]देवदत्तः पचति । [9]स्थाली पचति । कर्तृप्रदेशाः – 'कर्तृकरणयोस्तृतीया' (२.३.१८/५६१) इत्येवमादयः ॥

## तत्प्रयोजको हेतुश्च । (५५/२५७५)

तत् इति अनन्तरः कर्ता [10]परामृश्यते । तस्य प्रयोजकस्तत्प्रयोजकः । निपातनात् समासः । स्वतन्त्रस्य प्रयोजको योऽर्थः, तत्कारकं हेतुसञ्ज्ञं भवति । चकारात् कर्तृसञ्ज्ञं च । [11]सञ्ज्ञासमावेशार्थश्चकारः । [12]कुर्वाणं प्रयुङ्क्ते, कारयति । हारयति । [13]हेतुत्वाद् णिचो निमित्तं [14]कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते । हेतुप्रदेशाः – 'हेतुमति च' (३.१.२६/२५७६) इत्येवमादयः ॥

## प्राग्रीश्वरान्निपाताः । (५६/१९)

'अधिरीश्वरे' (१.४.९७/६४४) इति वक्ष्यति । [15]प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामः, निपातसञ्ज्ञास्ते [16]वेदितव्याः । वक्ष्यति – '[17]चादयोऽसत्त्वे' (१.४.५७/२०), च, वा, ह, अह[18] । प्राग्वचनं सञ्ज्ञासमावेशार्थम् । गत्युपसर्गकर्मप्रवचनीयसञ्ज्ञाभिः सह निपात[19]सञ्ज्ञा समाविशति । रेफोच्चारणम् 'ईश्वरे तोसुन्कसुनौ' (३.४.१३/३४४०) इत्ययमवधिर्मा विज्ञायि इति ।

रीश्वराद्वीश्वरान् मा भूत् कृन्मेजन्तः परोऽपि [20]सः ।
समासेष्वव्ययीभावो लौकिकं चातिवर्तते ॥ (म. भा. १. ३४०)

---

1. आत्मनेपदं क. 2. राजा फ. 3. भृत्यैः नास्ति ड. 4. आत्मनेपदे–तृतीयैव नास्ति क. फ. ह 5. प्रधान इति क. ह. 6. अगुणभूतः अ. ह. 7. विवक्षितार्थः अ. ह. 8. यज्ञदत्तः अ. फ. 9. उदाहरणमिदं नास्ति फ. 10. संबध्यते अ. फ. ह. 11. कर्तृ° अ. 12. कटं कुर्वाणं अ. 13. हेतुत्वं अ, नास्ति फ. 14. कर्तृत्वाच्च नास्ति ब, च नास्ति फ. ह. 15. आ अस्मात् सूत्रावधेः फ. ह. 16. विहितव्याः ब. 17. सूत्रमिदं नास्ति अ. 18. एव इत्यधिकम् क. 19. सञ्ज्ञाः समाविशन्ति ह. 20. यः ब.

## चादयोऽसत्त्वे। (५७/२०)

चादयो निपातसञ्ज्ञा भवन्ति, न चेत् सत्त्वे वर्तन्ते। प्रसज्यप्रतिषेधोऽयम्। सत्त्वम् इति द्रव्यमुच्यते।

च। वा। ह। [1]अह। एव। एवम्। नूनम्। शश्वत्। [2]युगपत्। सूपत्। कूपत्। [3]कुवित्। नेत्। चेत्। [4]चण्। [5]कच्चित्। यत्र। [6]नह। हन्त। [7]माकिम्। [8]नकिम्। माङ। माङो ङकारो विशेषणार्थः, 'माङि लुङ' (३.३.१७५/२२१९) इति। इह न भवति, मा भवतु, मा [9]भविष्यति। नञ्[10]। यावत्। तावत्। [11]त्वा। [12]त्वै। [13]द्वै। रै। श्रौषट्। [14]वौषट्। स्वाहा। वषट्। स्वधा[15]। ओम्। किल। तथा। [16]अथ। सु। स्म। अस्मि। अ। इ। उ। ऋ। लृ। ए। ऐ। ओ। औ। अम्[17]। [18]तक्। उञ्। उकञ्। वेलायाम्। मात्रायाम्। यथा। यत्। यम्। तत्। किम्। पुरा। अद्धा। धिक्। हाहा। हे। है। प्याट्। पाट्। थाट्। अहो। उताहो। हो। तुम्। तथाहि। खलु। आम्। आहो। अथो। ननु। मन्ये। मिथ्या। असि। ब्रूहि। तु। नु। इति। इव। वत्। चन। बत। इह। शम्। कम्। अनुकम्। नहिकम्। हिकम्। सुकम्। सत्यम्। ऋतम्। [19]श्रद्धा। इद्धा। [20]मुधा। नो चेत्। न चेत्। नहि। जातु। कथम्। [21]कुतः। कुत्र। [22]अव। अनु। हाहौ। हैहा। ईहा। आहोस्वित्। छम्बट्[23]। खम्। दिष्टया। पशु। वट्। सह। [24]आनुषक्। अङ्ग। फट्। ताजक्। अये। [25]अरे। [26]चटु। बाट्। कुम्। खुम्। घुम्। हुम्। आईम्। शीम्। [27]सीम्। वै[28]।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः (ग.सू.१६)। उपसर्गप्रतिरूपकाः —

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥

'अच उपसर्गात्तः' (७.४.४७/३०७८) इति तत्वं न भवति। [29]दुर्नीतम्। दुर्नयः। [30]दुर्निर्णयः॥ 'उपसर्गात्' (८.४.१४/२२८७) इति णत्वं न भवति। असत्त्वे इति किम्? पशुर्वै पुरुषः। पशुः पुरोडाशः[31] निपातप्रदेशाः—'स्वरादिनिपातमव्ययम्' (१.१.३७/४४७) इत्येवमादयः॥

## प्रादयः। (५८/२१)

प्रादयोऽसत्त्वे निपातसञ्ज्ञा भवन्ति[32]। प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप। पृथग्योगकरणमुत्तरसञ्ज्ञाविशेषणार्थम्। 'उपसर्गाः क्रियायोगे' (१.४.५९/२२) इति चादीनामुपसर्गसञ्ज्ञा मा भूत्। असत्त्वे इत्येव, [33]परा जयति सेना॥

---

1. नास्ति फ. 2. नास्ति फ. 3. क्वचित् क, कुत्, चिण् ड. 4. चिण् ड. 5. क्वचित् क. 6. नहि क, तर्हि अ. 7. नवो इत्यधिकम् क. 8. नास्ति फ, न। न किर् ड. 9. करिष्यति ह. 10. नकारलोपो नञः इति विशेषः कार्यः इत्यधिकम् अ.क. 11. नास्ति अ. 12. वै क, मानाक् जोषम् ह. 13. तु क. 14. नास्ति अ.फ. 15. कम्, न तु, तथाहि, खलु अहो इत्यधिकम् क. 16. अधस् अ. 17. अ मा नो ना प्रतिषेधे इत्यधिकम् अ.क.फ. 18. नास्ति फ. 19. अद्धा फ. 20. नास्ति ड.फ. 21. नास्ति फ. 22. अविक् ड. 23. वा इत्यधिकम् अ. 24. अनुषक् ड. 25. ओ ब. 26. चाट् ब.ड. 27. सीम ड. 28. भूयस् अलं हुम् सुष्ठु पुरस् कामं आशु तर्हि अन्तरेण रहस् सपदि इत्यधिकम् ह, आकृतिगणश्चायं इति चादिः इत्यधिकम् अ.ड. 29. नास्ति फ. 30. नास्ति ड. 31. अनिपातत्वात् सुलोपो न भवति इत्यधिकम् फ.ह. 32. के पुनः प्रादयः इत्यधिकम् क. 33. पराः सेनाः अ.ब.क, परा जयन्ति सेनाः ड.

## उपसर्गाः क्रियायोगे। (५९/२२)

प्रादयः क्रियायोगे उपसर्गसञ्ज्ञा भवन्ति। प्रणयति। परिणयति। प्रणायकः। परिणायकः (८.४.१४/२२८७)। क्रियायोगे इति किम्? [1]प्रगतो नायकोऽस्माद् देशात्, प्रनायको देशः।

[६७] मरुच्छब्दस्य चोपसङ्ख्यानं [2]कर्तव्यम्। (म.भा. १.३४१)

मरुद्भिर्दत्तो मरुत्तः। सञ्ज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि 'अच उपसर्गात्तः' (७.४.४७/३०७८) इति तत्वं भवति।

[६८] श्रच्छब्दस्योपसङ्ख्यानम्। (म.भा. १.३४१)

'आतश्चोपसर्गे' (३.३.१०६/३२८३) इति अङ्[3] भवति – श्रद्धा। उपसर्गप्रदेशाः—'उपसर्गे घोः किः' (३.३.९३/३२७०) इत्येवमादयः॥

## गतिश्च। (६०/२३)

गतिसञ्ज्ञकाश्च प्रादयो भवन्ति क्रियायोगे। प्रकृत्य (२.२.१८/७६१)। प्रकृतम् (६.२.४९/३७८३)। यत्प्रकरोति[4] (८.१.३०/३९३७)। योगविभाग उत्तरार्थः। उत्तरत्र गतिसञ्ज्ञैव यथा स्यात्। उपसर्गसञ्ज्ञा मा भूत्। [5]ऊरीस्यात् इत्यत्र 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (८.३.८७/२४७२) इति षत्वं [6]प्रसज्येत। चकारः सञ्ज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्। 'गतिरनन्तरः' (६.२.४९/३७८३) इति स्वरः, 'उपसर्गात्०' (८.४.१४/२२८७) (८.३.६५/२२७०) इति णत्वषत्वे च भवतः।

[६९] कारिकाशब्दस्योपसङ्ख्यानम्। (म.भा. १.३४२)

कारिकाकृत्य। कारिकाकृतम्। [7]यत्कारिकाकरोति।

[७०] पुनश्चनसौ छन्दसि गतिसञ्ज्ञौ भवत इति वक्तव्यम्। (म.भा. १.३४२)

पुनरुत्स्यूतं वासो देयम् (मै. १.७.२)। 'गतिर्गतौ' (८.१.७०/३९७७) इति निघातो भवति। '(उशिग्दूतः) चनो[8] हितः' (ऋ. ३.११.२)। 'गतिरनन्तरः' (६.२.४९/३७८३) इति स्वरः। गतिप्रदेशाः—'कुगतिप्रादयः' (२.२.१८/७६१) इत्येवमादयः॥

## ऊर्यादिच्विडाचश्च। (६१/७६२)

ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसञ्ज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानम्। तत्साहचर्यादूर्यादीनामपि [9]तैरेव योगे [10]गतिसञ्ज्ञा विधीयते। ऊरीउररीशब्दा[11]वङ्गीकरणे विस्तारे च (ग.र. १३६)।

---

1. प्रगता नायकाः ह. 2. कर्तव्यम् नास्ति अ. 3. प्रत्ययः इत्यधिकम् फ. 4. प्रकरोति अ, प्रहृत्य प्रहृतम् प्रहरति इत्यधिकम् ह. 5. उरी ड. 6. प्रसृज्यते फ. 7. यत् नास्ति ह. 8. उताचनोदितः फ, चनोकं ह. 9. तैर्योगे ह. 10. गतिः सञ्ज्ञायते ब, गतिसञ्ज्ञा विज्ञायते अ.ह. 11. अङ्गीकृतौ ह.

ऊरीकृत्य। ऊरीकृतम्। यदूरीकरोति। उररीकृत्य। उररीकृतम्। यदुररीकरोति। [1]पापी। [2]ताली। आताली। वेताली। धूसी[3]। शकला। संशकला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायाम् (ग.र. १३६)। शकलाकृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंशकलाकृत्य। गुलुगुधा पीडार्थे (ग.र. १३६)—गुलुगुधाकृत्य। सजूः सहार्थे (ग.र. १३७)—सजूःकृत्य। फलू, फली, विक्ली, आक्ली इति विकारे (ग.र. १३७)—फलूकृत्य। फलीकृत्य। विक्लीकृत्य। [4]आलोष्टी। कराली। केवाली। शेवाली। वर्षाली। मस्मसा। मसमसा। एते हिंसायाम्। [5]वषट्। वौषट्। श्रौषट्। स्वाहा। स्वधा। बन्धा। प्रादुस्। श्रुत्। आविस्। [6]च्व्यन्ताः खल्वपि—शुक्लीकृत्य। शुक्लीकृतम्। [7]यच्छुक्लीकरोति। डाच्—पटपटाकृत्य। [8]पटपटाकृतम्। यत्पटपटाकरोति ॥

## अनुकरणं चानितिपरम्। (६२/७६३)

इतिः परो यस्मात् इति बहुव्रीहिः। अनुकरणमनिति[9]परं क्रियायोगे गतिसञ्ज्ञं भवति। [10]खाट्कृत्य। खाट्कृतम्। यत्खाट्करोति। अनितिपरम् इति किम्? खाडिति कृत्वा निरष्ठीवत् ॥

## आदरानादरयोः सदसती। (६३/७६४)

[11]प्रीतिसंभ्रम आदरः। परिभवौदासीन्यम् अनादरः। आदरानादरयोः[12]यथाक्रमं सदसच्छब्दौ गतिसञ्ज्ञौ भवतः। सत्कृत्य। सत्कृतम्। यत्सत्करोति। असत्कृत्य। असत्कृतम्। यदसत्करोति। आदरानादरयोः इति किम्? सत्कृत्वा [13]काण्डं गतः। असत्कृत्वा काण्डं गतः ॥

## भूषणेऽलम्। (६४/७६५)

अलम् इति प्रतिषेधे, सामर्थ्ये, पर्याप्तौ, भूषणे च [14]इति विशेषणमुपादीयते। [15]भूषणे योऽलंशब्दः स गतिसञ्ज्ञो भवति। अलङ्कृत्य। अलङ्कृतम्। यदलङ्करोति। भूषणे इति किम्? अलं भुक्त्वा ओदनं गतः ॥

## अन्तरपरिग्रहे। (६५/७६६)

अन्तःशब्दोऽपरिग्रहेऽर्थे[16] गतिसञ्ज्ञो भवति। [17]परिग्रहः स्वीकरणम्। तदभावे गतिसञ्ज्ञा विधीयते। अन्तर्हत्य। अन्तर्हतम्। [18]यदन्तर्हन्ति। अपरिग्रहे इति किम्? [19]अन्तर्हत्वा मूषिकां श्येनो गतः। [20]परिगृह्य गतः इत्यर्थः।

[७१] अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसञ्ज्ञा वक्तव्या। (म.भा. १.३४४)
अन्तर्धा (३.३.१०६/३२८३)। अन्तर्धिः (३.३.९२/३२७०)। अन्तर्णयति (८.४.१४/२२८७) ॥

---

1. पाली ह, आली फ. 2. नाली ड, सूली फ. 3. धूली ड, पाप्यादयः विस्तारे इत्यधिकम् अ. 4. आलाष्ठी करासी केवाली पर्याली सेवाली शेवाली वर्षाली वश्मसा इत्यधिकम् ड. 5. नास्ति ह. 6. च्व्यर्थाः ड. 7. नास्ति ह. 8. नास्ति ह. 9. °परतः फ. 10. खात्कृत्य ह. 11. प्रीत्यतिशयः ड. इ. ग. 12. यथासङ्ख्यम् ह. 13. काण्डं नास्ति ड. 14. वर्तते फ. ह, अतः फ. 15. भूषणे–करोति नास्ति अ. 16. यः सः इत्यधिकम् क. 17. परिग्रहं ह. 18. नास्ति फ, यदन्तर्हतं ब. 19. अन्तर्हित्वा ह अन्तर्हत्वा मूषकान् ड. 20. वाक्यमिदं नास्ति फ.

## कणेमनसी श्रद्धाप्रतीघाते । (६६/७६७)

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते[1] गतिसञ्ज्ञौ भवतः[2] । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत् पिबति यावदस्या[3]भिलाषो निवृत्तः । श्रद्धा [4]प्रतिहता इत्यर्थः । श्रद्धाप्रतीघाते इति किम् ? कणे हत्वा गतः । मनो हत्वा गतः ।।

## पुरोऽव्ययम् । (६७/७६८)

असिप्रत्ययान्तः पुरःशब्दो[5]ऽव्ययम् । स गतिसञ्ज्ञो भवति । समासस्वरोपचाराः (८.३.४०/१५४) प्रयोजनम् । पुरस्कृत्य । पुरस्कृतम् । यत्पुरस्करोति । अव्ययम् इति किम् ? पूः, पुरौ । पुरः कृत्वा [6]काण्डं गतः[7] ।।

## अस्तं च । (६८/७६९)

अस्तंशब्दो [8]मकारान्तोऽव्ययमनुपलब्धौ वर्तते । स गतिसञ्ज्ञो भवति । अस्तंगत्य सविता पुनरुदेति । अस्तंगतानि धनानि । [9]यदस्तंगचछति । अव्ययम् इत्येव, [10]अस्तं काण्डम् । [11]क्षिप्तम् इत्यर्थः ।।

## अच्छ गत्यर्थवदेषु । (६९/७७०)

अच्छशब्दः अव्ययमभिशब्दस्यार्थे वर्तते । स गत्यर्थेषु धातुषु वदतौ [12]च गतिसञ्ज्ञो भवति । अच्छगत्य । [13]अच्छगतम् । [14]यदच्छगच्छति । वदतौ–अच्छोद्य । अच्छोदितम् । यदच्छवदति । अव्ययम् इत्येव, उदकमच्छं [15]गच्छति ।।

## अदोऽनुपदेशे । (७०/७७१)

अदःशब्दस्त्यदादिषु पठचते, सोऽनुपदेशे[16] गतिसञ्ज्ञो भवति । उपदेशः परार्थः प्रयोगः[17] । स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेशः इति सोऽस्य विषयः । अदःकृत्य । अदःकृतम् । यददःकरोति । अनुपदेशे इति किम् ? अदः कृत्वा काण्डं गतः इति [18]परस्य कथयति ।।

## तिरोऽन्तर्धौ । (७१/७७२)

अन्तर्धिः [19]व्यवधानम् । तत्र तिरःशब्दो गतिसञ्ज्ञो भवति । तिरोभूय । तिरोभूतम् । यत्तिरोभवति । अन्तर्धौ इति किम् ? तिरो भूत्वा स्थितः । [20]पार्श्वतो भूत्वा इत्यर्थः ।।

---

1. वर्तमानौ इत्यधिकम् अ. 2. श्रद्धा अभिलाषः, प्रतिघातः उपशमः इत्यधिकम् फ. 3. अभिलाष–निवृत्तिः फ. 4. प्रतिहन्यते ड. फ. ह. 5. अव्ययसञ्ज्ञः फ. 6. काण्डं नास्ति ड. 7. पुराणि कृत्वा गतः इत्यर्थः इत्यधिकम् फ. ह. 8. मकारान्तो नास्ति ह. 9. उदाहरणमिदं नास्ति फ. 10. अस्तंकारं ड, अस्तं कृत्वा गतः क. ड. 11. वाक्यमिदं नास्ति क. 12. च नास्ति ह. 13. अच्छागतम् ब, अच्छंगतः फ. 14. अच्छगच्छति ब. 15. गत्वा अ. 16. गम्ये इत्यधिकम् फ. 17. कथ्यते इत्यधिकम् अ, प्रयोगः नास्ति फ. ह. 18. परामृश्य क. 19. अपवारणं क. 20. वाक्यमिदं नास्ति ब. ड. फ. ह.

## विभाषा कृञि। (७२/७७३)

अन्तर्धौ इति वर्तते। प्राप्तविभाषेयम्। तिरःशब्दः करोतौ [1]परतो विभाषा गतिसञ्ज्ञो भवति। तिरः कृत्य, तिरस्कृत्य (८.३.४२/१५६)। तिरस्कृतम्। [2]यत्तिरस्करोति। तिरः कृत्वा, तिरस्कृत्वा। अन्तर्धौ [3]इत्येव, तिरःकृत्वा [4]काष्ठं तिष्ठति॥

## उपाजेऽन्वाजे। (७३/७७४)

विभाषा कृञि इति वर्तते। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ [5]दुर्बलस्य सामर्थ्याधाने [6]वर्तेते। तौ कृञि विभाषा गतिसञ्ज्ञौ भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा॥

## साक्षात्प्रभृतीनि च। (७४/७७५)

विभाषा कृञि इति वर्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसञ्ज्ञानि भवन्ति।

[७२] साक्षात्प्रभृतिषु च्व्यर्थवचनम्[7]। (म.भा. १. ३४४)

साक्षात्कृत्य, साक्षात् कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा।

साक्षात्। मिथ्या। [8]चिन्ता। भद्रा। [9]लोचना। [10]विभाषा। सम्पत्का। आस्था। अमा[11]। श्रद्धा। प्राजर्या। प्राजरुहा। [12]वीजर्या। वीजरुहा। संसर्या[13]। अर्थे। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसञ्ज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते। [14]अग्नौ। वशे। [15]विकम्पने। [16]विहसने। [17]प्रहसने। प्रतपने। प्रादुस्। [18]नमस्। आविस्[19]॥

## अनत्याधान उरसिमनसी। (७५/७७६)

विभाषा कृञि इति वर्तते। अत्याधानम् [20]उपश्लेषणम्, तदभावेऽनत्याधाने उरसिमनसी शब्दौ विभाषा कृञि गतिसञ्ज्ञौ भवतः। उरसिकृत्य, उरसि कृत्वा। [21]मनसिकृत्य, मनसि कृत्वा। अनत्याधाने इति किम्? उरसि कृत्वा पाणिं शेते॥

## मध्ये पदे निवचने च। (७६/७७७)

विभाषा कृञि इति वर्तते। चकारात् अनत्याधाने इति च। मध्ये पदे निवचने इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसञ्ज्ञा भवन्ति। मध्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा। निवचनं वचनाभावः। निवचनेकृत्य, निवचने कृत्वा। वाचं नियम्य [22]इत्यर्थः। अनत्याधाने इत्येव, हस्तिनः पदे कृत्वा शिरः शेते॥

---

1. परतो नास्ति ड.फ. 2. उदाहरणमिदं नास्ति ड.फ. 3. किम् फ. 4. काण्डं गतः क, काष्ठं नास्ति ह. 5. दुर्बलसामर्थ्याधाने अ. 6. वर्तते ह. 7. द्रष्टव्यम् इत्यधिकम् क. 8. चिन्ता क. 9. चलना रोचना ड. 10. विभाषा संपत्का नास्ति क. 11. नास्ति ब, आम अर्धा ड. 12. वीजर्या वीजरुहा क. 13. आम् इत्यधिकम् ब. 14. आः ह. 15. विकसने ब. 16. नास्ति ब. 17. प्रगदे प्रर्हने प्रमादे ह, प्रहसने नास्ति क. 18. मनस् ब. 19. इति साक्षादादिः इत्यधिकम् ड. 20. उपश्लेषः ह. 21. उदाहरणमिदं नास्ति फ. 22. इत्यर्थः नास्ति ब.

## नित्यं हस्ते पाणावुपयमने। (७७/७७८)

[1]कृञि इति वर्तते। हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसञ्ज्ञौ भवतः उपयमने। उपयमनं दारकर्म[2]। हस्तेकृत्य। पाणौकृत्य। दारकर्म कृत्वा इत्यर्थः। उपयमने इति किम्? हस्ते कृत्वा कार्षापणं गतः॥

## प्राध्वं बन्धने। (७८/७७९)

कृञि इति वर्तते। प्राध्वम् इति मकारान्तमव्ययमानुकूल्ये वर्तते। तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसञ्ज्ञो भवति। प्राध्वंकृत्य[3]। बन्धने इति किम्? प्राध्वं कृत्वा शकटं गतः॥

## जीविकोपनिषदावौपम्ये। (७९/७८०)

कृञि इति वर्तते। जीविका उपनिषद् इत्येतौ शब्दौ औपम्ये [4]विषये कृञि[5] गतिसञ्ज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य। औपम्ये इति किम्? जीविकां कृत्वा गतः॥

## ते प्राग्धातोः। (८०/२२३०)

ते गत्युपसर्गसञ्ज्ञका धातोः [6]प्राक् प्रयोक्तव्याः। [7]तथा चैवोदाहृताः। तेग्रहणमुपसर्गार्थम्। गतयो ह्यनन्तराः॥

## छन्दसि परेऽपि। (८१/३३९१)

प्राक् [8]प्रयोगे प्राप्ते छन्दसि परेऽपि अभ्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसञ्ज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः। न च [9]परेषां प्रयुज्यमानानां सञ्ज्ञाकार्यं किञ्चिदस्ति। केवलं परप्रयोगेऽपि [10]क्रियायोग एषामस्ति इति ज्ञाप्यते। याति नि हस्तिना, [11]नियाति हस्तिना। हन्ति नि मुष्टिना, [12]निहन्ति मुष्टिना॥

## व्यवहिताश्च। (८२/३३९२)

व्यवहिताश्च गत्युपसर्गसञ्ज्ञकाः छन्दसि[13] दृश्यन्ते। 'आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः (ऋ. ३.४५.१)। आ याहि (ऋ. ६.१६.१०)॥

## कर्मप्रवचनीयाः। (८३/५४६)

कर्मप्रवचनीयाः इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसञ्ज्ञास्ते वेदितव्याः 'अधिरीश्वरे' (१.४.९७/६४४) इति यावद् वक्ष्यति। [15]कर्मप्रवचनीयप्रदेशाः—'कर्मप्रवचनीययुक्ते द्वितीया' (२.३.८/५४८) इत्येवमादयः॥

---

1. कृञि–उपयमने नास्ति ब. 2. पाणिग्रहणमित्यर्थः इत्यधिकम् अ.ह. 3. प्राध्वं कृतम् यत्प्राध्वंकरोति इत्यधिकम् क. फ. ह. 4. अर्थे फ, औपम्यविषये ह. 5. नित्यं इत्यधिकम् क. ड. फ. ह. 6. पूर्वं क. ग. 7. तथा चैवोदाहृतम् ह. 8. योगे ब. 9. परेण तेषाम् क, परेषां तेषां ड. 10. विक्रियायोगः ह. 11. नियाति हस्तिनी ड. 12. हन्ति मुष्टिकता ह. 13. विषये इत्यधिकम् फ. 14. याति मयूरेति ह. 15. वाक्यमिदं नास्ति फ.

## अनुर्लक्षणे । (८४/५४७)

[1]अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसञ्ज्ञो भवति । शाकल्यस्य संहितामनु प्रावर्षत् (म.भा. १. ३४६) । [2]अनडुद्यज्ञमन्वसिञ्चत् । अगस्त्यमन्वसिञ्चन् प्रजाः । किमर्थमिदमुच्यते, यावता 'लक्षणेत्थम्भूताख्यान°' (१. ४. ९०/५५२) [3]इति सिद्धैवानोः कर्मप्रवचनीयसञ्ज्ञा ? हेत्वर्थं तु वचनम् (म. भा. १. ३४७) । [4]हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यात् ॥

## तृतीयार्थे । (८५/५४९)

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसञ्ज्ञो भवति । नदीमन्ववसिता सेना[5] । पर्वतमन्ववसिता सेना । पर्वतेन सम्बद्धा इत्यर्थः ॥

## हीने । (८६/५५०)

हीनः [6]इति न्यूनः उच्यते, स चोत्कृष्टापेक्षः । तेनेयं हीनोत्कृष्टसम्बन्धे सञ्ज्ञा [7]विज्ञायते । हीने द्योत्ये [8]अयमनुः कर्मप्रवचनीयसञ्ज्ञो भवति । अनु शाकटायनं [9]वैयाकरणाः । अन्वर्जुनं योद्धारः ॥

## उपोऽधिके च । (८७/५५१)

उपशब्दः [10]अधिके हीने च द्योत्ये कर्मप्रवचनीयसञ्ज्ञो भवति । [11]उप खार्यां (२. ३. ९/६४५) द्रोणः । उप निष्के कार्षापणम् । हीने—उप शाकटायनं वैयाकरणाः ॥

## अपपरी वर्जने । (८८/५९६)

अपपरी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसञ्ज्ञौ भवतः । [12]प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धः वर्जनम् । अप त्रिगर्तेभ्यो (२. ३. १०/५९८) वृष्टो देवः । परि परि (८. १. ५/२१४१) त्रिगर्तेभ्यो वृष्टो देवः । वर्जने इति किम् ? ओदनं परिषिञ्चति ॥

---

1. शब्दः नास्ति फ. 2. अनडुद्... उच्यते नास्ति फ. 3. इत्यनेनैव क. 4. हेतौ तृतीयां ह. 5. नद्या सह संबद्धा इत्यर्थः इत्यधिकम्, पर्वत... इत्यर्थः नास्ति ह. 6. इति नास्ति फ. 7. विधीयते ड. फ. ह. 8. अयं नास्ति फ. ह. 9. वैयाकरणाः नास्ति अ. 10. आधिक्ये ह. 11. उपखार्या फ. 12. प्रकृतेन असम्बन्धी अ.

## आङ् मर्यादावचने । (८९/५९७)

[1]आङ इत्येष शब्दो मर्यादावचने कर्मप्रवचनीयसञ्ज्ञो भवति । अवधिर्मर्यादा । वचनग्रहणाद[2]भिविधिरपि गृह्यते । आ पाटलिपुत्राद् (२.३.१०/५९८) वृष्टो देवः । [3]आ कुमारं यशः पाणिनेः (म. भा. १.३४७) । आ सांकाश्यात् । आ मथुरायाः । मर्यादावचने इति किम् ? ईषदर्थे क्रियायोगे च मा भूत् ॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । (९०/५५२)

लक्षणे, इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायां प्रति परि अनु [4]इत्येते कर्मप्रवचनीयसञ्ज्ञा भवन्ति । लक्षणे तावत्–वृक्षं प्रति विद्योतते विद्युत् । [5]वृक्षं परि । वृक्षमनु । इत्थंभूताख्याने–साधुर्देवदत्तो मातरं प्रति । मातरं परि । [6]मातरमनु । भागे–यदत्र [7]मां प्रति स्यात् । मां परि [8]स्यात् । मामनु [9]स्यात् । वीप्सायाम्–वृक्षं वृक्षं प्रति सिञ्चति । [10]परि सिञ्चति । अनु सिञ्चति । लक्षणादिषु इति किम् ? ओदनं परिषिञ्चति ।

अथ परिशब्दयोगे पञ्चमी कस्मान्न भवति 'पञ्चम्यपाङ्परिभिः' (२.३.१०/५९८) इति ? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात् ॥

## अभिरभागे । (९१/५५३)

लक्षणादिषु [11]एव भागवर्जितेषु [12]अभिः कर्मप्रवचनीयसञ्ज्ञो भवति । वृक्षमभि विद्योतते [13]विद्युत् । साधुर्देवदत्तो मातरमभि । वृक्षं वृक्षमभि सिञ्चति । अभागे इति किम् ? भागः [14]स्वीक्रियमाणोंऽशः । यदत्र ममाभिष्यात् तद्[15]दीयताम् । [16]यदत्र मम भवति तद् दीयताम् इत्यर्थः ॥

## प्रतिः प्रतिनिधिप्रतिदानयोः । (९२/५९९)

मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसञ्ज्ञो भवति । [17]अभिमन्युरर्जुनतः प्रति । [18]माषानस्मै तिलेभ्यः (२.३.११/६००) प्रति यच्छति ॥

## अधिपरी अनर्थकौ । (९३/५५४)

[19]अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसञ्ज्ञौ भवतः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति[20] । गत्युपसर्गसञ्ज्ञा[21]बाधनार्था कर्मप्रवचनीयसञ्ज्ञा विधीयते ॥

---

1. आङ्–वचने नास्ति ब. 2. अभिव्याप्तिः परिगृह्यते क. ड. फ. ह. 3. आकुमारं–साङ्काश्यात् नास्ति फ. ह. 4. इति कर्मप्रवचनीयसञ्ज्ञानि फ. 5. उदाहरणमिदं नास्ति फ. 6. पितरमनु फ. 7. मा ह. 8-9 स्यात् नास्ति फ. 10. वृक्षं वृक्षं इत्यधिकम् फ. 11. च ड. 12. अभिशब्दः फ. 13. विद्युत् नास्ति ह. 14. स्वीक्रियमाणस्य अंशः क. 15. भवते इत्यधिकम् ह. 16. यन्मां प्रभजति तत् फ. ह. 17. प्रतिनिधौ–इत्यधिकम् फ. 18. प्रतिदाने-इत्यधिकम् फ. 19. अधिपरि⁰ ड. 20. कुत आगच्छति इत्यर्थः इत्यधिकम् फ. 21. बाधनार्थं फ.

## सुः पूजायाम् । (९४/५५५)

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसञ्ज्ञो भवति । सु सिक्तं भवता । सु स्तुतं भवता[1] । धात्वर्थः स्तूयते । उपसर्गसञ्ज्ञाश्रयं षत्वं न भवति । पूजायाम् इति किम् ? सुषिक्तं किं तवात्र ॥

## अतिरतिक्रमणे च । (९५/५५६)

अतिशब्दः अतिक्रमणे, [2]चकारात् पूजायां च कर्मप्रवचनीयसञ्ज्ञो भवति । निष्पन्नेऽपि [3]वस्तुनि [4]क्रिया-प्रवृत्तिः अतिक्रमणम् । अति सिक्तमेव भवता । [5]अति स्तुतमेव भवता । पूजायाम्--अति सिक्तं भवता । अति स्तुतमेव भवता । शोभनं कृतमित्यर्थः ॥

## अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । (९६/५५७)

पदार्थे, सम्भावने, अन्ववसर्गे, गर्हायाम्, समुच्चये [6]च वर्तमानः [7]अपिः कर्मप्रवचनीयसञ्ज्ञो भवति । [8]पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः--सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । मात्रा, बिन्दुः, [9]स्तोकम् इत्य-स्यार्थेऽपिशब्दो वर्तते । सम्भावनम् अधिकार्थवचनेन [10]शक्तेरप्रतिघाताविष्करणम् – अपि सिञ्चेन् [11]मूलकसहस्रम् । अपि स्तुयाद् राजानम् । अन्ववसर्गः कामचाराभ्यनुज्ञानम्–अपि सिञ्च । अपि स्तुहि । गर्हा निन्दा–धिग् जाल्मं देवदत्तम्, अपि सिञ्चेत् पलाण्डुम् (नि. १.४.१२) । अपि स्तुयाद् वृषलम् । समुच्चये--अपि सिञ्च । अपि स्तुहि । सिञ्च च स्तुहि च । उपसर्गसञ्ज्ञाबाधनात् षत्वं न भवति ॥

## अधिरीश्वरे । (९७/६४४)

ईश्वरः स्वामी, स च स्वमपेक्षते । तदयं स्वस्वामिसम्बन्धे [12]अधिः कर्मप्रवचनीयसञ्ज्ञो भवति । तत्र कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति, कदाचित् [13]स्वात् । अधि ब्रह्मदत्ते [14]पञ्चालाः । अधि [15]पञ्चालेषु ब्रह्मदत्तः[16] ॥

## विभाषा कृञि । (९८/६४६)

अधिः करोतौ विभाषा[17] कर्मप्रवचनीयसञ्ज्ञो भवति । यदत्र [18]मामधि करिष्यति । कर्मप्रवचनीयसञ्ज्ञा-पक्षे गतिसञ्ज्ञा[19]बाधनात् 'तिङि चोदात्तवति' (८.१.७१/३९७८) इति [20]निघातो न भवति ॥

---

1. शोभनं कृतं इत्यधिकम् फ. शोभनं कृत्यं इत्यर्थः इत्यधिकम् ह. 2. चकारात् नास्ति क. 3. फले क. ड. फ.ह. 4. क्रियावृत्तिः ड, क्रियायाः प्रवृत्तिः ह. 5. उदाहरणमिदं नास्ति फ. 6. च नास्ति ब.क.ह. 7. अपिशब्दः क.फ. 8. वाक्यमिदं नास्ति ह. 9. अल्पम् क. 10. शक्तौ फ. 11. मूलसहस्रम् अ. 12. अधिः नास्ति ब.इ.ग. 13. स्व-स्य फ. ह, स्यात् इत्यधिकम् अ. 14. पाञ्चालाः क. 15. पाञ्चालेषु क. 16. इति इत्यधिकम् क. ड. 17. ईश्वरे इत्यधिकम् फ. ह. 18. ममाधि क. 19. विधानात् ब. ड. 20. गति इत्यधिकम् ह.

## लः परस्मैपदम् । (९९/२१५५)

लः इति षष्ठी [1]आदेशापेक्षा । [2]लादेशाः परस्मैपदसञ्ज्ञा भवन्ति । तिप्, तस्, झि । सिप्, थस्, थ । मिप्, वस्, मस् । शतृक्वसू च । परस्मैपदप्रदेशाः–'सिचि वृद्धिः परस्मैपदेषु' (७. २. १/२२९७) इत्येवमादयः ॥

## तङानावात्मनेपदम् । (१००/२१५६)

तङ इति प्रत्याहारो नवानां [3]वचनानाम् । आनः इति शानच्कानचोर्ग्रहणम् । पूर्वेण परस्मैपदसञ्ज्ञायां प्राप्तायां तङानयोरात्मनेपदसञ्ज्ञा[4] विधीयते । त, आताम्, झ । थास्, आथाम्, ध्वम् । इट्, वहि, महिङ । आनः खल्वपि – शानच्कानचौ । लः इत्येव, कतीह निघ्नानाः (३. २. १२९/३१०९) । आत्मनेपदप्रदेशाः – '[5]अनुदात्तङित आत्मनेपदम्' (१. ३. १२/२१५७) इत्येवमादयः ॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । (१०१/२१६०)

तिङोऽष्टादश प्रत्ययाः । । नव परस्मैपदसञ्ज्ञकाः, नवात्मनेपदसञ्ज्ञकाः । तत्र परस्मैप्रदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसञ्ज्ञा भवन्ति । तिप्, तस्, झि इति प्रथमः[6] । सिप्, थस्, थ इति मध्यमः । मिप्, वस्, मस् इति उत्तमः । आत्मनेपदेषु – त, आताम्, झ इति प्रथमः । थास्, आथाम्, ध्वम् इति मध्यमः । इट्, वहि, महिङ इति उत्तमः । प्रथममध्यमोत्तमप्रदेशाः – 'शेषे प्रथमः' (१. ४. १०८/२१६५) [7]इत्येवमादयः ॥

## तान्येकवचनद्विवचनबहुवचनान्येकशः । (१०२/२१६१)

तानि[8] एकवचनद्विवचनबहुवचनसञ्ज्ञानि भवन्ति । एकशः [9]एकैकं पदम् । तिप् इत्येकवचनम् । तस् इति द्विवचनम् । झि इति बहुवचनम् । एवं सर्वत्र[10] । एकवचनद्विवचनबहुवचनप्रदेशाः – '[11]बहुषु बहुवचनम्' (१. ४. २१/१८७) इत्येवमादयः ॥

## सुपः । (१०३/१८५)

तिङां त्रिकेषु एकवचनादिसञ्ज्ञा [12]विहिताः । सम्प्रति सुपां त्रिकेषु [13]विधीयन्ते । सुपश्च त्रीणि त्रीणि [14]पदानि [15]एकश एकवचनद्विवचनबहुवचनसञ्ज्ञानि भवन्ति । [16]सु इति एकवचनम् । औ इति द्विवचनम् । जस् इति बहुवचनम् । एवं सर्वत्र ॥

## विभक्तिश्च । (१०४/१८४)

त्रीणि [17]त्रीणि इत्यनुवर्तते । त्रीणि त्रीणि [18]विभक्तिसञ्ज्ञाश्च भवन्ति सुपस्तिङश्च । विभक्तिप्रदेशाः – 'अष्टन आ विभक्तौ' (७. २. ८४/३७१) इत्येवमादयः ॥

---

1. आदेशापेक्षया फ, लः इति षष्ठ्या आदेशाः उपस्थाप्यन्ते ह. 2. लादेशः ह. 3. वचनानाम् नास्ति ब. 4. अनेन इत्यधिकम् ह. 5. आत्मनेपदेष्वनचः ह. 6. पुरुषः इत्यधिकम् क. 7. एवम् नास्ति ह, युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः, अस्मदि उत्तमः इत्यधिकम् ह. 8. तिङः त्रीणि त्रीणि पदानि इत्यधिकम् अ. क. ड. फ, तानि सुपः त्रीणि त्रीणि पदानि भूत्वैक° ह. 9. एकैकशब्दः ह. 10. एकवचनद्विवचनबहुवचनसञ्ज्ञानि इत्यधिकम् क. 11. द्व्येकयोर्द्विवचनैकवचने (1.4.22/186) इत्यधिकम् अ.क.ड.ह. 12. विहिता ड. 13. विधीयते ड. 14. वचनानि अ. 15. एकशः एकैकं वचनं अ, एकशः नास्ति ब. ह. 16. सुप् क. 17. त्रीणि नास्ति व. क. ड. ह. 18. विभक्तिसञ्ज्ञकाश्च अ. ह.

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । (१०५/२१६२)

'लस्य' (३.४.७७/२१५३) इत्यधिकृत्य सामान्येन तिबादयो विहिताः । तेषामयं पुरुषनियमः क्रियते । युष्मद्युपपदे सति व्यवहिते चाव्यवहिते [1]सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि [2]प्रयुज्यमानेऽ[3]प्य-प्रयुज्यमानेऽपि मध्यमपुरुषो भवति । त्वं पचसि । युवां पचथः । यूयं पचथ । अप्रयुज्यमानेऽपि – पचसि । पचथः । पचथ[4] ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । (१०६/२१६३)

प्रहासः परिहासः [5]क्रीडा । प्रहासे[6] गम्यमाने मन्योपपदे धातो[7]र्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स च एकवद् भवति । एहि मन्ये ओदनं भोक्ष्यसे इति, न [8]हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन [9]ते पिता । मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते । प्रहासे इति किम् ? एहि मन्यसे ओदनं भोक्ष्ये [10]इति । सुष्ठु[11] मन्यसे । [12]साधु मन्यसे ॥

## अस्मद्युत्तमः । (१०७/२१६४)

[13]उत्तमपुरुषो नियम्यते । अस्मद्युपपदे [14]समानाभिधेये [15]प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति । अहं पचामि । आवां पचावः । वयं पचामः । [16]अप्रयुज्यमानेऽपि--पचामि । पचावः । पचामः ॥

## शेषे प्रथमः । (१०८/२१६५)

शेषः इति मध्यमोत्तमविषयादन्य उच्यते । यत्र युष्मदस्मदी समानाधिकरणे [17]उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति । पचति । पचतः । पचन्ति ॥

## परः संनिकर्षः संहिता । (१०९/२८)

परशब्दोऽ[18]तिशये वर्तते । संनिकर्षः प्रत्यासत्तिः । परो यः सन्निकर्षः, वर्णानामर्धमात्राकाल[19]व्यवधानं, [20]स संहितासञ्ज्ञो भवति । [21]दध्यत्र । मध्वत्र । संहिताप्रदेशाः--'[22]संहितायाम्' (६.१.७२/१४५) इत्येवमादयः ॥

## विरामोऽवसानम् । (११०/२७)

विरतिः विरामः । विरम्यतेऽनेन इति [23]वा विरामः । सो[24]ऽवसानसञ्ज्ञो भवति । [25]दधिँ । मधुँ (८.४.५७/११०) । वृक्षः । प्लक्षः (८.३.१५/७६) । अवसानप्रदेशाः--'[26]खरवसानयोर्विसर्जनीयः' (८.३.१५/७६) इत्येवमादयः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥

---

1. च क. फ. 2. अपि इत्यधिकम् अ. ड. फ. 3. अपि नास्ति फ 4. युष्मद्युपपदे इति किं? पचति देवदत्तः इत्यधिकम् क, समानाधिकरणे इति किम् ? त्वया पच्यते ओदनः इत्यधिकम् अ.क.ड. 5. क्रीडा नास्ति फ. ह.ई, परिहासक्रीडा ब. 6. च इत्यधिकम् अ. 7. मध्यमः पुरुषः अ.ड.फ.ह. 8. हि नास्ति क. 9. ते नास्ति ड.फ.ह. 10. इति नास्ति फ. 11. च इत्यधिकम् ह. 12. साधु मन्यसे नास्ति फ. 13. अस्मदि इत्यधिकम् ह. 14. समाधिकरणे क.फ.ह. 15. व्यवहिते अव्यवहिते च इत्यधिकम् अ. फ, स्थानिन्यपि इत्यधिकम् ह. 16. अप्रसज्यमाने ब, उदाहरणमिदं नास्ति ह. 17. उपपदे नास्ति क. फ. ह. 18. अत्र इत्यधिकम् ह. 19. °व्यवधानः ब. क. ड. ह. 20. स नास्ति फ. 21. वृध्यत्र क. 22. स्वरितात् इत्यधिकम् ड. 23. वा नास्ति क. फ. 24. विरामः इत्यधिकम् ह. 25. दधि, मधु अ. ब. क. इ. फ. ग. ह. 26. वावसाने (8.4.56/206) फ.

# [1]का शि का

## द्वितीयोऽध्यायः

### प्रथमः पादः

**समर्थः पदविधिः । (१/६४७)**

परिभाषेयम् । यः कश्चिदिह शास्त्रे पदविधिः [2]श्रूयते स समर्थो वेदितव्यः । [3]विधीयते इति विधिः[4] । पदानां विधिः पदविधिः । स [5]पुनः समासादिः । समर्थः शक्तः । विग्रहवाक्यार्थाभिधाने यः शक्तः [6]स समर्थो वेदितव्यः । अथ वा समर्थपदाश्रयत्वात् [7]समर्थः । समर्थानां पदानां सम्बद्धार्थानां[8] संसृष्टार्थानां[9] विधिर्वेदितव्यः । वक्ष्यति, 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.२४/६८६)[10] – कष्टं श्रितः कष्टश्रितः । समर्थग्रहणं किम् ? पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलम् (म. भा. १. ३५६) । 'तृतीया तत्कृतार्थेन गुणवचनेन' (२. १. ३०/६९२) – शङ्कुलया खण्डः शङ्कुलाखण्डः[11] । समर्थग्रहणं किम् ? [12]किं त्वं करिष्यसि शङ्कुलया, खण्डो[13] देवदत्त उपलेन । 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (२. १. ३६/६९८) – यूपाय दारु यूपदारु[14] । समर्थग्रहणं किम् ? गच्छ त्वं यूपाय, दारु देवदत्तस्य [15]गेहे । 'पञ्चमी भयेन' (२.१.३७/६९९) – वृकेभ्यो भयं वृकभयम् । समर्थग्रहणं किम् ? गच्छ त्वं मा वृकेभ्यो, [16]भयं देवदत्तस्य यज्ञदत्तात् (म. भा. १. ३६०) । 'षष्ठी' (२. २. ८/७०२) -- राज्ञः पुरुषः राजपुरुषः[17] । समर्थग्रहणं किम् ? भार्या राज्ञः, पुरुषो देवदत्तस्य (म.भा.१. ३६०) । 'सप्तमी शौण्डैः' (२.१.४०/७१७) – अक्षेषु शौण्डः अक्षशौण्डः । [18]समर्थग्रहणं किम्? [19]शक्तस्त्वं अक्षेषु, शौण्डः पिबति पानागारे (म.भा.१.३६०) । पदग्रहणं किम् ? वर्णविधौ [20]समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यशान त्वं शाकेन । तिष्ठतु कुमारी च्छत्रं हर[21]देवदत्तात् (म.भा.१.३६९) । यणादेशो (६.१.७७/४७), नित्यश्च तुग् (६.१.७५/१४८) भवति ॥

**सुबामन्त्रिते पराङ्गवत् स्वरे । (२/३६५३)**

सुबन्तमामन्त्रिते परतः परस्याङ्गवद् भवति, स्वरे स्वरलक्षणे [22]कर्तव्ये । तादात्म्यातिदेशोऽयम् । सुबन्तमामन्त्रितमनुप्रविशति । वक्ष्यति – '[23]आमन्त्रितस्य च' (६.१.१९८/३३५३) । आमन्त्रितस्यादिरुदात्तो भवति[24] । [25]ससुप्कस्यापि यथा स्यात् । कुण्डेनाटन् । परशुना वृश्चन् । मद्राणां राजन् । [26]कश्मीराणां राजन् । सुप् इति किम् ? पीडचे पीडचमान । आमन्त्रिते इति किम् ? गेहे गार्ग्यः । परग्रहणं किम् ? पूर्वस्य मा भूत् । देवदत्त, कुण्डेनाटन् । अङ्गग्रहणं किम् ? यथा मृत्पिण्डीभूतः स्वरं लभेत । उभयोराद्युदात्तत्वं मा भूत् ।

---

1. श्रीपरमात्मने नमः क, श्रीगणेशाय नमः ड, प्रशान्तगणपतये नमः फ. 2. श्रूयते नास्ति क, स सर्वः ब.क.ड. इ. ह. 3. विधीयते – अथवा नास्ति ह. 4. कार्यमित्यर्थः इत्यधिकम् क. 5. पुनः नास्ति ब. क. ड. इ. ह. 6. स नास्ति फ. 7. समर्थः नास्ति फ. 8. च इत्यधिकम् क. 9. च इत्यधिकम् ब. क. इ. ह, वा. फ. 10. इति इत्यधिकम् ह. 11. किरिकाणः इत्यधिकम् क. 12. किं त्वं नास्ति ब. 13. असौ इत्यधिकम् क. 14. कुण्डलाय हिरण्यम् कुण्डलहिरण्यम् इत्यधिकम् क. 15. गृहे क. ड. ह, तिष्ठति इत्यधिकम् ह. 16. भयं देवदत्तात् यज्ञदत्तस्य ड. 17. ब्राह्मणकम्बलः इत्यधिकम् क. इ. 18. अक्षधूर्तः इत्यधिकम् क. 19. सक्तः फ. ह. 20. समर्थपरि– भाषा नास्ति फ. 21. देवदत्त ड. इ. फ. 22. कार्ये क. ड. इ. ह. 23. सूत्रमिदं नास्ति ब. क. 24. इति इत्यधिकम् ड. 25. स तु एकस्यापि ब. 26. काश्मीराणाम् ग.

वत्करणं किम् ? स्वाश्रयमपि यथा स्यात् । आम् कुण्डेनाटन् । 'आम एकान्तरमामन्त्रितमनन्तिके' (८.१.९५/३९६२) इत्येकान्तरता भवति । स्वरे इति किम् ? कूपे सिञ्चन् । चर्म नमन् । षत्वणत्वे (८.३.१११/२१२३) (८.४.१/२३५) [1]प्रति पराङ्गवद् न भवति ।

[७३] [2]सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसङ्ख्यानमनन्तरत्वात् ।

तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् (म. भा. १.३७५) ।

[७४] अव्ययानां प्रतिषेधो वक्तव्यः ।

उच्चैरधीयानः । नीचैरधीयानः (म. भा. १.३७६) ॥

## प्राक् कडारात् समासः । (३/६४८)

[3]कडारसंशब्दनात् (२.२.३८/७५१) प्राग् यानित उर्ध्वमनुक्रमिष्यामः, ते [4]समाससञ्ज्ञा वेदितव्याः । वक्ष्यति–'यथाऽसादृश्ये' (२.१.७/६६१) । यथा वृद्धं ब्राह्मणानामन्त्रयस्व । प्राग्वचनं सञ्ज्ञासमावेशार्थम् (म. भा. १.३७७) । समासप्रदेशाः–'तृतीयासमासे' (१.१.३०/२२३) इत्येवमादयः ॥

## सह सुपा । (४/६४९)

[5]सुप् इति वर्तते । सुप् इति सह इति [6]सुपा इति च[7] त्रयमपि अधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामः, तत्रेदमुपस्थितं द्रष्टव्यम् । वक्ष्यति–'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.१४/६८६) इति । द्वितीयान्तं श्रितादिभिः [8]सह समस्यते, [9]कष्टं श्रितः कष्टश्रितः । सहग्रहणं योगविभागार्थम्, [10]तिङापि सह यथा स्यात् । [11]अनुव्यचलत् । अनुप्रावर्षत् ॥

## अव्ययीभावः । (५/६५१)

अव्ययीभावः इत्यधिकारो वेदितव्यः । [12]यानित ऊर्ध्वमनुक्रमिष्यामः, [13]अव्ययीभावसञ्ज्ञास्ते वेदितव्याः । वक्ष्यति–'यथाऽसादृश्ये' (२.१.७/६६१) । यथावृद्धं ब्राह्मणानामन्त्रयस्व । [14]अन्वर्थसञ्ज्ञा चेयं महती[15] पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति । अव्ययीभावप्रदेशाः–'अव्ययीभावश्च' (२.४.१८/६५९) इत्येवमादयः ॥

---

1. प्रति नास्ति फ, परांगवद्भावो न ड. इ. ह. 2. सुबन्तस्य पराङ्गवद्भावे कर्तव्ये तत्समानाधिकरणस्योपसंख्यानम् अनन्तरत्वात् न प्राप्नोति फ. 3. कडाराः कर्मधारये इति वक्ष्यति, एतस्मात् ड. 4. समाससञ्ज्ञकाः क. 5. सुप् इति वर्तते नास्ति फ. 6. सुपेति तदधिकृतं क. 7. एतद् इत्यधिकम् व. ड. इ. फ. ह. 8. सुबन्तैः इत्यधिकम् क. ड. इ. फ. ह. 9. कष्टं श्रितः नास्ति अ. क. इ. फ, नरकश्रितः ह. 10. अत्र तिङा सह समासः इ, वाक्यमेतन्नास्ति अ. क. ड. फ. 11. अनुव्यचलत् नास्ति फ, अनुप्रावर्षत् नास्ति ड. ह. 12. यदितः इ. 13. प्राक् तत्पुरुषसञ्ज्ञायाः इत्यधिकम् ह. 14. अन्वर्था चेयं सञ्ज्ञा ह. फ. 15. तेन इत्यधिकम् क. ड. ह. इ.

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्य-यौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । (६/६५२)

सुप् सुपा इति [1]च वर्तते । विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत् समर्थेन सुबन्तेन सह समस्यते, [2]अव्ययीभावश्च समासो भवति । [3]वचनग्रहणं प्रत्येकं [4]सम्बध्यते ।

[5]विभक्तिवचने तावत् -- स्त्रीष्वधिकृत्य [6]कथा प्रवर्तते अधिस्त्रि । अधिकुमारि । सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम् ।

[7]समीपवचने -- कुम्भस्य समीपम् उपकुम्भम् । [8]उपमणिकम् ।

[9]समृद्धिर्ऋद्धेराधिक्यम् -- समृद्धिर्मद्राणां सुमद्रम्[10] । [11]सुमगधं वर्तते ।

[12]व्यृद्धिर्ऋद्धेरभावः -- [13]गवदिकानामृद्धेरभावः [14]दुर्गवदिकम् । [15]दुर्यवनं वर्तते ।

[16]अर्थाभावः [17]वस्तुनोऽभावः -- अभावो मक्षिकाणां निर्मक्षिकम्[18] । निर्मशकम् वर्तते ।

[19]अत्ययः अभूतत्वम्, अतिक्रमः -- [20]अतीतानि हिमानि अतिहिमम् । [21]निर्हिमम् । निःशीतं वर्तते ।

[22]असम्प्रति [23]उपभोगस्य वर्तमानकालप्रतिषेधः -- अतितसृकम् । तैसृकमाच्छादनम्, तस्यायमुपभोगकालो न भवति इत्यर्थः ।

[24]शब्दप्रादुर्भावः [25]प्रकाशता शब्दस्य – इतिपाणिनि । [26]तत्पाणिनि । पाणिनिशब्दो लोके प्रकाशते इत्यर्थः ।

[37]पश्चात् -- अनुरथं [28]पादातम् । रथानां पश्चात् इत्यर्थः ।

यथा । यथार्थे यदव्ययं वर्तते तत् समस्यते । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं च इति यथार्थाः । योग्यतायाम् -- [29]अनुरूपम् । रूपयोग्यं [30]भवति इत्यर्थः । वीप्सायाम् -- अर्थमर्थं प्रति प्रत्यर्थम् ।

---

1. च नास्ति ड. 2. स समासो अव्ययीभावसंज्ञकश्च क.ड.ह. 3. वचनपदं क. 4. अभिसम्बध्यते क. ड. इ. ह. 5. विभक्त्यर्थे तावत् क.ह.इ. 6. कथाः प्रवर्तन्ते क. 7. समीपे क. ड. 8. उपमणिकम् नास्ति ड.इ. 9. समृद्धौ क. 10. वर्तते इत्यधिकम् क. ड. 11. समृद्धं क. 12. व्यृद्धौ क. 13. शकानां व्यृद्धिः दुःशकं ड. ह. इ. 14. दुःशाब्दिकं ब, दुर्गष्टिकं क. 15. दुश्च्यावनं क. 16. अर्थाभावे क.इ. 17. वस्तुनः नास्ति ब. क. 18. वर्तते इत्यधिकम् क. 19. अत्यये क. ड. 20. अतीतानि शीतानि अतिशीतं क. ह. ड. 21. निर्हिमम् नास्ति क. 22. असंप्रतौ क. 23. उपभोग्यस्य क, उपभोग्यस्य वस्तुनः ड. 24. शब्दप्रादुर्भावे क. 25. प्रकाश्यता क. 26. यत्पाणिनि क. ड. 27. पश्चादर्थे क. ड. 28. पदातिः इ. 29. सुरूपम् क.ह. 30. वदति ह.ड.

पदार्थानतिवृत्तौ — यथाशक्ति ।

आनुपूर्व्यमनुक्रमः—अनुज्येष्ठं प्रविशन्तु भवन्तः । [1]ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्तु इत्यर्थः ।

यौगपद्यम् एककालता — सचक्रं धेहि । युगपच्चक्रं[2] धेहि इत्यर्थः ।

[3]सादृश्यम् [4]तुल्यता । किमर्थमिदमुच्यते, यथार्थ इत्येव [5]सिद्धम्? गुणभूतेऽपि सादृश्ये यथा स्यात्, सदृशः [6]किख्या सकिखि ।

[7]सम्पत्तिः अनुरूप आत्मभावः समृद्धेरन्यः — सब्रह्म बाभ्रवाणाम् । सक्षत्रं शालङ्कायनानाम् ।

साकल्यम् [8]अशेषता — सतृणमभ्यवहरति । [9]सबुसम् । न किंचिदभ्यवहार्यं परित्यजति इत्ययमर्थोऽधिकार्थ[10]वचनेन प्रतिपाद्यते ।

अन्तवचने — अन्तः इति परिग्रहापेक्षया समाप्तिरुच्यते । साग्नि अधीते । [11]सेष्टि सपशुबन्धम् । सपशुबन्धान्तमधीते इत्यर्थः । इयं समाप्ति[12]रसकलेऽप्यध्ययने भवति इति साकल्यात् पृथगुच्यते ।।

## यथाऽसादृश्ये । (७/६६१)

यथा इत्येतदव्ययमसादृश्ये वर्तमानं सुपा [13]सह समस्यते, अव्ययीभावश्च समासो भवति । यथावृद्धं ब्राह्मणानामन्त्रयस्व । ये ये वृद्धाः यथावृद्धम्[14] । [15]यथाध्यापकम् । असादृश्ये इति किम्? यथा देवदत्तः तथा यज्ञदत्तः (म.भा. १.३७९) । यथार्थे [16]यदव्ययम् इति [17]पूर्वेणैव सिद्धे [18]समासे वचनमिदं सादृश्यप्रतिषेधार्थम् ।।

## यावदवधारणे । (८/६६२)

यावत् इत्येत[19]दव्यय[20]मवधारणे वर्तमानं सुपा [21]सह समस्यते, अव्ययीभावश्च समासो भवति । अवधारणम् इयत्तापरिच्छेदः । यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावन्त्यमत्राणि सम्भवन्ति पञ्च षड् वा तावत आमन्त्रयस्व[22] । अवधारणे इति किम्? यावद्दत्तं तावद् भुक्तम् । नावधारयामि [23]कियन् मया भुक्तम् इति ।।

## सुप् प्रतिना मात्रार्थे । (९/६६३)

मात्रा [24]बिन्दुः, स्तोकम्, अल्पम् इति पर्यायाः । मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति । अस्त्यत्र किञ्चित् शाकम् शाकप्रति । [25]सूपप्रति[26] । मात्रार्थे इति किम्? वृक्षं प्रति विद्योतते [27]विद्युत् । सुप् इति वर्तमाने पुनः सुब्ग्रहणमव्यय[28]निवृत्त्यर्थम् ।।

---

1. ज्येष्ठानुपूर्व्येण क.ह. 2. चक्रे ड. 3. सादृश्ये क. 4. तुल्यकालता ह. 5. सिद्धे क. 6. सख्या ससखि ब.ह. 7. संपत्तौ क. 8. अशेषाभिधानम् क. 9. सबुसम् नास्ति ह. 10. °वचनमनेन क, °वचने इ. 11. इष्टचन्तमधीते इत्यधिकम् ह. 12. असाकल्येऽपि ह. 13. सह नास्ति फ. 14. यथाभिरूपम् इत्यधिकम् क.इ.ह, यथावृद्धम् नास्ति ब. 15. यथाध्यापकानि फ. 16. यत् नास्ति क.ड. 17. पूर्वेण च क. 18. समासवचनम् ब. 19. अव्ययं नास्ति फ. 20. अवधारणार्थे क. 21. सह नास्ति फ. 22. इत्यर्थः इत्यधिकम् ड. 23. कियद् दत्तं त्वया अ. 24. बिन्दुः नास्ति क. इ. फ. ह. 25. अस्ति अत्र किंचित् सूपः इत्यधिकम् क. ह. 26. लवणप्रति इत्यधिकम् क. 27. विद्युत् नास्ति फ. 28. °निवृत्त्यर्थः फ.

## अक्षशलाकासङ्ख्याः परिणा। (१०/६६४)

[1]अक्षशब्दः, शलाकाशब्दः, [2]सङ्ख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे [3]समासोऽयमिष्यते। पञ्चिका नाम [4]द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा[5] भवति। तत्र यदा सर्वे उत्तानाः पतन्ति अवाञ्चो वा, तदा [6]पातयिता जयति, तस्यैवास्य विघातोऽन्यथा पाते सति [7]जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये (म. भा. १.३७९) अक्षपरि। शलाकापरि। एकपरि। [8]द्विपरि। त्रिपरि। [9]परमेण चतुष्परि।

पञ्चसु[10]त्वेकरूपासु जय एव भविष्यति।

अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः (म. भा. १.३८०)॥

## विभाषा। (११/६६५)

विभाषा इत्ययमधिकारो वेदितव्यः (म. भा. १.३८०)। यदित ऊर्ध्वमनुक्रमिष्यामः, तद्विभाषा भवति। वक्ष्यति–'अपपरिबहिरञ्चवः पञ्चम्या' (२.१.१२/६६६)। अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः[11]॥

## अपपरिबहिरञ्चवः पञ्चम्या। (१२/६६६)

अप परि बहिस् अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह [12]विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः[13]। परित्रिगर्तम्[14], परि त्रिगर्तेभ्यः[15]। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। बहिः[16]शब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम्॥

## आङ् मर्यादाभिविध्योः। (१३/६६७)

आङ इत्येतन् [17]मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्[18]। अभिविधौ–आकुमारं यशः पाणिनेः, आ कुमारेभ्यः[19]॥

## लक्षणेनाभिप्रती आभिमुख्ये। (१४/६६८)

लक्षणं चिह्नं, तद्वाचिना सुबन्तेन सह अभिप्रती शब्दावाभिमुख्ये वर्तमानौ [20]विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि[21]। [22]प्रत्यग्नि, अग्निं प्रति। अग्निं [23]लक्ष्यीकृत्य अभिमुखं पतन्ति इत्यर्थः। लक्षणेन इति किम्? [24]स्रुघ्नं प्रतिगतः। प्रतिनिवृत्य स्रुघ्नमे[25]वाभिमुखं गतः। अभिप्रती इति किम्? येनाग्निस्तेन गतः। आभिमुख्ये इति किम्? अभ्यङ्का गावः। प्रत्यङ्का गावः। [26]नवाङ्का इत्यर्थः॥

---

1. अक्षशलाकासंख्याशब्दाः क. 2. सङ्ख्या च ड, सङ्ख्यावाचिनः शब्दाश्च ह. 3. चायमिष्यते समासः ड. 4. द्यूतविशेषः क. इ. 5. वा नास्ति ब. 6. आपातयिता फ. 7. भवति क. फ. ह. 8. द्विपरि नास्ति फ. 9. परेण चतुष्परि क, चतुःपरि ड. 10. त्वेकरूपेषु ड. 11. वृष्टो देवः ड, परित्रिगर्तेभ्यः वृष्टो देवः क. इ, परित्रिगर्तं वृष्टो देवः, परि त्रिगर्तेभ्यः वृष्टो देवः ह. 12. विभाषा नास्ति फ. 13–15. वृष्टो देवः इत्यधिकम् इ. फ. 16. शब्दयोगेन क. 17. मर्यादाभिविध्योः क. 18. वृष्टो देवः इत्यधिकम् फ. 19. यशः पाणिनेः इत्यधिकम् इ. 20. विभाषा नास्ति फ. 21. अत्र चाग्निर्लक्षणं तेन शलभपातो लक्ष्यते। प्रत्यग्नि शलभाः पतन्ति इत्यधिकम् ड, उदाहरणमिदं नास्ति फ. 22. उदाहरणमिदं नास्ति फ. 23. लक्षीकृत्य ड. इ, अग्निं लक्ष्यीकृत्य नास्ति फ. 24. स्रुघ्नं नास्ति ह. 25. एव नास्ति ह. 26. नवाङ्का इत्यर्थः नास्ति ब.फ, अभिनवाङ्का गाव इत्यर्थः क. ड. इ. ह.

## अनुर्यत्समया। (१५/६६९)

समया समीपम्। अनुर्यस्य[1] समीपवाची तेन [2]लक्षणभूतेन सह [3]विभाषा समस्यते, अव्ययीभावश्च[4] समासो भवति। अनुवनमशनिर्गतः[5]। अनुः इति किम्? वनं समया। यत्समया इति किम्? वृक्षमनु विद्योतते [6]विद्युत्। 'अव्ययं विभक्तिसमीप०' (२.१.६/६५२) इत्येव[7] सिद्धे पुनर्वचनं विभाषार्थम्।

## यस्य चायामः। (१६/६७०)

लक्षणेन इति वर्तते[8]। आयामो [9]दैर्घ्यम्। [10]अनुर्यस्यायामवाची तेन लक्षणभूतेन सह [11]विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी (म. भा. १.३८०)। अनुयमुनं मथुरा। [12]यमुनायामेन मथुरायामो लक्ष्यते। आयामः इति किम्? वृक्षमनु विद्योतते विद्युत्॥

## तिष्ठद्गुप्रभृतीनि च। (१७/६७१)

[13]तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसञ्ज्ञानि भवन्ति। तिष्ठद्गु कालविशेषः[14] (म. भा. १.३८१)। तिष्ठन्ति गावो यस्मिन् [15]काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि[16] प्रथमान्तानि विभक्त्यन्तरेण नैव सम्बध्यन्तेऽन्यपदार्थे [17]च काले वर्तन्ते। चकारोऽवधारणार्थः। [18]अपरः समासो न भवति, परमतिष्ठद्गु इति।

तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेबुसम्। खलेयवम्। [19]लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः।

समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। [20]अपरसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। [21]अपरदक्षिणम्। संप्रति। असंप्रति। पापसमम्। पुण्यसमम्। 'इच् कर्मव्यतिहारे' (५.४.१२७/८६६)[22] —— दण्डादण्डि। [23]मुसलामुसलि॥

## पारे मध्ये षष्ठ्या वा। (१७/६७२)

षष्ठीसमासे प्राप्ते [24]तदपवादोऽव्ययीभाव आरभ्यते। वावचनात् षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह [25]विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन [26]चानयोरेकारान्तत्वं निपात्यते। [27]पारं गङ्गायाः पारेगङ्गम्। [27]मध्यं गङ्गायाः मध्येगङ्गम्। षष्ठीसमासपक्षे–[28]गङ्गापारम्। गङ्गामध्यम्। महाविभाषया [29]वाक्यविकल्पः क्रियते॥

---

1. समया इत्यधिकम् क.ड.इ.फ.ह, यस्य समया यत्समया ह. 2. लक्षणभूतेन नास्ति फ, सुबन्तेन क. ड. इ. 3. विभाषा नास्ति फ. 4. च नास्ति फ. 5. वनसमीपं गतः इत्यर्थः इत्यधिकम् ड. 6. विद्युत् नास्ति फ. 7. एव नास्ति फ. 8. अनुरिति च इत्यधिकम् ड. इ. 9. दैर्घ्यवाची क. 10. अनुर्यस्यायामः ह. 11. विभाषा नास्ति क. ड. फ. 12. यमुनाया आयामेन ड. 13. तिष्ठद्ग्वादयः नास्ति फ. 14. इति ब, कालविशेषे क. ह, तिष्ठद्गु वहद्गु कालविशेषौ ड. 15. काले नास्ति फ. 16. शब्दरूपाणि इत्यधिकम् क. इ. 17. च काले नास्ति क. ड. फ, वर्तन्ते च इ. 18. तेनापरः ड. 19. लूनेयवम् ह. 20. अपरसमम् नास्ति फ. 21. अपदक्षिणम् इ, नास्ति फ. 22. इति इत्यधिकम् फ, केशाकेशि क. 23. नास्ति फ. 24. तदपवादोऽयमव्ययीभावो विधीयते ड, अव्ययीभावसमासः क. ह. 25. वा क. 26. अनयोः नास्ति ह. 27. पारे, मध्ये ड. 28. गङ्गायाः पारं, गङ्गापारम्। गङ्गायाः मध्यं गङ्गामध्यम् क. 29. तु इत्यधिकम् क. ड. इ. ह.

## सङ्ख्या वंश्येन । (१९/६७३)

विद्यया जन्मना वा प्राणिना[1]मेकलक्षणसन्तानो वंशः इत्यभिधीयते । तत्र भवो वंश्यः[2] । तद्वाचिना [3]सुबन्तेन सह सङ्ख्या[4] समस्यते, अव्ययीभाव[5]श्च समासो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य । यदा तु विद्यया [6]तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं [7]भवति । द्विमुनि व्याकरणम् । त्रिमुनि व्याकरणम् इति । [8]जन्मना--एकविंशतिभारद्वाजम् ॥

## नदीभिश्च । (२०/६७४)

सङ्ख्या [9]इत्यनुवर्तते । नदीवचनैः शब्दैः सह सङ्ख्या समस्यते,[10] अव्ययीभावश्च समासो भवति । समाहारे चायमिष्यते । सप्तगङ्गम् । द्वियमुनम् । पञ्चनदम् । सप्तगोदावरम्[11] ॥

## अन्यपदार्थे च सञ्ज्ञायाम् । (२१/६७५)

सङ्ख्या इति निवृत्तम् । नदीग्रहणमनुवर्तते । नदीभिः सह सुबन्त[12]मन्यपदार्थे वर्तमानं सञ्ज्ञायां [13]विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाऽधिकारेऽपि नित्यसमास एवा[14]यम् । न हि वाक्येन सञ्ज्ञा गम्यते । उन्मत्तगङ्गम् नाम देशः । लोहितगङ्गम् । [15]शनैर्गङ्गम् । कृष्णगङ्गम् । अन्यपदार्थे इति किम्? [16]कृष्णवेण्णा । सञ्ज्ञायाम् इति किम्? शीघ्रगङ्गो देशः ॥

## तत्पुरुषः । (२२/६८४)

तत्पुरुषः इति [17]सञ्ज्ञाऽधिक्रियते प्राग् बहुव्रीहेः (२.२.२३/८२९) । [18]यानित ऊर्ध्वमनुक्रमिष्यामः, [19]तत्पुरुषसञ्ज्ञास्ते [20]वेदितव्याः । वक्ष्यति, 'द्वितीया श्रितातीतपतित°' (२.१.२४/६८६) । इति । [21]कष्टश्रितः । पूर्वाचार्यसञ्ज्ञा [22]चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य [23]परिग्रहार्थम्, [24]उत्तरपदार्थप्रधानस्तत्पुरुषः (म.भा. १.३८२) इति । तत्पुरुषप्रदेशाः – 'तत्पुरुषे कृति बहुलम्' (३.३.१४/९७२) इत्येवमादयः ॥

## द्विगुश्च । (२३/६८५)

[25]द्विगुश्च समासः[26] तत्पुरुषसञ्ज्ञो भवति । द्विगोस्तत्पुरुषत्वे [27]समासान्ताः प्रयोजनम् (म.भा. १.३८२) । [28]पञ्चराजम् । [29]दशराजम् । द्व्यहः । [30]त्र्यहः । पञ्चगवम् । दशगवम् ॥

---

1. एकलक्षणः संतानः क.ड.ह. 2. दिगादित्वाद् इत्यधिकम् ड. 3. सुबन्तेन नास्ति फ.ह. 4. विभाषा इत्यधिकम् ड. 5. °सञ्ज्ञश्च इ. 6. तद्वदताम् इ. 7. संभवति ड.इ. 8. जन्मना नास्ति क.इ.ह. 9. इत्येव ड. 10. विभाषा इत्यधिकम् ह. 11. कृष्णोदकपाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः । गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥ इत्यधिकम् ड. 12. अन्यस्य पदस्यार्थे क.इ, अस्य पदार्थे ह, अन्यपदार्थे च ड, अन्यपदार्थे संज्ञायां फ. 13. विषये नास्ति इ. 14. अयम् नास्ति ह. 15. तूष्णींगङ्गम् इत्यधिकम् ब.क.ड.इ.फ, शनैर्गङ्गम् नास्ति फ. 16. कृष्णवेण्या ड, कृष्णवेणी इ. 17. सञ्ज्ञात्वेन ह. 18. यत् इति इ. 19. तत्पुरुषसञ्ज्ञकास्ते क, तत्पुरुषसञ्ज्ञोऽसौ समासो वेदितव्यः इ. 20. समासाः इत्यधिकम् ड. 21. कष्टं श्रितः कष्टश्रितः, नरकं श्रितः, नरकश्रितः क, नरकश्रितः ड, नरकपतितः इ. 22. इयं फ, नास्ति ब, महतीसञ्ज्ञा ह. 23. परिग्रहार्थः ह. 24. उत्तरपदार्थस्तत्पुरुषः इ. 25. च नास्ति फ. 26. तत्पुरुषसञ्ज्ञकः क. 27. समासान्तः ब. 28. पञ्चराजी, दशराजी न्या, पञ्चफली, दशफली ह. 29. नास्ति इ. 30. नास्ति ब.

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । (२४/६८६)

सुप् सुपा इति वर्तते । तस्य विशेषणमेतद् द्वितीया[1] । द्वितीयान्तं [2]सुबन्तं श्रितादिभिः[3] सह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं श्रितः कष्टश्रितः । [4]नरकश्रितः । अतीत — कान्तारमतीतः कान्तारातीतः । पतित — नरकं पतितः नरकपतितः । गत — ग्रामं गतः ग्रामगतः । अत्यस्त — तरङ्गानत्यस्तः तरङ्गात्यस्तः । [5]तुहिनात्यस्तः । प्राप्त — सुखं प्राप्तः सुखप्राप्तः[6] । आपन्न — सुखमापन्नः सुखापन्नः । दुःखापन्नः ।

[७५] श्रितादिषु गमिगाम्यादीनामुपसङ्ख्यानम् । (म.भा. १.३८३)

[7]ग्रामं गमी ग्रामगमी । ग्रामं गामी ग्रामगामी । [8]ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥

## स्वयं क्तेन । (२५/६८७)

स्वयम् [9]एतदव्ययमात्मना इत्यस्यार्थे वर्तते, तस्य द्वितीयया[10] सम्बन्धोऽनुपपन्नः इति द्वितीयाग्रहणमुत्तरार्थमनुवर्तते । स्वयम् इत्येतत् सुबन्तं क्तान्तेन[11] सह समस्यते, तत्पुरुषश्च समासो भवति । स्वयंधौतौ पादौ । स्वयंविलीनम् आज्यम्[12] । [13]ऐकपद्यमैकस्वर्यं च [14]समासत्वाद् भवति ॥

## खट्वा क्षेपे । (२६/६८८)

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह [15]क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति । क्षेपो निन्दा, स च समासार्थ एव, तेन विभाषाऽधिकारेऽ[16]पि नित्यसमास एवायम् । न हि वाक्येन [17]क्षेपो गम्यते । खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम् । सर्व एवाविनीतः खट्वारूढः [18]इत्युच्यते । खट्वारूढो जाल्मः । खट्वाप्लुतः[19] । [20]अपथप्रस्थितः इत्यर्थः । क्षेपे इति किम्? खट्वामारूढः[21] ॥

## सामि । (२७/६८९)

सामि इत्येतदव्ययमर्धशब्दपर्यायः, तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति सम्बन्धः । [22]तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । सामिकृतम् । [23]सामिपीतम् । सामिभुक्तम् । [24]ऐकपद्यमैकस्वर्यं च [25]समासत्वाद् भवति ॥

---

1. श्रितादयश्च इत्यधिकम् क.ड.इ.फ.ह. 2. सुबन्तं नास्ति इ.फ. 3. सुबन्तैः इत्यधिकम् ड. 4. नरकश्रितः नास्ति फ.ह. 5. नरकमत्यस्तः नरकात्यस्तः ह, तुहिनात्यस्तः नास्ति फ. ह. 6. दुःखप्राप्तः इत्यधिकम् ह. 7. ग्रामं गमी नास्ति फ.ह. 8. ओदनं बुभुक्षुः नास्ति फ. 9. इत्येतदव्ययम् ब.क.ड. 10. द्वितीयासम्बन्धो ब. इ, सह सम्बन्धः क. 11. सुबन्तेन इत्यधिकम् क. 12. स्वयंविलोक्य इत्यधिकम् ब. 13. एकविभक्तिकत्वं च एकस्वर्यं च समासाद् भवति ड.फ. 14. समासात् क.ह. 15. क्षेपे गम्यमाने नास्ति फ. 16. अपि नास्ति फ. 17. सञ्ज्ञा ह. 18. इति नास्ति फ. 19. अध्यापकोऽध्यायति इत्यधिकम् क.ड.ह. 20. उत्पथ° ब.ड.इ.फ.ह. 21. खट्वारूढः अध्यापकोऽध्यापयति इत्यधिकम् क.फ.ह. 22. तत्पुनः क. 23. सामिपीतम्, सामिभुक्तम् नास्ति फ. 24. एकविभक्तित्वं च ड.फ. 25. समासात् क.इ.फ.ह.

## कालाः । (२८/६९०)

द्वितीया क्तेन इति वर्तते । कालवाचिनः शब्दाः द्वितीयान्ताः क्तान्तेन सह समस्यन्ते [1]विभाषा, तत्पुरुषश्च समासो भवति । अनत्यन्तसंयोगार्थं वचनम् । कालाः इति न स्वरूपविधिः । षण्मुहूर्ताश्चराचराः, [2]ते कदाचित् अहर्गच्छन्ति कदाचित् रात्रिम् (म.भा. १.३८४) । अहरतिसृता मुहूर्ताः अहःसङ्क्रान्ताः । [3]रात्र्यतिसृता मुहूर्ताः रात्रिसङ्क्रान्ताः । मासप्रमितश्चन्द्रमाः । मासं प्रमातुमारब्धः[4] [5]प्रतिपच्चन्द्रमाः [6]इत्यर्थः ॥

## अत्यन्तसंयोगे च । (२९/६९१)

कालाः इति वर्तते । क्तेन इति निवृत्तम् । अत्यन्तसंयोगः कृत्स्नसंयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः[7] । कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते [8]विभाषा, तत्पुरुषश्च समासो भवति । मुहूर्तं सुखम् मुहूर्तसुखम् । [9]सर्वरात्रकल्याणी । [10]सर्वरात्रशोभना ॥

## तृतीया तत्कृतार्थेन गुणवचनेन । (३०/६९२)

सुप् सुपा इति वर्तते । तस्य विशेषणमेतत् । तृतीयान्तं गुणवचनेन अर्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति । कीदृशेन गुणवचनेन? तत्कृतेन [11]तदर्थकृतेन, [12]तृतीयान्तार्थकृतेन इति यावत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । [13]किरिणा काणः किरिकाणः । अर्थशब्देन––धान्येनार्थः धान्यार्थः[14] । तत्कृतेन इति किम्? अक्ष्णा काणः । गुणवचनेन इति किम्? गोभिर्वपावान् (म.भा. १.३८५) ॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । (३१/६९३)

[15]पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण इत्येतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति । [16]अस्मादेव वचनात् [17]पूर्वादिभिर्योगे तृतीया[18] भवति, हेतौ वा द्रष्टव्या । पूर्व––मासेन पूर्वः मासपूर्वः । [19]संवत्सरपूर्वः । सदृश––मातृसदृशः । पितृसदृशः । सम––मातृसमः । ऊनार्थ–[20]माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह---[21]असिकलहः । वाक्कलहः । निपुण–[22]वाङ्निपुणः । आचारनिपुणः । मिश्र---[23]गुडमिश्रः । तिलमिश्रः । श्लक्ष्ण---[24]आचारश्लक्ष्णः ।

[७६] पूर्वादिष्ववरस्योपसङ्ख्यानम् । (म.भा. १.३८५)

मासेनावरः मासावरः । संवत्सरावरः ॥

---

1. विभाषा नास्ति ब.फ.ह. 2. ते नास्ति फ. 3. रात्र्यारूढाः ब.ड.फ. 4. मासप्रमितः इत्यधिकम् ड.फ. 5. प्रतिपच्चन्द्रः ह. 6. इत्यर्थः नास्ति ब.फ. 7. अत्यन्तसंयोगः इत्यधिकम् क.ह. 8. विभाषा नास्ति ब.क.इ.फ. 9. सर्वरात्रं कल्याणी इत्यधिकम् क, नास्ति फ. 10. सर्वरात्रशोभनी ब. 11. तदर्थकृतेन नास्ति इ.फ.ह. 12. तृतीयान्तकृतेन क.ड.इ.ह. 13. उदाहरणमिदं नास्ति फ. 14. हिरण्यार्थः इत्यधिकम् क.फ.ह, अर्थशब्दः प्रयोजनवाची । हिरण्यार्थः इत्यधिकम् ड. 15. सुप्सुपेति वर्तते इत्यधिकम् ड. 16. तस्मादेव ह. 17. पूर्वादियोगतृतीया इ. 18. °विभक्ति ड. 19. उदाहरणमिदं नास्ति फ. 20. माषेण ऊनम् कार्षापणेन ऊनं माषेण विकलम् इत्यधिकम् क. 21. असिना कलहः क. 22. वाचा निपुणः क, वाग्निपुणः ड, प्रज्ञानिपुणः इत्यधिकम् ड. 23. गुडेन मिश्रः क, तण्डुलमिश्रः इत्यधिकम् ह. 24. आचारेण श्लक्ष्णः, विद्याश्लक्ष्णः इत्यधिकम् क, वाक्श्लक्ष्णः ड.फ.ह.

## कर्तृकरणे कृता बहुलम्। (३२/६९४)

तृतीया इति वर्तते। कर्तरि करणे [1]च या तृतीया तदन्तं[2] कृदन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति[3]। सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि -- अहिना हतः अहिहतः[4]। करणे -- [5]नखैर्निर्भिन्नः नखनिर्भिन्नः। [6]परशुना छिन्नः। कर्तृकरणे इति किम्? भिक्षाभिरुषितः[7]। बहुलग्रहणं किम्? दात्रेण लूनवान्, परशुना छिन्नवान्[8], [9]इह समासो न भवति। पादहारकः, गले चोपकः (म.भा.१.३८६) इति [10]च भवति॥

## कृत्यैरधिकार्थवचने। (३३/६९५)

स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। [11]कर्तृकरणयोः [12]या तृतीया तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने [13]विभाषा, तत्पुरुषश्च समासो भवति। [14]कर्ता – काकपेया (३.१.९७/२८४२) नदी। श्वलेह्यः (३.१.१२४/२८७२) कूपः। [15]करणम् – बाष्पच्छेद्यानि तृणानि। कण्टकसञ्चेय ओदनः। पूर्वस्यैवायं प्रपञ्चः।

[७७] कृत्यग्रहणे यण्ण्यतो[16]र्ग्रहणं कर्तव्यम्।

इह मा भूत्, काकैः पातव्या [17]इति॥

## अन्नेन व्यञ्जनम्। (३४/६९६)

तृतीया इति वर्तते। व्यञ्जनवाचि[18] [19]तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते, [20]विभाषा तत्पुरुषश्च समासो भवति। संस्कार्यमन्नं, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। [21]क्षीरौदनः। [22]वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्॥

## भक्ष्येण मिश्रीकरणम्। (३५/६९७)

[23]मिश्रीकरणवाचि तृतीयान्तं [24]भक्ष्यवाचिना सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यं, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्राः धानाः गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात् पूर्वोत्तरपदयोः सामर्थ्यम्॥

---

1. च नास्ति फ. 2. शब्दरूपं इत्यधिकम् ह. 3. इति इत्यधिकम् ब. क. ड. फ. 4. रुद्रहतः इत्यधिकम् ड. फ. ह, महाराजहतः इत्यधिकम् क. 5. नखैर्भिन्नः इत्यधिकम् ड. ह, दन्तभिन्नः क. 6. उदाहरणमिदं नास्ति फ. 7. हेतौ तृतीया इत्यधिकम् क.ड. 8. इति इत्यधिकम् फ. 9. इत्यत्र ह. 10. च नास्ति ह. 11. कर्तृकरणे कृत्यैः सह समस्येते क.ड.इ.ह. 12. या नास्ति फ. 13. विभाषा नास्ति ह. 14. कर्तरि ड. फ. ह. 15. करणे क. ड. इ. ह. 16. ग्रहणं कर्तव्यम् नास्ति फ, कर्तव्यम् नास्ति ड, वार्त्तिकमिदं नास्ति ह. 17. इति नास्ति ड.फ. 18. यत् इत्यधिकम् ड. 19. तृतीयान्तं तद् फ. 20. विभाषा नास्ति ड. ह. 21. क्षीरोदनः ब. 22. कृतौ ब. 23. तृतीया इत्येव इत्यधिकम् ड. 24. तद् इत्यधिकम् फ.

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः। (३६/६९८)

सुप् सुपा इति वर्तते। तस्य विशेषणमेतत्। तत् इति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ अर्थ बलि हित सुख रक्षित इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन [1]प्रकृतिविकारभावे समासोऽ[2]यमिष्यते। यूपाय दारु यूपदारु। [3]कुण्डलाय हिरण्यम् कुण्डलहिरण्यम्। इह न भवति, रन्धनाय स्थाली, अवहननाय उलूखलम् इति। [4]तादर्थ्ये चतुर्थी चास्मादेव ज्ञापकाद् भवति[5]।

[७८] अर्थेन [6]नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या। (म.भा. १.३८८)

[7]ब्राह्मणार्थं पयः। ब्राह्मणार्था यवागूः (म.भा. १.३८८)। बलि--कुबेराय बलिः कुबेरबलिः[8]। [9]महाराजबलिः। [10]हित -- गोहितम्। अश्वहितम्। सुख -- [11]गोसुखम्। अश्वसुखम्। [12]रक्षित - गोरक्षितम्। अश्वरक्षितम्[13]॥

## पञ्चमी भयेन। (३७/६९९)

सुप् सुपा इति वर्तते। तस्य विशेषणमेतत्। पञ्चम्यन्तं [14]सुबन्तं भयशब्देन [15]सुबन्तेन सह समस्यते [16]विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयं वृकभयम्। [17]चौरभयम्। दस्युभयम्।

[७९] भयभीतभीतिभीभिरिति वक्तव्यम्। (म.भा. १.३९०)

[18]वृकेभ्यो भीतः वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य (२.१.३२/६९४) [19]प्रपञ्चः। तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुः [20]इत्येवमादि सिद्धं भवति॥

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। (३८/७००)

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह[21] पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत-- [22]सुखापेतः। [23]अपोढ--कल्पनापोढः। [24]मुक्त--चक्रमुक्तः। [25]पतित—स्वर्गपतितः। [26]अपत्रस्त---तरङ्गापत्रस्तः। अल्पशः इति समासस्याल्पविषयतामाचष्टे। अल्पा[27] पञ्चमी [28]समस्यते, [29]न सर्वा। प्रासादात् पतितः, भोजनादपत्रस्तः [30]इत्येवमादौ न भवति। 'कर्तृकरणे कृता बहुलम्' (२.१.३२/६९४) इत्यस्यैवायं प्रपञ्चः॥

---

1. प्रकृतिभावे विकारभावे च क. 2. अयम् नास्ति फ.ह.ग. 3. उदाहरणमिदं नास्ति फ. 4. तादर्थ्ये नास्ति क. 5. तदर्थेन भवति तदर्थः इत्यधिकम् क. 6. नित्यसमासः ग. 7. ब्राह्मणार्थः सूपः क. इ. फ. ह. ग. 8. कुमारबलिः इत्यधिकम् ह, भूतबलिः इत्यधिकम् ग. 9. महाराजाय बलिः इत्यधिकम् क. 10. हित नास्ति फ, गवे हितम् इत्यधिकम् क. 11. गवे सुखम् इत्यधिकम् ह. 12. रक्षित नास्ति फ. 13. वनम् इत्यधिकम् ह. 14. सुबन्तं नास्ति ब.क.इ.फ. 15. सुबन्तेन नास्ति ब.ड.फ ह. 16. विभाषा नास्ति ड.फ. 17. नास्ति फ.ड. 18. वृकेभ्यो भीतः नास्ति क. इ. ह. 19. उदाहरणप्रपञ्चः ड. ह. फ. 20. इत्येवमादिः फ. 21. अल्पशः इत्यधिकम् क.ड.इ.फ.ह. 22. सुखादपेतः इत्यधिकम् ड. इ, दुःखापेतः इत्यधिकम् ह. 23. अपोढ नास्ति फ. 24. मुक्त नास्ति फ. 25. पतित नास्ति फ. 26. अपत्रस्त नास्ति फ. 27. या इत्यधिकम् ड. 28. सा इत्यधिकम् ड. 29. न सर्वा नास्ति फ.ह. 30. इत्येवमादिषु समासो ह.

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन । (३९/७०१)

स्तोक अन्तिक दूर इत्येवमर्थाः [1]शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । स्तोकान्मुक्तः[2] । अन्तिकादागतः । [3]अभ्याशादागतः । [4]दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । कृच्छ्राल्लब्धः । 'पञ्चम्याः स्तोकादिभ्यः' (६ . ३ . २/९५९) इत्यलुक् ।

[८०] [5]शतसहस्रौ परेणेति वक्तव्यम् ।

शतात् परे [6]परश्शताः । सहस्रात् परे [7]परस्सहस्राः । राजदन्तादित्वात् (२ . २ . ३१/९०२) [8]परनिपातः । निपातनात् सुडागमः ॥

## सप्तमी शौण्डैः । (४०/७१७)

[9]सप्तम्यन्तं शौण्डादिभिः [10]सह समस्यते, [11]तत्पुरुषश्च समासो भवति । अक्षेषु शौण्डः अक्षशौण्डः । [12]अक्षधूर्तः । अक्षकितवः ।

[13]शौण्ड । धूर्त । कितव । [14]व्याड । प्रवीण । संवीत । अन्तर् । अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । [15]अधि । पटु । पण्डित । कुशल । चपल । निपुण । [16]वृत्तौ [17]प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी ॥

## सिद्धशुष्कपक्वबन्धैश्च । (४१/७१८)

सप्तमी इति वर्तते । सिद्ध शुष्क पक्व बन्ध इत्येतैः[18] सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । [19]साङ्काश्यसिद्धः । [20]काम्पिल्यसिद्धः । [21]शुष्क–आतपशुष्कः । छायाशुष्कः । [22]पक्व–स्थालीपक्वः । कुम्भीपक्वः । बन्ध–चक्रबन्धः[23] । बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः (२ . १ . ३२/६९४) ॥

## ध्वाङ्क्षेण क्षेपे । (४२/७१९)

ध्वाङ्क्षेण इत्यर्थग्रहणम् (म भा. १. ३८१) । ध्वाङ्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं [24]सुबन्तं समस्यते, [25]तत्पुरुषश्च समासो भवति क्षेपे गम्यमाने । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । अनवस्थितः इत्यर्थः । तीर्थकाकः । तीर्थवायसः[26] । [27]क्षेपे इति किम् ? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

---

1. शब्दाः नास्ति ह. 2. अल्पान्मुक्तः इत्यधिकम् क.ड.इ.फ.ह. 3. उदाहरणमिदं नास्ति ह. 4. उदाहरणमिदं नास्ति ब. इ. 5. शत–सुडागमः नास्ति इ.ग.ह.फ, शतं सहस्रं ड. 6. परःशतं ड, परःशतानि कार्याणि क. 7. परःसहस्रं ड. 8. पूर्वनिपातः क. 9. सुप् सुपेति वर्तते इत्यधिकम् ड. 10. सह नास्ति फ. 11. तत्पुरुषसंज्ञकः ह. 12. अक्षेषु धूर्तः इत्यधिकम् ह, अक्षकितवः नास्ति ड. ह. 13. शौण्ड–सप्तमी नास्ति ग. 14. संव्याड क. फ, व्याध ह, व्याल, सत्पिण्ड, पटु, मृदु इत्यधिकम् ह. 15. मृदु क. 16. शौण्डादिवृत्तौ ह. 17. वृत्तिक्रियायाः फ. 18. शब्दैः इत्यधिकम् ड. 19. सांकाश्ये सिद्धः इत्यधिकम् अ. ह. 20. काम्बील्ये सिद्धः काम्बील्यसिद्धः फ. ह, कम्भोजसिद्धः इत्यधिकम् ड. फ. 21. शुष्क नास्ति फ. 22. पक्व नास्ति फ. 23. चारकबन्धः इत्यधिकम् क.ड.फ.ह, चातकबन्धः इत्यधिकम् इ. 24. सुबन्तं नास्ति क. ड. फ. 25. तत्पुरुषसंज्ञकश्च ह. 26. तीर्थकाषः इत्यधिकम् ग. 27. अनवस्थिते क.

## कृत्यैर्ऋणे । (४३/७२०)

सप्तमी इति वर्तते । कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, [1]तत्पुरुषश्च समासो भवति ऋणे गम्यमाने । [2]यत्प्रत्ययेनैवेष्यते । मासे देयमृणम् मासदेयम् । संवत्सरदेयम् । [3]त्र्यहदेयम् । ऋणग्रहणं[4] नियोगोपलक्षणार्थं, [5]तेनेहापि समासो भवति, पूर्वाह्णे गेयं साम पूर्वाह्णगेयम् । प्रातरध्येयोऽनुवाकः (म. भा. १.३९१) । ऋणे इति किम् ? मासे देया भिक्षा ॥

## सञ्ज्ञायाम् । (४४/७२१)

सञ्ज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । [6]सञ्ज्ञा समुदायोपाधिः । तेन नित्यसमास एवायम्, न हि वाक्येन सञ्ज्ञा गम्यते । अरण्येतिलकाः । [7]अरण्येमाषाः । [8]वनेकिंशुकाः । [9]वने–बिल्वकाः । कूपेपिशाचकाः । 'हलदन्तात् [10]सप्तम्याः सञ्ज्ञायाम्' (६.३.९/९६६) इत्यलुक् ॥

## क्तेनाहोरात्रावयवाः । (४५/७२२)

अहरवयवाः रात्र्यवयवाश्च [11]सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । [12]अपररात्रकृतम् । अवयवग्रहणं किम् ? [13]एतत् तु ते दिवा वृत्तं रात्रौ वृत्तं [14]च [15]द्रक्ष्यसि । अहनि भुक्तम् । रात्रौ वृत्तम् । [16]बहुलग्रहणात् (२.१.३२/६९४) । रात्रिवृत्तम्, सन्ध्यागर्जितम् इत्यादयः ॥

## तत्र । (४६/७२३)

तत्र इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम् । तत्रकृतम । तत्रपीतम् । [17]ऐकपद्यमैकस्वर्यं च समासत्वात् [18]भवति ॥

## क्षेपे । (४७/७२४)

क्षेपो निन्दा । क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । अवतप्ते–नकुलस्थितं [19]त एतत् (म. भा. १.३९१) । चापलमेतत्, अनवस्थितत्वं [20]तवैतत् इत्यर्थः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । [21]भस्मनिहुतम् । निष्फलं यत् क्रियते तदेवमुच्यते । 'तत्पुरुषे कृति बहुलम्' (६.३.१४/९७२) इत्यलुक् ॥

---

1. तत्पुरुषश्च समासो भवति नास्ति इ. 2. यत्प्रत्ययान्तेन ड. फ. ह. 3. त्र्यहर्देयम् ब, नास्ति ह. 4. च इत्यधिकम् ड. इ. क. 5. तेन नास्ति क. फ. ह. इ. 6. संज्ञायाम् इति क, संज्ञायाम् फ. 7. अरण्ये–माषकाः क. ड. ह. 8. वनेकशेरुकाः क. ड. फ. ग. 9. वनेबिल्वजाः इ 10. सप्तम्यन्तात् फ, सप्तम्यां इ. 11. सप्तम्यन्ताः नास्ति इ. 12. नास्ति फ. 13. उलूखलैराभरणैः पिशाची यदभाषत इति पूर्वार्धः क. ड. इ. 14. तु ड. इ. 15. पश्यसि क. 16. बहुलग्रहणात्–इत्यादयः नास्ति क. 17. एकविभक्तित्वं च समासाद् भवति फ. 18. भवति नास्ति इ. 19. तव ब. क. ह, तवैव इ. 20. त एतत् ड. 21. भस्मनिर्मुक्तं फ.

## पात्रेसमितादयश्च । (४८/७२५)

समुदाया एव निपात्यन्ते । पात्रेसमितादयः शब्दास्तत्पुरुषसञ्ज्ञा भवन्ति क्षेपे गम्यमाने । [1]ये चात्र क्तान्तेन सह [2]समासाः, तेषां पूर्वेणैव [3]सिद्धे पुनः पाठो युक्तारोह्यादि[4]परिग्रहार्थः, पूर्वपदाद्युदात्तत्वं यथा स्यात् [5]इति । युक्तारोह्यादिषु हि पात्रेसमितादयश्च इति पठ्यते । पात्रेसमिताः । पात्रेबहुलाः । अवधारणेन क्षेपो गम्यते, पात्रे एव समिता[6] न पुनः क्वचित् कार्ये इति । उदुम्बरमशकादिषु उपमया क्षेपः । मातरिपुरुषः इति [7]प्रतिषिद्धसेवनेन । [8]पिण्डीशूरादिषु निरीहतया । अव्यक्तत्त्वाच्चाकृतिगणोऽयम् ।

[9]पात्रेसमिताः । पात्रेबहुलाः । [10]उदुम्बरमशकाः । उदरकृमिः । कूपकच्छपः । [11]कूपचूर्णकः । [12]अवटकच्छपः । कूपमण्डूकः । [13]कुम्भमण्डूकः । [14]उदपानमण्डूकः । नगरकाकः । नगरवायसः । मातरिपुरुषः । पिण्डीशूरः । [15]पितरिशूरः । गेहेशूरः । [16]गेहेनर्दी । गेहेक्ष्वेडी । गेहेविजिती । [17]गेहेव्याडः । गेहेमेही । [18]गेहेदाही । गेहेदृप्तः । [19]गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः । गोष्ठेशूरः । गोष्ठेविजिती । [20]गोष्ठेक्ष्वेडी । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिट्टिभः । [21]कर्णेटिरिटिरा । [22]कर्णेचुरचुरा ।

चकारोऽवधारणार्थः, तेन समासान्तरं न भवति, परमपात्रेसमिताः इति ॥

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । (४९/७२६)

सुप् सुपा इति वर्तते । तस्य [23]विशेषणमेतत् । पूर्वकाल एक सर्व जरत् पुराण नव केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति । [24]भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे [25]वृत्तिः [26]सामानाधिकरण्यम् । पूर्वकालः इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम् । पूर्वकालोऽपरकालेन[27] समस्यते । स्नातानुलिप्तः । [28]कृष्टसमीकृतम् । [29]दग्धप्ररूढम् । एकशाटी । एकभिक्षा । सर्वदेवाः । सर्वमनुष्याः । [30]जरद्धस्ती । [31]जरद्गृष्टिः । [32]जरद्वृत्तिः । पुराणान्नम् । पुराणावसथम् । नवान्नम् । [33]नवावसथम् । केवलान्नम्[34] । समानाधिकरणेन इति किम् ? एकस्याः शाटी[35] ॥

---

1. येषामत्र ब. क. इ. 2. समस्ताः फ. 3. सिद्धः इ. 4. °परिग्रहार्थम् फ. 5. इति नास्ति क. 6. भोजन एव समिताः इत्यधिकम् क. 7. प्रतिषिद्धासेवनेन फ. ह. 8. पिण्डीश्वरादिषु ब. 9. नास्ति फ. 10. नास्ति ब, उदुम्बरक्रिमिः इ. 11. नास्ति क. फ. 12. नास्ति फ. 13. नास्ति ब. 14. नास्ति फ. 15. नास्ति ब. ह. 16. गेहेनर्ती ह. 17. गेहेव्याधः फ. ह. 18. नास्ति ड. ह. 19. नास्ति ह. 20. नास्ति ब. 21. कर्मेकिरिटिका ह, कर्मेटिरहिरा इ. 22. कर्मेचुरुचुका ह. 23. विशेषणं चैतत् ग. 24. भिन्न–प्रवृत्तिनिमित्तत्वमेकस्मिन्नर्थे फ. 25. प्रवृत्तिः ग. इ. 26. समाना° इ. 27. सह इत्यधिकम् ड. इ. 28. कृष्ट–मतिकृष्टं ड, कृष्टमतीकृतं क, °कृतः ह. 29. °प्ररूढः फ. ह. 30. जरद्दन्ती ड. 31. नास्ति क. ह. 32. जरदातिः क. 33. नवावसथः क. फ. 34. केवलावसथः इत्यधिकम् क. ड. फ. ह. ग. 35. वर्तते इत्यधिकम ग.

## दिक्सङ्ख्ये सञ्ज्ञायाम् । (५०/७२७)

समानाधिकरणेन इत्यापाद[1]समाप्तेरनुवर्तते । दिग्वाचिनः शब्दाः[2] [3]सङ्ख्या च समानाधिकरणेन [4]सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च [5]समासो भवति सञ्ज्ञायां विषये । [6]पूर्वेषुकामशमी । अपरेषुकामशमी[7] । [8]पञ्चाम्राः । सप्तर्षयः । सञ्ज्ञायाम् इति किम्? उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

## तद्धितार्थोत्तरपदसमाहारे च । (५१/७२८)

दिक्सङ्ख्ये इत्यनुवर्तते । तद्धितार्थे [9]विषये उत्तरपदे च परतः समाहारे चाभिधेये दिक्सङ्ख्ये समानाधिकरणेन सुपा [10]सह समस्येते, तत्पुरुषश्च समासो भवति ।

[11]तद्धितार्थे तावत् – पूर्वस्यां शालायां भवः, 'दिक्पूर्वपदादसञ्ज्ञायां ञः' (४.२.१०७/१३२८), पौर्वशालः । [12]आपरशालः । उत्तरपदे – पूर्वशालाप्रियः । अपरशालाप्रियः । समाहारे दिक्शब्दो न सम्भवति । सङ्ख्या तद्धितार्थे[13] – पाञ्चनापितिः । पञ्चकपालः[14] । उत्तरपदे – पञ्चगवधनः । दशगवधनः । समाहारे – [15]पञ्चपूली । दशपूली । [16]पञ्चकुमारि । दशकुमारि (म.भा. १.३९५) । [17]'स नपुंसकम्' (२.४.१७/८२१) इति नपुंसकत्वम् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७/३१८) इति ह्रस्वत्वम् ॥

## सङ्ख्यापूर्वो द्विगुः । (५२/७३०)

'तद्धितार्थोत्तरपदसमाहारे च' (२.१.५१/७२८) इत्यत्र [18]यः सङ्ख्यापूर्वः समासः [19]स द्विगुसञ्ज्ञो भवति । तद्धितार्थे तावत् – [20]पञ्चसु कपालेषु संस्कृतः[21] पञ्चकपालः । दशकपालः । 'संस्कृतं भक्षाः' (४.२.१६/१२१७) [22]इतीह अण्, तस्य 'द्विगोर्लुगनपत्ये' (४.१.८८/१०८०) इति लुक् । उत्तरपदे – पञ्चनावप्रियः । 'नावो द्विगोः' (५.४.९९/८०१) इति समासान्तो भवति । समाहारे – [23]पञ्चपूली । 'द्विगोः' (४.१.२१/४७९) इति ङीब् भवति । द्विगुप्रदेशाः – 'द्विगोः' (४.१.२१/४७९) इत्येवमादयः ॥

## कुत्सितानि कुत्सनैः । (५३/७३२)

[24]कुत्सितवाचीनि सुबन्तानि [25]कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । [26]शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते । 'विशेषणं विशेष्येण बहुलम्' (२.१.५७/७३६) इति परनिपाते प्राप्ते विशेष्यस्य पूर्व[27]निपातार्थ आरम्भः । [28]वैयाकरणखसूचिः (म.भा. १.३९७) । निष्प्रतिभः इत्यर्थः । याज्ञिककितवः । [29]अयाज्ययाजनतृष्णापरः । मीमांसकदुर्दुरूढः । नास्तिकः[30] । कुत्सितानि इति किम्? वैयाकरणश्चौरः । न ह्यत्र वैयाकरणत्वं कुत्स्यते । कुत्सनैः इति किम्? कुत्सितो ब्राह्मणः ॥

---

1. °परिसमाप्तेः इ.क.फ. 2. सुबन्ताः इत्यधिकम् क.ड. 3. संख्यावाचिनः क.ड.इ.ह.फ. 4. सुपा ह. 5. समासः स भवति फ. 6. पूर्वश्चासौ इषुकामशमी च इत्यधिकम् ड. 7. ग्रामसंज्ञा इत्यधिकम् क. 8. सप्ताम्राः इ, पञ्चाग्नी ब. 9. विषयभूते क.ड.इ.फ.ह. 10. उत्तरपदेन ह. 11. दिक् तावत् तद्धितार्थे क. ड.इ.ह, तावत् तद्धितार्थे फ. 12. औत्तरशालः ह, नास्ति इ. 13. तावत् इत्यधिकम् इ. 14. दशकपालः इत्यधिकम् क.ड.ग. 15. पंचफली अ.ड. 16. पंचकुमारी, दशकुमारी इ. ह. 17. स नपुंसकम् – ह्रस्वत्वम् नास्ति क.ड. 18. यः नास्ति फ. 19. स नास्ति फ. 20. पञ्चसु कपालेषु संस्कृतः नास्ति फ. 21. ओदनः इत्यधिकम् क.ड. 22. इत्यनेन आगतस्य अणः द्विगोर्लुक् इति इ, द्विगुत्वात् तद्धितस्य लुग् भवति क. 23. पंचफली ब, दशपूली इत्यधिकम् क. 24. कुत्सितवचनानि ह, कुत्सेन वाचीनि क. 25. कुत्सनवाचिभिः क. 26. शब्दप्रवृत्तिकुत्सायाम् फ. 27. °निपातार्थोऽयं क. 28. उदाहरणमिदं नास्ति ग. 29. अयाज्ययाजनात् क. इ. फ, अयाज्ययाजकः ड. 30. इत्यर्थः इत्यधिकम् इ.ग.

## पापाणके कुत्सितैः । (५४/७३३)

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे[1] [2]परनिपातः [3]प्राप्तः, पूर्वनिपातार्थमिदमारभ्यते । पाप अणक [4]इत्येते सुबन्ते कुत्सितवचनैः[5] सह समस्येते, तत्पुरुषश्च समासो भवति । पापनापितः । पापकुलालः । अणकनापितः । अणककुलालः ॥

## उपमानानि सामान्यवचनैः । (५५/७३४)

उपमीयतेऽनेन इत्युपमानम् । उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । उपमानोपमेययोः साधारणो धर्मः [6]सामान्यं, तद्विशिष्टोपमेयवचनैरयं समासः । [7]शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता (म. भा. १.३९२) । कुमुदश्येनी । [8]हंसगद्गदा । न्यग्रोधपरिमण्डला । उपमानानि इति किम् ? देवदत्ता श्यामा । सामान्यवचनैः इति किम् ? [9]फाला इव तण्डुलाः । पर्वता इव बलाहकाः ॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । (५६/७३५)

उपमेयमुपमितं, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्याद् उपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत् [10]सामान्यवाची शब्दः प्रयुज्यते । 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७/७३६) इति परनिपाते प्राप्ते [11]विशेष्यस्य पूर्वनिपातार्थ आरम्भः । पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः । [12]पुरुषसिंहः । सामान्याप्रयोगे इति किम् ? पुरुषोऽयं व्याघ्र इव शूरः (म. भा. १. ३९८) ।

व्याघ्र । सिंह । ऋक्ष । [13]ऋषभ । चन्दन । वृक्ष (वृक) । वराह । वृष । हस्तिन् । कुञ्जर । रुरु । पृषत (पृषत्) । पुण्डरीक । [14]बलाहक ।

आकृतिगणश्चायम्, तेनेदमपि[15] भवति – मुखपद्मम्, [16]मुखकमलम्, करकिसलयम्, [17]पार्थिवचन्द्रः इत्येवमादि ॥

## विशेषणं विशेष्येण बहुलम् । (५७/७३६)

भेदकं विशेषणं, भेद्यं विशेष्यम् । विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति । नीलोत्पलम् । रक्तोत्पलम् । [18]बहुलवचनं व्यवस्थार्थम् । क्वचिन् [19]नित्यसमास एव, कृष्णसर्पः, [20]लोहितशालिः । क्वचिन्न भवत्येव, रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः[21] । क्वचिद् विकल्पः, नीलमुत्पलम्, नीलोत्पलम् । [22]विशेषणम् इति किम् ? तक्षकः सर्पः । विशेष्येण इति किम् ? लोहितस्तक्षकः ॥

---

1. प्रत्यासत्तेरिति भावः इत्यधिकम् क. 2. परनिपाते प्राप्ते क. 3. प्राप्तः ततः ड. 4. इत्येतौ सुबन्तौ ड. फ. 5. सुबन्तैः इत्यधिकम् क. 6. सामान्यवचनं फ. 7. शस्त्रीव श्यामा नास्ति फ. 8. नास्ति इ. 9. काला क. 10. सामान्यं फ. 11. विशेष्यस्य नास्ति फ. 12. नास्ति फ. 13. वृषभ फ. 14. बलाधिक फ. 15. सिद्धं इत्यधिकम् क. 16. मुखमृणालम् ड. 17. पार्थिवचन्द्रमाः ड. 18. बहुलग्रहणं व्यभिचारार्थं क, °व्यभिचारार्थं इ. 19 नित्यसमासो भवति फ. 20. लोहिताहिः क, लोहितसर्पः इ, नास्ति ह. 21. व्यासः पाराशर्यः इत्यधिकम् क. इ. ड. 22. विशेषणम् – लोहितस्तक्षकः नास्ति ब.

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । (५८/७३७)

[1]पूर्व अपर प्रथम चरम जघन्य समान मध्य मध्यम वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च [2]समासो भवति । पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । [3]समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । [4]वीरपुरुषः । पूर्वस्यैवायं प्रपञ्चः ॥

## श्रेण्यादयः कृतादिभिः । (५९/७३८)

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः[5] सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।

[८१] श्रेण्यादिषु च्व्यर्थवचनम् । (म.भा.१.४००)

अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । एककृताः । [6]पूगकृताः । श्रेण्यादयः [7]पठ्यन्ते । कृतादिराकृतिगणः । च्व्यन्तानां तु 'कुगतिप्रादयः' (२.२.१८/७६१) इत्यनेन नित्यसमासः । श्रेणीकृताः ।

श्रेणि । एक । पूग । [8]कुण्ड । राशि । विशिख । निचय । [9]निधान । इन्द्र । देव । मुण्ड । भूत । [10]श्रवण । वदान्य । अध्यापक । [11]अभिरूपक । ब्राह्मण । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । [12]कृपण । इति श्रेण्यादिः ।

कृत । मित । [13]मत । भूत । उक्त । [14]समाज्ञात । समाम्नात । [15]समाख्यात । [16]सम्भावित । अवधारित । निराकृत । [17]अवकल्पित । उपकृत । उपाकृत[18] । इति कृतादिः ॥

## क्तेन नञ्विशिष्टेनानञ् । (६०/७३९)

[19]नञैव विशेषो यस्य, सर्वमन्यत् प्रकृत्यादिकं तुल्यं, तन् नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन [20]समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति[21] । कृतं च तदकृतं च कृताकृतम् । भुक्ताभुक्तम् । पीतापीतम् । [22]उदितानुदितम् । नुडिटौ [23]तद्भक्तत्वान्नैव भेदकौ । [24]अशितानशितेन (६.३.७४/ ७५८) जीवति । क्लिष्टाक्लिशितेन (७.२.५०/३०४९) [25]वर्तते ।

[८२] कृतापकृतादीनामुपसङ्ख्यानम् । (म.भा.१.४०१)

कृतापकृतम् । भुक्तविभुक्तम् । [26]पीतविपीतम् । गतप्रत्यागतम् । यातानुयातम् । क्रयाक्रयिका । पुटापुटिका । फलाफलिका । मानोन्मानिका (म.भा.१.४०१) ।

[८३] समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च ।

शाकप्रधानः पार्थिवः शाकपार्थिवः । कुतपसौश्रुतः । अजातौल्वलिः ॥

---

1. पूर्वादयः सुबन्ताः फ. 2. समासो–जघन्यपुरुषः नास्ति ड. 3. नास्ति फ. 4. नास्ति फ, धीरपुरुषः इत्यधिकम् ह. 5. सुबन्तैः इत्यधिकम् ह. 6. नास्ति ब. इ. 7. पद्यन्ते ग. 8. मुकुन्दुभ ह, कुड्मल क. ड. 9. निधन इ, निर्धन ह, नास्ति ब, निरय निधन क. 10. श्रमण ड. 11. अरूपक क. 12. क्रुडम् क, नास्ति फ. 13. हित ह, मित क. 14. समज्ञात ह. 15. संख्यात फ. 16. संसेवित क, नास्ति ब. इ. 17. उपकल्पित इ, नास्ति ह. 18. उदाहृत, उदित, सृष्ट, कल्पित, दलित, विश्रुत इत्यधिकम् फ. ह. 19. नञेव क. ड. इ. 20. समानाधिकरणेन नास्ति फ. 21. इति इत्यधिकम् क. 22. नास्ति फ. 23. तद्भक्तत्वादभेदकौ ड. 24. आशितानशितेन इ. 25. जीवति क. फ. ह. 26. पीतापीतम् फ.

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । (६१/७४०)

सत् महत् परम उत्तम उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूज्यमानैः इति वचनात् [1]पूजावचनाः सदादयो विज्ञायन्ते । सत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूज्यमानैः इति किम् ? [2]उत्कृष्टो गौः कदर्मात् ॥

## वृन्दारकनागकुञ्जरैः पूज्यमानम् । (६२/७४१)

वृन्दारक नाग कुञ्जर इत्येतैः सह पूज्यमानवाचि [3]सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । [4]पूज्यमानम् इति वचनात् [5]पूजावचना वृन्दारकादयो गृह्यन्ते । गोवृन्दारकः । अश्ववृन्दारकः । गोनागः । अश्वनागः । गोकुञ्जरः । [6]अश्वकुञ्जरः । पूज्यमानम् इति किम् ? [7]सुषीमो नागः ॥

## कतरकतमौ जातिपरिप्रश्ने । (६३/७४२)

कतरकतमौ[8] जातिपरिप्रश्ने वर्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति । [9]कतरकठः । कतरकालापः । कतमकठः । कतमकालापः ।

ननु[10] कतमशब्दस्तावज् जातिपरिप्रश्न एव [11]व्युत्पादितः, कतरशब्दोऽपि साहचर्यात् तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? [12]एवं तर्ह्येतज् ज्ञापयति कतमशब्दोऽन्यत्रापि वर्तते इति । तथा च प्रत्युदाहरणम्—कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः[13] ॥

## किं क्षेपे । (६४/७४३)

[14]किम् इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते तत्पुरुषश्च समासो भवति । किंराजा, यो न रक्षति । किंसखा, योऽभिद्रुह्यति । किंगौः, यो न वहति । 'किमः क्षेपे' (५.४.७०/९५५) इति समासान्तो न भवति । क्षेपे इति किम् ? को राजा [15]पाटलिपुत्रे ॥

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । (६५/७४४)

उभयव्यञ्जना पोटा इत्यभिधीयते[16] । गृष्टिरेकवारप्रसूता । धेनुः प्रत्यग्र[17]प्रसूता । वशा वन्ध्या । वेहद् [18]गर्भपातिनी । बष्कयणी तरुणवत्सा । पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । [19]इभपोटा । इभयुवतिः । [20]अग्निस्तोकः । [21]उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । जातिः इति किम् ? देवदत्तः प्रवक्ता । धूर्तग्रहणम्[22]कुत्सार्थम् ॥

---

1. पूजाशब्दाः फ, पूजाशब्दाः एव क, पूजनवचनाः ह. 2. उत्कृष्टा क. 3. सुबन्तं नास्ति ह. 4. पूज्यमानैः ग. 5. पूजाशब्दाः क. फ, पूजावाचिनः एव ग, पूजावचना एव ब. ड. 6. नास्ति फ. 7. सुषमः फ, सुषिमः क, सुषुमो नागः ग, सुश्वीमो ब. 8. शब्दौ इत्यधिकम् फ. 9. कतरः कठः, कतरः कालापः, कतमः कठः, कतमः कालापः इ, कतरकलापः, कतमकलापः ड. 10. च इत्यधिकम् फ. 11. व्युत्पाद्यते ग. 12. एवं तर्हि नास्ति क. इ. फ. 13. इति इत्यधिकम् क. इ. ग. 14. किं शब्दः क. 15. पाटलिपुत्रस्य ग. 16. युवतिर्नवयौवना स्त्री, स्तोकमल्पपर्यायः, कतिपयं च इत्यधिकम् अ. 17. °प्रसवा फ. 18. गर्भघातिनी क. ड, गर्भघ्नी ब. 19. इभ्यपोटा ड. फ, इभ्ययुवतिः ड. फ. क. 20. अग्निस्तोकम् क. फ. 21. °कतिपयः क. ह. 22. अकुत्सनार्थं क. इ.

## प्रशंसावचनैश्च । (६६/७४७)

जातिः इति वर्तते । जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति । रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः । ते च आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे [1]स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति । गोप्रकाण्डम् । अश्वप्रकाण्डम् । गोमतल्लिका[2] । [3]अश्वमतल्लिका । गोमर्चचिका । [4]अश्वमर्चचिका । जातिः इति किम् ? कुमारी मतल्लिका ॥

## युवा खलतिपलितवलिनजरतीभिः । (६७/४८७)

खलत्यादिभिः समानाधिकरणैः सह [5]युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति । [6]जरतीभिः इति स्त्रीलिङ्गेन[7] निर्देशः, 'प्रातिपादिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'[8] (व्या. प. २५) इति ज्ञापकार्थः । युवा खलतिः युवखलतिः । युवतिः खलती युवखलती । युवा पलितः युवपलितः । युवतिः पलिता युवपलिता । युवा वलिनः युववलिनः । युवतिर्वलिना युववलिना । युवा जरन् युवजरन् । युवतिर्जरती युवजरती ॥

## कृत्यतुल्याख्या अजात्या । (६८/७४९)

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च [10]सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति । भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । तुल्याख्याः – तुल्यश्वेतः । तुल्यमहान् । सदृशश्वेतः । सदृशमहान् । अजात्या इति किम् ? भोज्य ओदनः ॥

## वर्णो वर्णेन । (६९/७५०)

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति । कृष्णसारङ्गः । लोहितसारङ्गः । कृष्णशवलः । [11]लोहितशबलः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति ॥

## कुमारः श्रमणादिभिः । (७०/७५२)

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । [12]येऽत्र स्त्रीलिङ्गाः पठ्यन्ते, श्रमणा, प्रव्रजिता, कुलटा[13] इत्येवमादयः, तैः सह स्त्रीलिङ्गैः एव कुमारशब्दः समस्यते । ये तु पुंलिङ्गाः, [14]अध्यापकः, अभिरूपकः, पण्डितः इति, तैरुभयथा[15], 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्[16]' (व्या. प. २५) इति । कुमारी श्रमणा कुमारश्रमणा[17] ।

श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । [18]तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

---

1. °उपदान एव ड. 2. गोमतल्लजा इत्यधिकम् फ. 3. अश्वमतल्लिका, गोमर्चचिका नास्ति फ. 4. अश्वप्रचर्चिका ब, अश्वमचर्चकः क. 5. युवन्शब्दः फ. 6. जरतीति क. 7. स्त्रीलिङ्गे ह. 8. भवति इत्यधिकम् क. ह. 9. शब्दाः क. 10. सुपा सह इत्यधिकम् क. ड. फ, सुबन्ताजातिवचनेन ब, 'अजातिवाचिना सुपा समानाधिकरणेन सह ह. 11. नास्ति फ. 12. ये च ब. क. 13. दासी बन्धकी इत्यधिकम् ह. 14. अध्यापकाभिरूपकःपण्डिताः फ. 15. भवति इत्यधिकम् इ. फ. 16. भवति इत्यधिकम् क. ड. इ. ह. 17. कुमारी चासौ प्रव्रजिता कुमारप्रव्रजिता इत्यधिकम् क. फ. 18. तामसी ब.

## चतुष्पादो गर्भिण्या । (७१/७५३)

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन[1] समस्यन्ते, तत्पुरुषश्च समासो भवति । गोगर्भिणी । [2]अजागर्भिणी ।

[८४] चतुष्पाज्जातिरिति वक्तव्यम् । (म.भा. १.४०६)

इह मा भूत् – कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणी (म.भा. १.४०६) ।

चतुष्पादः इति किम्? ब्राह्मणी गर्भिणी ॥

## मयूरव्यंसकादयश्च । (७२/७५४)

समुदाया एव निपात्यन्ते । मयूरव्यंसकादयः शब्दाः[3]तत्पुरुषसञ्ज्ञा भवन्ति । चकारोऽवधारणार्थः, परममयूरव्यंसकः इति समासान्तरं न भवति ।

मयूरव्यंसकः । छात्रव्यंसकः । काम्बोजमुण्डः । यवनमुण्डः । छन्दसि––हस्तेगृह्य । पादेगृह्य । लाङ्गलेगृह्य । पुनर्दाय । 'एहीडादयोऽन्यपदार्थे'(ग.सू.१८)–एहीडम् । एहियवं वर्तते । एहिवाणिजा[4]क्रिया । अपेहिवाणिजा । प्रेहिवाणिजा । एहिस्वागता । अपेहिस्वागता । [5]प्रेहिस्वागता । एहिद्वितीया । अपेहिद्वितीया । इहवितर्का । प्रोहकटा । अपोहकटा । [6]प्रोहकर्दमा । अपोहकर्दमा । उद्धरचूडा । आहरचेला । आहरवसना । [7]आहरवनिता । [8]कृन्तविचक्षणा । [9]उद्धरोत्सृजा । [10]उद्धमविधमा । उत्पचविपचा । उत्पतनिपता । उच्चावचम् । उच्चनीचम । [11]अचितोपचितम् । अवचितपराचितम् । [12]निश्चप्रचम् । [13]अकिञ्चनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । उत्पत्यपाकला । निपत्यरोहिणी । निषण्णश्यामा । [14]अपेहिप्रसवा । इहपञ्चमी । इहद्वितीया ।

'जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति' (ग.सू. १९)–जहिजोडः । उज्जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः ।

'आख्यातमाख्यातेन क्रियासातत्ये' (ग.सू.२०)–अश्नीतपिबता । [15]पचतभृज्जता । खादतमोदता । [16]खादतवमता । खादताचमता । आहरनिवपा । आवपनिष्किरा । [17]उत्पचविपचा । [18]भिन्धिलवणा । छिन्धिविचक्षणा । पचलवणा । पचप्रकूटा । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ॥

इति [19]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ॥

––०––

1. समानाधिकरणेन सह इत्यधिकम् क, सह इत्यधिकम् ड. 2. अजगर्भिणी फ. 3. तत्पुरुषसमाससंज्ञाः क. 4. क्रिया नास्ति फ. 5. प्रेहिस्वागता एहिद्वितीया नास्ति फ. 6. प्रेहिकर्दमा क. 7. आहरविनता फ. 8. कृन्धि° अ. 9. उद्धरविसृजा फ. 10. उद्धमनिषजा फ. 11. आत्तोपात्तम् ब. 12. निश्चितप्रचितम् फ. 13. सकिंचन क. 14. एहिविघसा अ. 15. पचतभुज्जता फ. 16. खादतवमता खादताचमता नास्ति फ. 17. नास्ति फ. 18. कृन्धिलवणा क, नास्ति फ. 19. श्री नास्ति क.ग, विरचितायां नास्ति ड.

## द्वितीयाध्यायस्य द्वितीयः पादः

### पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । (१/७१२)

एकदेशोऽस्यास्ति इत्येकदेशी, अवयवी, [1]तद्वाचिना सुबन्तेन सह पूर्व अपर अधर उत्तर इत्येते शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति । [2]एकाधिकरणग्रहणमेकदेशिनो विशेषणम् । एकं चेदधिकरणमेकद्रव्यमेकदेशि भवति । षष्ठीसमासापवादोऽयं योगः । पूर्वं कायस्य पूर्वकायः । अपरकायः । [3]अधरकायः। उत्तरकायः । एकदेशिना इति किम्? [4]पूर्वं नाभेः कायस्य । एकाधिकरणे इति किम्? पूर्वं छात्राणामा[5]मन्त्रय । कथं मध्याह्नः, सायाह्नः इति ? 'सङ्ख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' (६.३.११०/२३८) इति ज्ञापकात् सर्वेणैकदेशशब्देनाह्नः समासो भवति ॥

### अर्धं नपुंसकम् । (२/७१३)

एकदेशिना एकाधिकरणे इति वर्तते । [6]समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम् । अर्धम् इत्येतद् नपुंसकमेकदेशिनैकाधिकरणेन[7] समस्यते, तत्पुरुषश्च समासो भवति । षष्ठीसमासापवादोऽयं योगः । अर्धं पिप्पल्याः अर्धपिप्पली । [8]अर्धकोशातकी । नपुंसकम् इति किम्? ग्रामार्धः । नगरार्धः । एकदेशिना [9]इत्येव, अर्धं पशोर्देवदत्तस्य । [10]देवदत्तेन सह समासो न भवति । एकाधिकरणे इत्येव, अर्धं पिप्पलीनाम् ॥

### द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । (३/७१४)

एकदेशिना एकाधिकरणे इति वर्तते । षष्ठीसमासापवादोऽयं[11] योगः । अन्यतरस्यांग्रहणात्[12] सोऽपि षष्ठीसमासो भवति । '[13]पूरणगुण°' (२.२.११/७०५) इति प्रतिषेधश्च [14]अत एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्तते । द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहा[15]न्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षायाः द्वितीयभिक्षा, [16]षष्ठीसमासपक्षे भिक्षाद्वितीयं वा । [17]तृतीयं भिक्षायाः तृतीयभिक्षा, भिक्षातृतीयं वा । [18]चतुर्थं भिक्षायाः चतुर्थभिक्षा, [19]भिक्षाचतुर्थं वा । तुर्यं भिक्षायाः तुर्यभिक्षा, भिक्षातुर्यं [20]वा । [21]तुरीयशब्दस्यापीष्यते । तुरीयं भिक्षायाः तुरीयभिक्षा, भिक्षातुरीयं वा । एकदेशिना इत्येव, द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरणे इत्येव, द्वितीयं भिक्षाणाम् ॥

---

1. तद्वाचिनः क. 2. एकाधिकरणे क, वाक्यमिदं नास्ति फ. 3. नास्ति ग.फ. 4. अत्र नाभिशब्देन सह समासो न भवति इत्यधिकम् अ. 5. आमन्त्रयस्व क. 6. समप्रविभागयोः ह. 7. सह इत्यधिकम् फ. 8. अर्धं कौशातक्याः इत्यधिकम् क.ड.इ.फ. 9. इति किम् इ. 10. देवदत्तशब्देन क.ड.इ.फ.ह.ग, सह नास्ति इ. 11. अयं योगः नास्ति फ. 12. पक्षे इत्यधिकम् फ. ड. 13. पूरणेनेति ड. 14. अत नास्ति इ. फ. 15. अन्यतरस्यां नास्ति फ. 16. षष्ठीसमासपक्षे नास्ति ड.ई. 17–18. एते उदाहरणे न स्तः फ. 19. भिक्षाचतुर्थी क. 20. वा नास्ति ड. 21. तुरीय---भिक्षातुरीयं वा नास्ति ड.इ.फ.ह.

## प्राप्तापन्ने च द्वितीयया । (४/७१५)

एकदेशिनैकाधिकरणे (२.२.१/७१२) इति निवृत्तम् । द्वितीयासमासे (२.१.२४/६८६) प्राप्ते वचनमिदम् । समासविधानात् सोऽपि भवति । प्राप्त आपन्न [1]इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति । प्राप्तो जीविकाम् प्राप्तजीविकः, जीविकाप्राप्तः इति वा । आपन्नो जीविकाम् आपन्नजीविकः, जीविकापन्नः इति वा ॥

## कालाः परिमाणिना । (५/७१६)

परिमाणमस्यास्ति इति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति । षष्ठीसमास[2]विषये योगारम्भः । मासो जातस्य मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः ॥

## नञ् । (६/७२६)

नञ् [3]समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । [4]न ब्राह्मणः अब्राह्मणः । [5]अवृषलः[6] ॥

## ईषदकृता । (७/७५५)

ईषत् [7]इत्ययं शब्दोऽकृदन्तेन सुपा [8]सह समस्यते, तत्पुरुषश्च समासो भवति ।

[८५] ईषद्गुणवचनेनेति वक्तव्यम् । (म. भा. १.४१२) ।

[9]ईषत्कडारः । ईषत्पिङ्गलः । [10]ईषद्विकटः । [11]ईषदुन्नतः । ईषत्पीतम् । [12]ईषद्रक्तम् । गुणवचनेन इति किम् ? [13]इह न भवति, ईषद् गार्ग्यः[14] ॥

## षष्ठी । (८/७०२)

षष्ठ्यन्तं [15]सुबन्तं समर्थेन [16]सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । [17]राज्ञः पुरुषः राजपुरुषः । ब्राह्मणकम्बलः[18] ।

[८६] [19]कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् । (म. भा. १.४१२)

इध्मप्रव्रश्चनः । पलाशशातनः । [20]किमर्थमिदमुच्यते ? प्रतिपदविधाना [21]च षष्ठी न समस्यते (२.२.१०/७०४वा.) इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः (म. भा. १.४१२) ॥

---

1. इत्येते ई, इत्येते शब्दरूपे क. 2. °विषयोऽयमारम्भः इ. 3. सुब्रन्तसमर्थेन क, सुबन्तं इत्यधिकम् क. 4. उदाहरणमिदं नास्ति ब. ड. फ. 5. अवृषला ब. 6. नञो नलोपस्तिङि क्षेपे । अपचसि त्वं जाल्म । इत्यधिकम् अ. ब. ग. 7. इत्यव्ययं इ. 8. सह नास्ति ड. 9. नास्ति ड. 10. नास्ति फ. इ. 11. ईषन्मृदुः ह, ईषत्पीनः क, नास्ति इ. 12. ईषत्कृतं इ. 13. इह नास्ति फ. 14. अकृता इति किम् ? ईषत्कारकः । ऐकपद्यम् ऐकस्वर्यं न भवतः । पीतादयः शब्दा रूढिशब्दाः, न कृदन्ताः इत्यधिकम् क. 15. सुबन्तं नास्ति इ. फ. ह. 16. सुपा फ, सुबन्तेन नास्ति अ. क. 17. राज्ञः पुरुषः नास्ति इ. फ. ह. 18. पशुपादः इत्यधिकम् इ. 19. ऋद्योगा फ, कृद्योगे क. 20. किमर्थं पुनरिदमुच्यते क. 21. च नास्ति क. ड. इ.

## याजकादिभिश्च । (९/७०३)

पूर्वेण समासः सिद्ध एव, तस्य '[1]कर्तरि च' (२.२.१६/७१०) इति प्रतिषेधे प्राप्ते [2]वचनमिदमारभ्यते प्रतिप्रसवार्थम् । याजकादिभिः [3]सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । [4]ब्राह्मणयाजकः । [5]क्षत्रिययाजकः ।

याजक । पूजक । परिचारक । [6]परिषेचक । [7]स्नातक । अध्यापक । [8]उत्सादक । उद्वर्तक । होतृ । [9]पोतृ । [10]भर्तृ । रथगणक । पत्तिगणक[11] ।

[८७] तत्स्थैश्च गुणैः षष्ठी समस्यते इति वक्तव्यम् । (म.भा.१.४१३)
चन्दनगन्धः । कपित्थरसः[12] ।

[८८] [13]गुणात्तरेण तरलोपश्चेति वक्तव्यम् ।

सर्वेषां श्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् । 'न निर्धारणे' (२.२.१०/७०४) इति प्रतिषेधे प्राप्ते वचनमिदम् । सर्वशुक्ला गौः ।।

## न निर्धारणे । (१०/७०४)

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते । निर्धारणे या षष्ठी सा न समस्यते । जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । क्षत्रियो मनुष्याणां शूरतमः । कृष्णा गवां सम्पन्नक्षीरतमा । धावन्नध्वगानां शीघ्रतमः ।

[८९] प्रतिपदविधाना च षष्ठी न समस्यते इति वक्तव्यम् । (म.भा.१.४१३)

सर्पिषो ज्ञानम् । मधुनो ज्ञानम्[14] (२.३.५१/६१२) ।।

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । (११/७०५)

पूरण गुण सुहितार्थ सत् अव्यय तव्य समानाधिकरण इत्येतैः सह षष्ठी न समस्यते । अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन स्वरूपविधिर्न भवति । [15]पूरणार्थे – छात्राणां पञ्चमः । छात्राणां दशमः । गुण – बलाकायाः शौक्ल्यम् । काकस्य कार्ष्ण्यम् । सुहितार्थास्तृप्त्यर्थाः – [16]फलानां सुहितः । फलानां तृप्तः । सत्[17] (३.२.१२७/३१०६) – ब्राह्मणस्य कुर्वन् । [18]ब्राह्मणस्य कुर्वाणः । अव्यय – ब्राह्मणस्य कृत्वा[19] । ब्राह्मणस्य हृत्वा । तव्य-(३.१.९६/२८३४) – ब्राह्मणस्य [20]कर्तव्यम् । तव्यता सानुबन्धकेन समासो भवत्येव, ब्राह्मणकर्तव्यम्[21] । समानाधिकरण – शुकस्य [22]माराविदस्य । राज्ञः पाटलिपुत्रकस्य । [23]पाणिनेः सूत्रकारस्य (म. भा. १. ४१४) । किं च स्यात् ? [24]पूर्वनिपातस्यानियमः स्यात् । [25]अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७/७३६) इति भवत्येव समासः । पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव ।।

---

1. तृजकाभ्यां इत्यधिकम् क. ड. 2. पुनर्वचनमारभ्यते इ, वचनमिदं प्रतिप्रसवार्थम् ब. क. ड. 3. सह नास्ति फ. 4. ब्राह्मणस्य याजकः इत्यधिकम् क. 5. क्षत्रियाणां याजकः । ब्राह्मणपूजकः इत्यधिकम् क. 6. परिवेषक क, परिवेष्टकः ब. 7. स्नापक क. ड. फ. 8. नास्ति ब. 9. नास्ति फ. 10. हर्तृ इत्यधिकम् क, कर्तृ इत्यधिकम् इ. 11. इति याजकादयः इत्यधिकम् ड. फ. 12. न तु तद्विशेषणैः । घृतस्य तीव्रो गन्धः । चन्दनस्य मृदुर्गन्धः । इत्यधिकम् क. 13. गुणात्तरेण–गौः नास्ति फ. ड. 14. 'ज्ञोऽविदर्थस्य करणे' इति षष्ठी इत्यधिकम् क. ड. इ. 15. पूरणे ब. इ. ह. 16. उदाहरणमिदं नास्ति ब. 17. शतृशानचौ सत्सञ्ज्ञौ भवतः इत्यधिकम् इ. 18. उदाहरणमिदं नास्ति फ. 19. वृषलस्य कृत्वा इत्यधिकम् क. फ. ह. 20. हर्तव्यम् क. 21. इति इत्यधिकम् क. 22. माराविकस्य क. ड. इ. फ. 23. उदाहरणमिदं नास्ति फ. 24. पूर्वपदनिपातस्य इ. 25. अनन्तरायां – विशेषणस्यैव नास्ति फ. ह.

## क्तेन च पूजायाम् । (१२/७०६)

'मतिबुद्धिपूजार्थेभ्यश्च' (३.२.१८८/३०८९) इति वक्ष्यति, तस्येदं ग्रहणम् । पूजाग्रहणमुपलक्षणार्थम् । क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते । [1]राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । पूजायाम् इति किम् ? छात्रस्य हसितम् छात्रहसितम् ॥

## अधिकरणवाचिना च । (१३/७०७)

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३.४.७६/३०८७) इति वक्ष्यति, तस्येदं ग्रहणम् । अधिकरण[2]वाचिना क्तेन[3] षष्ठी न समस्यते । [4]इदमेषां [5]यातम् । इदमेषां भुक्तम्[6] ॥

## कर्मणि च । (१४/७०८)

क्तेन इति निवृत्तम् । कर्मग्रहणं षष्ठीविशेषणम् । कर्मणि च या षष्ठी सा न समस्यते । 'उभयप्राप्तौ कर्मणि' (२.३.६६/६२४) इति[7] षष्ठ्या इदं ग्रहणम् । आश्चर्यो गवां दोहोऽ[8]गोपालकेन । रोचते[9] ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं [10]देवदत्तेन । विचित्रा[11] सूत्रस्य कृतिः पाणिनिना[12] ॥

## तृजकाभ्यां कर्तरि । (१५/७०९)

कर्तृग्रहणं षष्ठीविशेषणम् । कर्तरि या षष्ठी सा तृचा अकेन च [13]सह न समस्यते । भवतः शायिका । भवत [14]आसिका । भवतोऽग्रगामिका (३.३.१११/३२८८)। तृच् कर्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति । तस्मात् तृज्-ग्रहणमुत्तरार्थम् । कर्तरि इति किम्? इक्षुभक्षिकां मे [15]धारयसि ॥

## कर्तरि च । (१६/७१०)

कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्यादकस्य [16]विशेषणार्थं कर्तृग्रहणम्, [17]इतरत्र व्यभिचाराभावात् । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्ता । ननु [18]च भर्तृशब्दो ह्ययं[19] याजकादिषु पठ्यते? सम्बन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम् । [20]अकः खल्वपि—ओदनस्य भोजकः । सक्तूनां [21]पायकः (७.३.३३/२७६१) ॥

---

1. राज्ञां बुद्धः—हसितम् नास्ति फ, पूजायां—हसितम् नास्ति ह. 2. °वाचिनां च क. 3. सह इत्यधिकम् फ. 4. इदमेषामासितम् इत्यधिकम् क.फ. 5. पानम् ब, गतम् ड. 6. इदमेषामपक्रान्तम् इत्यधिकम् फ. 7. अस्याः इत्यधिकम् क. ड. फ. ह. 8. अशिक्षितेन अ.क.ड.फ.ग, अशिक्षितेनापि ह. 9. मे इत्यधिकम् क. इ. फ. 10. यज्ञदत्तेन ड.फ. 11. हि इत्यधिकम् इ. 12. इति इत्यधिकम् फ. 13. सह नास्ति फ. 14. आस्तिका फ. 15. धारय इ. 16. विशेषणम् फ. 17. इतरद्व्यभि° इ. 18. च नास्ति फ. 19. अयं नास्ति फ. 20. अकेन क.इ.फ. 21. पाचकः इ.

## नित्यं क्रीडाजीविकयोः । (१७/७११)

न इति निवृत्तम्, [1]न तृजकौ । [2]नित्यं समासो विधीयते । क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । तृच् क्रीडाजीविकयोर्नास्ति [3]इत्यक एवोदाह्रियते । उद्दालकपुष्पभञ्जिका (३.३.१०९/३२८६)[4] । [5]वारणपुष्पप्रचायिका । जीविकायाम् – दन्तलेखकः । नखलेखकः । क्रीडाजीविकयोः इति किम्? ओदनस्य भोजकः[6] ॥

## कुगतिप्रादयः । (१८/७६१)

नित्यम् इति [7]वर्तते । कुशब्दोऽव्ययं गृह्यते गत्यादिसाहचर्यात्, न द्रव्यवचनः । कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति । कुः पापार्थे (म.भा. १.४१६)––कुपुरुषः । गति – [8]उररीकृतम् । [9]यदूरीकरोति । प्रादयः –– दुर्निन्दायाम् (म.भा. १.४१६) – दुष्पुरुषः । स्वती पूजायाम् (म. भा. १.४१६) – सुपुरुषः । अतिपुरुषः । [10]आङ ईषदर्थे (म.भा. १.४१६) – आपिङ्गलः । प्रायिकं चैतदु[11]पाधिवचनम् । अन्यत्रापि हि समासो दृश्यते । कोष्णम् (६.३.१०५/१०३१) । कदुष्णम् (६.३.१०१/१०२७) । [12]कवोष्णम् (६.३.१०७/१०३३) । दुष्कृतम् । [13]अतिस्तुतम् । आबद्धम् इति ।

[९०] प्रादयो [14]गताद्यर्थे प्रथमया । (म.भा. १.४१६)

प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी ।

[९१] अत्यादयः क्रान्ताद्यर्थे द्वितीयया । (म.भा. १.४१६)

अतिक्रान्तः खट्वाम् अतिखट्वः । अतिमालः ।

[९२] अवादयः क्रुष्टाद्यर्थे तृतीयया । (म.भा. १.४१६)

अवक्रुष्टः कोकिलया अवकोकिलः[15] ।

[९३] पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । (म.भा. १.४१६)

परिग्लानोऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै अलंकुमारिः ।

[९४] निरादयः क्रान्ताद्यर्थे पञ्चम्या । (म.भा. १.४१६)

निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । निर्वाराणसिः ।

[९५] इवेन [16]सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । (म.भा. १.४१६)

वा॑ससी इव । व॒स्त्रे॑ इव[17] ।

[९६] प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । (म.भा. १.४१६)

वृक्षं प्रति विद्योतते [18]विद्युत् । साधुर्देवदत्तो मातरं प्रति ॥

---

1. न तृजकौ नास्ति क.ड.इ.फ.ह, तेन इत्यधिकम् ब. 2. नित्यसमासो ड.फ. 3. इत्यत एव ह. 4. नित्यसमासत्वादस्वपदविग्रहः इत्यधिकम् अ.क. 5. वाण° क.ड, वरणपुष्पचायिका ब. 6. नित्यग्रहणमुत्तरार्थम् इत्यधिकम् ह. 7. अनुवर्तते ड. 8. उररीकृत्य, ऊरीकृत्य ड.ह.फ. 9. नास्ति क.फ. 10. आङ ईषदर्थे नास्ति फ. 11. उपाधेर्वचनम् ग. 12. नास्ति फ. 13. सुष्टुतम् क.ग.फ. 14. गतात्यर्थे फ. 15. वसन्तः इत्यधिकम् क.ड. 16. सह समासः नास्ति ड.फ.ह. 17. कन्येव इत्यधिकम् ह. 18. विद्युत् नास्ति फ.

## उपपदमतिङ् । (१९/७१२)

नित्यम् इति वर्तते । उपपदमतिङन्तं[1] समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति । कुम्भकारः । नगरकारः । अतिङ इति किम् (म.भा.१. ४१७) ? एधानाहारको व्रजति ।

ननु च सुप् सुपा इति वर्तते (म. भा. १. ४१७), तत्र [2]कुतस्तिङन्तेन समासप्रसङ्गः ? [3]एवं तर्हि ज्ञापयति एतयोर्योगयोः सुप् सुपेति न सम्बध्यते इति । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' (व्या. प. १३८) इत्येतदुपपन्नं भवति । अश्वक्रीती । धनक्रीती (४.१.५०/५०६) ॥

## अमैवाव्ययेन । (२०/७८३)

पूर्वेण समासे सिद्धे नियमार्थं[4] वचनम् । अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन । स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारं भुङ्क्ते । लवणङ्कारं [5]भुङ्क्ते । अमैव इति किम् ? 'कालसमयवेलासु तुमुन्' (३. ३. १६७/३१७९) – कालो भोक्तुम्[6] । [7]एवकारकरणमुपपदविशेषणार्थम् । अमैव यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत् तुल्यविधानं तस्य मा भूत् । अग्रे भुक्त्वा, अग्रे भोजम् (३. ४. २४/३३४५) (म. भा. १. ४१८) ॥

## तृतीयाप्रभृतीन्यतरस्याम् । (२१/७८४)

अमैव इत्य[8]नुवर्तते । 'उपदंशस्तृतीयायाम्' (३. ४. ४७/३३६८) [9]इत्यतः प्रभृति यान्युपपदानि तानि अमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उभयत्रविभाषेयम् । यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा 'उपदंशस्तृतीयायाम्' (३. ४. ४७/३३६८) इति । [10]यत् पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (३. ४. ५९/३३८१) इति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं [11]भुङ्क्ते । उच्चैःकारमाचष्टे, उच्चैः कारम् । अमैव इत्येव, 'पर्याप्तिवचनेष्वलमर्थेषु' (३. ४. ६६/३१७८), पर्याप्तो भोक्तुम् । प्रभुर्भोक्तुम् ॥

## क्त्वा च । (२२/७८५)

अमैव इति पूर्वयोगे[12]ऽनुवृत्तम् । [13]तेनान्यत्र न प्राप्नोति इति [14]वचनमारभ्यते । क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीनि उपपदान्यन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उच्चैःकृत्य । उच्चैः कृत्वा । 'अव्ययेऽयथाभिप्रेताख्याने' (३. ४. ५९/३३८१) इति क्त्वा[15]प्रत्ययः । [16]समासपक्षे ल्यबेव[17] । तृतीया-प्रभृतीनीत्येव, अलं कृत्वा । खलु कृत्वा ॥

---

1. च समर्थं इत्यधिकम् क, समर्थं यत् पदं इत्यधिकम् ड. 2. कुतः तिङः प्रसङ्गः ब.क.ड.इ, तिङप्रसंगः क. 3. एतत् [illegible] फ. ड. 4. इदं इत्यधिकम् क. 5. भुङ्क्ते नास्ति फ. 6. वेला भोक्तुं, समयो भोक्तुम् इत्यधिकम् क. ड. फ. ह. 7. एवकारः उपपदविशेषणार्थः फ. 8. अनु नास्ति फ. 9. इत्येतद्प्रभृतीनि ग, इत्यतः प्रभृतीनि क. 10. तत् फ. 11. भुङ्क्ते नास्ति फ. 12. निवृत्तं ह. 13. तेन पूर्वेण क. 14. वचनमिदं ह. 15. प्रत्ययः नास्ति फ. 16. समास नास्ति फ. 17. एव नाति क.

## शेषो बहुव्रीहिः । (२३/८२९)

उपयुक्तादन्यः[1] शेषः । [2]शेषः समासो बहुव्रीहिसञ्ज्ञो भवति । कश्च शेषः? यत्रान्यः समासो नोक्तः । वक्ष्यति 'अनेकमन्यपदार्थे' (२.२.२४/८३०) – चित्रगुः । शबलगुः । कृष्णोत्तरासङ्गः । शेषः इति किम् ? उन्मत्तगङ्गम् । [3]लोहितगङ्गम् (२.१.२१/६७५) । बहुव्रीहिप्रदेशाः — 'न बहुव्रीहौ' (१.१.२९/२२२) इत्येवमादयः ॥

## अनेकमन्यपदार्थे (२४/८३०)

अनेकं [4]सुबन्तमन्यपदार्थे वर्तमानं [5]सुपा सह समस्यते, बहुव्रीहिश्च समासो भवति । प्रथमार्थमेकं[6] वर्जयित्वा [7]सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । चित्रगुर्देवदत्तः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न भवति । वृष्टे देवे गतः । अनेकग्रहणं किम् ? बहूनामपि यथा स्यात्,

सुसूक्ष्मजटकेशेन [8]सुगजाजिनवाससा ।
[9]समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥ (म.भा.१.४२२)

[९७] बहुव्रीहिः [10]समानाधिकरणानामिति वक्तव्यम् । (म.भा.१.४२३)

व्यधिकरणानां मा भूत्, पञ्चभिर्भुक्तमस्य ।

[९८] अव्ययानां च [11]बहुव्रीहिर्वक्तव्यः । (म.भा.१.४२३)

उच्चैर्मुखः । नीचैर्मुखः ।

[९९] सप्तम्युपमान[12]पूर्वपदस्योत्तरपदलोपश्च [13]वक्तव्यः । (म.भा.१.४२३)

कण्ठे स्थितः कालोऽस्य [14]कण्ठेकालः । उरसिलोमा[15] । [16]उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः । खरमुखः (म. भा. १. ४२३) ।

[१००] [17]समुदायविकारषष्ठ्याश्च [18]बहुव्रीहिरुत्तरपद[19]लोपश्चेति वक्तव्यम् । (म. भा. १. ४२५)

[20]केशानां सङ्घातः केशसङ्घातः, केशसङ्घातः चूडाऽस्य केशचूडः । [21]सुवर्णस्य विकारोऽलङ्कारोऽस्य [22]सुवर्णालङ्कारः ।

---

1. यः स इत्यधिकम् फ. 2. शेषसमासः क, समासः नास्ति फ. ह. 3. नास्ति ब. क. ड. फ. 4. समर्थं फ. 5. सुपा सह विभाषा क. 6. एकं नास्ति फ. ह. 7. सर्वविभ° फ.ह. 8. सुनताजिन (म. भा. 1. 420) इ. फ, सुलभाजिनवाससा बा. शा. पृ. 111, सुप्ताजा° ब. 9. पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता बा. शा. पृ. 111, नास्ति ब. फ. ह. 10. समानाधिकरणानां वक्तव्यः इ. 11. बहुव्रीहिर्वक्तव्यः नास्ति क. ड. इ. फ. ह. 12. °पूर्वस्योत्तर° ड. फ. 13. वक्तव्यः नास्ति इ. फ़. 14. स इत्यधिकम् फ. 15. उरसिसूत्रः, उदरेमणिः इत्यधिकम् ड. फ. 16. उष्ट्रमुखमिव फ, उष्ट्रस्य मुखं अस्य ड. 17. समुदाये विकारे च क. 18. बहुव्रीहेः इ. 19. °लोपो वक्तव्यः ड.इ.फ. 20. केशसमाहारः चूडाऽस्य इ, केशानां समूहः केशसमूहः, केशसमूहः चूडा अस्य फ, केशानां समाहारः चूडा अस्य ब. क, केशानां समाहारात् ड. 21. सुवर्णविकारो क. ह, सुवर्णो विकारः अस्य इ, स्वर्णरूपस्य फ. 22. स स्वर्णालंकारः फ.

[१०१] प्रादिभ्यो [1]धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः । (म.भा. १.४२४)

प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः । प्रपतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः ।

[१०२] नञोऽस्त्यर्थानां बहुव्रीहिर्वा [2]चोत्तरपदलोपश्च [3]वक्तव्यः । (म.भा. १.४२४)

[4]अविद्यमानः पुत्रो यस्य अपुत्रः, अविद्यमानपुत्रः । [5]अभार्यः, अविद्यमानभार्यः ।

[१०३] [6]सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः । (म.भा. १.४२४)

अस्तिक्षीरा ब्राह्मणी । अस्त्यादयो निपाताः ॥

## सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये । (२५/८४३)

सङ्ख्येये या सङ्ख्या वर्तते तया सह अव्ययासन्नादूराधिकसङ्ख्याः[7] समस्यन्ते बहुव्रीहिश्च समासो भवति । अव्यय – उपदशाः । उपविंशाः[8] । आसन्नदशाः । आसन्नविंशाः[9] । अदूरदशाः । अदूरविंशाः[10] । अधिकदशाः । अधिकविंशाः[11] । सङ्ख्या – द्वित्राः । त्रिचतुराः । द्विदशाः[12] । सङ्ख्यया इति किम्? पञ्च ब्राह्मणाः । [13]अव्ययासन्नादूराधिकसङ्ख्याः इति किम्? ब्राह्मणाः पञ्च । सङ्ख्येये इति किम्? अधिका विंशतिर्गवाम् ॥

## दिङ्नामान्यन्तराले । (२६/८४५)

दिशां नामानि [14]दिङ्नामानि । दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं [15]दक्षिणपूर्वा दिक् । पूर्वोत्तरा । उत्तरपश्चिमा । पश्चिमदक्षिणा ।

[१०४] सर्वनाम्नो वृत्तिमात्रे [16]पुंवद्भावः । (म. भा. १.४२९)

नामग्रहणं रूढ्यर्थम् । इह मा भूत्, ऐन्द्रयाश्च कौबेर्याश्च दिशोर्यदन्तरालम् [17]इति ॥

## तत्र तेनेदमिति सरूपे । (२७/८४६)

तत्र इति सप्तम्यन्तं गृह्यते । तेन इति तृतीयान्तम् । [18]सरूपग्रहणं प्रत्येकमभिसम्बध्यते । तत्र इति [19]सप्तम्यन्ते सरूपे पदे तेनेति [20]च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते[21], बहुव्रीहिश्च समासो भवति । [22]इतिकरणश्चेह [23]विवक्षार्थो लौकिकमर्थमनुसारयति । [24]ततो ग्रहणं, प्रहरणं, कर्मव्यतीहारो, युद्धं च समासार्थः [25]इति

---

1. धातुजस्य वाच्यो वा उत्तरपदलोपश्च ड. इ. 2. उत्तरपदलोपः नास्ति ब. 3. वक्तव्यः नास्ति ह. 4. अविद्यमान – अभार्यः नास्ति ब. 5. अविद्यमाना भार्या यस्य इत्यधिकम् क. ड. 6. सुबन्ताधिकारे अस्तिक्षीरादिवचनं क.ड.इ.ह. 7. इत्येते इत्यधिकम् क. 8. उपत्रिंशाः इत्यधिकम् क.ड.इ.फ. 9. आसन्नत्रिंशाः इत्यधिकम् क.ड.इ.फ. 10. अदूरत्रिंशाः इत्यधिकम् क.ड.इ.फ. 11. अधिकत्रिंशाः इत्यधिकम् क. ड. इ. फ. 12. त्रिदशाः इत्यधिकम् क.फ. 13. अव्यया-पञ्च नास्ति फ. 14. दिङ्नामानि नास्ति ब.क.इ.फ. 15. तत् इत्यधिकम् ड. 16. पुंवद्भावनामग्रहणं ब. 17. तद् इत्यधिकम् ड. 18. वाक्यमिदं नास्ति ब. 19. सरूपेण तेन फ, सप्तम्यन्तसरूपे इ. 20. च नास्ति क, तृतीयान्ते नास्ति ड. 21. इति इत्यधिकम् ह. 22. इति करणस्ततश्च सिद्धम् फ, इतिकरणश्चेद् ड, तदर्थे च ह. 23. विवक्षा क. 24. तत्र इ. 25. सर्वे इतिकरणाल्लभ्यन्ते ब, इति सर्वं लभ्यते क.ड.इ.फ ह.

सर्वमितिकरणाल्लभ्यते। यत् तत्र इति निर्दिष्टं ग्रहणं चेत् तद् भवति, यत् तेन इति निर्दिष्टं प्रहरणं चेत् तद् भवति, यत् इदम् इति निर्दिष्टं युद्धं चेत् तद् भवति। केशेषु केशेषु [1]च गृहीत्वा [2]इदं युद्धं [3]प्रवृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि। मुसलामुसलि। 'इच् कर्मव्यतीहारे' (५.४.१२७/८६६) इति इच् समासान्तः, स [4]चाव्ययम्। 'अन्येषामपि दृश्यते' (६.३.१३७/३५३९) इति पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम्? हलैश्च मुसलैश्च[5] प्रहृत्य इदं युद्धं प्रवृत्तम्॥

## तेन सहेति तुल्ययोगे। (२८/८४८)

सह इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेन इति तृतीयान्तेन [6]सह समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः सपुत्रः[7]। सच्छात्रः[8]। [9]सकर्मकरः। तुल्ययोगे इति किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी[10]। विद्यमानैरेव दशभिः पुत्रैर्भारं वहति इत्यर्थः। कथं सकर्मकः, सलोमकः, सपक्षकः इति? न ह्यत्र तुल्ययोगो गम्यते। किं तर्हि? विद्यमानता। प्रायिकं तुल्ययोगे इति विशेषणम्। अन्यत्रापि[12] समासो दृश्यते॥

## चार्थे द्वन्द्वः। (२९/९०१)

अनेकम् इति वर्तते। अनेकं सुबन्तं[13] चार्थे वर्तमानं समस्यते, द्वन्द्वसञ्ज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोग[14]समाहाराश्चार्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्यात् नास्ति समासः। इतरेतरयोगे समाहारे च समासो[15] विधीयते। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। [16]वाक् च त्वक् च वाक्त्वचम्। [17]वाग्दृषदम्[18]। द्वन्द्वप्रदेशाः — 'द्वन्द्वे च' (१.१.३१/२२४) इत्येवमादयः॥

## उपसर्जनं पूर्वम्। (३०/६५४)

समासे [19]इति वर्तते। उपसर्जनसञ्ज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया – कष्टश्रितः। तृतीया – शङ्कुलाखण्डः। चतुर्थी – यूपदारु। पञ्चमी – वृकभयम्। षष्ठी – राजपुरुषः। सप्तमी – अक्षशौण्डः॥

---

1. च नास्ति ब. 2. इदं नास्ति क. 3. कृतं फ, वृत्तम् इ. 4. अव्ययः क. 5. च प्रहृत्य नास्ति ड. 6. सह नास्ति फ. 7–8. आगतः इत्यधिकम् ड. फ. 9. सकर्मकराः ब, सपक्षकः इत्यधिकम् क. 10. सत्स्वेव दशपुत्रेषु सैव भारस्य वाहिका इत्यधिकम् ब. 11. बहुभिः ब. क. इ. 12. हि इत्यधिकम् क. इ. 13. समर्थं इत्यधिकम् फ. 14. समाहाराश्चेति इ. 15. विधीयते नास्ति ब. फ. 16. उदाहरणमिदं नास्ति फ. 17. स्रग्दृषदम् इत्यधिकम् फ, शमीदृषदम् इत्यधिकम् ड. 18. द्वन्द्वाच्चुदषहान्तात् समाहारे इति टच् इत्यधिकम् फ. 19. इत्यनुवर्तते ड.

## राजदन्तादिषु परम् । (३१/९०२)

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम् । राजदन्तादिषु [1]उपसर्जनं परं प्रयोक्तव्यम् । न केवलमुपसर्जनस्य, अन्यस्यापि [2]यथालक्षणं विहितस्य पूर्वनिपातस्या[3]यमपवादः परनिपातो विधीयते । दन्तानां राजा राजदन्तः । वनस्य अग्रे [4]अग्रेवणम् । निपातनादलुक् ।

राजदन्तः । [5]अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । [6]सिक्तसंमृष्टम् । [7]मृष्टलुञ्चितम् । [8]अवक्लिन्नपक्वम् । [9]अर्पितोप्तम् । उप्तगाढम् । पूर्वकालस्य परनिपातः ।

उलूखलमुसलम् । तण्डुलकिण्वम् । दृषदुपलम् । [10]आरग्वायनबन्धकी । चित्ररथबाह्लीकम् । [11]आवन्त्यश्मकम् । [12]शूद्रार्यम् । स्नातकराजानौ । विष्वक्सेनार्जुनौ । अक्षिभ्रुवम् । दारगवम् ।

शब्दार्थौ । [13]धर्मार्थौ । कामार्थौ । अनियमश्चात्रेष्यते । अर्थशब्दौ । अर्थधर्मौ । अर्थकामौ[14] । तत् कथम् ? वक्तव्यमिदम् धर्मादिषु उभयम् इति ।

[15]वैकारिमतम् । [16]गजवाजम् । [17]गोपालधानीपूलासम् । पूलासककरण्डम् । स्थूलपूलासम् । उशीरबीजम् । सिञ्जास्थम् । चित्रास्वाती । भार्यापती । जायापती । जम्पती । दम्पती । जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते । पुत्रपती । पुत्रपशू । केशश्मश्रू । श्मश्रुकेशौ । शिरोबीजम् । सर्पिर्मधुनी । मधुसर्पिषी । आद्यन्तौ । अन्तादी । गुणवृद्धी । वृद्धिगुणौ[18] ॥

## द्वन्द्वे घि । (३२/९०३)

पूर्वम् इति वर्तते । द्वन्द्वे समासे घ्यन्तं (१.४.७/२४३) पूर्वं प्रयोक्तव्यम् । [19]पटुगुप्तौ । मृदुगुप्तौ । [20]अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः । पटुमृदुशुक्लाः । पटुशुक्लमृदवः । द्वन्द्वे इति किम् ? विस्पष्टपटुः ॥

## अजाद्यदन्तम् । (३३/९०४)

द्वन्द्वे इति वर्तते[21] । अजाद्यदन्तं[22] शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । [23]उष्ट्रखरम् । [24]उष्ट्रशशकम् ।

[१०५] बह्वष्वनियमः । (म. भा. १. ४३६)

[25]अश्वरथेन्द्राः । इन्द्ररथाश्वाः ।

[१०६] द्वन्द्वे घ्यजाद्यदन्तं[26] विप्रतिषेधेन । (म. भा. १. ४३८)

[27]इन्द्राग्नी । इन्द्रवायू । तपरकरणं किम् ? [28]अश्वावृषौ, वृषाश्वे [30]इति वा ॥

1. परं उपसर्जनं ब. क. 2. घ्यादेः इत्यधिकम् क. इ. 3. अपवादः नास्ति ब. क. फ. 4–5. अग्रेवनम् इ. 6. सिक्तसंसृष्टम् ब. इ. 7. मृष्टलुचितम् फ, भृष्टलुञ्चितम् इ, भृष्टरुचितं क, हृष्टमुदितं ह. 8. अप° इ. 9. अर्पितोदम् इ. 10. आरदायनिबन्धकी ब, आरग्वायनचाटन्धकी फ. 11. अवन्त्यश्मकम् ब. इ. क, अधरोष्ठं इत्यधिकम् क. 12. शूद्राचार्यम् ह. 13. नास्ति क. इ. फ. 14. चन्द्रार्कौ, अर्कचन्द्रौ इत्यधिकम् क. 15. वैयाकरणमतम् क. ड, वैकारिकमतम् फ. 16. गोजाविजम् फ. 17. गोपालीधानीपूलासम् फ. इ. 18. भीष्मद्रोणौ, द्रोणभीष्मौ, चन्द्रादित्यौ, आदित्यचन्द्रौ, चन्द्रराहू, राहुचन्द्रौ, ग्रीष्मवसन्तौ, वसन्तग्रीष्मौ, शुक्रशुची, शुचिशुक्रौ, करभरासभौ, रासभकरभौ इत्यधिकम् क. ड. 19. पटुपुत्रौ फ. 20. द्वन्द्वे समासे सर्वोपसर्जनत्वात् पूर्वनिपातो न प्राप्नोति, पर्यायेण वा प्राप्ते नियमार्थं वचनम् इत्यधिकम् ड. 21. पूर्वमिति च इत्यधिकम् क. इ. 22. च इत्यधिकम् फ. 23. नास्ति ब. क इ. 24. उष्ट्रशशम् ब. क. ड. इ. 25. अश्वेन्द्राः फ. 26. रूपं इत्यधिकम् क. 27. नास्ति फ. 28. अश्ववृषौ, वृषाश्वौ इ. 29. इति वा नास्ति फ, वा नास्ति ग.

## अल्पाच्तरम् । (३४/९०९)

[1]द्वन्द्वे इति वर्तते । अल्पाच्तरं शब्दरूपं [2]द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । प्लक्षश्च न्यग्रोधश्च [3]प्लक्षन्यग्रोधौ[4] । धवखदिरपलाशाः । बहुष्वनियमः – शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः ।

[१०७] ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः । (म.भा. १.४३६)

हेमन्तशिशिरवसन्ताः । [5]चित्रास्वाती । कृत्तिकारोहिण्यौ । समानाक्षराणाम् इति किम्? ग्रीष्मवसन्तौ ।

[१०८] लघ्वक्षरं पूर्वं [6]निपततीति वक्तव्यम् । (म.भा. १.४३६)

कुशकाशम् । [7]शरशादम् ।

[१०९] अभ्यर्हितं च [8]पूर्वं निपततीति वक्तव्यम् । (म.भा. १.४३६)

मातापितरौ । श्रद्धामेधे । दीक्षातपसी[9] ।

[११०] वर्णानामानुपूर्व्येण [10]पूर्वनिपातः । (म.भा. १.४३६)

ब्राह्मणक्षत्रियविट्शूद्राः । समानाक्षराणाम् इत्यत्र नास्ति[11] ।

[१११] भ्रातुश्च ज्यायसः [12]पूर्वनिपातो वक्तव्यः । (म.भा. १.४३७)

युधिष्ठिरार्जुनौ[13] ।

[११२] सङ्ख्याया अल्पीयस्याः [14]पूर्वनिपातो वक्तव्यः । (म.भा. १.४३७)

द्वित्राः । त्रिचतुराः । नवतिशतम् ॥

## सप्तमीविशेषणे बहुव्रीहौ । (३५/८९८)

सर्वोपसर्जनत्वाद् बहुव्रीहेरनियमे प्राप्ते [15]नियमार्थं वचनम्[16] । सप्तम्यन्तं विशेषणं च [17]बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कण्ठेकालः । उरसिलोमा[18] । [19]विशेषणम्—चित्रगुः । शबलगुः ।

[११३] सर्वनामसङ्ख्ययोरुपसङ्ख्यानम् । (म.भा. १.४३७)

सर्वश्वेतः । सर्वकृष्णः । द्विशुक्लः । द्विकृष्णः । अनयोरेव [20]मिथः संप्रधारणायां परत्वात् सङ्ख्यायाः पूर्वनिपातः । द्व्यन्यः । त्र्यन्यः ।

---

1. वाक्यमिदं नास्ति ड. इ. फ. ह. 2. द्वन्द्वसमासे ड. 3. प्लक्षन्यग्रोधम् ड. ह. 4. धवाश्वकर्णम् इत्यधिकम् ब.क.फ.ड. 5. नास्ति ड.फ. 6. निपतेदिति ब, इति वक्तव्यम् नास्ति ह.फ. 7. शरबीजम् ब.क.इ.फ, शरशीर्षम् ड. 8. पूर्वं – वक्तव्यम् नास्ति क.फ. 9. श्रद्धातपसी इत्यधिकम् क. 10. पूर्वनिपातः नास्ति क.ग. इ.फ. 11. इति इत्यधिकम् इ. 12. पूर्वनिपातो वक्तव्यः नास्ति क.ड.इ.फ. 13. संकर्षणवासुदेवौ इत्यधिकम् क.ड.ग. 14. पूर्वनिपातो वक्तव्यः नास्ति क.ड.इ.ह. 15. नियमार्थम् नास्ति फ. 16. इदं इत्यधिकम् फ. 17. बहुव्रीहौ समासे फ.ह. 18. उदरेमणिः इत्यधिकम् ड.फ. 19. विशेषणे इ, नास्ति फ. 20. एकत्रसमसं° ब.

[११४] वा प्रियस्य [1]पूर्वनिपातः । (म.भा. १.४३७)

[2]गुडप्रियः, प्रियगुडः ।

[११५] सप्तम्याः पूर्वनिपाते [3]प्राप्ते गड्वादिभ्यः सप्तम्यन्तं [4]परम् । (म.भा. १.४३७)

गडुकण्ठः । गडुशिराः । कथं वहेगडुः ? प्राप्तस्य चाबाधा व्याख्येया ॥

## निष्ठा । (३६/८९९)

निष्ठान्तं च [5]बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । कृतकटः । [6]भिक्षितभिक्षिः । अवमुक्तोपानत्कः । [7]आहूतसुब्रह्मण्यः । ननु [8]च विशेषणमेवात्र[9] निष्ठा ? नैष नियमः, [10]विशेषणविशेष्यभावस्य विवक्षा[11]निबन्धनत्वात् । कटे[12] कृतमनेन इति [13]वा विग्रहीतव्यम्[14] ।

[११६] निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् । (म.भा. १.४३७)

[15]शार्ङ्गजग्धी । [16]पलाण्डुभक्षिती । [17]मासजातः । संवत्सरजातः । [18]सुखजातः । दुःखजातः । कथं कृतकटः, [19]भुक्तौदनः ? प्राप्तस्य चाबाधा व्याख्येया ।

[११७] प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् । (म.भा. १.४३८)

अस्युद्यतः[20] । दण्डपाणिः[21] । कथम् [22]उद्यतगदः, उद्यतासिः[23]? प्राप्तस्य चाबाधा व्याख्येया ॥

## वाऽऽहिताग्न्यादिषु । (३७/९००)

निष्ठा इति [24]पूर्वनिपाते प्राप्ते विकल्प उच्यते । आहिताग्न्यादिषु निष्ठान्तं [25]पूर्वं वा प्रयोक्तव्यम् । अग्न्याहितः, आहिताग्निः । [26]जातपुत्रः, पुत्रजातः । जातदन्तः । जातश्मश्रुः । तैलपीतः । [27]घृतपीतः । ऊढभार्यः । गतार्थः । आकृतिगणश्चायम्, तेन गडुकण्ठप्रभृतय इहैव द्रष्टव्याः ॥

## कडाराः कर्मधारये । (३८/७५१)

गुणशब्दानां विशेषणत्वात् पूर्वनिपाते प्राप्ते विकल्प उच्यते । कडारादयः [28]कर्मधारये समासे वा पूर्वं [29]प्रयोक्तव्याः । कडारजैमिनिः, जैमिनिकडारः ।

---

1. पूर्वनिपातः नास्ति ड.इ. 2. गुरुप्रियः, प्रियगुरुः क. 3. प्राप्ते नास्ति इ. 4. परं वचनम् फ, परवचनं क.ड.इ.ह. 5. बहुव्रीहौ क.इ.ह. 6. भक्षितभिक्षः ब.इ, भिक्षितभिक्षः क. 7. आहूतसुब्राह्मणः ड, °सुब्राह्मण्यः क. 8. च नास्ति इ. 9. अत्र नास्ति फ. 10. विशेषण नास्ति फ. 11. °निबन्धत्वात् क. 12. कटेन वा इत्यधिकम् पमं. 13. वा नास्ति फ. 14. कृतकटः इत्यधिकम् क. 15. सारङ्गजग्धी क. ड. इ. 16. नास्ति फ, पलाण्डुभक्षती इ, °भक्षितः ब. 17. मासयातः फ. 18. सुखयातः फ. 19. भुक्तौदनः नास्ति फ. 20. मुसलोद्यतः इत्यधिकम् क. 21. असिपाणिः इत्यधिकम् क. 22. उद्यतगदः नास्ति ह. 23. इति इत्यधिकम् क. 24. नित्ये इत्यधिकम् ह. 25. वा पूर्वं ड. 26. जातपुत्रः नास्ति ह, पुत्रजातः नास्ति ब. क. 27. मद्यपीतः इत्यधिकम् ड. 28. कर्मधारयसमासे क.ड.इ. 29. प्रयोज्याः क.

कडार। गडुल। काण। [1]खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर।

कर्मधारये इति किम्? कडारपुरुषो ग्रामः ॥

इति श्रीजयादित्यविरचितायां [2]काशिकायां वृत्तौ

द्वितीयाध्यायस्य द्वितीय पादः[3] ॥

———(०)———

1. खोडः क.ङ.फ, स्तोमः इत्यधिकम् क. 2. काशिकावृत्तौ क. 3. समाप्तः इत्यधिकम् क.

## द्वितीयाध्यायस्य तृतीयः पादः

### अनभिहिते । (१/५३६)

अनभिहिते इत्यधिकारो[1]ऽयं वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामः, अनभिहिते इत्येवं [2]तद् वेदितव्यम् । अनभिहिते अनुक्ते, [3]अनिर्दिष्टे कर्मादौ[4] विभक्तिर्भवति । केनानभिहिते ? तिङ्कृत्तद्धितसमासैः परिसङ्ख्यानम् (म. भा. १. ४४०) । वक्ष्यति, 'कर्मणि द्वितीया' (२. ३. २/५३७) -- कटं करोति । ग्रामं गच्छति[5] । अनभिहिते इति किम् ? [6]तिङ -- क्रियते [7]कटः । [8]कृत् -- कृतः [9]कटः । [10]तद्धितः -- [11]शत्यः । शतिकः[12] (५. १. २१/१६८६) । समासः -- प्राप्तमुदकं [13]यं ग्रामं प्राप्तोदको ग्रामः ।

परिसङ्ख्यानं किम् ? कटं करोति भीष्ममुदारं दर्शनीयम् (म. भा. १. ४४०) । 'बहुषु बहुवचनम्' (१. ४. २१/१८७) इत्येवमादिना सङ्ख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, तत्र विशेषणार्थमिदमारभ्यते -- अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्याः (म. भा. १. ४४०) [14]इति ॥

### कर्मणि द्वितीया । (२/५३७)

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः । कर्मणि कारके या सङ्ख्या तत्र द्वितीया विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति ।

[११८] उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ (म. भा. १. ४४४)

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग् देवदत्तम्[15] । उपर्युपरि [16]ग्रामम् । अध्यधि [17]ग्रामम् । अधोऽधो ग्रामम् ।

[११९] [18]अभितःपरितःसमयानिकषाहा[19]प्रतियोगेषु च दृश्यते । (म. भा. १. ४४३)

अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा [20]देवदत्तम् । बुभुक्षितं न प्रति भाति किञ्चित् (म. भा. १. ४४३) ॥

### तृतीया च होश्छन्दसि । (३/३३९४)

कर्मणि इति वर्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते । चशब्दात् सा [21]च भवति । छन्दसि विषये जुहोतेः [22]कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च । 'यवाग्वाऽग्निहोत्रं जुहोति' (शां. श्रौ. सू. ३. १२. १६) । 'यवागूमग्निहोत्रं जुहोति' (शां. श्रौ. सू. ३. १२. १६) । छन्दसि इति किम् ? [23]यवागूमग्निहोत्रं जुहोति ॥

---

1. अयं नास्ति ब. ह, वेदितव्यः नास्ति ङ. 2. तद् नास्ति ब. फ. 3. अनिर्दिष्टे नास्ति ङ. 4. द्वितीया इत्यधिकम् फ. 5. ओदनं पचति इत्यधिकम् ह. 6. तिङा ह. 7. घटः फ. 8. कृता ह. 9. घटः फ, हृतो भारः इत्यधिकम् फ. 10. तद्धितेन ह. 11. शतेन क्रीतः इत्यधिकम् क. ङ. इ. फ. ह, शत्यः पटः क, नास्ति ब. 12. साहस्रः इत्यधिकम् क. ङ. 13. यं नास्ति ङ. फ. 14. इति नास्ति इ. फ. 15. जाल्मं इत्यधिकम् ह, धिग् जाल्मान् इत्यधिकम् फ. ग. 16–17. लोकम् ग. 18. अभितः नास्ति ग. 19. °प्रतियोगे ङ. 20. ग्रामम् इ. 21. अपि भवेत् ह, अपि ङ. 22. कर्मकारके फ, कारके नास्ति ङ. 23. यवागूं जुहोति इ. फ, यवागूः जुहोति ह.

## अन्तराऽन्तरेण युक्ते । (४/५४२)

द्वितीया [1]स्वर्यते, न तृतीया । अन्तरान्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते । [2]आभ्यां योगे द्वितीया विभक्तिर्भवति । षष्ठ्यपवादोऽयं योगः । [3]तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे । अन्तरेणशब्दस्तु [4]तच् च विनार्थं च । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः[5] (म.भा. १. ४४५) । अन्तरेण पुरुषकारं न किंचिल्लभ्यते । [6]युक्तग्रहणं किम् ? अन्तरा तक्षशिलां च पाटलिपुत्रं [7]स्रुघ्नस्य प्राकारः ॥

## कालाध्वनोरत्यन्तसंयोगे । (५/५५८)

[8]कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने । क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धः अत्यन्तसंयोगः । मासमधीते । संवत्सरमधीते । मासं कल्याणी । संवत्सरं कल्याणी । मासं गुडधानाः । संवत्सरं गुडधानाः । [9]अध्वनः खल्वपि – क्रोशमधीते । योजनमधीते । क्रोशं कुटिला नदी (म.भा. १. ४४६) । योजनं कुटिला नदी । क्रोशं पर्वतः । योजनं पर्वतः । अत्यन्तसंयोगे इति किम् ? [10]मासस्य द्विरधीते[11] । क्रोशस्यैकदेशे पर्वतः ॥

## अपवर्गे तृतीया । (५/५६३)

[12]कालाध्वनोरत्यन्तसंयोगे इति वर्तते । अपवर्गः फलप्राप्तौ सत्यां [13]क्रियापरिसमाप्तिः । अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति । [14]मासेनानुवाकोऽधीतः । [15]संवत्सरेणानुवाकोऽधीतः । अध्वनः –– क्रोशेनानुवाकोऽधीतः । [16]योजनेनानुवाकोऽधीतः । अपवर्गे इति किम् ? [17]क्रोशमधीतोऽनुवाकः । मासमधीतः । [18]कर्तव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति । मासमधीतोऽनुवाकः, [19]न चानेन गृहीतः (म.भा. १.४४६) ॥

## सप्तमीपञ्चम्यौ कारकमध्ये । (७/६४३)

कालाध्वनोः इति वर्तते । कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः । अद्य भुक्त्वा देवदत्तो[20] द्व्यहे भोक्ता द्व्यहाद् वा भोक्ता (म.भा. १.४४६) । त्र्यहे[21] त्र्यहाद् वा भोक्ता । कर्तृशक्त्योर्मध्ये कालः । इहस्थोऽयमिष्वासः क्रोशे [22]लक्ष्यं विध्यति । क्रोशा[23]ल्लक्ष्यं विध्यति (म.भा. १.४४६) । कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः । सङ्ख्यातानुदेशो न भवति, अस्वरितत्वात् ॥

## कर्मप्रवचनीययुक्ते द्वितीया । (८/५४८)

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति । 'अनु[24]र्लक्षणे' (१.४.८४/५४७) – शाकल्यस्य संहितामनु [25]प्रावर्षत् । [26]आगस्त्यमन्वसिञ्चत् प्रजाः ॥

---

1. सार्यते ब, स्मर्यते क.ग.ह. 2. ताभ्यां ड, आभ्यां च फ. 3. अत्रान्तरा ड. 4. तं ड. 5. तव मम च मध्ये कमण्डलुः इत्यर्थः इत्यधिकम् अ. 6. युक्त इति किम् फ.ग.ह. 7. च इत्यधिकम् ड.ह. 8. कालवाचिभ्योऽध्ववाचिभ्यश्च शब्देभ्यः ग. 9. अध्वनि ह, खलु नास्ति क.ड.फ. 10. मासस्य द्व्यहमधीते ह. 11. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे इति षष्ठी इत्यधिकम् ड. 12. कालाध्वनोः नास्ति ड.ह.फ. 13. क्रिया नास्ति ड, क्रियासमाप्तिः फ. 14. प्राप्तेन इत्यधिकम् ब. 15. उदाहरणमिदं नास्ति फ. 16. उदाहरणमिदं नास्ति ब. 17. उदाहरणमिदं नास्ति ड, अनुवाकः नास्ति फ. 18. कर्तुर्व्यावृत्तौ तु ह. 19. न वा अनेन क. 20. अयं इत्यधिकम् ड. 21. भोक्ता इत्यधिकम् ड. 22. 23. लक्षं फ. 24. लक्षणे नास्ति ब.क.ड. 25. प्रावर्धत ग. 26. अनडुह्यज्ञमन्वसिञ्चत् प्रजाः फ.ह.

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । (९/६४५)

कर्मप्रवचनीययुक्त इति वर्तते । यस्मादधिकं [1]यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति । उप (१. ४. ८७/५५१) खार्यां द्रोणः । उप निष्के [2]कार्षापणम् । यस्य चेश्वरवचनम् इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति । अधि (१. ४. ९७/६४४) ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः (म. भा. १. ४४७) [3]इति । [4]द्वितीयापवादो योगः ॥

## पञ्चम्यपाङ्परिभिः । (१०/५९८)

[5]अप आङ परि इत्येतैः कर्मप्रवचनीयै[6]र्योगे पञ्चमी विभक्तिर्भवति[7] । अप (१. ४. ८८/६९६) त्रिगर्तेभ्यो वृष्टो देवः । [8]आ (१. ४. ८९/५९७) पाटलिपुत्राद् वृष्टो देवः । परि (१. ४. ८८/६९६) त्रिगर्तेभ्यो वृष्टो देवः । अपेन साहचर्यात् परेर्वर्जनार्थस्य[9] ग्रहणम्, तेनेह[10] न भवति, वृक्षं परि (१. ४. ९०/५५२) विद्योतते विद्युत् ॥

## प्रतिनिधिप्रतिदाने च यस्मात् । (११/६००)

मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । यस्मात् प्रनिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति । अभिमन्युरर्जुनतः प्रति (१. ४. ९२/५९९) । [11]प्रद्युम्नो वासुदेवतः प्रति । माषानस्मै तिलेभ्यः [12]प्रति (१. ४. ९२/५९९) यच्छति । ननु च प्रतिनिधिप्रतिदाने [13]कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने ? [14]नैष दोषः, [15]सम्बन्धसम्बन्धात् तस्यापि योगोऽस्त्येव ॥

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । (१२/५८५)

गत्यर्थानां धातूनां चेष्टाक्रियाणां [16]परिस्पन्दक्रियाणां कर्मणि कारके[17]ऽध्ववर्जिते द्वितीयाचतुर्थ्यौ[18] भवतः । ग्रामं गच्छति, ग्रामाय गच्छति । ग्रामं व्रजति, ग्रामाय व्रजति । गत्यर्थग्रहणं किम् ? ओदनं पचति । कर्मणि इति किम् ? अश्वेन व्रजति । चेष्टायाम् इति किम् ? मनसा पाटलिपुत्रं [19]गच्छति । अनध्वनि इति किम् ? अध्वानं गच्छति । [20]अध्वनीत्यर्थग्रहणम् (म. भा. १. ४४८) । पन्थानं [21]गच्छति । मार्गं [22]गच्छति । आस्थितप्रतिषेध[23]श्चायं विज्ञेयः (म. भा. १. ४४८) । [24]आस्थितः सम्प्राप्तः, [25]आक्रान्त उच्यते । यत्र तु उत्पथेन पन्थानं गच्छति, [26]तत्र भवितव्यमेव चतुर्थ्या, [27]पथे गच्छति [28]इति (म. भा. १. ४४८) । द्वितीयाग्रहणं किम् ? न चतुर्थ्येव विकल्प्येत, अपवादविषयेऽपि यथा स्यात् । ग्रामं गन्ता । ग्रामाय गन्ता । कृद्योगलक्षणा षष्ठी न भवति ॥

---

1. यत्र ह. 2. कार्षापणः ड. 3. इति नास्ति इ. फ. 4. वाक्यमिदं नास्ति ब. ड. फ. 5. कर्मप्रवचनीययुक्ते इति वर्तते इत्यधिकम् क. 6. युक्ते क. ग. इ. फ. ह. 7. द्वितीयापवादोऽयं योगः इत्यधिकम् ड. 8. उदाहरणमिदं नास्ति फ. ह. 9. इदम् इत्यधिकम् क. ड. फ, ग्रहणादिह पञ्चमी न भवति ह. 10. लक्षणादिषु इत्यधिकम् क. इ. फ. ग, लक्षणादौ इत्यधिकम् ड. 11. उदाहरणमिदं नास्ति ड. फ. ह. 12. प्रयच्छति फ. 13. कर्मप्रवचनीयसम्बन्धिसंबन्धात् ह. 14. नैष दोषः नास्ति ड. क. ड. इ. फ. 15. सम्बन्धि° क. ड. 16. परि नास्ति ब. ह. 17. अध्वनि वर्जिते ड. 18. विभक्ती इत्यधिकम् ड. ह. 19. व्रजति ग. 20. अध्वन्यत्यर्थग्रहणम् क. ड. ह. 21–22. व्रजति ग. 23. चायं नास्ति इ. 24. आस्थितः नास्ति फ, संप्राप्तः नास्ति ह. 25. आक्रान्तः नास्ति क, संक्रान्तः ब. इ. ह. 26. तत्र नास्ति फ. 27. अध्वने क, पन्थानं गच्छति ड, अध्वनि गच्छति पथा गच्छति इ. 28. इति नास्ति ह.

## चतुर्थी सम्प्रदाने । (१३/५७०)

[1]सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति । [2]उपध्यायाय गां ददाति । [3]माणवकाय भिक्षां ददाति । देवदत्ताय रोचते[4] । पुष्पेभ्यः स्पृहयति [5]इत्यादि ।

[१२०] चतुर्थीविधाने तादर्थ्य उपसङ्ख्यानम् । (म.भा. १.४४९)

यूपाय दारु । [6]कुण्डलाय हिरण्यम् । रन्धनाय स्थाली । [7]अवहननायोलूखलम्[8] ।

[१२१] [9]क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या । (म.भा. १.४४९)

मूत्राय कल्पते [10]यवागूः । उच्चाराय कल्पते यवागूः । [11]क्लृपि इत्यर्थनिर्देशः । मूत्राय सम्पद्यते यवागूः । मूत्राय जायते यवागूः ।

[१२२] [12]उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या । (म.भा. १.४४९)

वाताय कपिला विद्युदातपायातिलोहिनी ।
[13]पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्[14] ॥ (म.भा. १.४४९)

[१२३] हितयोगे चतुर्थी वक्तव्या । (म.भा. १.४५०)

[15]गोभ्यो हितम् । अरोचकिने हितम्[16] ॥

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः । (१४/५८१)

क्रियार्था [17]क्रिया उपपदं यस्य[18] सोऽयं क्रियार्थोपपदः । 'तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्' (३.३.१०/३१७५) इत्येष विषयो लक्ष्यते । क्रियार्थोपपदस्य [19]च स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति । द्वितीयापवादो योगः । एधेभ्यो व्रजति । [20]पुष्पेभ्यो व्रजति । क्रियार्थोपपदस्य इति किम् ? प्रविश पिण्डीम् । प्रविश तर्पणम् । भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः । कर्मणि इति किम् ? एधेभ्यो व्रजति शकटेन । स्थानिनः इति किम् ? एधानाहर्तुं व्रजति ॥

## तुमर्थाच्च भाववचनात् । (१५/५८२)

तुमुना समानार्थस्तुमर्थः । तुमर्थभाववचनप्रत्ययान्तात् [21]प्रातिपदिकाच् चतुर्थी विभक्तिर्भवति । 'भाववचनाश्च' (३.३.११/३१८०) इति वक्ष्यति, तस्येदं ग्रहणम् । पाकाय व्रजति । त्यागाय व्रजति । भूतये व्रजति । [22]संपत्तये व्रजति । तुमर्थात् इति किम् ? पाकः । त्यागः । रागः । भाववचनात् इति किम् ? कारको (३.३.१०/३१७५) व्रजति ॥

---

1. संप्रदानकारके ग. 2. देवदत्ताय ह. 3. उदाहरणमिदं नास्ति ड. 4. मोदकः इत्यधिकम् क.इ.फ. ड.ह.ग. 5. देवदत्ताय क्रुध्यति । देवदत्ताय राध्यति । देवदत्ताय गां प्रतिशृणोति । होत्रेऽनुगृह्णाति इत्यधिकम् ह, इत्यादि नास्ति क.ग.ड.फ. 6. उदाहरणमिदं नास्ति फ. 7. उदाहरणमिदं नास्ति ह. 8. इति इत्यधिकम् क. 9. कृपि इ. 10. यवान्नम् ड.इ.ग.फ, उदाहरणमिदं नास्ति ह. 11. कृपि ड. 12. उत्पाते फ. 13. पीता भवति सस्याय म.भा. 14. इत्यादि इत्यधिकम् इ. 15. उदाहरणमिदं नास्ति फ. 16. हितमामयाविने इत्यधिकम् क.ड.इ.फ. 17. क्रिया नास्ति ह. 18. स्थानिनः इत्यधिकम् फ. 19. च नास्ति फ. 20. फलेभ्यः क.द.फ, उदाहरणमिदं नास्ति ड. 21. प्रातिपदिकात् नास्ति इ. 22. संमतये ड, संमते ह, सन्नतये ग.

## नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च । (१६/५८३)

[1]नमः स्वस्ति स्वाहा स्वधा अलम् वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । नमो देवेभ्यः (मै. १. २. १३) । स्वस्ति प्रजाभ्यः । स्वाहा अग्नये (तै. १.८.१३.१) । स्वधा पितृभ्यः (मै. १.२.१३) । अलं मल्लो मल्लाय (म.भा. १.४५०) । अलमिति पर्याप्त्यर्थग्रहणम् (म. भा. १.४५०) । [2] प्रभुर्मल्लो मल्लाय । [3]शक्तो मल्लो मल्लाय (म. भा. १.४५०) । वषडग्नये । [4]वषडिन्द्राय (ऋ. ७.९७.७) । चकारः [5]पुनरस्यैव समुच्च-यार्थः । तेना[6]शीर्विवक्षायामपि षष्ठीं बाधित्वा [7]चतुर्थ्येव भवति । स्वस्ति [8]गोभ्यो भूयात् । [9]स्वस्ति ब्राह्मणेभ्यः[10] (म. भा. १.४५०) ॥

## मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । (१७/५८४)

[11]मन्यतेः कर्मणि मन्यकर्मणि । मन्यकर्मणि [12]प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्य-माने । अनादरस्तिरस्कारः । न [13]त्वा तृणं मन्ये, न त्वा तृणाय मन्ये । न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये । [14]मन्यतिग्रहणं किम् ? न त्वा तृणं चिन्तयामि । विकरणनिर्देशः किमर्थः ? न त्वा तृणं मन्वे[15] । अनादरे इति किम् ?

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ॥

अप्राणिषु इति किम् ? न त्वा [16]शृगालं मन्ये ।

[१२४] यदेतदप्राणिष्विति तदनावादिष्विति [17]वक्तव्यम् । (म. भा. १.४५०)

व्यवस्थितविभाषा [18]च ज्ञेया । न त्वा नावं मन्ये यावदुत्तीर्णं न नाव्यम् । न त्वाऽन्नं मन्ये यावन्न भुक्तं श्राद्धम् । प्राणिषु तूभयम् । न त्वा काकं मन्ये (म. भा. १. ४५०) । न त्वा शृगालं मन्ये । [19]इह चतुर्थी द्वितीया च भवतः – न त्वा श्वानं मन्ये, न त्वा शुने मन्ये (म. भा. १.४५०) । युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म ? व्यवस्थितविभाषाविज्ञानादेव न [20]भवति ॥

---

1. नम इत्यादिभिर्योगे ग. 2. तेन इत्यधिकम् ग, उदाहरणमिदं नास्ति फ. 3–4. उदाहरणे इमे न स्तः ग. 5. पुनरसौ इ. 6. आशीर्विषये ह. 7. चतुर्थी विभक्तिः ह. 8. गोब्राह्मणेभ्यो ह. 9. उदाहरणमिदं नास्ति ग. 10. भूयात् । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । तेन नमस्करोति देवान् इति द्वितीया एव भवति इत्यधिकम् क. ड. 11. मन्यतेः कर्म मन्यकर्म तस्मिन् ड. इ. 12. प्राणिगणवर्जिते क. 13. त्वां ड. 14. मन्यतेर्ग्रहणं ड. 15. मनुमहे, मनुर्बोधने, तनोतेरुः इत्यधिकम् क, मनु बोधने इत्यधिकम् इ, मनु अवबोधने इत्यधिकम् ड. 16. सृकालं ग. 17. वचनमेतत् ह. 18. विज्ञेया क. ड. इ. ह, चेयं विज्ञेया फ. ग, अवज्ञेया ब. 19. न हि चतुर्थी भवति इ, इह हि चतुर्थी भवति क. ड. ह. 20. भविष्यति ड.

## कर्तृकरणयोस्तृतीया । (१८/५६१)

कर्तरि करणे च कारके तृतीया विभक्तिर्भवति । देवदत्तेन कृतम् । यज्ञदत्तेन [1]भुक्तम् । करणे – दात्रेण लुनाति । परशुना छिनत्ति ।

[१२५] तृतीयाविधाने [2]प्रकृत्यादीनामुपसङ्ख्यानम् । (म. भा. १.४५२)

प्रकृत्याऽभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकः । [3]प्रायेण वैयाकरणः । गार्ग्योऽस्मि गोत्रेण । समेन धावति । [4]विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् [5]क्रीणाति । [6]साहस्रेणाश्वान् क्रीणाति (म. भा. १.४५२) ॥

## सहयुक्तेऽप्रधाने । (१९/५६४)

सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति । पुत्रेण सहागतः पिता[7] । पुत्रेण सह गोमान् । पितुरत्र [8]क्रियादिसम्बन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान [9]इति तस्याप्राधान्यम् । सहार्थेन च योगे तृतीयाविधानात् [10]पर्यायप्रयोगेऽपि भवति, पुत्रेण [11]सार्धम् इति । विनाऽपि सहशब्देन भवति, 'वृद्धो यूना°' (१.२.६५/९३१) इति [12]निदर्शनात् । अप्रधाने इति किम् ? शिष्येण सहोपाध्यायस्य गौः ॥

## येनाङ्गविकारः । (२०/५६५)

अङ्गशब्दोऽत्रा[13]ङ्गसमुदाये [14]शरीरे वर्तते, येन इति च तदवयवो हेतुत्वेन निर्दिश्यते । येनाङ्गेन विकृतेना-ङ्गिनो विकारो लक्ष्यते, ततस्तृतीया विभक्तिर्भवति[15] । अक्ष्णा काणः । पादेन खञ्जः । पाणिना [16]कुण्ठः । अवयवधर्मेण समुदायो व्यपदिश्यते । अङ्गविकारः इति किम् ? [17]अक्षि काणमस्य (म. भा. १.४५३) ॥

## इत्थम्भूतलक्षणे । (२१/५६६)

[18]कञ्चित् प्रकारं प्राप्तः इत्थम्भूतः । तस्य लक्षणमित्थम्भूतलक्षणम् । [19]ततस्तृतीया विभक्तिर्भवति[20] । अपि भवान् कमण्डलुना छात्रमद्राक्षीत् (म. भा. १.४५३) ? छात्रेणोपाध्यायम् । [21]शिखया परिव्राजकम् । इह न भवति, कमण्डलुपाणिश्छात्रः इति, लक्षणस्य समासेऽन्तर्भूतत्वात् । [22]इत्थम्भूतः इति [23]किम् ? वृक्षं प्रति [24]विद्योतनम् ॥

---

1. कृतम् ड. इ. ह. 2. प्रकृत्यादिभ्यः ड. इ. ह, प्रकृत्यादिभिः ग. 3. उदाहरणमिदं नास्ति फ. ग. 4. उदाहरणमिदं नास्ति फ. 5. परिक्रीणाति क. 6. उदाहरणमिदं नास्ति फ, क्रीणाति नास्ति ड, सहस्रेण क्रीणाति इ. 7. पुत्रेण सह स्थूलः इत्यधिकम् क. इ. फ, पिता पुत्रेण सह स्थूलः इत्यधिकम् ह. 8. क्रियाभिसम्बन्धः ड. इ. 9. तस्मात् प्राधान्यं क. 10. पर्याययोगे इ. 11. साकम् क. ड. फ. 12. निपातनात् क. ड. इ. फ. 13. अङ्गसमुदायिनि ड. 14. शरीरे नास्ति ह. 15. विकृतिः हानिः इत्यधिकम् अ. 16. कुणिः अ. ग. 17. अक्षिकाणं पश्य क. 18. किंचित्प्रकारं इ. फ. 19. तत्र ड. 20. श्वेतच्छत्रेण राजानमद्राक्षीत् इत्यधिकम् ह. 21. शिखण्डया ह. 22. इत्थंभूतः – विद्योतनम् नास्ति ग. ह. 23. किम् नास्ति फ. 24. विद्योतते विद्युत् क.

## सञ्ज्ञोऽन्यतरस्यां कर्मणि । (२२/५६७)

सम्पूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया[1]विभक्तिर्भवति । पित्रा सञ्जानीते, पितरं सञ्जानीते । मात्रा सञ्जानीते, मातरं सञ्जानीते[2] (म. भा. १.४५४) ॥

## हेतौ । (२३/५६८)

फलसाधनयोग्यः पदार्थो लोके [3]हेतुरुच्यते । [4]तद्वाचिनस्तृतीया विभक्तिर्भवति । धनेन कुलम् । कन्यया शोकः । विद्यया यशः[5] ॥

## अकर्तर्यृणे पञ्चमी । (२४/६०१)

हेतौ इति वर्तते । कर्तृवर्जितं यदृणं हेतुः, ततः पञ्चमी विभक्तिर्भवति । तृतीयाऽपवादो योगः । शताद् बद्धः । सहस्राद् बद्धः । अकर्तरि इति किम् ? [6]शतेन बन्धितः । शतमृणं च भवति, [7]प्रयोजकत्वाच्च कर्तृसञ्ज्ञकम् ॥

## विभाषा गुणेऽस्त्रियाम् । (२५/६०२)

हेतौ इति वर्तते । [8]गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति । जाड्याद् बद्धः, जाड्येन बद्धः । [9]पाण्डित्यान् मुक्तः, [10]पाण्डित्येन मुक्तः । [11]गुणग्रहणं किम् ? धनेन कुलम् । अस्त्रियाम् इति किम् ? बुद्ध्या मुक्तः । प्रज्ञया मुक्तः ॥

## षष्ठी हेतुप्रयोगे । (२६/६०७)

हेतोः प्रयोगः हेतुप्रयोगः । [12]हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति । [13]अन्नस्य हेतोर्वसति ॥

## सर्वनाम्नस्तृतीया च । (२७/६०८)

[14]सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति, षष्ठी च । पूर्वेण षष्ठ्यामेव प्राप्तायां[15]मिदमुच्यते। केन हेतुना वसति, कस्य हेतोर्वसति । येन हेतुना वसति, यस्य हेतोर्वसति ।

[१२६] निमित्तकारणहेतुषु सर्वासां [16]प्रायदर्शनम् । (म.भा. १.४५४)

---

1. विभक्तिः नास्ति इ. 2. संपूर्वः इति किम्? मातरं जानाति । पितरं जानाति । कर्मणि इति किम्? स्वरेण पुत्रं सञ्जानीते इत्यधिकम् अ. 3. हेतुरित्युच्यते ड.फ, हेतुरुच्यते लोके क.इ. 4. ततः ह, तत्र ग. 5. दारिद्र्येण कार्श्यम् इत्यधिकम् ह. 6. देवदत्तेन इत्यधिकम् ड. 7. प्रयोजककर्तृत्वाच्च कर्तृसञ्ज्ञा इ, प्रयोजककर्तृत्वाच्च ह. 8. गुणहेतौ इ.फ. 9–10. पारिचित्यात्, पारिचित्येन मुक्तं फ. 11. गुणे इति किम् फ. 12. हेतु–हेतौ नास्ति फ, हेतुशब्दप्रयोगे ह. 13. अध्ययनस्य क.ड.इ.फ. 14. हेतुप्रयोगे इति अनुवर्तते । सर्वनाम्नः तृतीयाविभक्तिर्भवति षष्ठी च हेतुशब्दप्रयोगे इत्यधिकम् ड. 15. इदं वचनम् ड, वचनमारभ्यते ग. 16. प्रदर्शनम इ.

किंनिमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्ताय वसति, कस्मान्निमित्ताद् वसति, कस्य निमित्तस्य वसति, कस्मिन् निमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्।

अर्थग्रहणं चैतत्। [1]पर्यायोपादानं तु [2]स्वरूपविधिर्मा विज्ञायि इति। तेनेहापि भवति--किं प्रयोजनं वसति, [3]केन प्रयोजनेन वसति, कस्मै प्रयोजनाय वसति, कस्मात् प्रयोजनाद् वसति, कस्य प्रयोजनस्य वसति, कस्मिन् प्रयोजने वसति ॥

## अपादाने पञ्चमी। (२८/५८७)

अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। [4]पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात् पराजयते[5]।

[१२७] पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसङ्ख्यानम्। (म.भा. १.४५५)

प्रासादमा[6]रुह्य प्रेक्षते, प्रासादात् प्रेक्षते।

[१२८] अधिकरणे चोपसङ्ख्यानम्। (म.भा. १.४५५)

आसने उपविश्य प्रेक्षते, आसनात् प्रेक्षते। [7]शयनात् प्रेक्षते।

[१२९] प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या। (म.भा. १.४५५)

कुतो भवान्? पाटलिपुत्रात्[8]।

[१३०] यतश्चाध्वकालनिर्माणं [9]तत्र पञ्चमी वक्तव्या। (म.भा. १.४५५)

[10]गवीधुमतः साङ्काश्यं चत्वारि योजनानि। कार्तिक्या आग्रहायणी मासे।

[१३१] [11]तद्युक्तात् काले सप्तमी [12]वक्तव्या। (म.भा. १.४५५)

कार्तिक्या आग्रहायणी मासे।

[१३२] अध्वनः प्रथमा सप्तमी च [13]वक्तव्या। (म.भा. १.४५५)

[14]गवीधुमतः साङ्काश्यं चत्वारि योजनानि, चतुर्षु योजनेषु [15]वा ॥

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। (२९/५९९)

अन्य आरात् इतर ऋते दिक्शब्द अञ्चूत्तरपद आच् आहि इत्येतै[16]र्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो[17]देवदत्तात्। भिन्नो [18]देवदत्तात्। अर्थान्तरं देवदत्तात्।

---

1. पर्यायोपादानः ह. 2. स्वरूपविधिना विज्ञायि क. 3. केन – प्रयोजने वसति नास्ति इ. 4. उदाहरणमिदं नास्ति ग.ड. 5. यवेभ्यो गाः वारयति। उपाध्यायादधीते। शृङ्गाच्छरो जायते। हिमवतो गंगा प्रभवति इत्यधिकम् ह, सार्थाद्धीनः इत्यधिकम् क.ड.ह, रथात् पतति इत्यधिकम् ड.फ. 6. अधिकृत्य ड. 7. उदाहरणमिदं नास्ति फ. 8. अहं आयातः इत्यधिकम् ग. 9. ततः ड. 10. गवां धुमतः ड. 11. वार्त्तिकमिदं नास्ति फ. 12. च वाच्या इ. 13. वाच्या इ. 14. गवां ड, गवेधुमतः ब. 15. वा नास्ति ड. 16. युक्ते क.इ.फ. 17–18. यज्ञदत्तात् क. ड.

विलक्षणो देवदत्तात्। आराच्छब्दो [1]दूरान्तिकार्थे वर्तते। तत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (२. ३. ३४/६११) इति प्राप्ते पञ्चमी विधीयते। आराद् देवदत्तात्। [2]आराद् यज्ञदत्तात्। इतर इति [3]निर्दिश्यमानप्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्[4]। ऋते [5]इति अव्ययं [6]वर्जनार्थे। ऋते देवदत्तात्। [7]ऋते यज्ञदत्तात्। दिक्शब्दः -- पूर्वो [8]ग्रामात् पर्वतः। उत्तरो ग्रामात्। [9]पूर्वो ग्रीष्माद् वसन्तः। [10]उत्तरो ग्रीष्मो वसन्तात्। दिक्शब्द इत्यत्र शब्दग्रहणं [11]देशकालवृत्तिनाऽपि [12]दिक्शब्देन योगे यथा स्यात्, इतरथा हि दिग्वृत्तिनैव स्यात्, [13]इयमस्याः पूर्वा इति। [14]इह तु न स्यात्, अयमस्मात् [15]पूर्वः कालः इति। अञ्चूत्तरपद -- प्राग् ग्रामात्। प्रत्यग् ग्रामात् (म. भा. १.४५६)। ननु चायमपि दिक्शब्द एव। 'षष्ठ्यतसर्थप्रत्ययेन' (२.३.३०/६०९) इति वक्ष्यति, तस्यायं [16]पुरस्तादपकर्षः। आच् -- दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि -- दक्षिणाहि ग्रामात्[17]। उत्तराहि ग्रामात्॥

## षष्ठ्यतसर्थप्रत्ययेन। (३०/६०९)

'दक्षिणोत्तराभ्यामतसुच्' (५. ३. २८/१९७८) इति वक्ष्यति, [18]तस्येदं ग्रहणम्। अतसर्थेन [19]प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। [20]पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य (म. भा. १.४५६)॥

## एनपा द्वितीया। (३१/६१०)

'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (५. ३. ३५/१९८४) इति वक्ष्यति। तेन [21]युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण [22]ग्रामम्। षष्ठ्यपीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः॥

## पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्। (३२/६०३)

[23]पञ्चमीग्रहणमनुवर्तते। पृथक् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति, अन्यतरस्यां [24]पञ्चमी च। पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्। पृथग्विनानानाभिः [25]इति योगविभागो[26] द्वितीयार्थः।

विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ॥

---

1. दूरान्तिकयोः ब. क. ड. इ. ह. 2. उदाहरणमिदं नास्ति ड. ह. 3. प्रतिनिर्दिश्य॰ इ, निर्दिश्यमानस्य फ, निर्दिश्यमाने क. 4. इतरो यज्ञदत्तात् इत्यधिकम् क. 5. शब्दः ग, इत्ययं शब्दः वर्जनार्थे वर्तते ड. 6. वर्जनार्थम् क. इ. फ. 7. उदाहरणमिदं नास्ति ड, ऋते विष्णुमित्रात् क. 8. यानात् इ. 9. वाक्यमिदं नास्ति ड. 10. उदाहरणमिदं नास्ति फ. 11. देशकालवृत्तीनामपि योगे फ. 12. दिक्शब्देन नास्ति क. इ. 13. दिगियं ग्रामात् पूर्वा क. ह. 14. इह च न स्यात् कालविवक्षायाम् ड, नास्ति फ. 15. पूर्वकालः ड. 16. पुरस्तात् नास्ति फ. 17. वसन्ति चाडाण्लाः इत्यधिकम् क. 18. तस्येदं ग्रहणम् नास्ति इ, इदं नास्ति फ. 19. प्रत्ययान्तेन फ. 20. पुरो ग्रामस्य ड. इ. फ, पूर्वो ग्रामस्य क, पुरतो ग्रामस्य ह. 21. योगे इ. 22. हिमवन्तं क. 23. पञ्चमी इति वर्तते ह. 24. पञ्चमी नास्ति फ. 25. इति नास्ति फ. 26. कर्तव्यः इत्यधिकम् इ. ह.

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य । (३३/६०४)

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारके[1]ऽन्यतरस्यां तृतीया [2]भवति । पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करणे इत्येव सिद्धा । यदा [3]तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता । स्तोकान्मुक्तः, [4]स्तोकेन मुक्तः । [5]अल्पान् मुक्तः, अल्पेन मुक्तः । कृच्छ्रान्मुक्तः, कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः, कतिपयेन मुक्तः । असत्त्ववचनस्य इति किम् ? स्तोकेन [6]विषेण हतः । अल्पेन [7]मधुना मत्तः । करणे इति किम् ? क्रियाविशेषणे कर्मणि मा भूत्, स्तोकं [8]मुञ्चति ॥

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । (३४/६११)

पञ्चमी [9]अनुवर्तते । दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवति, अन्यतरस्यां [10]पञ्चमी च । दूरं ग्रामस्य, दूरं ग्रामात् (म.भा. १.४५७) । विप्रकृष्टं ग्रामस्य, विप्रकृष्टं ग्रामात् । अन्तिकं ग्रामस्य, अन्तिकं ग्रामात् । अभ्याशं ग्रामस्य, अभ्याशं ग्रामात् । अन्यतरस्यांग्रहणं [11]पञ्चम्यर्थम् । इतरथा हि तृतीया पक्षे स्यात् ॥

## दूरान्तिकार्थेभ्यो द्वितीया च । (३५/६०५)

पञ्चमी अनुवर्तते । दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात् [12]पञ्चमी तृतीयाऽपि समुच्चीयते । दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण ग्रामस्य (म.भा. १.४५७) । अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य । [13]प्रातिपदिकार्थे विधानम् । असत्त्ववचनग्रहणं चानुवर्तते । [14]सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति । दूरः पन्थाः, दूराय पथे देहि[15], दूरस्य पथः स्वम् ॥

## सप्तम्यधिकरणे च । (३६/६३३)

[16]सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च । कटे आस्ते । शकटे आस्ते । [17]स्थाल्यां पचति । दूरान्तिकार्थेभ्यः खल्वपि – दूरे ग्रामस्य । अन्तिके ग्रामस्य । [18]अभ्याशे ग्रामस्य । दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः ।

[१३३] सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्[19] । (म. भा. १.४५८)

अधीती व्याकरणे । [20]परिगणिती याज्ञिके । आम्नाती छन्दसि ।

---

1. अन्यतरस्यां नास्ति ग. 2. विभक्तिः इत्यधिकम् फ. 3. च ड. इ, धर्म्यमात्रं ड. 4–5. स्तोकेन मुक्तः, अल्पान्मुक्तः नास्ति ह. 6. विषयेण ह. 7. सीधुना ड. फ. ह. 8. पचति ब. क, चलति ड, चरति ह. 9. इति वर्तते ह. 10. पञ्चमी च नास्ति क. फ, च नास्ति ब. 11. तृतीयार्थं ह 12. पञ्चमीवत् क, पञ्चमी वा तृतीया च ड, पञ्चमी तृतीया च इ. 13. प्रातिपदिकस्य अर्थे ड. 14. सत्त्ववचनेभ्यः ड. इ. ग, सत्त्वशब्देभ्यो हि क. 15. इति इत्यधिकम् फ. 16. अधिकरणे कारके सप्तमी° क. 17. उदाहरणमिदं नास्ति क. ड. 18. उदाहरणमिदं नास्ति क. ड. 19. कर्तव्यम् इत्यधिकम् इ. 20. परिगृहीती ड, याज्ञिक्ये फ. ह.

[१३४] साध्वसाधुप्रयोगे च सप्तमी [1]वक्तव्या। (म. भा. १.४५८)

साधुर्देवदत्तो मातरि। [2]असाधुः पितरि (म.भा. १.४५८)।

[१३५] कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या। (म. भा. १.४५८)

ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते।

[१३६] अकारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या। (म. भा. १.४५८)

दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति।

[१३७] तद्विपर्यासे च सप्तमी वक्तव्या। (म. भा. १.४५८)

ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति।

[१३८] निमित्तात् [3]कर्मसंयोगे सप्तमी वक्तव्या। (म. भा. १.४५८)

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
[4]केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥ (म. भा. १.४५८)

## यस्य च भावेन भावलक्षणम्। (३६/७३४)

सप्तमी इति वर्तते। भावः क्रिया। यस्य [5]च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते, ततो भाववतः सप्तमी विभक्तिर्भवति। प्रसिद्धा च किया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः, दुग्धास्वागतः। अग्निषु हूयमानेषु गतः, हुतेष्वागतः (म.भा. १.४५९)। भावेन इति किम्? यो जटाभिः स [6]भुङ्क्ते। पुनर्भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः॥

## षष्ठी चानादरे। (३८/६३५)

पूर्वेण सप्तम्यां प्राप्तायां [7]षष्ठी विधीयते, चकारात् साऽ[8]पि भवति। अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्, रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य [9]प्रव्रजितः इत्यर्थः॥

---

1. वाच्या क. 2. उदाहरणमिदं नास्ति फ. 3. कर्मयोगे इ. 4. बालेषु ड. फ. हृ. 5. च नास्ति क. 6. मुक्तः ड. 7. षष्ठी विभक्तिः, सप्तमी च विभक्तिर्भवति फ. हृ. 8. च क. 9. प्राव्राजीत् ड. फ. हृ.

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । (३९/६३६)

[1]षष्ठीसप्तम्यौ वर्तेते । स्वामिन् ईश्वर [2]अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः । गवां स्वामी, गोषु स्वामी । गवामीश्वरः, गोष्वीश्वरः । गवामधिपतिः, गोष्वधिपतिः । गवां दायादः, गोषु दायादः । गवां साक्षी, गोषु साक्षी । गवां प्रतिभूः, गोषु प्रतिभूः । गवां प्रसूतः, गोषु प्रसूतः । षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम्[3] ॥

## आयुक्तकुशलाभ्यां चासेवायाम् । (४०/६३७)

षष्ठीसप्तम्यौ वर्तेते । आयुक्तः [4]व्यापारितः, कुशलः निपुणः, ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः । आसेवा तात्पर्यम् । आयुक्तः [5]कटकरणस्य, आयुक्तः [6]कटकरणे । कुशलः [7]कटकरणस्य, कुशलः [8]कटकरणे । आसेवायाम् इति किम्? आयुक्तो गौः शकटे । तत्र सप्तम्येवाधिकरणे भवति ॥

## यतश्च निर्धारणम् (४१/६३८)

षष्ठीसप्तम्यौ वर्तेते । जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । यतो [9]निर्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः । मनुष्याणां क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः । गवां कृष्णा सम्पन्नक्षीरतमा, गोषु कृष्णा सम्पन्नक्षीरतमा । अध्वगानां [10]धावन्तः शीघ्रतमा, अध्वगेषु [11]धावन्तः शीघ्रतमाः ॥

## पञ्चमी विभक्ते । (४२/६३९)

यतश्च निर्धारणम् इति वर्तते । [12]षष्ठीसप्तम्यपवादो योगः । विभागः विभक्तम् । यस्मिन् निर्धारणाश्रये विभक्तमस्यास्ति ततः पञ्चमी विभक्तिर्भवति । माथुराः पाटलिपुत्रकेभ्यः [13]सुकुमारतराः, आढ्यतराः ॥

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । (४३/६४०)

साधु निपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रतिः प्रयुज्यते । मातरि साधुः । पितरि साधुः । मातरि निपुणः । पितरि निपुणः । अर्चायाम् [14]इति किम्? साधुर्भृत्यो राज्ञः । तत्त्वकथने न [15]भवति । अप्रतेः इति किम्? साधुर्देवदत्तो मातरं प्रति (म.भा. १.४५९) ।

[१३९] अप्रत्यादिभिरिति वक्तव्यम् । (म.भा. १.४५९)

---

1. वाक्यमिदं नास्ति ड, सप्तमी इति वर्तते ह. 2. पति ड. 3. इदम् इत्यधिकम् इ. 4. व्यापृतः ड.फ. 5–8. पट° ड. 9. निर्धार्यते फ. ग. 10 – 11. धावन् शीघ्रतमः ड. ह. 12. षष्ठी–सप्तम्योरपवादः ड. 13. आढ्यतराः सुकुमारतराः दर्शनीयतराः क.ह, सुकुमाराः ड. 14. इति नास्ति फ. 15. भवति नास्ति इ.

साधुर्देवदत्तो मातरं [1]परि । मातरमनु (म.भा. १.४५९) ॥

## प्रसितोत्सुकाभ्यां तृतीया च । (४४/६४१)

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात् सप्तमी च । प्रसितः प्रसक्तः, यस्तत्र नित्यमेवा[2]वबद्धः स प्रसितशब्देनोच्यते । केशैः प्रसितः, केशेषु प्रसितः । केशैरुत्सुकः, केशेषूत्सुकः ॥

## नक्षत्रे च लुपि । (४५/६४२)

तृतीयासप्तम्यावनुवर्तेते । लुबन्तात्[3] नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः । पुष्येण (४.२.३, ४/१२०४, १२०५) पायसमश्नीयात्, पुष्ये पायसमश्नीयात् । मघाभिः पललौदनम्, मघासु पललौदनम् । नक्षत्र इति किम् ? पञ्चालेषु (४. २. ६९, ८१/१२८१, १२९३) वसति । लुपि इति किम् ? मघासु ग्रहः । इह कस्मान् न भवति, अद्य पुष्यः, अद्य कृत्तिका (म. भा. १. ४६०) ? अधिकरणे इति वर्तते । वचनं तु पक्षे तृतीयाविधानार्थम् ॥

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । (४६/५३२)

प्रातिपदिकार्थः सत्ता । [4]लिङ्गं स्त्रीलिङ्गपुंलिङ्ग[5]नपुंसकानि । परिमाणं [6]द्रोणः, खारी, आढकम् (म.भा. १. ४६१) । वचनम् [7]एकत्वद्वित्वबहुत्वानि । [8]मात्रशब्दः प्रत्येकमभिसम्बध्यते । [9]प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे प्रथमा विभक्तिर्भवति । [10]प्रातिपदिकार्थमात्रे — उच्चैः । नीचैः । लिङ्गग्रहणं किम् ? कुमारी, वृक्षः, कुण्डम् (म. भा. १. ४६१) इत्यत्रापि यथा स्यात् । परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकम् इत्यत्रापि यथा स्यात् । वचनग्रहणं किम् ? एकत्वादिषूक्तेष्वपि यथा स्यात् । एकः, द्वौ, बहवः (म. भा. १.४६१) । प्रातिपदिकग्रहणं किम्? निपातस्यानर्थकस्य [11]प्रातिपदिकत्वमुक्तं, ततोऽपि यथा स्यात् । प्रलम्बते । अध्यागच्छति ॥

## सम्बोधने च । (४७/५३३)

आभिमुख्यकरणं सम्बोधनं, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोति इति [12]वचनमारभ्यते । [13]सम्बोधने च प्रथमा विभक्तिर्भवति । [14]हे देवदत्त । हे देवदत्तौ । हे देवदत्ताः ॥

## साऽऽमन्त्रितम् । (४८/४११)

सम्बोधने या प्रथमा[15] तदन्तं [16]शब्दरूपम् आमन्त्रितसञ्ज्ञं भवति । तथा चैवोदाहृतम् । आमन्त्रित-प्रदेशाः —'[17]आमन्त्रितं पूर्वमविद्यमानवत्' (८. १. ७२/४१२) इत्येवमादयः ॥

---

1. प्रति फ. 2. एव नास्ति फ, सम्बद्धः क, निबद्धः इ. 3. च इत्यधिकम् क. 4. लिङ्गे ब. 5. °नपुंसकम् ड. ग. 6. प्रस्थादि क. ड. इ. फ. 7. एकत्वादि ड. इ. 8. वाक्यमिदं नास्ति क. ड. इ. 9. प्राति-पदिकार्थलिङ्गपरिमाणवचनमात्रे क. फ. 10. प्रातिपादिकार्थः ड, प्रातिपदिकार्थे तावत् ह. 11. प्रातिपदिकसञ्ज्ञा उक्ता ह. 12. इदं क.ड, वचनमिदं इ. 13. संबोधनार्थे ह. 14. सम्बोधनाभिव्यक्तये केचिद् हेशब्दं प्रयुञ्जते इत्यधिकम् क. 15. विहिता इत्यधिकम् क.ड. 16. शब्दरूपम् नास्ति क. 17. आमन्त्रितस्य च इत्यधिकम् ड.फ.ह.

## एकवचनं सम्बुद्धिः। (४९/१९२)

[1]आमन्त्रितप्रथमाया [2]यदेकवचनं, तत् सम्बुद्धिसञ्ज्ञं भवति। हे [3]पटो। हे देवदत्त। सम्बुद्धिप्रदेशाः – 'एङ्ह्रस्वात् सम्बुद्धेः' (६.१.६९/१९३) इत्येवमादयः॥

## षष्ठी शेषे। (५०/६०६)

कर्मादिभ्योऽन्यः प्रातिपदिकार्थ[4]व्यतिरेकः स्वस्वामिसम्बन्धादिः शेषः, तत्र [5]षष्ठी विभक्तिर्भवति। राज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः[6]॥

## ज्ञोऽविदर्थस्य करणे। (५१/६१२)

[7]जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। सर्पिषा [8]करणेन प्रवर्तते इत्यर्थः। प्रवृत्तिवचनो[9] जानातिरविदर्थः[10]। अथ वा मिथ्याज्ञानवचनः। सर्पिषि [11]रक्तः प्रतिहतो वा। चित्तभ्रान्त्या [12]तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते।[13] मिथ्याज्ञानमज्ञानमेव। अविदर्थस्य इति किम्? स्वरेण पुत्रं जानाति[14]॥

## अधीगर्थदयेशां कर्मणि। (५२/६१३)

शेषे इति वर्तते। अधीगर्थाः स्मरणार्थाः, 'दय [15]दानगतिरक्षणेषु' (धा.पा. ४८१), 'ईश ऐश्वर्ये' (धा.पा. १०२१), एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। मातुरध्येति[16]। मातुः स्मरति[17]। सर्पिषो [18]दयते। सर्पिष ईष्टे। [19]मधुन ईष्टे। कर्मणि [20]इत्येव, मातुर्गुणैः स्मरति। शेषे इति किम्? मातरं स्मरति॥

## कृञः प्रतियत्ने। (५३/६१४)

सतो गुणान्तराधानं प्रतियत्नः। करोतेः [21]कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधोदकस्योपस्कुरुते। [22]शस्त्रपत्रस्योपस्कुरुते। प्रतियत्ने इति किम्? कटं करोति। कर्मणि इति [23]किम्? एधोदकस्योपस्कुरुते [24]प्रज्ञया। शेषे इत्येव, एधोदकमुपस्कुरुते॥

---

1. सम्बोधनप्रथमायाः ह. 2. यत् तद् नास्ति फ. 3. बटो ड. फ. ह. 4. °व्यतिरिक्तः अ.ब.क.ई. 5. शेषे इत्यधिकम् क.ह. 6. शेषे सम्बन्धे यदप्रधानं तच्छेषशब्देनोच्यते। तेन उभयत्र पर्यायेण च न भवति षष्ठी इत्यधिकम् ड. 7. शेषे इत्यनुवर्तते इत्यधिकम् अ. 8. करणभूतेन क.ड.फ.इ. 9. अत्र इत्यधिकम् ग. 10. भवति इत्यधिकम् ड. 11. सक्तः फ. 12. तदा ग. 13. सर्पिषो जानीते। मधुनो जानीते इत्यधिकम् क.ड.फ.ग. 14. शेषे इत्येव, सर्पिषा जानीते इत्यधिकम् क.ड. 15. '°रक्षणहिंसादानेषु' धा.पा., रक्षणादानेषु ग. 16. पितुरध्येति इत्यधिकम् क.ड.फ.ग. 17. पितुः स्मरति इत्यधिकम् क.ड.फ.ग, मातुः स्मरति नास्ति फ. 18. धयते ग, मधुनो दयते इत्यधिकम् क.इ.ग. 19. उदाहरणमिदं नास्ति फ. 20. इति किम् अ.फ.ई. 21. कर्मकारके इ. 22. शास्त्रस्योपस्कुरुते, पत्रस्योपस्कुरुते क, शस्त्रं पत्रस्योपस्कुरुते ब, शस्त्रं यन्त्रस्योपस्कुरुते ड, काण्डं गुडस्योपस्कुरुते ह. 23. एव क. 24. प्रभया ड.

## रुजार्थानां भाववचनानामज्वरेः । (५४/६१५)

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां [1]ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । चौरस्य रुजति रोगः । चौरस्या[2]मयत्यामयः । रुजार्थानाम् इति किम् ?

[3]एति जीवन्तमानन्दो नरं वर्षशतादपि ।
[4]जीव पुत्रक मा मैवं [5]तपः साहसमाचर ॥

भाववचनानाम् इति किम् ? नदी कूलानि रुजति (म. भा. १.४६५) । अज्वरेः इति किम् ? चौरं ज्वरयति ज्वरः ।

[१४०] अज्वरिसन्ताप्योरिति वक्तव्यम् । (म. भा. १.४६५)

चौरं सन्तापयति [6]तापः । शेषे इत्येव, चौरं रुजति [7]रोगः ॥

## आशिषि नाथः । (५५/६१६)

'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' (धा.पा. ६,७) [8]पठ्यते[9], तस्याशीःक्रियस्य कर्मणि कारके [10]शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । सर्पिषो नाथते[11] । मधुनो नाथते । आशिषि इति किम् ? माणवकमुपनाथति [12]अङ्ग पुत्रकाधीष्व ॥

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । (५६/७१७)

जासि निप्रहण नाट क्राथ पिष् इत्येतेषां [13]धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति । 'जसु हिंसायाम्' (धा. पा. १६६९), 'जसु [14]ताडने' (धा.पा. १७१९) इति च चुरादौ पठ्यते, तस्येदं ग्रहणं, न दैवादिकस्य 'जसु मोक्षणे' (धा. पा. १२१२) [15]इत्यस्य । चौरस्योज्जासयति । वृषलस्योज्जासयति । निप्रहण इति सङ्घातविगृहीतविपर्यस्तस्य ग्रहणम् । चौरस्य निप्रहन्ति । [16]चौरस्य निहन्ति । [17]चौरस्य प्रहन्ति । [18]चौरस्य प्रणिहन्ति[19] । चौरस्योन्नाटयति । वृषलस्योन्नाटयति । चौरस्योत्क्राथयति । [20]वृषलस्य क्राथयति । निपातनाद् वृद्धिः । अयं हि घटादौ पठ्यते, '[21]श्रथ क्नथ क्रथ क्लथ हिंसार्थाः' (धा. पा. ७९९–८०२) इति । तत्र 'घटादयो मितः' (धा. पा. ७६३–८२२) इति [22]मित्सञ्ज्ञायां 'मितां ह्रस्वः' (६.४.९२/२५६८) इति ह्रस्वत्वं [23]स्यात् । चौरस्य पिनष्टि । वृषलस्य पिनष्टि । [24]हिंसायाम् इति किम् ? धानाः पिनष्टि । शेषे इत्येव, चौरमुज्जासयति । [25]एषाम् इति किम् ? चौरं हिनस्ति । [26]निप्रहण इति किम् ? [27]चौरं विहन्ति ।

---

1. ज्वरवर्जितानां ग, ज्वरतिवर्जितानां ह. 2. रुजति ग. 3. कल्याणी खलु गाथेयं लौकिकी प्रतिभाति मे इति पूर्वार्धः अ. 4. पङ्क्तिरियं नास्ति फ. 5. ततः साहसमाचरेः ह, तपस्तावत् त्वं समाचर ड. 6. सन्तापः ड. फ, सुतापः ब. 7. रोगः नास्ति ग. फ. 8. च इति क. ह. 9. तस्येदं ग्रहणं इत्यधिकम् क. ड. 10. शेषत्वेन विवक्षिते नास्ति ब. क. इ. ह. फ. 11. इति इत्यधिकम् फ. 12. अंगक पुत्रक ह. 13. धातूनां नास्ति फ. 14. ताटने फ. 15. इत्यस्य नास्ति फ. 16-18. चौरस्य नास्ति ड. 19. वा इत्यधिकम् ड. 20. उदाहरणमिदं नास्ति ड. फ. 21. क्रथ हिंसार्थः ड. 22. मित्त्वात् क. इ. ह. 23. यथा इत्यधिकम् इ. 24. हिंसार्थानाम् क. 25. एषाम्–विहन्ति नास्ति फ. ह, एतेषाम् ड. 26. निप्रग्रहणम् ड. 27. हन्ति चौरम् ड.

## व्यवहृपणोः समर्थयोः । (५७/६१८)

व्यवहृ पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति । द्यूते [1]क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः । शतस्य [2]व्यवहरति । [3]सहस्रस्य व्यवहरति । [4]शतस्य पणते । सहस्रस्य पणते । [5]आयप्रत्ययः कस्मान्न भवति ? [6]स्तुत्यर्थस्य [7]पणतेरायप्रत्यय इष्यते[8] । समर्थयोः इति किम् ? शलाकां व्यवहरति । [9]विक्षिपति इत्यर्थः । ब्राह्मणान् [10]पणायते । स्तौति इत्यर्थः । शेषे इत्येव, [11]शतं पणते[12] ॥

## दिवस्तदर्थस्य । (५८/६१९)

व्यवहृ[13]पणिसमानार्थस्य दीव्यतेः कर्मणि[14] षष्ठी विभक्तिर्भवति । शतस्य दीव्यति । सहस्रस्य दीव्यति । [15]तदर्थस्य इति किम् ? [16]ब्राह्मणं दीव्यति । योगविभाग उत्तरार्थः ॥

## विभाषोपसर्गे । (५९/६२०)

'दिवस्तदर्थस्य' (२.३.५८/६१९) इति [17]नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते । उपसर्गे [18]सति दिवस्तदर्थस्य कर्मणि [19]कारके विभाषा षष्ठी विभक्तिर्भवति । [20]शतस्य प्रतिदीव्यति । सहस्रस्य प्रतिदीव्यति । [21]शतं प्रतिदीव्यति । सहस्रं प्रतिदीव्यति । उपसर्गे इति किम् ? शतस्य दीव्यति । तदर्थस्य इत्येव शलाकां प्रतिदीव्यति ॥

## द्वितीया ब्राह्मणे । (६०/३३९५)

ब्राह्मणविषये[22]प्रयोगे दिवस्तदर्थस्य कर्मणि [23]कारके द्वितीया विभक्तिर्भवति । '[24]गामस्य तदहः सभायां, दीव्येयुः' (मै. सं. १.६.११.५६) । [25]अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम् । सोपसर्गस्य [26]तु छन्दसि व्यवस्थितविभाषयाऽपि सिध्यति ॥

## प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने । (६१/६२१)

प्रेष्य इति [27]इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव [28]गृह्यते । प्रेष्यब्रुवोर्हविषः [29]कर्मणः षष्ठी विभक्तिर्भवति [30]देवतासम्प्रदाने सति । '[31]अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य' (का. श्रौ. ६. ६. २६) । '[32]अग्नये छागस्य हविषो वपायै मेदसोऽनुब्रूहि३' (का. श्रौ. ६. ६. २०) । प्रेष्यब्रुवोः इति किम् ? 'अग्नये छागं हविर्वपां मेदो जुहुधि' (का.श्रौ. ६.६.२३) । हविषः इति किम्? 'अग्नये [33]गोमयानि प्रेष्य' (श.ब्रा. १२.५.२.३) । देवतासम्प्रदाने इति किम् ? माणवकाय पुरोडाशं प्रेष्य ।

[१४१] हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः । (म. भा. १. ४६६)

'[34]इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य३' (का. श्रौ. ६.६.२३) ॥

---

1. क्रयविक्रये क. ड. ह. 2. व्यवहरते क. ड. 3. उदाहरणमिदं नास्ति क. 4. उदाहरणमिदं नास्ति ह. 5. पणतेः इत्यधिकम् ड. 6. श्रुत्यर्थस्य ह. 7. पणेः फ. 8. न तु व्यवहारार्थस्य इत्यधिकम् अ. 9. परिगणयति क. ड, नास्ति ब.ई. 10. पणायति क. ड. फ. ह. 11. सहस्रं ड.इ, शते पणते ह. 12. शतं व्यवहरति इत्यधिकम् क. ड. फ. ग. 13. °पणेः इ, °पणोः ह. 14. कारके इत्यधिकम् क.ड.फ.ह. 15. तदनर्थस्य फ. 16. ब्राह्मणो दीव्यति फ, ब्राह्मणान् प्रति दीव्यति ड, ब्राह्मणान् दीव्यति ह, ब्राह्मणस्य दीव्यति क. 17. नित्यं नास्ति क. ह. 18. सति नास्ति ह. 19. कारके नास्ति बं. फ. ह. 20. उदाहरणमिदं नास्ति ग. 21. उदाहरणमिदं नास्ति फ. 22. °विषयप्रयोगे इ. 23. कारके नास्ति फ. 24. ग्रामस्य ब. क. ड. इ. फ. ह. ग. 25. नित्यं इत्यधिकम् क. ड. फ. 26. तु नास्ति ड. 27. ईष्यतेः क, प्रेष्यतेः इ. 28. उदाह्रियते ह. 29. कर्मणि ड, कर्मणि कारके ह. 30. देवतायां क. ड. 31–32. अग्नये नास्ति ह. 33. गोमयानिति इ. 34. इन्द्राग्नीभ्यां इ.

## चतुर्थ्यर्थे बहुलं छन्दसि। (६२/३३९६)

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम्। 'पुरुषमृगश्चन्द्रमसः[1]' (वा.सं. २४.३५)। 'पुरुषमृगश्चन्द्रमसे[2]'। 'गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। [3]ते वनस्पतिभ्यः' (वा.सं. २४.३५)। बहुलग्रहणं किम्? '[4]कृष्णो रात्र्यै' (का.सं. ६८.४०)। '[5]हिमवते हस्ती' (वा.सं. २४.३०)।

[१४२] षष्ठ्यर्थे चतुर्थी वक्तव्या। (म.भा. १.४६६)

'या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावते तस्यै [6]श्यावदन्। या नखानि निकृन्तते तस्यै [7]कुनखी। [8]याऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखते तस्यै खलतिः।' (तै.सं. २.५.१.६)। 'अहल्यायै जारः' (श.ब्रा. ३.३.१.१९)॥

## यजेश्च करणे। (६३/३३९७)

यजेर्धातोः करणे कारके छन्दसि[9] बहुलं षष्ठी विभक्तिर्भवति। 'घृतस्य यजते' (श.ब्रा. ४.४.२.४), [10]घृतेन यजते। 'सौम्यस्य यजते' (श.ब्रा. ४.४.२.५), [11]सोमेन यजते॥

## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। (६४/६२२)

छन्दसि बहुलम् इति निवृत्तम्। कृत्वोऽर्थानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। [12]द्विरह्नोऽधीते। [13]कृत्वोऽर्थग्रहणं किम्? [14]अह्नि शेते। रात्रौ शेते। प्रयोगग्रहणं किम्? अहनि [15]भुक्तम्। गम्यते [16]हि द्विस्त्रिश्चतुर्वेति, न त्वप्रयुज्यमाने भवति। कालग्रहणं किम्? द्विः कांस्यपात्र्यां भुङ्क्ते। [17]अधिकरणे इति किम्? [18]द्विरह्नो भुङ्क्ते। शेषे इत्येव, द्विरहन्यधीते॥

## कर्तृकर्मणोः कृति। (६५/६२३)

[19]कृत्प्रयोगे [20]कर्तरि कर्मणि च[21] षष्ठी विभक्तिर्भवति। भवतः [22]शायिका। भवत आसिका। कर्मणि—अपां स्रष्टा। 'पुरां भेत्ता' (ऋ. ८.१७.१४)। '[23]वज्रस्य [24]भर्ता' (तै.सं. १.४.२८.१)। कर्तृकर्मणोः इति किम्? [25]शस्त्रेण भेत्ता। कृति इति किम्? तद्धितप्रयोगे मा भूत्, कृतपूर्वी कटम्। [26]भुक्तपूर्व्योदनम् (म.भा. १.४६७)। शेषे इति निवृत्तम्, पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृति [27]इत्येवं ब्रूयात्॥

---

1. दातव्यः इत्यधिकम् क.ड.ह. 2. दातव्यः इत्यधिकम् ह. 3. ते नास्ति फ. 4. कला ड. 5. हिमवतो हस्ते ग. 6. श्यावकान् ह. 7. कुनखो जायते ड. 8. या–जारः नास्ति ग. 9. विषये इत्यधिकम् क.ड.इ.फ.ह. 10. आग्नेय्या फ. 11. सोम्या फ. 12. त्रिरह्नो ड. 13. कृत्वार्थ° ह. 14. अहनि फ. 15. भुङ्क्ते ड.फ. 16. द्विर्वा त्रिर्वा इति तत्त्वप्रयुज्यमानम् ड. 17. अधिकरणग्रहणं इ. 18. द्विरह्ना ड. 19. कृत्यप्रयोगे फ, कृत्प्रत्यययोगे ड. 20. कर्तृकर्मणोश्च कारकस्य इ. 21. कारके इत्यधिकम् ग, परतः इत्यधिकम् फ. 22. गामिका फ. 23. उदाहरणमिदं नास्ति ड. 24. भेत्ता इ. 25. वज्रेण ड. 26. कृतपूर्व्योदनम् इ.ह. 27. इत्येव ड.ई.

## उभयप्राप्तौ कर्मणि । (६६/६२४)

पूर्वेण [1]षष्ठी प्राप्ता नियम्यते । उभयप्राप्तौ इति बहुव्रीहिः । उभयोः प्राप्तिर्यस्मिन् [2]कृति, सोऽयमुभयप्राप्तिः । तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि । आश्चर्यो गवां दोहो[3]ऽगोपालकेन । [4]रोचते मे ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं यज्ञदत्तेन । बहुव्रीहिविज्ञानादिह [5]नियमो न भवति, आश्चर्यमिद[6]मोदनस्य नाम पाको ब्राह्मणानां च प्रादुर्भावः इति ।

[१४३] [7]अकाकारयोः [8]स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् । (म. भा. १.४६८)

भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य (म. भा. १.४६८) ।

[१४४] शेषे विभाषा । (म. भा. १.४६८)

[9]अकाकारयोः [10]स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते । शोभना हि सूत्रस्य कृतिः पाणिनेः [11]पाणिनिना वा (म. भा. १.४६८) । केचिदविशेषेणैव विभाषामिच्छन्ति, शब्दानामनुशासनमाचार्येण आचार्यस्य इति वा ॥

## क्तस्य च वर्तमाने । (६७/६२५)

'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२.३.६९/६२७) इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते । क्तस्य[12] वर्तमान[13]कालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । क्तस्य इति किम् ? ओदनं पचमानः । वर्तमाने इति किम् ? ग्रामं गतः ।

[१४५] नपुंसके भाव [14]उपसङ्ख्यानम् । (म.भा. १.४६८)

छात्रस्य हसितम् । [15]मयूरस्य नृत्तम् । कोकिलस्य [16]व्याहृतम् (म. भा. १.४६८) ।

[१४६] शेषविज्ञानात् सिद्धम् । (म. भा. १.४६८)

तथा च कर्तृविवक्षायां तृतीया[17]ऽपि भवति, [18]छात्रेण हसितम् इति ॥

---

1. षष्ठीप्राप्तं इ. ह. 2. कृति नास्ति फ, तस्मिन् ह, अस्मिन् क. 3. अशिक्षितेन क. ड. इ. फ. 4. उदाहरणमिदं नास्ति ह. 5. नियमो नास्ति ग. 6. मोदकानाम् इ, नाम नास्ति अ. ब. क. ड. फ. 7. अककारयोः इ. 8. स्त्रीप्रत्यययोरिह ग्रहणम् ड. 9. अककारयोः इ. 10. स्त्रीप्रत्यययोरिह ग्रहणम् ड. 11. पाणिनिना वा नास्ति ह, वा नास्ति ब.इ.ह. 12. च इत्यधिकम् ड. 13. °काले विहितस्य क. 14. क्तः इत्यधिकम् क, क्तस्य इत्यधिकम् ह. 15. नटस्य भुक्तं क. ड, नटस्याधीतम् क. 16. कूजितम् ड, रुदितम् इ. 17. विभक्तिरपि फ, अपि नास्ति ड. ह. 18. छात्रेणाधीतमिति ड, इति नास्ति फ.

## अधिकरणवाचिनश्च । (६८/६२६)

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३.४.७६/३०८७) [1]इति वक्ष्यति । तस्य[2] प्रयोगे षष्ठी विभक्तिर्भवति । अयमपि प्रतिषेधापवादो योगः । इदमेषामासितम् । इदमेषां शयितम् । इदमहेः सृप्तम् (म. भा. १.४६८) । इदं [3]वनकपेर्यातम् । इदमेषां [4]भुक्तम् । [5]इदमेषामशितम् । द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावत् । नेताऽश्वस्य ग्रामस्य चैत्रः । अन्ये प्रधाने कर्मण्याहुः । तदा, नेताऽश्वस्य ग्रामं चैत्रः ॥

## न लोकाव्ययनिष्ठाखलर्थतृनाम् । (६९/६२७)

'कर्तृकर्मणोः कृति' (२.३.६५/६२३) इति प्राप्ता षष्ठी प्रतिषिध्यते । ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां प्रयोगे षष्ठी [6]विभक्तिर्न भवति । ल इति शतृशानचौ (३.२.१२४/३१००), कानच्क्वसू (३.२.१०६, १०७/३०९४,३०९५), [7]किकिनौ च (३.२.१८१/३१५१) गृह्यन्ते । ओदनं पचन् । ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । 'पपिः सोमं ददिर्गाः' (ऋ. ६.२३.४) । उ – [8]कटं चिकीर्षुः (३.२.१६८/३१४८) । ओदनं बुभुक्षुः (म. भा. १.४६९) । कन्यामलङ्करिष्णुः[9] (३.२.१३६/३११६) । [10]इष्णुचोऽपि प्रयोगे निषेधः । उक – आगामुकं (३.२.१५४/३१३४) वाराणसीं रक्ष आहुः ।

[१४७) उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः । (म. भा. १.४६९)

दास्याः कामुकः[11] ।

अव्यय – कटं कृत्वा । ओदनं भुक्त्वा (३.४.२१/३३२०) ।

[१४८] अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः । (म. भा. १.४६९)

'व्युष्टायां पुरा सूर्यस्योदेतोराधेयः' (३.४.१६/३४४३) (का. सं. ८.३) । 'पुरा क्रूरस्य विसृपो विरप्शिन्' (३.१.१७/३४४४) (तै. १.१.९.३) ।

निष्ठा – ओदनं भुक्तवान् । देवदत्तेन [12]कृतम् । खलर्थ – [13]ईषत्करः (३.३.१२६/३३०५) कटो भवता । ईषत्पानः (३.३.१२८/३३०९) सोमो भवता । तृन् इति प्रत्याहारग्रहणम् । 'लटः शतृशानचावप्रथमासमानाधिकरणे' (३.२.१२४/३१००) इत्यारभ्य आ तृनो (३.२.१३५/३११५) नकारात् । तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति (म.भा. १.४६९) । सोमं पवमानः (३.३.१२८/३१०८) । नडमाघ्नानः (३.२.१२९/३१०९) । [14]अधीयन् (३.२.१३०/३११०) पारायणम् (म. भा. १.४६९) । कर्ता (३.२.१३४/३११४) कटान् । [15]वदिता जनापवादान् ।

[१४९] द्विषः शतुर्वावचनम् । (म. भा. १.४७०)

चौरं द्विषन्, चौरस्य द्विषन् ॥

---

1. इति नास्ति फ. 2. च इत्यधिकम् ड. इ. फ. 3. ननु कपेः फ, तु न कपेः ब, वन नास्ति ह, न कपेः क. 4. परिक्रान्तम् क, पीतम् ह, भुक्तमोदनस्य ग. 5. इदमेषामासितम् । इदमेषामपक्रान्तम् फ. 6. विभक्तिः नास्ति क. 7. ककिनौ फ. 8. घटं फ. 9. खमुत्पतिष्णुः इत्यधिकम् क. 10. इष्णुचोऽपि निषेधः नास्ति ड. 11. वृषल्याः कामुकः इत्यधिकम् क. ड. इ. 12. भुक्तम् ड. फ. 13. ईषत्कारः ब. ग. 14. अधीयानः क. 15. वेदिता क.

## अकेनोर्भविष्यदाधमर्ण्ययोः । (७०/६२८)

[1]अकस्य भविष्यति काले [2]विहितस्य, इनस्तु भविष्यति [3]चाधमर्ण्ये च [4]विहितस्य प्रयोगे षष्ठी विभक्तिर्न[5] भवति । कटं कारको (३.३.१०/३१७५) व्रजति । ओदनं भोजको व्रजति (म. भा. १. ४७०) । इनः खल्वपि[6]- ग्रामं गमी (३.३.३/३१७१) (म. भा. १. ४७०) । ग्रामं गामी । शतं दायी (३.३.१७०/३३११) । सहस्रं दायी (म. भा. १. ४७०) । भविष्यदाधमर्ण्ययोः इति किम् ? यवानां [7]लावकः (३.१.१३३/२८९५) । सक्तूनां पायकः । अवश्यंकारी (३.३.१७०/३१७१)कटस्य । इह कस्मान् न भवति, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः इति ? भविष्यद[8]धिकारे विहितस्याकस्येदं ग्रहणम् ॥

## कृत्यानां कर्तरि वा । (७१/६२९)

'कर्तृकर्मणोः कृति' (२. ३. ६५/६२३) इति [9]नित्यं षष्ठी प्राप्ता [10]कर्तरि विकल्प्यते । कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति, [11]न कर्मणि । भवता कटः कर्तव्यः, भवतः कटः कर्तव्यः । कर्तरि इति किम् ? गेयो माणवकः साम्नाम् (म. भा. १. ४७०) ।

[१५०] [12]उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः । (म. भा. १. ४७०)

[13]स्रष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा [14]देवदत्तेन ॥

## तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । (७२/६३०)

तुल्यार्थैः शब्दैर्योगे तृतीया [15]विभक्तिर्भवत्यन्यतरस्याम्, [16]पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा । [17]शेषे विषये तृतीयाविधानात् तया मुक्ते [18]षष्ठ्येव भवति । तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य । सदृशो देवदत्तेन, सदृशो देवदत्तस्य । अतुलोपमाभ्याम् इति किम् ? तुला देवदत्तस्य नास्ति । उपमा कृष्णस्य न विद्यते । वा इति[19] वर्तमाने[20]ऽन्यतरस्यांग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम् । इतरथा हि तृतीयाऽनुकृष्येत ॥

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । (७३/६३१)

आशिषि गम्यमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । चकारो विकल्पानुकर्षणार्थः । शेषे चतुर्थीविधानात् तया मुक्ते षष्ठी[21] विभक्तिर्भवति ।

[१५१] [22]अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम् ।

आयुष्यं देवदत्ताय भूयात्, [23]आयुष्यं देवदत्तस्य भूयात् । चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात् ।

---

1. अकस्तु ह. 2. विहितस्य नास्ति ह. 3. च नास्ति ब. 4. विहितस्य नास्ति क. 5. न नास्ति फ.इ. 6. अपि नास्ति ह, भविष्यति इत्यधिकम् इ. क. 7. पालकः ह, लोचकः इ. 8. °अधिकारविहितस्य इ. 9. नित्या क. ह, नास्ति ग. 10. कर्तरि नास्ति ग. 11. न कर्मणि नास्ति क. ड. इ. ग. 12. उभयप्राप्ते क. 13. आक्रष्टव्या ड. इ. ह. 14. यज्ञदत्तेन क. ड. 15. विभक्तिः नास्ति क. ड. 16. पक्षे नास्ति क. ड. ह. फ. 17. शेषविषये विधानात् क. ड. ह. 18. एव नास्ति ग. 19. च इत्यधिकम् ब. 20. पुनर् इत्यधिकम् ह. 21. एव इत्यधिकम् ह. 22. वाक्यमिदं नास्ति क. ड. इ. ह. फ. 23. उदाहरणमिदं नास्ति ह.

भद्रं देवदत्ताय देवदत्तस्य वा [1]भूयात्। भद्रं देवदत्ताय, भद्रं देवदत्तस्य। कुशलं देवदत्ताय, कुशलं देवदत्तस्य। निरामयं देवदत्ताय, निरामयं देवदत्तस्य। सुखं देवदत्ताय, सुखं देवदत्तस्य। शं देवदत्ताय, शं देवदत्तस्य। अर्थो देवदत्ताय, अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य। [2]हितं देवदत्ताय, हितं देवदत्तस्य। पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य[3]। आशिषि इति किम्? आयुष्यं देवदत्तस्य तपः ॥

इति [4]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

द्वितीयाध्यायस्य तृतीयः पादः ॥

———(:०:)———

1. भूयात् नास्ति ड. 2. उदाहरणमिदं नास्ति फ. 3. इति इत्यधिकम् ड. फ. 4. श्रीजयादित्यविरचितायां नास्ति इ. ग. ड. ह, जयादित्यकाशिकायां क.

## द्वितीयाध्यायस्य चतुर्थः पादः

### द्विगुरेकवचनम् । (१/७३१)

द्विगुः समासः एकवचनं भवति । एकस्य वचनम् एकवचनम् । एकस्यार्थस्य वाचको भवति [1]इत्यर्थः । तदनेन प्रकारेण[2] द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद् भवति इति[3] । समाहारद्विगोश्चेदं ग्रहणम्, नान्यस्य । [4]पञ्चपूलाः समाहृताः [5]पञ्चपूली । दशपूली । [6]द्विग्वर्थस्यैकत्वादनुप्रयोगेऽप्येकवचनं भवति, [7]पञ्चपूलीयं शोभना [8]इति[9] ॥

### द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । (२/९०६)

एकवचनम् इति वर्तते । अङ्गशब्दस्य प्रत्येकं [10]वाक्यपरिसमाप्त्या त्रीणि वाक्यानि सम्पद्यन्ते । प्राण्यङ्गानां द्वन्द्व एकवद् भवति, तथा [11]तूर्याङ्गानां सेनाङ्गानां च । प्राण्यङ्गानां तावत् – पाणिपादम् । शिरोग्रीवम्[12] । तूर्याङ्गानाम् – मार्दङ्गिकपाणविकम् । वीणावादकपरिवादकम् । सेनाङ्गानाम् – [13]रथिकाश्वारोहम् । रथिकपादातम् । हस्त्यश्वादिषु परत्वात् पशुद्वन्द्वे [14]विभाषया एकवद् (२.४.१२/९१६) भवति ।

इतरेतरयोगे समाहारे च द्वन्द्वो विहितः । तत्र समाहारस्यैकत्वात् सिद्धमेवैकवचनम् । इदं तु प्रकरणं विषयविभागार्थम्, [15]प्राण्यङ्गादीनां समाहार [16]एव द्वन्द्वः, दधिपयआदीनामितरेतरयोग एव (२.४.१४/९१८), वृक्षमृगादीनाम् (२.४.१२/९१६) उभयत्र इति ॥

### अनुवादे चरणानाम् । (३/९०७)

चरणशब्दः शाखानिमित्तकः [17]पुरुषेषु वर्तते । चरणानां द्वन्द्वः एकवद् भवति अनुवादे गम्यमाने । प्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्तनमात्रम् अनुवादः । उदगाद् कठकालापम् । प्रत्यष्ठात् कठकौथुमम् (म. भा. १.४७४) । [18]कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते [19]तदैवमुदाहरणम् । [20]यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम् । अनुवादे इति किम् ? उदगुः कठकालापाः । [21]प्रत्यष्ठुः कठकौथुमाः ।

[१५२] स्थेणोरद्यतन्यां चेति वक्तव्यम् । (म.भा. १.४७४)

स्थेणोः इति किम् ? अनन्दिषुः कठकालापाः । अद्यतन्याम् इति किम् ? उद्यन्ति कठकालापाः ॥

### अध्वर्युक्रतुरनपुंसकम् । (४/९०८)

[22]अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुः[23] । अध्वर्युक्रतुवाचिनां [24]शब्दानामनपुंसकलिङ्गानां द्वन्द्वः एकवद् भवति । अध्वर्युक्रतुरनपुंसकं [25]द्वन्द्वः इति [26]गौणो निर्देशः[27] । [28]अर्काश्वमेधम् । सायाह्नातिरात्रम् । [29]अध्वर्युक्रतुः इति किम् ? इषुवज्रौ । उद्भिद्बलभिदौ । अनपुंसकम् इति [30]किम् ? [31]राजसूयवाजपेये । इह कस्मान् न भवति, दर्शपौर्णमासौ ? क्रतुशब्दः सोमयागेषु रूढः ॥

---

1. अर्थः नास्ति ड. 2. द्विगुत्वस्य ह. 3. यावत् इत्यधिकम् फ. 4. पञ्चकपालाः फ. 5. पञ्चकपाली, दशकपाली फ. 6. अर्थस्यैकत्वाद् ब.ह.ग. 7. पञ्चमूलीयं ड. 8. इति नास्ति फ. 9. पञ्चराजी इत्यधिकम् ड. 10. परिसमाप्त्या ड.इ.ह, °परिसमाप्तेः क. 11. तूर्याङ्गसेनाङ्गानां च फ. 12. दन्तोष्ठम् इत्यधिकम् फ. 13. रथिकाश्वारोहम् नास्ति, रथिकपदातम् ड, पथिकपादातम् ह. 14. विभाषयैव भविष्यति फ, विभाषयैव भवितव्यं ब, पशुद्वन्द्वविभाषयैव भवितव्यं क.ड.इ.ह. 15. प्राण्यङ्गानां फ. 16. एव नास्ति फ. 17. गौणः इत्यधिकम् क.फ. 18. कठकालापानाम् फ. 19. तदेवेदमुदाहरणं ड.इ, तदैवेतदुदाहरणम् फ. 20. वाक्यमिदं नास्ति ब. 21. उदगात् कठकालापम्, प्रत्यष्ठात् कठकौथुमम् इत्यधिकम् ड.इ. 22. अध्वर्युवेद्ये ह. 23. यज्ञः इत्यधिकम् फ. 24. शब्दानाम् नास्ति ह. 25. द्वन्द्वः नास्ति फ. 26. गौणो नास्ति ड. 27. अवयवधर्मस्य समुदायव्यपदेशात् पौण्डरीकत्रिरात्रम् इत्यधिकम् ड. इ. फ, साप्तातिरात्रम् इत्यधिकम् क. इ. 28. अर्काश्वमेधिकम्, सहातिरात्रम् ह. 29. अध्वर्युः ह. 30. किमर्थम् इ. 31. वाजपेयराजसूये फ.

## अध्ययनतोऽविप्रकृष्टाख्यानाम् । (५/९०९)

[1]अध्ययनेन निमित्तेन येषामविप्रकृष्टा प्रत्यासन्ना [2]आख्या, तेषां द्वन्द्वः एकवद् भवति । [3]पदकक्रमकम् । क्रमकवार्तिकम् । [4]सम्पाठः पदानां क्रमस्य च[5] प्रत्यासन्नः । [6]अध्ययनतः इति किम् ? पितापुत्रौ[7] । अविप्रकृष्टाख्यानाम् इति किम् ? याज्ञिकवैयाकरणौ ॥

## जातिरप्राणिनाम् । (६/९१०)

[8]जातिवाचिनां शब्दानां द्वन्द्व एकवद् भवति प्राणिनो वर्जयित्वा । [9]आराशस्त्रि । धानाशष्कुलि[10] । जातिः इति किम् ? नन्दकपाञ्चजन्यौ । अप्राणिनाम् इति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः । [11]नञिवयुक्तन्यायेन (व्या. प. ६५) [12]द्रव्यजातीनामयमेकवद्भावः, न गुणक्रियाजातीनाम् । [13]रूपरसगन्धस्पर्शाः । गमनाकुञ्चनप्रसारणानि । [14]जातिपरत्वे च जातिशब्दानामयमेकवद्भावो [15]विधीयते, [16]न नियतद्रव्यविवक्षायाम्– [17]इह कुण्डे बदरामलकानि तिष्ठन्ति [18]इति ॥

## विशिष्टलिङ्गो नदी देशोऽग्रामाः । (७/९११)

[19]विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां[20] द्वन्द्व एकवद् भवति । नद्यवयवो द्वन्द्वो नदी इत्युच्यते । देशावयवश्च देशः[21] । नदी देशः इत्यसमासनिर्देश एवायम् । उद्ध्यश्च इरावती च [22]उद्ध्येरावति । गङ्गाशोणम् । देशः खल्वपि – कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । [23]कुरुकुरुजाङ्गलम्[24] । विशिष्टलिङ्गः इति किम् ? गङ्गायमुने । [25]मद्रकेकयाः । नदी देशः इति किम् ? कुक्कुटमयूर्यौ । अग्रामाः इति किम् ? जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ । नदीग्रहणमदेशत्वात् । जनपदो हि देशः । तथा च [26]पर्वतानां ग्रहणं न भवति, कैलासश्च [27]गन्धमादनं च कैलासगन्धमादने ।

[१५३] अग्रामा इत्यत्र [28]नगराणां प्रतिषेधो वक्तव्यः । (म. भा. १.४७४)

[29]इह मा भूत्, मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम् ।

[१५४] उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः । (म. भा. १.४७४)

[30]सौर्यं च नगरं, [31]केतवतं च ग्रामः [32]सौर्यकेतवते ॥

---

1. अध्ययननिमित्तेन ड. 2. आख्याः इ. 3. पदक्रमकम् ह. 4. संपादानां फ, सम्पाठपदानाम् ड.इ. 5. न इत्यधिकम् इ. 6. वाक्यमिदं नास्ति फ. अध्ययने इ. 7. आढचदरिद्रौ इत्यधिकम् ड. इ. 8. अनेकव्यापारा जातिः इत्यधिकम् क, जातिः द्वन्द्वः इति गौणो निर्देशः । जात्यवयवो जातिः इति इत्यधिकम् ड. इ. 9. आराशस्त्री ह. 10. युगवस्त्रम् इत्यधिकम् क. ड. इ. 11. नञिव युक्त इति ड. 12. द्रव्यादीनाम् इ. फ. 13. रूपरसगन्धस्पर्शानाम्, गमनाकुञ्चनप्रसारणानाम् च क. ड. 14. जातिपरत्वे सति क. फ. ह, जातिपरत्वं च इ, जातिपरत्वे च शब्दानाम् ड. 15. विधीयते नास्ति ब. क. फ. ह. 16. न नास्ति इ. 17. तेन क, इह कुण्डे नास्ति ब. ड. इ. ह. 18. इति नास्ति ब. क. इ. ह. 19. नदीवाचिनां भिन्नलिङ्गानां विशिष्टवाचिनां देशवाचिनां च शब्दानां फ, विशिष्टलिङ्गानां नास्ति इ.ह, भिन्नलिङ्गानां नास्ति क. 20. च इत्यधिकम् फ. 21. इति इत्यधिकम् क. ड. 22. उद्ध्येरावती ड. फ. 23. कुरुजाङ्गलम् ब. ड. ह. 24. दार्वाभिसारम्, काश्मीरातिसारम् इत्यधिकम् ड. इ. 25. मुद्रकेकयाः क. 26. पर्वतादीनां भवति इ, ग्रहणं नास्ति ड. 27. गन्धमादनः फ. 28. नगरप्रतिषेधो क. इ. फ. ह. 29. वाक्यमिदं नास्ति फ. 30. शौर्यं ब. ड, गौर्यं ह. 31. केतवं च ब, केतवनं इ. ड. ह, कैतवती फ, केतवता क. 32. सौर्यकेतवने ड. इ.

## क्षुद्रजन्तवः । (८/९१२)

[1]अपचितपरिमाणः क्षुद्रः । क्षुद्रजन्तुवाचिनां[2] द्वन्द्वः एकवद् भवति । दंशमशकम् । यूकालिक्षम् । क्षुद्रजन्तवः इति किम् ? ब्राह्मणक्षत्रियौ ।

क्षुद्रजन्तुरनस्थिः स्याद[3]थ वा क्षुद्र एव यः ।
शतं वा [4]प्रसृतौ येषां केचिदा नकुलादपि ॥

[5]आ नकुलादपि इति [6]इयमेव स्मृतिः प्रमाणम्, इतरासां तद्विरोधात् ॥

## येषां च विरोधः शाश्वतिकः । (९/९१३)

विरोधो वैरम् । शाश्वतिको [7]नित्यः । येषां शाश्वतिको विरोधः तद्वाचिनां [8]शब्दानां द्वन्द्व एकवद् भवति । [9]मार्जारमूषकम्[10] । [11]अहिनकुलम् । शाश्वतिकः इति किम् ? [12]गौपालिशालङ्कायनाः कलहायन्ते । चकारः पुनरस्यैव समुच्चयार्थः । तेन पशुशकुनिद्वन्द्वे[13] विरोधिनाम[14]नेन नित्यमेकवद्भावो भवति – अश्वमहिषम् । [15]श्वशृगालम् । काकोलूकम् ॥

## शूद्राणामनिरवसितानाम् । (१०/९१४)

[16]निरवसानं बहिष्करणम् । [17]कुतो बहिष्करणम् ? [18]पात्रात् । यै[19]र्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः (म.भा.१.४७५) । न निरवसिताः अनिरवसिताः । अनिरवसितशूद्रवाचिनां [20]शब्दानां द्वन्द्व एकवद् भवति । तक्षायस्कारम् । रजक[21]तन्तुवायम् । अनिरवसितानाम् इति किम् ? चण्डालमृतपाः ॥

## गवाश्वप्रभृतीनि च । (११/९१५)

गवाश्वप्रभृतीनि [22]च कृतैकवद्भावानि [23]द्वन्द्वरूपाणि साधूनि भवन्ति ।

गवाश्वम् । गवाविकम् । [24]गवैडकम् । [25]अजाविकम् । अजैडकम् । [26]कुब्जवामनम् । [27]कुब्जकैरातकम् । पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । [28]शाटीपिच्छकम् । उष्ट्रखरम् । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । [29]यकृन्मेदः । मांसशोणितम् । [30]दर्भशरम् । [31]दर्भपूतीकम् । अर्जुनशिरीषम् । तृणोलपम् । दासीदासम् । [32]कुटीकुटम् । भागवतीभागवतम्[33] ।

गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्[34] । [35]रूपान्तरे तु नायं विधिर्भवति । गोऽश्वम्, [36]गोऽश्वौ । [37]पशुद्वन्द्वविभाषैव भवति ॥

---

1. अवचितपरिमाणः ह. 2. शब्दानाम् इत्यधिकम् ड. इ. ह. 3. कोऽपि फ. 4. प्रसृतिः इ. फ, प्रसृते इ. 5. आ नास्ति ह. 6. इयमेव प्रमाणम् फ. ह. 6. इयमेव प्रमाणम् फ. ह. 7. नित्यम् इ. 8. शब्दानां नास्ति इ. 9. मार्जारमूषिकम् ड. फ. ग. 10. श्ववाराहम् इत्यधिकम् इ. फ, श्ववराहम्, श्रमण-ब्राह्मणम् इत्यधिकम् क. 11. अहिनकुलम् नास्ति ह. 12. गोपालिक° फ. ह, गोपालि° ड. 13. विभाषां बाधित्वा इत्यधिकम् क. 14. अनेनैव नित्य एव ह. 15. श्वशृगालम् नास्ति ब.क.ड.इ. 16. निरवसितम् अ. 17. वाक्यमिदं नास्ति ड. इ. 18. पात्राणाम् इ. 19. भुक्तं फ, भुक्तैः ब, भुक्ते पात्राणि न शुध्यन्ते इ. 20. शब्दानाम् नास्ति क. ह. 21. °तुन्नवायम् ग. 22. शब्दरूपाणि द्वन्द्वे साधूनि क. इ. फ. ड. 23. द्वन्द्व-रूपाणि नास्ति ह. 24. गवैलकम् क. 25. नास्ति ह. 26. कुब्जवमनम् ड 27. कुब्जकिरातम् ड. फ, कुष्वकैरातम् क. ह. 28. शाटीप्रच्छदम् ब. क, शाटीपटरिम् फ, शाटीपटीकम् ड, शाटीपटम् ह. 29. यकृन्मेदम् ह. 30. दर्भशवम् ड. 31. दर्भपुरीतकम् ह. 32. कुक्कुटीकुक्कुटम् ह. 33. इति गवादिः इत्यधिकम् ड. 34. साधु इ. ह. साधु भवति फ. 35. रूपान्तरेषु इ. ह. 36. गोऽश्वौ नास्ति फ. 37. °विभाषयैकवद् भवति ह, °विभाषयैव इ.

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । (१२/९१६)

वृक्ष मृग तृण धान्य व्यञ्जन [1]पशु शकुनि अश्ववडव [2]पूर्वापर [3]अधरोत्तर इत्येतेषां द्वन्द्वो विभाषा एकवद् भवति । प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । रुरुपृषतम्, रुरुपृषताः । कुशकाशम्, कुशकाशाः । व्रीहियवम्, व्रीहियवाः । दधिघृतम्, दधिघृते । गोमहिषम्, गोमहिषाः । तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः । अश्ववडवम्, [4]अश्ववडवौ । पूर्वापरम्, [5]पूर्वापरे । अधरोत्तरम्, [6]अधरोत्तरे ।

[१५५] बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् । (म.भा. १.४७५)

एषां बहुप्रकृतिरेव द्वन्द्व एकवद् भवति, न द्विप्रकृतिः । बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ । रुरुपृषतौ । हंसचक्रवाकौ । यूकालिक्षे । व्रीहियवौ । कुशकाशौ ।।

## विप्रतिषिद्धं चानधिकरणवाचि । (१३/९१७)

परस्परविरुद्धं विप्रतिषिद्धम् । [7]विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनामद्रव्यवाचिनां द्वन्द्व एकवद् भवति । विभाषानुकर्षणार्थश्चकारः । शीतोष्णम्, शीतोष्णे । सुखदुःखम्, सुखदुःखे । [8]जीवितमरणम्, जीवितमरणे । विप्रतिषिद्धम् इति किम् ? कामक्रोधौ । अनधिकरणवाचि इति [9]किम् ? [10]शीतोष्णे उदके ।।

## न दधिपयआदीनि । (१४/९१८)

यथायथमेकवद्भावे[11] प्राप्ते [12]प्रतिषेध आरभ्यते । दधिपयआदीनि [13]शब्दरूपाणि नैकवद् भवन्ति ।

दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । [14]ब्रह्मप्रजापती[15] । शिववैश्रवणौ । स्कन्दविशाखौ । [16]परिव्राट्कौशिकौ । [17]प्रवर्ग्योपसदौ । [18]शुक्लकृष्णौ । [19]इध्माबर्हिषी । निपातनाद् दीर्घः । दीक्षातपसी । श्रद्धातपसी । [20]मेधातपसी । अध्ययनतपसी । उलूखलमुसले । [21]आद्यावसाने । श्रद्धामेधे । [22]ऋक्सामे । [23]वाङ्मनसे ।।

## अधिकरणैतावत्त्वे च । (१५/९१९)

न इति वर्तते । अधिकरणं वर्तिपदार्थः । स हि [24]समासस्यार्थस्याधारः । तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद् भवति । यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते । दश दन्तोष्ठाः । दश मार्दङ्गिकपाणविकाः ।।

---

1. पशु नास्ति फ. 2. पूर्वपर फ. 3. अधरोत्तराणां द्वन्द्वो इ. 4. अश्ववडवाः ड. 5. पूर्वापरौ ड. 6. अधरोत्तरौ ड. 7. विप्रतिषिद्धानाम् इ, प्रतिषिद्धार्थवाचिनां फ. ह. 8. उदाहरणमिदं नास्ति इ. फ. ह. 9. किमर्थम् ड. 10. सुखदुःखाविमौ ग्रामौ क. इ. फ. 11. च इत्यधिकम् ड. 12. प्रतिषेधोऽयम् क. ड. इ. 13. द्वन्द्वरूपाणि अ. 14. ब्राह्मणप्रजापती ड. 15. हरिवासवौ इत्यधिकम् क. 16. परिव्राजककौशिकौ ड. ह, नास्ति फ, परिव्राड्भिक्षुकौ ब. क. 17. प्रवर्ग्यापवर्ग्यौ ब. 18. शुक्लकृष्णे ब. इ. ह. 19. याज्यानुवाक्ये क. ड. 20. नास्ति क. 21. आद्यवसाने ब. क. ड. 22. वाक्सामे ब. 23. वाङ्मनसी ह. 24. समासार्थस्य क. इ. ह.

## विभाषा समीपे । (१६/९२०)

अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्वः [1]एकवद् भवति । उपदशं दन्तोष्ठम्, उपदशाः दन्तोष्ठाः । उपदशं मार्दङ्गिकपाणविकम्, उपदशा मार्दङ्गिकपाणविकाः । अव्ययस्य [2]सङ्ख्ययाऽव्ययीभावोऽ[3]पि विहितः (२. १. ६/६५२), बहुव्रीहिरपि (२. २. २५/८४३) । तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः[4] (म. भा. १.४७७) ॥

## स नपुंसकम् । (१७/८२१)

यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च । पञ्चगवम् । दशगवम् । द्वन्द्वः खल्वपि —— पाणिपादम् । शिरोग्रीवम् । [5]परलिङ्गतापवादो योगः ।

[१५६] अकारान्तोत्तरपदो द्विगुः स्त्रियां [6]भाष्यते ।

[7]पञ्चपूली । दशरथी ।

[१५७] [8]वाऽऽबन्तः [9]स्त्रियामिष्टः ।

पञ्चखट्वम्, पञ्चखट्वी ।

[१५८] अनो नलोपश्च वा च [10]द्विगुः स्त्रियाम् ।

[11]पञ्चतक्षम्, पञ्चतक्षी ।

[१५९] पात्रादिभ्यः प्रतिषेधो [12]वक्तव्यः ।

पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥

## अव्ययीभावश्च । (१८/६५९)

अव्ययीभावश्च [13]समासो नपुंसकलिङ्गो भवति । अधिस्त्रि । [14]उपकुमारि । उन्मत्तगङ्गम् । लोहितगङ्गम् । पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ता, अन्यपदार्थप्रधानस्या[15]भिधेयवल्लिङ्गता, अत इदमुच्यते । अनुक्तसमुच्चयार्थश्चकारः ।

---

1. न इत्यधिकम् क. 2. सङ्ख्यायाः क, सङ्ख्यायाम् ह. 3. अपि नास्ति इ. 4. प्रयुज्यते इत्यधिकम् क. 5. परवल्लिङ्गापवादोऽयम् क. ड. फ. ह. 6. इष्यते ड. 7. दशपूली, पञ्चरथी क. ड. फ. ह. 8. टाबन्तः क. ड. 9. स्त्रियामिष्टः नास्ति ड. इ. फ. 10. द्विगुः नास्ति ड. 11. दशतक्षम्, दशतक्षी क. ड. 12. वक्तव्यः नास्ति ह. 13. समासो नास्ति फ. 14. अधिकुमारि क. ड. फ. 15. अभिधेयवल्लिङ्गम् ब, अभिधेयलिङ्गता न्या.

[१६०] पुण्यसुदिनाभ्यामह्नः [1]क्लीबतेष्यते ।

पुण्याहम् । [2]सुदिनाहम् ।

[१६१] पथः सङ्ख्याव्ययादेः [3]क्लीबतेष्यते ।

[4]त्रिपथम् । चतुष्पथम् । [5]विपथम् । [6]सुपथम् ।

[१६२] क्रियाविशेषणानां च [7]क्लीबतेष्यते ।

मृदु [8]पचति । शोभनं पचति ।

## तत्पुरुषोऽनञ्कर्मधारयः । (१९/८२२)

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते । नञ्समासं [9]कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवति इत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र[10] । वक्ष्यति —‘विभाषा सेनासुराच्छायाशालानिशानाम्’ (२. ४. २५/८२८) इति । ब्राह्मणसेनम्, ब्राह्मणसेना । तत्पुरुषः इति किम् ? दृढसेनो राजा । अनञ् इति किम् ? असेना । अकर्मधारयः इति किम् ? [11]परमसेना (म.भा. १.४७८) ॥

## सञ्ज्ञायां कन्थोशीनरेषु (२०/८२३)

सञ्ज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु [12]भवति । सौशमिकन्थम् । [13]आह्वरकन्थम् । सञ्ज्ञायाम् इति किम् ? [14]वीरणकन्था । उशीनरेषु इति [15]किम् ? [16]दाक्षिकन्था । [17]परवल्लिङ्गतापवाद इदं प्रकरणम् ॥

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । (२१/८२४)

उपज्ञायते इत्युपज्ञा । उपक्रम्यते इत्युपक्रमः । उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम् । तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायाम्, तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम् । आख्यातुमिच्छा आचिख्यासा । यद्युपज्ञेयस्यो[18]पक्रम्यस्य चार्थस्यादि[19]राख्यातुमिष्यते तत एतद् भवति । पाणिन्युपज्ञमकालकं व्याकरणम् । पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं व्याकरणम् । व्याड्युपज्ञं [20]दशहुष्करणम् । [21]आढ्योपक्रमं प्रासादः । नन्दोपक्रमाणि [22]मानानि । [23]दर्शनीयोपक्रमं [24]सुकुमारम् । उपज्ञोपक्रमम् इति किम् ? वाल्मीकिश्लोकाः । तदाद्याचिख्यासायाम् इति किम् ? देवदत्तोपज्ञो रथः । यज्ञदत्तोपक्रमो [25]रथः ॥

1. क्लीबतेष्यते नास्ति ड. फ. ह. 2. नास्ति ब. 3. क्लीबतेष्यते नास्ति ब.क.फ, इति सिद्धं नपुंसकत्वम् इत्यधिकम् इ. 4. द्विपथम् क. 5. नास्ति ह. 6. नास्ति फ. 7. क्लीबतेष्यते नास्ति ब.क.फ, इति सिद्धं नपुंसकत्वम् इत्यधिकम् इ. 8. प्रयाति इ. 9. कर्मधारयसमासं क. इ. 10. तत्र नास्ति इ. फ. ह. 11. परसेना इ, उत्तमसेना इत्यधिकम् क. ड. 12. भवति नास्ति इ. 13. आद्धारकन्थम् ब. 14. नास्ति इ. फ, वीरकन्था ब. 15. किमर्थम् इ. 16. दाक्षिकन्थः ब. 17. परवल्लिङ्गतापवादप्रकरणम् ब. इ, अपवादमिदम् ह. 18. उपक्रमस्य ह. 19. आलोकयिष्यते ह. 20. हुष्करणम् नास्ति ह. 21 आढ्योपक्रमं ब. 22. विमानानि ब. ड, नन्दोपक्रमं मानं ह. 23. आपिशल्युपक्रमं गुरुलाघवम् क. ड. ह. 24. कुमारम् क, दर्शनीयकुमारम् नास्ति ड. फ. 25. अर्थः इ.

## छाया बाहुल्ये । (२२/८२५)

'विभाषा सेनासुराच्छायाशालानिशानाम्' (२.४.२५/८२८) इति विभाषां वक्ष्यति । [1]नित्यार्थमिदं वचनम् । छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने । पूर्वपदार्थधर्मः[2] बाहुल्यम् । शलभादीनां हि [3]बहुत्वं गम्यते । शलभच्छायम् । [4]इक्षुच्छायम् । बाहुल्ये इति किम् ? [5]कुड्यच्छाया ॥

## सभा राजाऽमनुष्यपूर्वा । (२३/८२६)

सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् सभा राजपूर्वा, अमनुष्यपूर्वा च भवति । [6]इनसभम् । [7]ईश्वरसभम् । इह कस्मान्न भवति, राजसभा? पर्यायवचनस्यैवे[8]ष्यते । तदुक्तम् –'जित्पर्यायस्यैव [9]राजाद्यर्थम्' (वा.१०) इति । अमनुष्यपूर्वा – रक्षःसभम् । [10]पिशाचसभम् । इह कस्मान् न भवति, काष्ठसभा ? अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्तते । राजाऽमनुष्यपूर्वा इति किम् ? देवदत्तसभा[11] ॥

## अशाला च । (२४/८२७)

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति । सङ्घातवचनोऽत्र सभाशब्दो गृह्यते । स्त्रीसभम् । दासीसभम् । दासीसङ्घातः इत्यर्थः । अशाला इति किम् । अनाथसभा । अनाथकुटी इत्यर्थः ॥

## विभाषा सेनासुराच्छायाशालानिशानाम् । (२५/८२८)

सेना सुरा छाया शाला निशा इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा । ब्राह्मणसेनम्, ब्राह्मणसेना । यवसुरम्, यवसुरा । कुड्यच्छायम्, कुड्यच्छाया । गोशालम्, गोशाला । श्वनिशम् । श्वनिशा ॥

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । (२६/८१२)

[12]समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् [13]इतरेतरयोगद्वन्द्वस्येदं ग्रहणम् । परस्य यल्लिङ्गं [14]तद् भवति द्वन्द्वस्य तत्पुरुषस्य च । उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषस्य – अर्धं पिप्पल्याः अर्धपिप्पली । अर्धकोशातकी । [15]अर्धनखरञ्जनी ।

[१६३] द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः । (म. भा. १.४७८)

[16]द्विगुः – पञ्चसु कपालेषु संस्कृतः [17]पुरोडाशः पञ्चकपालः[18] (४.२.१६/१२१७) (४.१.८८/१०८०) ।

---

1. नित्यार्थवचनम् ह. 2. वा इत्यधिकम् इ, अथ इत्यधिकम् ह. 3. बाहुल्ये गम्यमाने इ. 4. बहूनामिक्षूणां छाया इत्यधिकम् क, इक्षुच्छायम् नास्ति फ. 5. कुसच्छाया ब, आढचच्छाया फ. 6. राजपूर्वा इत्यधिकम् इ. 7. नास्ति इ. 8. उच्यते ह, वक्तव्यम् ब. फ. 9. राजाद्यर्थस्य ग्रहणम् ब. फ. राजार्थम् क. ड. 10. नास्ति ह. 11. चन्द्रगुप्तसभा इत्यधिकम् क. इ. फ, राजसभा इत्यधिकम् फ. 12. समाहारद्वन्द्वो नपुंसकलिङ्गो भवति अविहितत्वात् इ. 13. इतरेतरद्वन्द्वस्य फ. 14. तद् नास्ति फ. 15. नास्ति ड. फ. ह. 16. द्विगुः नास्ति फ. 17. पुरोडाशः नास्ति फ. 18. दशकपालः इत्यधिकम् अ.क.ड.

प्राप्तो जीविकाम् प्राप्तजीविकः[1]। आपन्नो जीविकाम् आपन्नजीविकः (२.२.४/७१५)। अलं जीविकायै अलंजीविकः (वा. ९३)। गतिसमासः – निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः (वा. ९४)॥

## पूर्ववदश्ववडवौ। (२७/८१३)

अश्ववडवयोर्विभाषैकवद्भावः (२.४.१२/९१६) उक्तः। तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायामिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा च अश्ववडवौ। [2]अर्थातिदेशश्चायम्, न निपातनम्। तत्र द्विवचनमतन्त्रम्। वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति, अश्ववडवान्, अश्ववडवैः इति॥

## हेमन्तशिशिरावहोरात्रे च छन्दसि। (२८/३३९९)

[3]पूर्ववत् इति वर्तते। [4]हेमन्तशिशिरौ अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। 'हेमन्तशिशिरावृतूनां [5]प्रीणामि' (तै.सं. १.६.२.३)। 'अहोरात्रे इदं ब्रूमः' (अ.वे. ११६.५)। [6]परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायं न निपातनं, तेन द्विवचनमतन्त्रम्। [7]वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। [8]पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः (तै.ब्रा. ३.११.४.१)। छन्दसि इति किम्? दुःखे[9] हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तः, तस्यैवायं[10] प्रपञ्चः॥

## रात्राह्नाहाः पुंसि। (२९/८१४)

कृतसमासान्तानां निर्देशः। रात्र अह्न अह [11]इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतया [12]स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। [13]चतूरात्रः। पूर्वाह्णः। अपराह्णः। [14]मध्याह्नः। द्व्यहः। त्र्यहः।

[१६४] अनुवाकादयः [15]पुंसीति वक्तव्यम्। (म.भा. १.४७९)

अनुवाकः। शंयुवाकः (आश्व.श्रौ. १.१०.११)। [16]सूक्तवाकः (ऋ. १०.८८.७)॥

## अपथं नपुंसकम्। (३०/८१५)

अपथशब्दो नपुंसकलिङ्गो भवति। अपथमिदम्। अपथानि गाहते मूढः। इह कस्मान्न भवति, [17]अपथो देशः, अपथा [18]नगरी? [19]तत्पुरुषः इति वर्तते॥

## अर्धर्चाः पुंसि च। (३१/८१६)

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः (तै.सं. ६.३.११.३)। अर्धर्चम् (तै.सं. २.५.७.४.)। गोमयः (ऋ. १०.६२.२)। गोमयम् (श. १२.९.२.३)।

---

1. मासजीवितः इत्यधिकम् ब. 2. अर्थाति – भवति नास्ति फ. 3. वाक्यमिदं नास्ति ब. 4. हेमन्तशिशिरौअहोरात्र क.ड.फ, नास्ति ब. 5. प्रीणाति ड.इ. 6. परलिङ्गापवादः क. 7. वाक्यमिदं नास्ति ड.फ. 8. पूर्वपक्षाश्रितः। अपरपक्षाश्रितः ड. 9. न इत्यधिकम् क. 10. अयं नास्ति फ. 11. इत्येवमन्ताः ड. 12. स्त्रीनपुंसकलिङ्गे प्राप्ते फ. 13. नास्ति इ.फ.ह. 14. नास्ति फ.ह. 15. पुंसि वक्तव्याः क.ड.इ. 16. नास्ति ड. 17. अपथोऽह्रेर्देशः ब. 18. नदी ह. 19. इत्यधिकारात् ह.

शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते, यथा – पद्मशङ्खशब्दौ निधिवचनौ पुंलिङ्गौ, जलजे [1]उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम्। सैन्धवशब्दो लवणे उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम्। सारशब्द उत्कर्षे पुंलिङ्गः, न्यायादनपेते [2]नपुंसकम्, नैतत् सारम् इति। धर्मः इत्यपूर्वे पुंलिङ्गः, तत्साधने [3]नपुंसकम्। 'तानि धर्माणि प्रथमान्यासन्' (ऋ. १.१६४.४३)।

अर्धर्च। गोमय। [4]कषाय। [5]कार्षापण। कुतप। कपाट। शङ्ख। [6]चक्र। गूथ। यूथ[7]। ध्वज। कबन्ध। पद्म। गृह। [8]सरक। कंस। दिवस। यूष। अन्धकार। [9]दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। [10]यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बाण। प्रोथ। कपित्थ। शुष्क। [11]शील। शुल्ब। सीधु। कवच। रेणु। कपट। [12]सीकर। मुसल। सुवर्ण। यूप। चमस। वर्ण। क्षीर। कर्ष[13]। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जृम्भ। [14]वृत्त। पुस्त। क्ष्वेडित। शृङ्ग। [15]शृङ्खल। मधु। मूल। मूलक। शराव। शाल। वप्र। विमान। मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट। मस्तक। वलय। कुसुम। तृण। पङ्क। कुण्डल। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम। भूषण। इल्वस। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश। फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चषाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पुर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुस्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। शकल। इति अर्धर्चादिः॥

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। (३२/३५०)

आदेशः कथनम्। अन्वादेशोऽनुकथनम्। इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तः,[16]तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथोऽस्मै शाटकमपि देहि। अस्य छात्रस्य शोभनं शीलम्, अथोऽस्य [17]प्रभूतं स्वम्। [18]अशादेशवचनं साकच्कार्थम् (म. भा. १.४८१)। इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। [19]नेह पश्चादुच्चारणमात्रमन्वादेशः। किं तर्हि? एकस्यैवाभिधेयस्य [20]पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः। तेनेह न भवति, देवदत्तं भोजय, इमं [21]च यज्ञदत्तम् (म. भा. १.४८०) इति॥

---

1. द्विलिङ्गौ क. 2. नपुंसकलिङ्गः अ. क. 3. नपुंसकः क, नपुंसकलिङ्गः अ. 4. वर्ष ह. 5. कार्षापण – खलीन नास्ति क. 6. कवच क. 7. पशु इत्यधिकम् ह. 8. सारक ड. 9. दण्डक ड. 10. पान ड. 11. नास्ति क. 12. शिखर क, मुसल नास्ति क. 13. करीष, यष्टक, निष्क इत्यधिकम् क. 14. मुस्त, मुस्तक पुस्तक क, बुस्त ड. 15. नास्ति ड. 16. तृतीयादेः विभक्तेः ह. 17. प्रभूतमपि क. ड, स्वम् नास्ति ह. 18. आदेश° ह. 19. नेह–आदेशः नास्ति फ. 20. पूर्वशब्देन ड. 21. च नास्ति क.

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । (३३/१९६२)

अन्वादेशे[1]ऽनुदात्त इति वर्तते । एतदोऽन्वादेशविषयस्य अशादेशो भवति अनुदात्तः त्रतसोः परतः । तौ चापि त्रतसावनुदात्तौ भवतः । एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे । एतस्माच्छात्राच् छन्दोऽधीष्व, अथो अतो व्याकरणमप्यधीष्व । [2]सर्वानुदात्तं पदं भवति । एतदोऽश् इत्यादेशे लब्धे पुनर्वचनमनुदात्तार्थम् ॥

## द्वितीयाटौस्स्वेनः । (३४/३५१)

[3]अन्वादेशेऽनुदात्तः इति वर्तते । द्वितीया टा ओस् इत्येतेषु परत इदमेतदोरन्वादेशविषययोः [4]एनशब्द आदेशो भवति अनुदात्तः[5] । इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिः । इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय । [6]अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् । एतदः खल्वपि — एतं छात्रं छन्दोऽध्यापय, अथो एनं [7]व्याकरणमप्यध्यापय । एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । एतयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् ।

[१६५] एनदिति [8]नपुंसकैकवचने वक्तव्यम् । (म.भा. १.४८२)

प्रक्षालयै[9]नत् । [10]परिवर्तयैनत् ।

इह कस्मान्न भवति, अयं दण्डो हरानेन, एतमातं ङितं विद्यात् (म.भा. १.२७५) इति ? यत्र किञ्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सो[11]ऽन्वादेशः । इह तु वस्तुनिर्देशमात्रं कृत्वा एकमेव विधानम्[12] ॥

## आर्धधातुके । (३५/२४३२)

आर्धधातुके [13]इत्यधिकारोऽयम्, 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२.४.५८/१२७६) इति [14]यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्धधातुके[15] वेदितव्यम् । वक्ष्यति 'हनो वध लिङि' (२.४.४२/२४३३) — वध्यात् । आर्धधातुके इति [16]किम् ? हन्यात् । विषयसप्तमी चेयं, न परसप्तमी । तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद् [17]यथाप्राप्तं प्रत्यया भवन्ति । भव्यम् । प्रवेयम् । आख्येयम्[18] ॥

## अदो जग्धिर्ल्यप्ति किति । (३६/३०८०)

अदो जग्धिः आदेशो भवति ल्यपि [19]परतः, तकारादौ [20]च किति प्रत्यये । प्रजग्ध्य । विजग्ध्य । [21]जग्धः । जग्धवान् । इकार उच्चारणार्थः, नानुबन्धः । तेन नुम् न भवति । एवं [22]वच्यादीनामपि । इह कस्मान्न भवति, अन्नम् ? 'अन्नाण्णः' (४.४.८५/१६३७) इति निपातनात् ।

---

1. अश् इत्यधिकम् ङ. 2. सर्वमनुदात्तं ग, सर्वानुदात्तपदं ब.क.इ. 3. अन्वादेशविषये इ. 4. एनादेशः फ. 5. च इत्यधिकम् ह. 6. एतेन ग. 7. अपि नास्ति फ. 8. नपुंसकलिङ्गैकवचने फ. 9. एतत् ह.ङ.फ. 10. अथो परिवर्तय एनम् ङ.ह. 11. अन्वादेशविषयः इ. 12. इति इत्यधिकम् इ. 13. इत्ययमधिकारः क. 14. यावत् नास्ति इ. 15. इति इत्यधिकम् ग. 16. किमर्थं इ. 17. यथायथं इ. 18. यद् भवति इत्यधिकम् इ. 19. परतः नास्ति ङ. 20. च नास्ति ङ. 21. जग्धिः क.ङ.ह. 22. वध्यादीनाम् ब, पच्यादीनाम् ह.

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्[1] ॥ (म. भा. १. ४८४)

ति इति किम् ? अद्यते । किति इति किम् ? [2]अत्तव्यम् ॥

## लुङ्सनोर्घस्लृ । (३७/२४२७)

लुङि सनि च परतो[3]ऽदो घस्लृ आदेशो भवति । [4]लृदित्करणमङर्थम् । [5]लुङि — अघसत्, अघसताम्, अघसन् । सनि — जिघत्सति, जिघत्सतः, जिघत्सन्ति ।

[१६६] घस्लृभावेऽच्युपसङ्ख्यानम् । (म. भा. १. ४८४)
प्राप्ति[6] इति [7]प्रघसः ॥

## घञपोश्च । (३८/३२३६)

घञि अपि च परतः [8]अदो घस्लृ आदेशो भवति । [9]घासः । प्रघसः । 'उपसर्गेऽदः' (३. ३. ५९/३२३५) इत्यप् ॥

## बहुलं छन्दसि । (३९/३३९८)

छन्दसि विषये बहुलमदो[10] घस्लृ आदेशो भवति । 'घस्तां नूनम्' (वा.सं. २१. ४३) । 'सग्धिश्च मे' (वा. सं. १८.९) । [11]न च भवति । [12]'आत्तामद्य मध्यतो मेद उद्भृतम्' (वा.सं. २१.४३) । अन्यतरस्यां[13]-ग्रहणमेव कस्मान् न क्रियते, तदेवोत्तरार्थमपि[14] भविष्यति ? कार्यान्तरार्थं बहुलग्रहणम् । घस्ताम् इत्यत्रोपधालोपो न भवति ॥

## लिट्यन्यतरस्याम् । (४०/२४२४)

[15]लिटि परतोऽदोऽन्यतरस्यां [16]घस्लादेशो भवति । जघास, जक्षतुः, जक्षुः । [17]आद, आदतुः, आदुः ॥

## वेञो वयिः । (४१/२४११)

लिटचन्यतरस्याम् (२.४.४०/२४२४) इति वर्तते । वेञो [18]वयिः आदेशो भवति अन्यतरस्यां लिटि परतः । इकार [19]उच्चारणार्थः । उवाय, ऊयतुः, ऊयुः । पक्षे — [20]ऊवतुः, ऊवुः । 'लिटि वयो यः' (६.१.३८/२४१३) इति यकारस्य सम्प्रसारणं प्रतिषिध्यते । 'वश्चान्यतरस्यां किति' (६. १. ३९/२४१४) इति [21]वकारो विधीयते — ववौ, ववतुः, ववुः । 'वेञः' (६. १. ४०/२४१५) इति सम्प्रसारणं न भवति ॥

---

1. के पुनरन्तरङ्गाः । हित्वा । दत्त्वा । उक्त्वा । त्वदीर्घत्वशूङ्विटां विधयः । सन्धाय । विहाय । विधाय । प्रदाय । तिपुर्द्दाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । प्रपठ्य । अद्यात् । कितीति किम् । अत्ता इत्यधिकम् क. ङ. इ. फ. ग. 2. अत्ता क. ङ. 3. अदेः क. ह. 4. लित्करणम् ङ. 5. लुङि नास्ति क. फ. 6. प्राश्नाति ह. 7. प्राघसः ह. 8. अदेः क. ग. ह. 9. प्रघासः फ. 10. अदेः इ. फ, अदो नास्ति क. 11. इह न भवति क. इ, न भवति ब. ह. 12. अत्तामद्य ङ. 13. °ग्रहणमेकस्मात् फ. 14. अपि नास्ति फ. 15. अदेः घस्लादेशो भवति लिटि परतः अन्यतरस्याम् क. 16. घसादेशः ह. 17. इह न भवति इत्यधिकम् ह. 18. वयिरित्ययमादेशः क. 19. उच्चारणार्थम् ग. 20. उवाय इत्यधिकम् क. 21. यवकारौ विधीयेते इ, यकारश्च वकारो क.

## हनो वध लिङि । (४२/२४३३)

हन्ते[1]र्धातोः वध इत्ययमादेशो भवति [2]लिङि परत [3]आर्धधातुके । वध्यात्, वध्यास्ताम्, वध्यासुः । अकारान्तश्चायमादेशः । तत्रा[4]कारस्य लोपो भवति (६.४.४८/२३०८) । तस्य स्थानिवद्भावाद् अवधीत् [5]इति हलन्तलक्षणा वृद्धिः (७.२.३/२२६७) न भवति[6] ॥

## लुङि च । (४३/२४३४)

लुङि च परतः हनो वध इत्ययमादेशो भवति । अवधीत्, अवधिष्टाम्, अवधिषुः । योगविभाग उत्तरार्थः । आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लिङि मा भूत् ॥

## आत्मनेपदेष्वन्यतरस्याम् । (४४/२६९६)

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । आत्मनेपदेषु [7]परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति । आवधिष्ट, आवधिषाताम्, आवधिषत । न [8]च भवति । आहत, आहसाताम्, आहसत[9] ॥

## इणो गा लुङि । (४५/२४५८)

इणः गा [10]इत्ययमादेशो भवति लुङि परतः । अगात्, अगाताम्, अगुः । लुङि इति वर्तमाने पुनर्लुङ्ग्रहणम् [11]'आत्मनेपदेष्वन्यतरस्याम्' (२.४.४४/२६९६) इत्येतन्मा भूत् । इह त्वविशेषेण नित्यं च भवति । [12]अगात् । अगायि भवता ।

[१६७] [13]इण्वदिक इति वक्तव्यम् । (म.भा. १.४८५)

अध्यगात्, अध्यगाताम्, अध्यगुः ॥

## णौ गमिरबोधने । (४६/२६०७)

णौ परतः इणोऽबोधनार्थस्य गमिरादेशो भवति । [14]इकार उच्चारणार्थः । गमयति, गमयतः, गमयन्ति । अबोधने इति [15]किम् ? [16]प्रत्याययति । इण्वदिक (वा. १६७) इत्येव, अधिगमयति[17] ॥

## सनि च । (४७/२६१५)

[18]सनि परतः इणोऽबोधनार्थस्य गमिरादेशो भवति । जिगमिषति, जिगमिषतः, जिगमिषन्ति । अबोधने [19]इत्येव, अर्थान् प्रतीषिषति[20] । इण्वदिक (वा. १६७) इत्येव, अधिजिगमिषति । योगविभाग उत्तरार्थः । 'इङश्च' (२.४.४८/२६१६) इति सन्येव यथा स्यात्[21] ॥

## इङश्च । (४८/२६१६)

इङश्च सनि परतो गमिरादेशो भवति । अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते[22] ॥

---

1. धातोः नास्ति क.फ. 2. आर्धधातुके लिङि परत इ, लिङि . . . . आर्धधातुके नास्ति ह. 3. आर्धधातुके नास्ति क. 4. अतो लोपः क.इ.फ.ह. 5. इत्यत्र ड. 6. अतो हलादेर्लघोः इति इत्यधिकम् अ.ब.क.ड.इ.ग. 7. परतः नास्ति फ, हन्तेः इ. 8. चेह क. 9. 'आङो यमहनः' इत्यात्मनेपदम् । 'हनः सिच्' इति कित्वम् । 'अनुदात्तोपदेश' इति नलोपः । ह्रस्वादङ्गात् इति सिचो लोपः इत्यधिकम् क.ड.ह. 10. गाङ ब. 11. किम् इत्यधिकम् फ. 12. नास्ति ब. 13. इण्वदिका ह. 14. वाक्यमिदं नास्ति फ. 15. किमर्थम् इ. 16. अर्थान् प्रत्यापयति क.ड, प्रत्यापयति ब. 17. अधिगमयतः, अधिगमयन्ति इत्यधिकम् ब. 18. सनि च परतः क, सनि परतः नास्ति ग. 19. इत्येवम् ह. 20. प्रतिजिगमिषन्ति इत्यधिकम् फ. 21. णौ मा भूत् इत्यधिकम् क.ड.इ.फ.ह. 22. अच् झनगमां सनि इति दीर्घत्वं इत्यधिकम् ह.

## गाङ् लिटि । (४९/२४५९)

[1]गाङ आदेशो भवति इङो लिटि परतः । अधिजगे, अधिजगाते, अधिजगिरे । [2]गाङोऽनुबन्धग्रहणं [3]विशेषणार्थम्, 'गाङकुटादिभ्योऽञ्णिन्ङित्' (१.२.१/२४६१) [4]इत्यत्रास्य ग्रहणं यथा स्यात्[5] । न हि [6]स्थानिवद्भावेन गाङ इति रूपं लभ्यते ॥

## विभाषा लुङ्लृङोः । (५०/२४६०)

लुङि लृङि च परत इङो विभाषा गाङ आदेशो भवति । आदेशपक्षे 'गाङ कुटादिभ्योऽञ्णिन्ङित्' (१.२.१/२४६१) इति ङित्त्वम्, 'घुमास्थागापाजहातिसां हलि' (६.४.६६/२४६२) इति ईत्वम् । अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । न च भवति । अध्यैष्ट, अध्यैषाताम्, अध्यैषत । लृङि खल्वपि – अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त । न च भवति । अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त ॥

## णौ च संश्चङोः (५१/२६०१)

इङो गाङ विभाषा इति वर्तते । णौ इति इङपेक्षया परसप्तमी, संश्चङोः इति च [7]ण्यपेक्षया । णौ सन्परे चङपरे च परतः इङो विभाषा [8]गाङादेशो भवति । अधिजिगापयिषति । [9]न च भवति । अध्यापिपयिषति । चङि खल्वपि – अध्यजीगपत् । [10]न च भवति । अध्यापिपत् ॥

## अस्तेर्भूः । (५२/२४७०)

अस्तेर्धातोर्भूः इत्ययमादेशो भवति आर्धधातुके[11] । भविता । भवितुम् । भवितव्यम्[12] । इह कस्मान् न भवति, ईहामास, [13]ईहामासतुः, ईहामासुः ? 'कृञ्चानुप्रयुज्यते लिटि' (३.१.४०/२२३९) इति [14]प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यात् । तथा [15]चोच्यते –

अनुप्रयोगे तु भुवाऽस्त्यबाधनं
स्मरन्ति [16]कर्तुर्वचनान्मनीषिणः ।

[17]इति ॥

## ब्रुवो वचिः । (५३/२४५३)

ब्रुवो वचिरादेशो भवति [18]आर्धधातुकविषये । इकार उच्चारणार्थः । वक्ता । वक्तुम् । वक्तव्यम् । स्थानिवद्भावेन कर्त्रभिप्राय[19]क्रियाफलविवक्षायामात्मनेपदं भवति । ऊचे । वक्ष्यते[20] ॥

---

1. इङो गाङ आदेशः क. इ. 2. गाङनुबन्धग्रहणं ब, गाङ इत्यनुबन्धकरणं क. इ, गाङ इत्यनुकरणं ह. 3. विशेषणार्थम् नास्ति ह. 4. अत्र नास्ति क. फ. ह, इत्यत्र गाङ इति ब. 5. इह न भवति अगासीन्नट इति इत्यधिकम् ह. 6. स्थानिवद्भावात् क. 7. णिजपेक्षया इ. 8. गाङ इत्ययमादेशः ह. 9. गाङादेशो नास्ति क. इ. ह. 10. न च भवति नास्ति ह. 11. परतः इत्यधिकम् ह. 12. आर्धधातुके इति किम् ? अस्ति स्तः सन्ति इत्यधिकम् अ. 13. ईहामासतुः, ईहामासुः नास्ति ब. फ. ह. 14. प्रत्याहारेण ब. ह. 15. च नास्ति क. 16. कर्तुर्वचनम् अ. ब. फ. 17. इति नास्ति क. 18. आर्धधातुके विषये फ, आर्धधातुके ब. इ. 19. °क्रियाफले आत्मनेपदं फ. 20. इति इत्यधिकम् ग.

## चक्षिङः ख्याञ्। (५४/२४३६)

चक्षिङः ख्याञ् आदेशो भवति आर्धधातुके[1]। आख्याता। आख्यातुम्। आख्यातव्यम्। स्थानिवद्भावेन नित्यमात्मनेपदं न भवति, ञकारा[2]नुबन्धकरणसामर्थ्यात्। आख्यास्यति। आख्यास्यते।

[१६८] क्शादिरप्ययमादेश इष्यते।

[3]आक्शाता। आक्शातुम्। आक्शातव्यम्।

[१६९] वर्जने प्रतिषेधो वक्तव्यः। (म. भा. १.४८७)

दुर्जनाः [4]संचक्ष्याः। वर्जनीयाः इत्यर्थः।

[१७०] [5]असनयोश्च प्रतिषेधो [6]वक्तव्यः। (म. भा. १.४८७)

'[7]नृचक्षा रक्षः' (अ. वे. ८.३.१०) [8]हिंसार्थोऽत्र धातुः। [9]अने खल्वपि – विचक्षणः [10]पण्डितः।

[१७१] बहुलं सञ्ज्ञाछन्दसोरिति वक्तव्यम्। (म. भा. १.४८८)

[11]अन्नवधकगात्रविचक्षणाजिराद्यर्थम् (म. भा. १.४८८)॥

## वा लिटि। (५५/२४३७)

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। लिटि परतश्चक्षिङः ख्याञ् आदेशः वा भवति। आचख्यौ, आचख्यतुः, आचख्युः। न च भवति। आचचक्षे, आचचक्षाते, आचचक्षिरे॥

## अजेर्व्यघञपोः (५६/२२९२)

अजेर्धातोः वी इत्ययमादेशो भवत्यार्धधातुके [12]परतो घञपौ वर्जयित्वा। [13]प्रवयणीयः (३.१.९६/२८३४)। प्रवायकः (३.१.१३३/२८९५)। अघञपोः इति किम्? समाजः। उदाजः (३.३.१८/३१८४)। अपि तु – समजः। उदजः। 'समुदोरजः पशुषु' (३.३.६९/३२४६) इत्यप्। दीर्घोच्चारणं किम्? प्रवीताः।

[१७२] घञपोः प्रतिषेधे क्यप उपसङ्ख्यानं कर्तव्यम्। (म. भा. १.४८८)

समज्या (३.३.९९/३२७६)।

[१७३] वलादावार्धधातुके विकल्प इष्यते।

प्रवेता, प्राजिता। प्रवेतुम्, [14]प्राजितुम् (म.भा. १.४८८)॥

---

1. विवक्षिते इत्यधिकम् इ. 2. °नुबन्धसामर्थ्यात् फ. 3. आश्ख्याता, आश्ख्यातुम्, आश्ख्यातव्यम् ह. 4. संचक्षणीयाः ब. 5. हिंसाज्ञानयोश्च प्रतिषेधो वक्तव्यः ब. 6. वक्तव्यः नास्ति ग. 7. नृचक्षे रक्षः क. ड, नृपचक्ष रक्षः ह, नृचक्षा राक्षसाः मुद्रितपुस्तकेषु. 8. रक्ष हिंसार्थो वा धातुः इ. 9. ज्ञाने ब. 10. पण्डितः नास्ति फ. ह. 11. अन्नविचक्षणवधकगात्राजिराद्यर्थम् ड, अन्नवधकगत° फ. 12. परतो नास्ति इ. फ. 13. प्रवयणीयम् फ. 14. प्राजितुम् नास्ति ब.

## वा यौ । (५७/३२९२)

पूर्वेण नित्ये प्राप्ते विकल्प [1]उच्यते । यु इति ल्युटो ग्रहणम् । यौ परभूते अजेर्वा वी इत्ययमादेशो भवति । प्रवयणो दण्डः, प्राजनो दण्डः । [2]प्रवयणमानय, प्राजनमानय ॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । (५८/१२७६)

ण्यादयो गोत्रप्रत्ययाः[3] । [4]ण्यान्तात् क्षत्रियगोत्राद् [5]आर्षाद् ञितश्च [6]परयोः अण्इञोर्यूनि लुग् भवति । [7]ण्यान्तात् तावत् — 'कुर्वादिभ्यो ण्यः' (४.१.१५१/११७५), तस्माद् यूनि इञ्, (४.१.९५/१०९५), तस्य लुक्[8] । कौरव्यः पिता । कौरव्यः पुत्रः[9] । ननु च कौरव्यशब्दः [10]तिकादिषु पठ्यते, ततः फिञा भवितव्यम्, कौरव्यायणिः इति ? क्षत्रियगोत्रस्य तत्र ग्रहणम्,[11] 'कुरुनादिभ्यो ण्यः' (४.१.१७२/११९०) इत्यनेन विहितस्य, इदं तु ब्राह्मण-गोत्रम्, 'कुर्वादिभ्यो ण्यः' (४.१.१५१/११७५) इति[12] । [13]क्षत्रिय — 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (४.१.११४/१११७) इत्यण्, तस्माद् यूनि [14]इञ्, तस्य लुक् । श्वाफल्कः पिता । [15]श्वाफल्कः पुत्रः । [16]आर्ष — 'ऋष्यण्' (४.१.११४/११९०), तस्माद् यूनि इञ्, तस्य लुक्[17] । वासिष्ठः पिता । वासिष्ठः पुत्रः । [18]ञित्— 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' (४.१.१०४/११०६), तस्माद् यूनि इञ्, तस्य लुक् । बैदः पिता । बैदः पुत्रः । अणः खल्वपि — 'तिकादिभ्यः फिञ्' (४.१.१५४/११७८), तस्माद् यूनि 'प्राग् दीव्यतोऽण्' (४.१.८३/१०७३), तस्य लुक् । तैकायनिः पिता । तैकायनिः पुत्रः । एतेभ्यः इति किम् ? 'शिवादिभ्योऽण्' (४.१.११२/१११५), तस्माद् यूनि '[19]अत इञ् (४.१.९५/१०९५), तस्य लुग् न भवति । [20]कौहडः पिता । कौहडि पुत्रः । यूनि इति किम् ? वामरथ्यस्य [21]छात्राः वामरथाः । 'कुर्वादिभ्यो ण्यः' (४.१.१५१/११७५) इति ण्यः, तस्मात् 'कण्वादिभ्यो गोत्रे' (४.२.१११/१३३२) इति शैषिकोऽण् । तस्य लुग् न भवति । अणिञोः इति किम् ? दाक्षेरपत्यं [22]युवा दाक्षायणः[23] ।

[१७४] अब्राह्मणगोत्रमात्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम् । (म.भा. १.४८९)

बौधिः पिता । बौधिः पुत्रः । [24]जाबालिः पिता । जाबालिः पुत्रः । औदुम्बरिः पिता । औदुम्बरिः पुत्रः (म.भा. १.४८९) । [25]भाण्डीजङ्घिः पिता । भाण्डीजङ्घिः पुत्रः[26] । शाल्वावयवलक्षण इञ् (४.१.१७३/११९१), तस्मात् फक् (४.१.१०१/११०३), तस्य लुक् । पैलादिदर्शनात् सिद्धम् ॥

## पैलादिभ्यश्च । (५९/१०८४)

पैल इत्येवमादिभ्यश्च युवप्रत्ययस्य लुग् भवति । 'पीलाया वा' (४.१.११८/११२१) इत्यण्, तस्माद् 'अणो द्व्यचः' (४.१.१५६/११८०) इति फिञ्, तस्य लुक् । पैलः पिता । पैलः पुत्रः । अन्ये पैलादयः इञन्ताः तेभ्यः 'इञः प्राचाम्' (२.४.६०/१०८५) इति लुकि सिद्धेऽप्रागर्थः पाठः ।

पैल । [27]शालङ्कि । [28]सात्यकि । सात्यकामि । [29]दैवि । [30]औदमज्जि । [31]औदव्रजि । [32]औदमेघि । [33]औदबुद्धि । [34]दैवस्थानि । [35]पैङ्गलायनि । राणायनि । [36]रौहक्षिति । भौलिङ्गि । औद्गाहमानि । औज्जिहानि । 'तद्राजाच्चाणः[37]' (ग.सू. २१) । आकृतिगणोऽयम् ॥

---

1. आरभ्यते इ, अयम् इत्यधिकम् ह. 2. उदाहरणमिदं नास्ति क.ड.इ.ह. 3. गृह्यन्ते इत्यधिकम् ह. 4. ण्यन्तात् क. 5. अर्षञितः इ. 6. परतः ह. 7. ण्यन्तात् क.इ. 8. भवति इत्यधिकम् क.इ. 9. गार्ग्यः पिता, गार्ग्यः पुत्रः इत्यधिकम् क. 10. तिशादिषु ह. 11. औरसशब्दसाहचर्यात् इत्यधिकम् ब. 12. ण्यः इत्यधिकम् अ.क.ब.ड.इ. 13. क्षत्रियः ड. 14. इति इत्यधिकम् इ. 15. उदाहरणमिदं नास्ति ह. 16. आर्षात् इ. 17. भवति इत्यधिकम् ग. 18. आर्षञितः ब.क.इ. 19. अतः नास्ति फ. 20. कौहेडः क, कौहेडिः ब, कौहेडिः पिता, कौहेडिः पुत्रः इ.ह. 21. इमे इत्यधिकम् क. 22. माणवकः इ. 23. यञिञोश्चेति लुक् न भवति, यञिञोश्चेति फक् क. 24. जाङ्गलिः पिता, जाङ्गलिः पुत्रः ह. 25. उदाहरणमिदं नास्ति ब. 26. इत्यादि इत्यधिकम् इ. 27. औदुम्बरिः ह. 28. सत्यंकि इ. 29. नास्ति क.ह. 30. औदंचि क. 31. औदञ्जि ह. 32. नास्ति ह. 33. औदशुद्धि इ.ह, औदपाणि, ऐराणी ह. 34. देवसादि ह. 35. पैंगाक्षि क. 36. राहक्षिति क.इ. 37. अङ्गस्यापत्यं आङ्गः पिता, आङ्गः पुत्रः इत्यधिकम् क.इ.

## इञः प्राचाम्। (६०/१०८५)

[1]गोत्रे य इञ्, तदन्ताद् युवप्रत्ययस्य लुग् भवति। गोत्रविशेषणं [2]प्राग्ग्रहणम्, न विकल्पार्थम्। पान्नागारेरपत्यं युवा। 'यञिञोश्च' (४. १. १०१/११०३) इति फक्, तस्य लुक्। पान्नागारिः पिता। पान्नागारिः पुत्रः। [3]मान्थरैषणिः पिता। [4]मान्थरैषणिः पुत्रः। प्राचाम् इति [5]किम्? दाक्षिः पिता। दाक्षायणः पुत्रः॥

## न तौल्वलिभ्यः।(६१/१०८६)

[6]अनन्तरेण प्राप्तो लुक् प्रतिषिध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग् भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः।

[7]तौल्वलि। धारणि। [8]रावणि। पारणि। [9]दैलीपि। [10]दैवलि। [11]दैवमति। दैवयज्ञि। [12]प्रावाहणि। [13]मान्धातकि। [14]आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। [15]आसुरि। आयुधि। [16]नैमिषि। [17]आसिबन्धकि। बैकि। आन्तरहाति। पौष्करसादि। [18]वैरकि। [19]वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामालि॥

## तद्राजस्य बहुषु तेनैवास्त्रियाम्। (६२/११९३)

'ते तद्राजाः' (४. १. १७२/११९२), 'ञ्यादयस्तद्राजाः' (५.३.११९/२०७२) इति[20] वक्ष्यति, [21]तस्य [22]तद्राजसञ्ज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग् भवति, तेनैव चेत् तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। [23]पुण्ड्राः। सुह्माः। [24]मगधाः (४.१. १७०/११८८)। लोहध्वजाः। [25]व्रीहिमन्तः (५.३.११२/२०६६)। तद्राजस्य इति[26] किम्? औपगवाः। बहुषु इति [27]किम्? आङ्गः। तेनैव ग्रहणं [28]किम्? प्रियो वाङ्गो येषां त इमे प्रियवाङ्गाः (म. भा. १. ४९०)। अस्त्रियाम् इति [29]किम्? आङ्ग्यः स्त्रियः (म. भा. १. ४९०)॥

## यस्कादिभ्यो गोत्रे।(६३/११४६)

बहुषु तेनैवास्त्रियाम् इति सर्वमनुवर्तते। यस्क इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग् भवति, तेनैव चेद् [30]गोत्रप्रत्ययेन [31]कृतं बहुत्वं भवति। प्रत्ययविधेश्चान्यत्र[32] लौकिकस्य [33]गोत्रस्य ग्रहणम् इत्यनन्तरापत्येऽपि लुग् भवत्येव। यस्काः। [34]लभ्याः। बहुषु इत्येव, यास्कः। तेनैव इत्येव, प्रिययास्काः। अस्त्रियाम् इत्येव, यास्क्यः स्त्रियः। गोत्रे इति किम्? यास्काश्छात्राः।

---

1. प्राचां इत्यधिकम् इ. क. 2. प्राचां ग्रहणं ह. क. 3-4. मान्धरेषणिः ब. क. ड. ह. 5. किमर्थम् इ. 6. आनन्तरो लुक् क. 7. तैल्वलि ब. क. 8. नास्ति क. 9. दैवीमि ह. 10. नास्ति क. ह. 11. दैवमिति क, दैवति इ, दैवमित्रि. 12. प्राणगाति ह, प्राणहति क. ड. फ. 13. आबन्धकि ह. 14. आनुराहति क.ड.इ, आसुराहति फ. 15. आसुरि, आयुधि नास्ति ह,रान्वकि आसुराहति प्राणाहति पैङ्कि कान्दकि दौषकगति आन्तराहति इत्यधिकम् क.ड. 16. नैमित्ति ह. 17. आसि ड, आसिपिण्डि ग. 18. वैकरि इ. 19. नास्ति ड. 20. च इत्यधिकम् क. ड. 21. तस्येदं ग्रहणम् फ. 22. तद्राजसञ्ज्ञकस्य क, तद्राजस्य इ. 23. नास्ति ह. 24. नास्ति ड. फ. 25. व्रीहिमाताः इ. 26–27. किमर्थम् इ. 28. इति इत्यधिकम् इ. 29. किमर्थम् इ. 30. गोत्रप्रत्ययान्तेन ह. 31. कृतं नास्ति ड. 32. अन्यलौकिकस्य फ. 33. गोत्रग्रहणम् क, गोत्रप्रत्ययस्य ड. 34. लह्याः ब. क, द्रुह्याः ड. फ.

यस्क। लभ्य[1]। [2]द्रुह्य। अयःस्थूण। [3]तृणकर्ण। एते पञ्च शिवादिषु पठयन्ते। ततः परेभ्यः [4]षड्भ्यः इञ्। सदामत्त। [5]कम्बलभार। [6]बहिर्योग। [7]कर्णाटक। पिण्डीजङ्घ। [8]बकसक्थ। ततः परेभ्यश्चतुर्भ्यः 'गृष्ट्यादिभ्यश्च' (४.१.१३६/११४३) इति [9]ढञ्। [10]बस्ति। [11]कुद्रि। [12]अजबस्ति। [13]मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। [14]रक्षोमुख। जङ्घारथ। [15]उत्कास। [16]कटुकमन्थक। पुष्करसत्। [17]विषपुट। [18]उपरिमेखल। क्रोष्टुमान। [19]क्रोष्टुपाद। क्रोष्टुमाय। [20]शीर्षमाय। [21]पुष्करसच्छब्दाद् बाह्वादिपाठाद् इञ्। खरपशब्दो नडादिषु पठयते, ततः फक्। [22]पदक। [23]वर्मक। एताभ्याम् 'अत इञ्' (४.१.९५/१०९५)। भलन्दनशब्दात् 'शिवादिभ्योऽण्' (४.१.११२/१११५)। भडिल। भण्डिल। भडित। भण्डित। एतेभ्यश्चतुर्भ्यः 'अश्वादिभ्यः फञ्' (४.१.११०/१११३)॥

## यञञोश्च। (६४/११०८)

बहुषु तेनैवास्त्रियाम् (२.४.६२/११९३), गोत्रे (२.४.६३/११४६) इति [24]चानुवर्तते। यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्य [25]अस्त्रीलिङ्गस्य लुग् भवति। 'गर्गादिभ्यो यञ्' (४.१.१०५/११०७)—गर्गाः। वत्साः। अञः खल्वपि, 'अनृष्यानन्तर्ये बिदादिभ्योऽञ् (४.१.१०४/११०६) —बिदाः। उर्वाः। बहुष्वित्येव, गार्ग्यः। बैदः। [26]तेनैव इत्येव, प्रियगार्ग्याः। प्रियबैदाः। अस्त्रियाम् इत्येव, गार्ग्यः स्त्रियः। बैद्यः स्त्रियः। गोत्रे इत्येव, 'द्वीपादनुसमुद्रं यञ्' (४.३.१०/१३८०) --- द्वैप्याः। उत्सादिभ्योऽञ् (४.१.८६/१०७८) — [27]औत्साश्छात्राः।

[१७५] यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम्। (म.भा. १.४९३)

गार्ग्यस्य कुलम् गार्ग्यकुलं गर्गकुलं वा। गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा। एवं बैदस्य कुलं बैदकुलं बिदकुलं वा। बैदयोः कुलं बैदकुलं बिदकुलं वा। यञादीनाम् इति किम्? आङ्गकुलम्। [28]एकद्वयोः इति किम्? गर्गाणां कुलं [29]गर्गकुलम्। तत्पुरुषे इति किम्? गार्गस्य समीपमुपगार्ग्यम्। षष्ठ्या इति किम्? परमगार्ग्यः (म.भा. १.४९३)॥

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। (६५/११४७)

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु[30] लुग् भवति। अत्रिशब्दात् 'इतश्चानिञः' (४.१.१२२/११२५) इति ढक्। इतरेभ्यः ऋष्यण् (४.१.११४/१११७)। अत्रयः। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। बहुषु इत्येव, आत्रेयः। [31]भार्गवः। तेनैव इत्येव, [32]प्रियात्रेयाः। [33]प्रियभार्गवाः। अस्त्रियाम् इति किम्? आत्रेय्यः स्त्रियः॥

---

1. लह्य ब.क.ड.इ 2. वृह्य ह. 3. पर्णति त्रिकर्ण ड. 4. सप्तभ्यः ह. 5. कम्बलहार ड. 6. अर्हयोग ड, नास्ति फ. 7. पर्णाटक, कर्णदण्ड ड, वर्णाटक ह. 8. बकसंस्थ. 9. ढक् ब.ह. 10. बिस्ति क.इ, बिद्रिसत् ह. 11. कर्द्रु ड. 12. रजवस्ति ह, नास्ति फ. 13. मित्रयः इ. 14. रक्षेरक फ. 15. उत्सकाकुटक ड. 16. कटुकमाथक इ. 17. विशेषपुट फ. 18. परिमेषल ब. 19. कोष्टुवाद क.फ. 20. शीर्षस्मय इ. 21. °शब्दस्य ह. 22. परक फ. 23. वर्षक ड.ह. 24. सर्वमनुवर्तते क, वर्तते इ.ह. 25. अस्त्रीलिङ्गस्य नास्ति इ. 26. तेनैव .... प्रियबैदाः नास्ति इ. 27. उत्साः इ. 28. एकस्य द्वयोः ब.फ, एकद्वन्द्वयोः ह. 29. गर्गकुलम् नास्ति फ. 30. वर्तमानस्य इत्यधिकम् क.ड.इ.ह. 31. गौतमः क नास्ति ह. 32. नास्ति क. 33. नास्ति क.फ.

## बह्वच इञः प्राच्यभरतेषु । (६६/११४८)

बह्वचः प्रातिपदिकात् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च [1]वर्तते, तस्य बहुषु लुग् भवति । पन्नागाराः । मन्थरैषणाः (४. १. ९५/१०९५) । भरतेषु खल्वपि –युधिष्ठिराः । अर्जुनाः (४. १. ९६/१०९६) । बह्वचः इति [2]किम् ? [3]बैकयः । [4]पौष्पयः । प्राच्यभरतेषु इति [5]किम् ? बालाकयः (४. १. ९६/१०९६) । हास्तिदासयः (४. १. ९५/१०९५) । भरताः प्राच्या एव, तेषां पुनर्ग्रहणं ज्ञापनार्थम् अन्यत्र [6]प्राग्ग्रहणे भरतग्रहणं न भवति इति। तेन 'इञः प्राचाम्' (२.४. ६०/१०८५) इति भरतानां युवप्रत्ययस्य लुग् न भवति । [7]आर्जुनिः पिता । आर्जुनायनः (४. १. १०१/११०३) पुत्रः ॥

## न गोपवनादिभ्यः । (६७/११४९)

गोपवनादिभ्यः[8] परस्य [9]गोत्रप्रत्ययस्य[10] लुग् न भवति । बिदाद्यन्तर्गणोऽयम् । [11]ततोऽञो (४. १. १०४/११०६) गोत्रप्रत्ययस्य 'यञञोश्च' (२. ४. ६४/११०८) इति लुक् प्राप्तः प्रतिषिध्यते । [12]गौपवनाः । शैग्रवाः ।

गोपवन । शिग्रु । बिन्दु । भाजन । अश्व । अवतान । श्यामाक । [13]श्वापर्ण । एतावन्त एवाष्टौ गोपवनादयः । परिशिष्टानां हरितादीनां प्रमादपाठः । ते हि चतुर्थे[14] बिदादिषु (४. १. १०४/११०६) पठ्यन्ते । तेभ्यश्च बहुषु लुग् भवत्येव, हरिताः, किंदासाः इति ॥

## तिककितवादिभ्यो द्वन्द्वे । (६८/११५०)

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे[15] गोत्रप्रत्ययस्य बहुषु [16]लुग् भवति । [17]तैकायनयश्च कैतवायनयश्च, 'तिकादिभ्यः फिञ्' (४. १. १५४/११७८), तस्य लुक्, तिककितवाः । [18]वाङ्खरयश्च भाण्डीरथयश्च, 'अत इञ्' (४. १. ९५/१०९५), तस्य लुक्, वङ्खरभण्डीरथाः । औपकायनाश्च [19]लामकायनाश्च, 'नडादिभ्यः फक्' (४.१. ९९/११०१), तस्य लुक्, उपकलमकाः । पाफकयश्च नारकयश्च, 'अत इञ्' (४. १. ९५/१०९५), तस्य लुक्, पफकनरकाः । [20]बाकनखयश्च श्वागुदपरिणद्धयश्च, 'अत इञ्' (४. १. ९५/१०९५), तस्य लुक्, बकनखश्वगुदपरिणद्धाः । उब्जशब्दात् 'अत इञ्' (४.१.९५/१०९५), ककुभशब्दात् 'शिवादिभ्योऽण्' (४. १. ११२/१११५) तयोर्लुक्, [21]औब्जयश्च काकुभाश्च उब्जककुभाः । लाङ्कयश्च शान्तमुखयश्च, 'अत इञ्' (४. १. ९५/१०९५) तस्य लुक्, लङ्कशान्तमुखाः । उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कटशब्दाद् इञ्, तयोर्लुक्, [22]औरसायनश्च लाङ्कटयश्च उरसलङ्कटाः । भ्राष्टकयश्च कापिष्ठलयश्च, 'अत इञ्' (४. १. ९५/१०९५), तस्य लुक्, भ्रष्टककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च, 'अत इञ्' (४. १. ९५/१०९५), तस्य लुक्, कृष्णाजिनकृष्णसुन्दराः । आग्निवेश्यश्च दासेरकयश्च, अग्निवेशशब्दात् 'गर्गादिभ्यो यञ्' (४. १. १०५/११०७), दासेरकशब्दात् 'अत इञ्' (४. १. ९५/१०९५), तयोर्लुक्, अग्निवेशदासेरकाः ॥

---

1. वर्तमानस्य क. इ. 2. किमर्थम् इ. 3. चैकयः ब, वैष्कयः क, कैकेयः ह. 4. पौष्कयः ड, पौष्कराः इ, पौष्पेयः ह, पौष्यपः ब. 5. किमर्थम् इ. 6. प्राच्यग्रहणे क. ड, प्राग्ग्रहे न भवति फ. 7. अर्जुनिः पिता, अर्जुनायनिः पुत्रः क. 8. शब्देभ्यः इत्यधिकम् ड. 9. गोत्र नास्ति अ. ब. ग. 10. बहुषु इत्यधिकम् ह. 11. तत्राञो ब. ड, यत्राञो इ. 12. गोपवनाः इ. 13. श्यावर्ण ड, श्यामपर्ण फ. ह, श्यामाकपर्ण इ, श्यापर्ण्य क. 14. अध्याये इत्यधिकम् इ. 15. समासे इत्यधिकम् क. ड. 16. वर्तमानस्य इत्यधिकम् इ. ग. 17. तैकायनाश्च कैतवायनाश्च इ. 18. वाङ्खारयश्च ब, वीश्वरयश्च – वीश्वरभाण्डीरथाः इ, फांकरवयश्च ह. 19. लैमकायनाः क. 20. कानकयश्च गौदपरिणद्धयश्च कनकगुदपरिणद्धाः ड, बाकनखयश्च गौदपरिणद्धश्च बकनखगुदपरिणद्धाः इ. 21. उकयश्च काकुभाश्च उककाकुभाः इ. 22. औरगायनश्च शालंकटयनश्च उरगशलंकटाः ड. इ, °शालंकटयश्च उरसशलंकटाः क.

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । (६९/११५१)

उपक इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु[1]लुग् भवति अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम् (म. भा. १.४९४)। एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते – उपकलमकाः, भ्रष्टककपिष्ठलाः, कृष्णाजिनकृष्णसुन्दराः इति। [2]तेषां [3]पूर्वेणैव नित्यमेव लुग् भवति। अद्वन्द्वे त्वनेन विकल्पः— उपकाः, औपकायनाः। लमका, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, [4]कापिष्ठलयः। कृष्णाजिनाः, [5]कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरयः इति। परिशिष्टानां च द्वन्द्वे[6]ऽद्वन्द्वे च विकल्पः इति।

[7]पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। [8]कण्ठेरणि। [9]कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित ॥

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । (७०/११५२)

[10]आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोः अणो यञश्च बहुषु लुग् भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासङ्ख्यम् अगस्ति, कुण्डिनच् इत्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनीशब्दस्तदादेशोऽपि तथा स्यात्। अगस्त्यशब्दाद् ऋष्यण्, (४.१.११४/१११७), [11]कुण्डिनीशब्दाद् [12]गर्गादित्वाद् यञ् (४.१.१०५/११०७)। तयोः 'गोत्रेऽलुगचि' (४.१.८९/१०८१) इति लुकि [13]प्रतिषिद्धे [14]आगस्तीयाः छात्राः इति वृद्धलक्षणश्छो (४.२.११४/१३३७) भवति। कौण्डिन्ये त्वणैव भवितव्यम्, 'कण्वादिभ्यो गोत्रे' (४.२.१११/१३३२) इति। तत्र विशेषो नास्ति। [15]कौण्डिनाश्छात्राः ॥

## सुपो धातुप्रातिपदिकयोः। (७१/६५०)

सुपो विभक्तेर्धातुसञ्ज्ञायाः प्रातिपदिकसञ्ज्ञायाश्च लुग् भवति। [16]तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते (प.९०)। धातोस्तावत् – पुत्रीयति। [17]घटीयति (३.१.३२/२३०४)। प्रातिपदिकस्य – [18]कष्टश्रितः। राजपुरुषः (१.२.४६/१७९)। धातुप्रातिपदिकयोः इति [19]किम् ? वृक्षः। प्लक्षः (१.२.४५/१७८) ॥

## अदिप्रभृतिभ्यः शपः। (७२/२४२३)

[20]अदिप्रभृतिभ्य उत्तरस्य शपो लुग् भवति। अत्ति। [21]हन्ति। द्वेष्टि ॥

---

1. वर्तमानस्य इत्यधिकम् क. ड, बहुषु नास्ति फ. 2. एतेषां इ. 3. पूर्वेण ह. 4. कापिष्ठलयनाः ह. 5. कृष्णाजिनयः ग. 6. च इत्यधिकम् ड. 7. चाण्डारक इ. 8. कण्ठेरिति ब. 9. कुषीतकिः ब. 10. आगस्त्यकौण्डिन्य इत्येतयोः गोत्रप्रत्यययोरणश्च क. ड. इ. फ. ह. 11. कुण्डिन्° ड. 12. गोत्रादिभ्यो यञ् इ. ह. 13. प्रतिषेधे इ. 14. अगस्त्यायाः ब, अगस्तीयाः इ. 15. कौण्डिन्याः ह. 16. तदन्तर्गतस्तदेकदेशः इ. 17. पटीयति अ. इ. फ. ह, नास्ति क, कटीयति ड. 18. नास्ति क. 19. किमर्थम् इ. 20. अदादिभ्यो धातुभ्यः ग, अत्तिप्रभृतिभ्यः फ, अद भक्षणे इत्येवमादिभ्यः ह. 21. नास्ति ब. इ. ह.

## बहुलं छन्दसि । (७३/३४००)

छन्दसि विषये शपो बहुलं लुग् भवति । अदिप्रभृतिभ्य [1]उक्तस्ततो न भवत्यपि – 'वृत्रं हनति' (ऋ. ८. ८९. ३) । 'अहिः [2]शयते' (ऋ. १. ३२. ५) । अन्येभ्यश्च भवति – 'त्राध्वं नो देवाः' (ऋ. २. २९. ६) ॥

## यङोऽचि च । (७४/२६५०)

[3]यङो लुग् भवति अचि प्रत्यये परतः । चकारेण बहुलग्रहणमनु[4]कृष्यते, न तु छन्दसि इति । तेन छन्दसि भाषायां च यङो लुग् भवति । लोलुवः । पोपुवः । सनीस्रंसः[5] । [6]दनीध्वंसः (३.१.१३४/२८९६) । बहुलग्रहणाद[7]नच्यपि भवति । शाकुनिको लालपीति । दुन्दुभिर्वावदीति (७.३.९४/२६५१) ॥

## जुहोत्यादिभ्यः श्लुः । (७५/२४८९)

शप् अनुवर्तते, [8]न यङ । जुहोत्यादिभ्यः [9]उत्तरस्य शपः श्लुर्भवति । लुकि [10]प्रकृते श्लुविधानं [11]द्विर्वचनार्थम् (६.१.१०/२४९०) । जुहोति । [12]बिभर्ति । नेनेक्ति ॥

## बहुलं छन्दसि । (७६/३४०१)

छन्दसि विषये बहुलं शपः श्लुर्भवति । [13]यत्रोक्तं [14]तत्रं न भवति, अन्यत्रापि भवति । जुहोत्यादिभ्यस्तावन्न भवति – 'दाति प्रियाणि[15]' (ऋ. ४.८.३) । '[16]धाति देवम्' (ऋ. ७.९०.३) । अन्येभ्यश्च भवति – 'पूर्णां विवष्टि' (ऋ.७.१६.११) । '[17]जनिमा [18]विवक्ति' (ऋ. ९.९७.७) ॥

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । (७७/२२२३)

लुक्[19] अनुवर्तते, न श्लुः । गाति स्था घु पा भू इत्येतेभ्यः [20]परस्य सिचो लुग् भवति, परस्मैपदेषु [21]परतः । अगात् । अस्थात् । अदात् । अधात् । अपात् । अभूत् ।

[१७६] गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् । (म. भा. १.४९५)

गायतेः [22]पातेः च न भवति । अगासीन्नटः (म. भा. १.४९५) । अपासीन् नृपः ।

परस्मैपदेषु इति [23]किम् ? अगासातां ग्रामौ देवदत्तेन ॥

---

1. इत्युक्तमुत्तरतस्ततो न भवति. 2. शयति क. 3. अचिप्रत्यये परतः यङो लुक् भवति फ. 4. अनुवर्तते ह. 5. मरीमृजः इत्यधिकम् ग. 6. दनिस्रंस ग. 7. अन्यत्रापि क. इ. 8. न यङ नास्ति ग. 9. धातुभ्यः इत्यधिकम् क. ह. 10. प्राप्ते ह. 11. द्विर्वचनाद्यर्थम् । द्विर्वचनाभ्यासे च गुणानां ग्रहणम् क, द्विर्वचनाद्यर्थम् ड. इ, द्विर्वचनाभ्यासे तु उगुणः इ. 12. बिभेति बा. शा. 13. यत्रोक्तः ब. ड. ह. 14. तत्रोक्तं फ. 15. विद्वत्सु इत्यधिकम् इ. 16. धाति प्रियाणि मुद्रितः पाठः, ह. 17. जनिमा नास्ति ग.ह. 18. विवष्टि ह, अर्चांसि विवष्टि इ, विभक्ति न्या. 19. इति इत्यधिकम् क, वाक्यमिदं नास्ति ह. 20. उत्तरस्य क. इ. फ, यरस्य नास्ति ब. 21. परतः नास्ति ब. 22. पायतेः ग. 23. किमर्थम् इ.

## विभाषा घ्राधेट्शाच्छासः । (७८/२३७६)

घ्रा धेट् शा छा [1]सा इत्येतेभ्य [2]उत्तरस्य सिचः परस्मैपदेषु[3] विभाषा लुग् भवति । धेटः पूर्वेण प्राप्ते [4]विभाषार्थं वचनम्, परिशिष्टानामप्राप्ते । अघ्रात्, अघ्रासीत् । अधात्, अधासीत् । अशात्, अशासीत् । अच्छात्, अच्छासीत् । असात्, असासीत् । परस्मैपदेषु इत्येव, अघ्रासातां सुमनसौ देवदत्तेन ॥

## तनादिभ्यस्तथासोः । (७९/२५४७)

तनादिभ्य उत्तरस्य सिचः तथासोः [5]परतो विभाषा लुग् भवति । अतत, अतथाः । अतनिष्ट, अतनिष्ठाः । [6]असात, असाथाः । असनिष्ट, असनिष्ठाः । 'जनसनखनां सञ्झलोः' (६. ४. ४२/२५०४) इत्यात्वम् । थासा साहचर्यादात्मनेपदस्य [7]तशब्दस्य ग्रहणम् । [8]परस्मैपदे न भवति, अतनिष्ट यूयम्[9] (म. भा. १. ४९६) ॥

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः । (८०/३४०२)

मन्त्रविषये घस ह्वर णश वृ दह आत् वृच् कृ गमि जनि इत्येतेभ्यः उत्तरस्य लेः लुग् भवति । घस — 'अक्षन् पितरोऽमीमदन्त पितरः' (तै.सं. १.८.५.३) । ह्वर इति 'ह्वृ कौटिल्ये' (धा.पा. ९३१) – '[10]मा ह्वार्मित्रस्य त्वा' (तै.सं. १.१.४.१) । णश – 'धूर्तिः [11]प्रणङ्‌ मर्त्यस्य' (ऋ. १.१८.३) । वृ इति वृङ्वृञोः (धा.पा. १५१०, १२५५) सामान्येन ग्रहणम्—'सुरुचो वेन आवः' (वा.सं. १३.३) । दह — 'मा न आ धक्' (ऋ. ६.६१. १४) । आत् इति [12]आकारान्तग्रहणम् । 'प्रा पूरणे' (धा.पा. १०६१)–'[13]आप्रा द्यावापृथिवी अन्तरिक्षम्' (ऋ. १.११५.१) । वृच् — 'मा नो अस्मिन् महाधने परा वर्ग् भारभृद्यथा' (ऋ. ८.७५.१२) । कृ — 'अक्रन् कर्म कर्मकृतः'[14] (तै. सं. १. ८. ३. ३) । गमि — '(सद्यः पुष्टि निरुन्धानासो) अग्मन्' (ऋ. १. १३२. ७) । जनि — 'अज्ञत वा अस्य दन्ताः' (ऐ. ब्रा. ७. १४. २) । [15]ब्राह्मणे प्रयोगोऽयम् । मन्त्रग्रहणं [16]तु छन्दस [17]उपलक्षणार्थम् ॥

## आमः । (८१/२२३८)

आमः [18]परस्य लेः लुग् भवति । ईहाञ्चक्रे । [19]ऊहाञ्चक्रे । ईक्षाञ्चक्रे ॥

## अव्ययादाप्सुपः । (८२/४५२)

[20]अव्ययादुत्तरस्य आपः [21]सुपश्च लुग् भवति । [22]तत्र शालायाम् । [23]यत्र शालायाम् । सुपः खल्वपि-कृत्वा । [24]हृत्वा ॥

---

1. सा नास्ति ह. 2. परस्य फ. 3. परतः इत्यधिकम् क.इ.फ. 4. विभाषा क.ड.इ.फ. 5. परतो नास्ति इ. 6. असत, असथाः इ. 7. तस्य क, तशब्दस्य नास्ति ह. 8. तेन इत्यधिकम् ह. 9. इति इत्यधिकम् क. इ. ग. 10. मा ह्वर्मित्रस्य त्वम् मुद्रितपुस्तकेषु, मन्त्रस्य त्वम् क. 11. प्राणङ् मुद्रितपुस्तकेषु, प्राणद् वैश्यस्य ड, प्राणद् दैत्यस्य क.इ. 12. आकारान्तानां ड. 13. आप्रात् ड. 14. कर्म नास्ति ड. 15. ब्राह्मणप्रयोगोऽयम् ड. 16. तु नास्ति ड. 17. उपलक्षणम् क. ड. इ. ह. 18. उत्तरस्य फ. 19. नास्ति क.ड. इ. फ. 20. अव्ययादङ्गादुत्तरस्य फ. ग. 21. सुपश्चाङ्गादुत्तरस्य क. 22. आपस्तावत् इत्यधिकम् क. इ. 23. उदाहरणमिदं नास्ति फ. 24. हृत्वा क, हित्वा अ. ब. ग.

## नाव्ययीभावादतोऽम् त्वपञ्चम्याः । (८३/६५७)

पूर्वेण [1]लुक् प्राप्तः प्रतिषिध्यते । अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवति, [2]अमादेशस्तु [3]तस्य सुपो भवत्यपञ्चम्याः । [4]एतस्मिन् प्रतिषिद्धे पञ्चम्याः [5]श्रवणमेव भवति । उपकुम्भं तिष्ठति । उपकुम्भं पश्य । [6]उपमणिकं तिष्ठति । उपमणिकं पश्य । अतः इति [7]किम् ? अधिस्त्रि । [8]अधिकुमारि । अपञ्चम्याः इति किम् ? उपकुम्भादानय ॥

## तृतीयासप्तम्योर्बहुलम् । (८४/६५८)

पूर्वेण नित्यमम्भावे प्राप्ते वचनमि[9]दम् । तृतीयासप्तम्योः[10]विभक्त्योर्बहुलम्[11]अम्भावो भवति [12]अव्ययीभावे । उपकुम्भेन कृतम्, उपकुम्भं कृतम् । उपकुम्भे निधेहि, उपकुम्भं निधेहि ।

[१७७] सप्तम्या [13]ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्यमिति वक्तव्यम् । (म.भा. १.४९९)

[14]सुमद्रम् [15]सुमगधम् । [16]उन्मत्तगङ्गम् । [17]लोहितगङ्गम् । [18]एकविंशतिभारद्वाजम् (म.भा. १.४९९) । [19]बहुलवचनात् सिद्धम् ॥

## लुटः प्रथमस्य डारौरसः (८५/२१८८)

लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च [20]यथाक्रमम् डा रौ रस् इत्येते आदेशा भवन्ति । कर्ता, कर्तारौ, कर्तारः । [21]आत्मनेपदस्य — अध्येता, अध्येतारौ, अध्येतारः । [22]प्रथमस्य इति किम् ? [23]श्वः कर्तासि । श्वोऽध्येतासे ॥

इति [24]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ [25]द्वितीयाध्यायस्य चतुर्थः पादः[26] ॥

——( ० )——

1. लुक् नास्ति ह. 2. अमादेशश्च इ. 3. तस्य भवति पञ्चमीं वर्जयित्वा क.ड.इ.ह. 4. तस्मिन् प्रतिषेधे ह. 5. श्रवणं भवत्येव फ. 6. उदाहरणमिदं नास्ति ड.इ.फ.ह.ग. 7. किमर्थम् इ.फ. 8. अधिशष्कुलि फ. 9. इदम् नास्ति क.इ. 10. विभक्त्योः नास्ति क.इ. 11. अम् फ, अमादेशो क.ड, अम्भावो विधीयते इ. 12. अव्ययीभावे नास्ति क.इ.फ. 13. समृद्धि° क.फ. 14. ऋद्धिसमास—इत्यधिकम् क. 15. नास्ति इ. 16. नदीसमास—इत्यधिकम् क. 17. नास्ति फ. 18. सङ्ख्या वंशे इत्यधिकम् क, सङ्ख्यावयवे इत्यधिकम् इ. 19. बहुलवचनेन इ. 20. यथासङ्ख्यम् अ.ह. 21. आत्मनेपदेषु ह, आत्मनेपदस्य च ड. 22. प्रथमपुरुषस्य इ. 23. श्वः नास्ति ब.क.इ.ह, कर्तासे ब. 24. विरचितायां नास्ति ड.ह. 25. द्वितीयस्य तुरीय पादः इ. 26. इति काशिकावृत्तौ द्वितीयाध्यायः समाप्तः । श्रीशके 1455 विजयाब्दे कार्तिके वदि 6 शुक्रे श्रीगोदातीरे श्रीनृसिंहक्षेत्रश्रीसिद्धेश्वरदेवसन्निधे उत्तरतीरे खावखेडग्रामे श्रीविश्वनाथपाठकस्यात्मजेन लिखितमिदम् । श्रीमदुपेन्द्रस्वाम्यर्थेन (स्वामिना?) लिखापितमिदम् । अन्नमठश्रीसोमलिङ्गार्पणमस्तु इत्यधिकम् इ.

# का शि का

## तृतीयोऽध्यायः

### प्रथमः पादः

**प्रत्ययः । (१/१८०)**

[1]अधिकारोऽयम् । प्रत्ययशब्दः सञ्ज्ञात्वेनाधिक्रियते । आ पञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामः, प्रत्ययसञ्ज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकारागमान् वर्जयित्वा । वक्ष्यति — 'तव्यत्तव्यानीयरः' (३.१.९६/२८३४) । कर्तव्यम् । करणीयम्[2] । प्रत्ययप्रदेशाः – 'प्रत्ययलोपे प्रत्ययलक्षणम्' (१.१.६२/२६२) इत्येवमादयः ॥

**परश्च । (२/१८१)**

अयमप्यधिकारो[3] योगे योगे उपतिष्ठते, परिभाषा वा । परश्च [4]स भवति धातोर्वा प्रातिपदिकाद् वा यः प्रत्ययसञ्ज्ञः । कर्तव्यम्[5] । तैत्तिरीयम् (४.३.१०२/१४८२) । चकारः पुनरस्यैव समुच्चयार्थः । तेनोणादिषु परत्वं न विकल्प्यते ॥

**आद्युदात्तश्च । (३/३७०८)**

अयमप्यधिकारः[6] परिभाषा वा । आद्युदात्तश्च स भवति यः [7]प्रत्ययसञ्ज्ञः । अनियतस्वरप्रत्ययप्रसङ्गे[8]-ऽनेकाक्षु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमादेरु[9]दात्तार्थम् । कर्तव्यम्[10] । [11]तैत्तिरीयम् ॥

**अनुदात्तौ सुप्पितौ । (४/३७०९)**

पूर्वस्यायमपवादः । सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति । [12]दृषदौ । दृषदः । पितः खल्वपि — पचति । पठति ॥

**गुप्तिज्किद्भ्यः सन् । (५/२३९३)**

'गुप गोपने' (धा.पा. ९७१), 'तिज [13]निशाने' (धा.पा. ९७२), 'कित निवासे' (धा.पा. ९९४) एतेभ्यो धातुभ्यः सन् प्रत्ययो भवति । प्रत्ययसञ्ज्ञा चाधिकृतैव । जुगुप्सते । तितिक्षते । चिकित्सति ।

[१७८] निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यतेऽन्यत्र [14]यथाप्राप्तं प्रत्यया भवन्ति ।

गोपयति । तेजयति । सङ्केतयति । गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् (म.भा. २. १०) ॥

---

1. अधिकारोऽयम् नास्ति ग.फ. 2. तैत्तिरीयम् इत्यधिकम् अ.ब.क.ड.ह. 3. वेदितव्यः इत्यधिकम् अ.फ. 4. स नास्ति फ. 5. करणीयम् इत्यधिकम् अ.फ. 6. योगे योगे उपतिष्ठते इत्यधिकम् फ. 7. प्रत्ययसञ्ज्ञकः ग.फ. 8. सति इत्यधिकम् फ, अनेकाक्षु नास्ति ग. 9. उदात्तार्थे ब. 10. करणीयम् इत्यधिकम् ग. 11. नास्ति ग. 12. दृषद् इत्यधिकम् फ. 13. निशातने ग.फ. 14. तु इत्यधिकम् क.

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । (६/२३९४)

'मान पूजायाम्' (धा. पा. ९७३), 'बध बन्धने' (धा.पा. ९७४), 'दान अवखण्डने' (धा. पा. ९९५), 'शान [1]अवतेजने' (धा. पा. ९९६), इत्येतेभ्यो धातुभ्यः सन् प्रत्ययो भवति, अभ्यासस्य च इकारस्य [2]दीर्घादेशो भवति। मीमांसते। बीभत्सते। [3]दीदांसते। [4]शीशांसते। उत्तरसूत्रे वाग्रहणं [5]सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न [6]भवत्यपि। [7]मानयति। बाधयति। दानयति। [8]निशानयति।

[१७९] अत्रापि सन्नर्थविशेष इष्यते।

मानेर्जिज्ञासायाम्, बधेर्वैरूप्ये, दानेरार्जवे, शानेर्निशाने[9] ॥

## धातोः कर्मणः समानकर्तृकादिच्छायां वा। (७/२६०८)

इषिकर्म यो धातुरिषिणैव समानकर्तृकः, तस्मादिच्छायामर्थे वा सन् प्रत्ययो भवति। कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम्[10]। कर्तुमिच्छति चिकीर्षति। [11]जिहीर्षति। [12]धातुग्रहणं किम्? सोपसर्गादुत्पत्तिर्मा भूत्। प्रकर्तुमैच्छत् प्राचिकीर्षत्। कर्मणः इति किम्? करणान् मा भूत्। गमनेनेच्छति। समानकर्तृकात् इति किम्? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः। इच्छायाम् इति किम्? कर्तुं जानाति। वावचनाद् वाक्यमपि भवति। धातोः इति विधानादत्र सनः आर्धधातुकसञ्ज्ञा [13]भवति, न पूर्वत्र।

[१८०] आशङ्कायामुपसंख्यानम्। (म.भा. २.१४)

आशङ्के पतिष्यति कूलम्, पिपतिषति कूलम्। [14]श्वा मुमूर्षति।

[१८१] इच्छासन्नन्तात् प्रतिषेधो वक्तव्यः। (म.भा. २.१५)

चिकीर्षितुमिच्छति। [15]विशेषणं किम्? [16]जुगुप्सिषते। मीमांसिषते।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
[17]सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥ (म. भा. २.१५)

## सुप आत्मनः क्यच्। (८/२६९७)

कर्मणः इच्छायां वा [18]इत्यनुवर्तते। इषिकर्मणः एषितुः[19]एवात्मसम्बन्धिनः सुबन्ताद् इच्छायामर्थे वा क्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रीयति[20]। सुब्ग्रहणं किम्? वाक्यान् मा भूत्। महान्तं पुत्रमिच्छति (म. भा. २. १७)। आत्मनः इति किम्? राज्ञः पुत्रमिच्छति[21]। ककारः 'नः क्ये' (१. ४. १५/२६५९) इति सामान्यग्रहणार्थः। चकारस्तदविघातार्थः।

---

1. अव नास्ति फ. 2. दीर्घो फ. 3. दीदांसति ड. 4. शीशांसति ड. 5. सर्वशेषो अ. क. फ. 6. भवत्येव फ, भवति क. 7. अतिमानयति क अभिमानयति ड. 8. नि नास्ति फ. 9. निशानमवदानम् इत्यधिकम् क, अवदानं निशानम्। चुरादावस्य पाठात् णिच्, तस्मात् पचाद्यच् इत्यधिकम् ड. 10. वेद्यम् इत्यधिकम् फ, विशेषणम् इत्यधिकम् क. ड, वाचकं वेदितव्यम् इत्यधिकम् ग. 11. हर्तुमिच्छति इत्यधिकम् क. 12. धातोरिति क.ग.फ. 13. भवति नास्ति क. 14. उदाहरणमिदं नास्ति क. 15. इच्छा इत्यधिकम् ग. 16. जुगुप्सिषति ग. 17. सरूपप्रत्ययः क. ड. 18. इति नास्ति क. फ. 19. एव नास्ति फ. 20. वरीयति इत्यधिकम् फ, पटीयति इत्यधिकम् क. ड. 21. अमात्यः इत्यधिकम् क.

[१८२] क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः । (म.भा. २.१९)
इदमिच्छति[1] । उच्चैरिच्छति । नीचैरिच्छति ।

[१८३] छन्दसि परेच्छायामिति वक्तव्यम् । (म. भा. २.१६)
'मा त्वा वृका अघायवो विदन्' (वा. सं. ४.३४) ॥

## काम्यच्च । (९/२६६३)

सुबन्तात् कर्मणः [2]आत्मेच्छायां काम्यच् प्रत्ययो [3]भवति । आत्मनः [4]पुत्रमिच्छति पुत्रकाम्यति । [5]वस्त्रकाम्यति । योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः । ककारस्य इत्सञ्ज्ञा प्रयोजनाभावान् न भवति (म.भा. २.२०), चकारादित्वाद् वा काम्यचः । [6]उपयट्काम्यति (म. भा. २.२०) ॥

## उपमानादाचारे । (१०/२६६४)

क्यच् अनुवर्तते, न काम्यच् । उपमानात् कर्मणः सुबन्तादाचारेऽर्थे [7]वा क्यच् प्रत्ययो [8]भवति । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैव उपमानस्य कर्मता । पुत्रमिव आचरति[9] पुत्रीयति [10]छात्रम् । प्रावारीयति कम्बलम् ।

[१८४] अधिकरणाच्चेति वक्तव्यम् । (म. भा. २.२०)
प्रासादीयति [11]कुटयाम् (म.भा. २.२०) । [12]पर्यङ्कीयति [13]मञ्चके ॥

## कर्तुः क्यङ् सलोपश्च । (११/२६६५)

आचारे [14]इत्यनुवर्तते । उपमानात् कर्तुः सुबन्तादाचारेऽर्थे [15]वा क्यङ्प्रत्ययो भवति, सकारस्य च लोपो [16]भवति । अन्वाचयशिष्टः सलोपः, [17]तदभावेऽपि क्यङ् भवत्येव[18] । श्येन इवाचरति [19]काकः श्येनायते । कुमुदं पुष्करायते । सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषा भवति ।

[१८५] ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया ।
(सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः) (जै. सू. २.१.९१)

ओजायमानं यो अहिं जघान (ऋ.२.१२.११) । ओजायते, अप्सरायते (म.भा.२.२१) । पयायते, [20]पयस्यते (म.भा. २.२२) ।

सलोपविधौ च कर्तुः इति स्थानषष्ठी (१.१.४९/३८) सम्पद्यते, तत्रालोन्त्यनियमे सति (१.१.५२/४२) हंसायते, सारसायते [21]इति सलोपो न भवति ।

---

1. किमिच्छति इत्यधिकम् क. ड. 2. इच्छायामर्थे क. ड. फ. 3. वा इत्यधिकम् क. 4. एव इत्यधिकम् फ. 5. बन्धुकाम्यति क, बालाकाम्यति फ, वसुकाम्यति ड. 6. नास्ति अ. ब. क. फ. 7. वा नास्ति फ. 8. भवति नास्ति फ. 9. छात्राचार्यः इत्यधिकम् फ. 10. माणवकम् ड. 11. कुड्ये मुद्रितः पाठः 12. उदाहरणमिदं नास्ति फ, पर्यङ्कयति अ. 13. मञ्चे क. 14. इति वर्तते क. फ. 15. वा नास्ति फ. 16. भवति नास्ति फ. 17. तदसम्भवे क. 18. एव नास्ति फ. 19. काकः नास्ति फ, श्येनायते काकः क. 20. नास्ति ब. 21. इत्यत्र अ. क.

[१८६] आचारे[1]ऽवगल्भक्लीबहोडेभ्यः क्विब् वा [2]वक्तव्यः। (म. भा. २.२१)
अवगल्भतें, अवगल्भायते। क्लीबते, क्लीबायते। [3]होडते, होडायते।
[१८७] सर्वप्रातिपदिकेभ्य इत्येके। (म. भा. २.२१)
अश्व इव आचरति अश्वायते, अश्वति। गर्दभायतें, गर्दभति॥

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः। (१२/२६६७)

भृश इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ् प्रत्ययो भवति, हलन्तानां च लोपः[4]। अच्वेः इति प्रत्येकमभिसम्बध्यते। किमर्थं पुनरिदमुच्यते, यावता भवतियोगे च्विर्विधीयते, तेनोक्तार्थत्वाच् च्व्यन्तेभ्यो न क्यङ् भविष्यति (म. भा. २.२२)? [5]तत्सादृश्यप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ् प्रत्ययः। अभृशो भृशो भवति भृशायते। शीघ्रायते।

भृश। शीघ्र। मन्द। चपल। पण्डित। [6]उत्सुक। उन्मनस्। [7]अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्[8]। बृहत्। वेहत्। नृषत्[9]। शुधि। अधर। ओजस्। वर्चस्[10]। भृशादिः।

अच्वेः इति किम्? भृशीभवति॥

## लोहितादिडाज्भ्यः क्यष्। (१३/२६६८)

लोहितादिभ्यो[11] डाजन्तेभ्यश्च भवत्यर्थे [12]क्यष् प्रत्ययो भवति। [13]लोहितायति, लोहितायते। डाजन्तेभ्यः — पटपटायति, पटपटायते।

[१८८] लोहितडाज्भ्यः क्यष् वचनम्, भृशादिष्वितराणि[14]। (म.भा. २.२४)

यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङ् एव, अपरिपठितेभ्यस्तु क्यष् एव भवति। वर्मायति, वर्मायते। निद्रायति, निद्रायते। करुणायति, करुणायते। कृपायति, कृपायते। आकृतिगणोऽयम्। तथा च ककारः सामान्यग्रहणार्थोऽनुबध्यते 'नः क्ये' (१.४.१५/२६५९) इति। न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति। कृभ्वस्तिभिरिव क्यषाऽपि योगे डाज् भवति इत्येतदेव वचनं ज्ञापकम्। अच्वेः इत्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते।

लोहित। नील। हरित[15]। पीत। मद्र। फेन। मन्द। लोहितादिः॥

## कष्टाय क्रमणे। (१४/२६७०)

क्यङ् अनुवर्तते, न क्यष्। कष्टशब्दाच् चतुर्थीसमर्थात् क्रमणेऽर्थेऽनार्जवे क्यङ् प्रत्ययो भवति। कष्टाय [16]कर्मणे क्रामति कष्टायते। अत्यल्पमिदमुच्यते (म. भा. २.२५)।

[१८९] सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्। (म. भा. २.२५)

[17]कण्वचिकीर्षा [18]पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति। सत्रायते। कष्टायते। कक्षायते। [19]कृच्छ्रायते। गहनायते। कण्वचिकीर्षायाम् इति किम्? अजः कष्टं क्रामति (म. भा. २.२५)॥

---

1. गल्भ ड. 2. भवति फ. 3. विहोडते, विहोडायते ब. फ. म. भा. 4. भवति इत्यधिकम् क. 5. तत्सदृश° न्यास. प. मं, °प्रतिपत्त्यर्थे अ. ब. क. ग. 6. अण्डर कडर मेधा शुचि मन्द इत्यधिकम् क. 7. अतिमनस् क. 8. रोहत् रिफत् रेहत् भ्रमत् इत्यधिकम् अ. क. 9. ईषत् इत्यधिकम् क. 10. पयस् शुचिस् अन्धस् अञ्चत् प्रयत् इत्यधिकम् क. ड, सुवर्चस् अर्चिस् इत्यधिकम् अ.ड. 11. प्रातिपदिकेभ्यः इत्यधिकम् क.ड. 12. क्यष्वचनं क. 13. लोहितायति पटपटायते नास्ति क. 14. द्रष्टव्यानि इत्यधिकम् क. 15. दास इत्यधिकम् अ, चरित इत्यधिकम् ड. 16. क्रमणे ग. फ. 17. कण्वचिकीर्षायां क. फ. 18. पापचिकीर्षायां ग्रंड क. फ. 19. नास्ति ड.

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः। (१५/२६७१)

रोमन्थशब्दात् तपःशब्दाच् च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ प्रत्ययो भवति। रोमन्थं [1]वर्तयति रोमन्थायते [2]गौः।

[१९०] हनुचलने इति वक्तव्यम्। (म. भा. २. २५)

इह [3]मा भूत्, कीटो रोमन्थं वर्तयति (म. भा. २. २५)।

[१९१] तपसः परस्मैपदं च (म. भा. २. २५)।

तपश्चरति तपस्यति ॥

## बाष्पोष्मभ्यामुद्वमने। (१६/२६७२)

[4]कर्मणः इति वर्तते। बाष्पशब्दाद् [5]ऊष्मशब्दाच् च कर्मण उद्वमनेऽर्थे क्यङ प्रत्ययो भवति। बाष्पमुद्वमति बाष्पायते। [6]ऊष्मायते।

[१९२] फेनाच्चेति वक्तव्यम्। (मा. भा. २. २५)

[7]फेनमुद्वमति फेनायते ॥

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। (१७/२६७३)

[8]शब्द वैर कलह अभ्र कण्व मेघ इत्येतेभ्यः करणे करोत्यर्थे क्यङ प्रत्ययो भवति। शब्दं करोति शब्दायते। [9]वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते।

[१९३] सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्। (म. भा. २. २६)

[10]सुदिनायते। दुर्दिनायते। नीहारायते।

[१९४] [11]अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। (म. भा. २.२६)

[12]अटायते। अट्टायते। शीकायते। [13]कोटायते। पोटायते। सोटायते[14]। प्रुष्टायते। प्लुष्टायते[15] ॥

---

1. वर्तयते ङ. 2. गौः नास्ति क.फ.ह. 3. न भवति क. 4. वाक्यमिदं नास्ति फ. 5. ऊष्मन्शब्दात् क. फ. 6. ऊष्माणं उद्वमते इत्यधिकम् क, ऊष्माणं उद्भवति इत्यधिकम् अ. ङ. ह. 7. फेनमुद्वमति नास्ति अ. क. फ. 8. शब्दादिभ्यः फ. 9. वैरं करोति इत्यधिकम् ह. 10. सुदिनं करोति इत्यधिकम् ग. 11. अटाट्टाशीकाकोटापोटासोटासृष्टाप्लुष्टाधृष्टापृष्टा ह्यं° क, °ऋष्टाग्रहणं° अ. 12. नास्ति ब. 13. अपकोटायति ब. 14. सृष्टा सृष्टायते इत्यधिकम् क. 15. धृष्टा–धृष्टायते इत्यधिकम् क, पुष्टायते इत्यधिकम् अ. क, वृष्टायते इत्यधिकम् फ.

## सुखादिभ्यः कर्तृवेदनायाम् । (१८/२६७४)

कर्मग्रहणमनुवर्तते[1] । सुख इत्येवमादिभ्यः कर्मभ्यः [2]वेदनायामर्थेऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत् कर्तुः [3]सम्बन्धीनि सुखादीनि भवन्ति । सुखं वेदयते सुखायते । [4]दुःखायते । कर्तृग्रहणं किम् ? सुखं [5]वेदयते प्रसाधको देवदत्तस्य (म.भा. २.२६) ।

सुख । दुःख । [6]तृप्त । गहन । कृच्छ्र । [7]अस्र । अलीक । [8]प्रतीप । करुण । कृपण । सोढ । [9]सुखादिः ॥

## नमोवरिवश्चित्रङः क्यच् । (१९/२६७५)

करणे इति वर्तते ।[10]नमस् वरिवस् चित्रङ इत्येतेभ्यो [11]वा क्यच् प्रत्ययो भवति, करणविशेषे पूजादौ । नमसः पूजायाम् — नमस्यति [12]देवान् । वरिवसः परिचर्यायाम् — वरिवस्यति गुरून् । चित्रङ आश्चर्ये— चित्रीयते । ङकार आत्मनेपदार्थः ॥

## पुच्छभाण्डचीवराण्णिङ् । (२०/२६७६)

करणे इति वर्तते । [13]पुच्छ भाण्ड चीवर इत्येतेभ्यो णिङ् प्रत्ययो भवति करणविशेषे ।

[१९५] पुच्छादुदसने पर्यसने वा । (म.भा. २.२७)

[14]उत्पुच्छयते । परिपुच्छयते ।

[१९६] भाण्डात् समाचयने । (म.भा. २.२७)

सम्भाण्डयते[15] ।

[१९७] चीवरादर्जने परिधाने [16]वा । (म.भा. २.२७)

[17]सञ्चीवरयते भिक्षुः । ङकार आत्मनेपदार्थः । णकारः सामान्यग्रहणार्थः, 'णेरनिटि' (६.४.५१/२३१३) इति ॥

---

1. इह इत्यधिकम् ह. 2. कर्तृ इत्यधिकम् अ. 3. सम्बन्धीनि नास्ति ह. 4. दुःखं वेदयते इत्यधिकम् क. 5. वेदयति मुद्रितः पाठः 6. तीव्र क, गहन नास्ति ब. फ. 7. प्रिय आप्त इत्यधिकम् क. ड, आह्व इत्यधिकम् ब. 8. प्रदीप फ. 9. सुखादीनि क. 10. नमसादिभ्यः फ. 11. वा नास्ति ड. फ. 12. महेश्वरं फ. 13. पुच्छादिभ्यः फ. 14. उत्पुच्छायते । परिपुच्छायते ग, णौ इष्ठवत् प्रातिपदिकस्य इति टिलोपः इत्यधिकम् ड. 15. कुलालः इत्यधिकम् ह. 16. च ड. 17. वासः इत्यधिकम् ब. ई.

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । (२०/२६७७)

[1]मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः [2]करणे णिच् प्रत्ययो भवति। मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रतात् भोजने तन्निवृत्तौ च – पयो व्रतयति । वृषलान्नं [3]व्रतयति । वस्त्रात् समाच्छादने – संवस्त्रयति । [4]हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्यम् । अजहलत् । अचकलत् (म.भा. २.२८) । कृतं गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्तयति केशान् । [5]विशदीकरोति इत्यर्थः ॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । (२२/२६२९)

एकाज् यो धातुर्हलादिः क्रियासमभिहारे वर्तते तस्माद् यङ् प्रत्ययो भवति । पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । नः पुनः पचति पापच्यते । [6]यायज्यते । भृशं ज्वलति जाज्वल्यते । देदीप्यते । धातोः इति किम्? सोपसर्गाद्गुत्पत्तिर्मा भूत्, भृशं प्राटति (म.भा. २.२८) । एकाचः इति किम् ? भृशं जागर्ति । हलादेः इति किम् ? भृशमीक्षते (म.भा. २.२८) ।

[१९८] सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतीनां [7]ग्रहणं [8]यङ्विधावनेकाजहलाद्यर्थम् । (म. भा. २.२९)

सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते । [9]भृशं शोभते, भृशं रोचते (म.भा. २.२९) इत्यत्र नेष्यते, अनभिधानात् ॥

## नित्यं कौटिल्ये गतौ । (२३/२६३४)

गतिवचनाद् धातोः कौटिल्ये[11] गम्यमाने नित्यं यङ् प्रत्ययो भवति । [12]कुटिलं क्रामति चङ्क्रम्यते । [13]दन्द्रम्यते । नित्यग्रहणं [14]विषयनियमार्थं, गतिवचना[15]न्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे । भृशं क्रामति[16] ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । (२४/२६३५)

[17]लुप सद चर जप जभ दह दश गृ इत्येतेभ्यो भावगर्हायां धात्वर्थगर्हायां[18] यङ् प्रत्ययो भवति । गर्हितं लुम्पति लोलुप्यते । [19]एवं – सासद्यते । [20]चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते ।

---

1. मुण्डादिभ्यः फ. 2. करणेऽर्थे फ. 3. संवृतयति ब, न भुङ्क्ते इत्यर्थः इत्यधिकम् ड. 4. हलं ग. 5. विजटीकरोति अ. ब. ई. 6. नास्ति क, वाव्रज्यते फ. 7. उपसङ्ख्यानं फ. 8. यङ्विधाने ड. 9. भृशं शोभते नास्ति क. 10. अनभिधानात् नास्ति ह, व्यवस्थितविभाषा विज्ञास्यते तेन न भवति इत्यधिकम् अ. ड. 11. एव इत्यधिकम् ब. फ. 12. कुटिलं क्रामति नास्ति ब. ई. 13. जङ्गम्यते क. 14. विषयविभागार्थं ह. 15. धातोः इत्यधिकम् फ. ह. 16. इति इत्यधिकम् क. 17. लुपादिभ्यः ह. फ 18. गम्यमानायाम् इत्यधिकम् अ. क. ड. फ. ह. 19. एवं नास्ति अ. फ. 20. नास्ति ब, चरफलोश्च इति नुक् । उत्परस्यातः इति उत्त्वम् । हलि च इति दीर्घः इत्यधिकम् ड.

निजेगिल्यते । [1]भावगर्हायाम् इति किम् ? साधु जपति । भावग्रहणम् किम् ? साधनगर्हायां मा भूत्, मन्त्रं जपति वृषलः । नित्यग्रहणं विषयनियमार्थमनुवर्तते । एतेभ्यो [2]नित्यं भावगर्हायामेव [3]भवति, न तु क्रियासमभिहारे । भृशं लुम्पति[4] ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । (२५/२५६३)

[5]सत्यादिभ्यश्चूर्णपर्यन्तेभ्यः, चुरादिभ्यश्च णिच् प्रत्ययो भवति । सत्यमाचष्टे सत्यापयति ।

[१९९] अर्थवेदसत्यानामापुग् [6]वक्तव्यः । (म. भा. २.३०)

[7]अर्थमाचष्टे अर्थापयति । वेदापयति[8] । आपुग्वचनसामर्थ्याट्टिलोपो न भवति (म. भा. २.३४) ।

पाशाद्विमोचने – विपाशयति । [9]रूपाद् दर्शने – रूपयति । [10]वीणयोपगायति उपवीणयति । [11]तूलेनानुकुष्णाति अनुतूलयति । [12]श्लोकैरुपस्तौति उपश्लोकयति । सेनयाभियाति अभिषेणयति । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं गृह्णाति त्वचयति । अकारान्तस्त्वचशब्दः । वर्मणा [13]सन्नह्यति संवर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैः [14]अवध्वंसयति अवचूर्णयति । चुरादिभ्यः स्वार्थे । चोरयति । चिन्तयति । स्वाभाविकत्वा-[15]दर्थाभिधानस्य [16]यथास्वं प्रत्ययार्था निर्दिश्यन्ते ॥

## हेतुमति च । (२६/२५७६)

हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोः णिच् प्रत्ययो भवति । कटं कारयति । ओदनं पाचयति ।

[२००] तत्करोतीत्युपसङ्ख्यानं सूत्रयतीत्याद्यर्थम् । (म.भा. २.३४)

सूत्रं करोति सूत्रयति[17] ।

[२०१] आख्यानात्कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्[18] । (म.भा.२.३४)

आख्यानात् कृदन्ताण् णिच् वक्तव्यः तदाचष्टे इत्येतस्मिन्नर्थे, [19]कृल्लुक्, प्रकृतिप्रत्यापत्तिः,[20] प्रकृतिवच्च कारकं भवति । कंसवधमाचष्टे [21]कंसं घातयति । [22]बलिबन्धमाचष्टे बलिं बन्धयति । राजागमनमाचष्टे राजानमागमयति (म.भा. २.३४) ।

---

1. गर्हायाम् फ. ह. 2. नित्यं नास्ति फ, नित्यभावगर्हायाम् ह. 3. यङ् इत्यधिकम् क. 4. इति इत्यधिकम् फ. ह. 5. सत्याप पाश रूप वीणा तूल श्लोक सेना लोम त्वच वर्म वर्ण चूर्ण इत्येतेभ्यः फ. ह. 6. वा क. 7. अर्थमाचष्टे नास्ति क. फ. ह. 8. सत्यापयति इत्यधिकम् फ. 9. रूपदर्शने ह. 10. वीणया उपगाने क. 11. तूलैः क, तूलैरवकुष्णाति अवतूलयति ड, तूलेनावकुच्चायति ब. 12. श्लोकैरुपस्तौति नास्ति फ. 13. सन्नह्यते ड. 14. अवध्वंसति ड. 15. °अर्थाभिधेयस्य फ. 16. यथायथं प्रत्ययार्थो निर्दिश्यते अ.ग.ड.ह. 17. सूत्रयति इत्यधिकम् क. ग. 18. भवति इत्यधिकम् ग. फ. 19. कृतः लुक् क. 20. च इत्यधिकम फ. 21. कंसं नास्ति फ. 22. बलिबन्धमाचष्टे नास्ति फ.

[२०२] आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्। (म.भा. २.३५)

आरात्रि विवासमाचष्टे रात्रिं विवासयति।

[२०३] चित्रीकरणे प्रापि। (म. भा. २.३५)

उज्जयिन्याः प्रस्थितो माहिष्मत्यां [1]सूर्योद्गमनं सम्भावयते[2] सूर्यमुद्गमयति।

[२०४] नक्षत्रयोगे ज्ञि। (म.भा. २.३५)

पुष्ययोगं जानाति पुष्येण योजयति। मघाभिर्योजयति[3]॥

## कण्ड्वादिभ्यो यक्। (२७/२६७८)

कण्डूञ् इत्येवमादिभ्यो [4]यक् प्रत्ययो भवति। [5]द्विविधाः कण्ड्वादयो, धातवः प्रातिपदिकानि च। तत्र धात्वधिकाराद् धातुभ्यः एव प्रत्ययो [6]विधीयते, न तु प्रातिपदिकेभ्यः। तथा च गुणप्रतिषेधार्थः ककारोऽनुबध्यते।

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमं दीर्घं मन्ये [7]धातुर्विभाषितः॥ (म.भा. २.३८)

कण्डूञ्[8] — कण्डूयति, कण्डूयते। ञित्वात् 'कर्त्रभिप्राये क्रियाफले' (१.३.७२/२१५८) इत्यात्मनेपदम्[9]।

कण्डूञ्। मन्तु। हृणीङ। वल्गु। अस्मनस्। [10]महीङ। लेट्। लोट्[11]। इरस्। इरज्[12]। [13]इरञ्। द्रवस्[14]। मेधा। [15]कुषुभ। मगध। तन्तस्। पम्पस्। सुख। दुःख। सपर। [16]अरर। भिषज्। भिष्णज्। इषुध। चरण। [17]चुरण। भुरण। तुरण[18]। गद्गद। एला। [19]केला। खेला। लिट्। लोट्॥

## गुपूधूपविच्छिपणिपनिभ्य आयः। (२८/२३०३)

'गुपू रक्षणे' (धा. पा. ३९५), 'धूप सन्तापे' (धा. पा. ३९६), 'विच्छ गतौ' (धा. पा. १४२४), 'पण व्यवहारे स्तुतौ च' (धा. पा. ४३९), '[20]पन च' (धा. पा. ४४०) इत्येतेभ्यो [21]धातुभ्यः आयप्रत्ययो भवति[22]। गोपायति। धूपायति। विच्छायति। पणायति। पनायति। स्तुत्यर्थेन[23] पनिना साहचर्यात् तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थः। शतस्य पणते। सहस्रस्य पणते। अनुबन्धश्च केवले चरितार्थः, तेन आयप्रत्ययान्तान्नात्मनेपदं भवति॥

---

1. सूर्योद्गमनं नास्ति फ, सूर्योद्गमं सम्भावयति ड. 2. माहिष्मत्याम् इत्यधिकम् अ. क. ड. 3. आख्यानात् लुग् न भवति, नलोपाख्यानमाचष्टे, आख्यानमाचष्टे, वाक्यमेतद् भवति। तादृगर्थायां च प्रवृत्तौ लुगादि भवति, मृगरमणमाचष्टे, मृगान् रमयति, रममाणान् मृगान् अस्मै दर्शनार्थं कथयति। दृगर्थे इत्येव – ग्रामे मृगरमणमाचष्टे इत्यधिकम् अ. क. ह. 4. परतः इत्यधिकम् ग, करणे इत्यधिकम् फ. 5. द्विधा ग. 6. भवति ग. 7. °विभावनः ब. 8. गात्रविकरणे इत्यधिकम् ह. 9. भवति इत्यधिकम् फ. 10. महाङ ब, ङकार आत्मनेपदार्थः इत्यधिकम् अ. फ. ड. 11. लङ इत्यधिकम् क. 12. उरत्, उषस् इत्यधिकम् फ. 13. नास्ति ब. 14. उनस् इधुस् इत्यधिकम् अ. 15. कुकुभ् ब. 16. अवर, उषस् अ. 17. उरण, धारण अ. 18. संपात इत्यधिकम् फ. 19. रेला फ. 20. पनि च ग. 21. धातुभ्यः नास्ति क. 22. स्वार्थे इत्यधिकम् ड. 23. एव इत्यधिकम् अ. ब. क.

## ऋतेरीयङ् । (२९/२४२२)

ऋतिः सौत्रो धातुः घृणायां वर्तते,[1] ततः ईयङ प्रत्ययो भवति । ङकार आत्मनेपदार्थः । ऋतीयते, ऋतीयेते, ऋतीयन्ते । [2]ईयङ्वचनं ज्ञापनार्थं, धातुविहितानां प्रत्ययानामायन्नादयो न भवन्ति [3]इति ॥

## कमेर्णिङ् । (३०/२३१०)

कमेर्धातोः [4]णिङ प्रत्ययो भवति । णकारो वृद्ध्यर्थः । ङकार आत्मनेपदार्थः । कामयते, कामयेते, कामयन्ते ॥

## आयादय आर्धधातुके वा । (३१/२३०५)

आर्धधातुकविषये आर्धधातुकविवक्षायामायादयः [5]प्रत्यया वा भवन्ति । गोप्ता, गोपायिता । अर्तिता, ऋतीयिता । कमिता, कामयिता । नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते, तत्र यथायथं [6]प्रत्यया भवन्ति । गुप्तिः । गोपाया[7] ॥

## सनाद्यन्ता धातवः । (३२/२३०४)

[8]सन् आदिर्येषां ते सनादयः । सनादयोऽन्ते येषां ते[9] सनाद्यन्ताः । सनाद्यन्ताः समुदायाः धातुसञ्ज्ञाः भवन्ति । प्रत्ययग्रहणपरिभाषैव पदसञ्ज्ञायामन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिहान्तवचनेन प्रतिप्रसूयते । चिकीर्षति[10] । पुत्रीयति । पुत्रकाम्यति[11] ॥

## स्यतासी लृलुटोः । (३३/२१८६)

[12]लृरूपमुत्सृष्टानुबन्धं [13]सामान्यमेकमेव । तस्मिन् [14]लुटि च परतो धातोर्यथासङ्ख्यं स्यतासी प्रत्ययौ भवतः । करिष्यति । अकरिष्यत् । श्वः कर्ता । इदित्करणमनुनासिकलोपप्रतिषेधार्थम् (६.४.२४/४१५) । मन्ता । सङ्गन्ता ॥

## सिब्बहुलं लेटि । (३४/३४२५)

धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः । जोषिषत् (ऋ. २.३५.१) । तारिषत् (ऋ. १.२५.१२) । मन्दिषत् । न च भवति । '[15]पताति दिद्युत्' (ऋ. ७.२५.१) । '(प्रजापतिः) उदधिं [16]च्यावयाति' (तै. ३.५.५.५) ॥

## कास्प्रत्ययादाममन्त्रे लिटि । (३५/२३०६)

'कासृ शब्दकुत्सायाम्' (धा.पा. ६२३), ततः[17] प्रत्ययान्तेभ्यश्च[18] धातुभ्यः आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविषये । कासाञ्चक्रे । प्रत्ययान्तेभ्यः — लोलूयाञ्चक्रे[19] । अमन्त्रे इति किम् ? 'कृष्णो नोनाव' (ऋ. १.७९.२) ॥

---

1. इति अ.ह. 2. ऋतेः छङ इति सिद्धे इत्यधिकम् ब.क.ड.इ.फ.ग. 3. इति नास्ति ह. 4. णीङ ह. 5. प्रत्ययाः नास्ति अ. 6. प्राग्वदार्धधातुकप्रत्ययाः ह. 7. आय इयङ णिङ, आयादि इत्यधिकम् ड. 8. वाक्यमिदं नास्ति अ. 9. इमे इत्यधिकम् क. 10. जिहीर्षति इत्यधिकम् ह. 11. सन् कन् काम्यच् सनादिः इत्यधिकम् ड. 12. लृ इति रूपम् क. 13. सामान्यमेव क.ह. 14. लृङि, लृटि इत्यधिकम् क. 15. पदाति ड, पदातीति विद्युत् क. 16. व्यावर्ज्यति क, नास्ति ड. 17. च इत्यधिकम्. 18. च नास्ति ह. 19. पोपूयांचक्रे ह.

[२०५] कास्यनेकाचः इति वक्तव्यम् चुलुम्पाद्यर्थम् । (म.भा. २.४४)
चकासाञ्चकार । दरिद्राञ्चकार । चुलुम्पाञ्चकार । (म.भा. २.४४)

आमोऽमित्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोरांविधानाच्च पररूपं कतन्तवत् ॥

## इजादेश्च गुरुमतोऽनृच्छः । (३६/२२३७)

इजादिर्यो धातुर्गुरुमान् [1]ऋच्छतिवर्जितः, तस्माच्च लिटि परत आम् प्रत्ययो भवति । 'ईह चेष्टायाम्' (धा.पा. ६३२) । 'ऊह वितर्के' (धा.पा. ६४८) । ईहाञ्चक्रे । ऊहाञ्चक्रे । इजादेः इति किम् ? ततक्ष । ररक्ष । गुरुमतः इति किम् ? इयज । उवप[2] । अनृच्छः इति किम् ? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः ।

[२०६] ऊर्णोतेश्च प्रतिषेधो वक्तव्यः । (म.भा. २.४६)

प्रोर्णुनाव । अथ वा --

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च [3]प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ (म.भा.२.४६)

## दयायासश्च । (३७/२३२४)

'दय दानगतिरक्षणेषु' (धा.पा. ४८१), 'अय गतौ' (धा.पा. ४७४), 'आस उपवेशने' (धा.पा. १०२२), एतेभ्यश्च लिटि परत आम् प्रत्ययो भवति । दयाञ्चक्रे । [4]पलायाञ्चक्रे । आसाञ्चक्रे ॥

## उषविदजागृभ्योऽन्यतरस्याम् । (३८/२३४१)

'[5]उष दाहे' (धा.पा. ६९६), 'विद ज्ञाने' (धा.पा.१०६५), 'जागृ निद्राक्षये' (धा.पा. १०७३), एतेभ्यो लिटि परतोऽन्यतरस्याम् आम् प्रत्ययो भवति । ओषाञ्चकार, उवोष । विदाञ्चकार, विवेद । जागराञ्चकार, जजागार । विदेरदन्तत्वप्रतिज्ञानाद् आमि गुणो न भवति ॥

## भीह्रीभृहुवां श्लुवच्च । (३९/२४९१)

'ञिभी भये' (धा. पा. १०८५), 'ह्री लज्जायाम्' (धा. पा. १०८६), 'डुभृञ् धारणपोषणयोः' (धा.पा. १०८८), 'हु दानादानयोः' (धा.पा. १०८४), एतेभ्यो लिटि परतः आम् प्रत्ययो भवति अन्यतरस्याम्, श्लाविव चास्मिन् कार्यं भवति । किं पुनस्तत्[6] ? [7]द्वित्वमित्वं च । बिभयाञ्चकार, बिभाय । जिह्रयाञ्चकार, जिह्राय । बिभराञ्चकार, बभार । जुहवाञ्चकार, जुहाव ॥

## कृञ्चानुप्रयुज्यते लिटि । (४०/२२३९)

आम्प्रत्ययस्य पश्चात् कृञ् अनुप्रयुज्यते लिटि परतः । कृञ् इति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्याद् अस्तेर्भूभावः (२.४.५२/२४७०) न भवति । पाचयाञ्चकार । पाचयाम्बभूव । पाचयामास ॥

---

1. ऋच्छवर्जितः क. 2. इयेष, उवोष इत्यधिकम् क.ड. 3. प्रतिषेधार्थः क. 4. अयांचक्रे ह, नास्ति ब, आपलायांचक्रे अ. 5. उषादिभ्यः धातुभ्यः ग. 6. कार्यम् इत्यधिकम् ड. 7. द्वित्वेत्वे अ. क. ड, द्वित्त्वमेत्वं ग.

## विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । (४१/२४६५)

विदाङ्कुर्वन्तु इत्येतदन्यतरस्यां निपात्यते । किं पुनरिह निपात्यते ? विदेर्लोटि आम् प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट्परस्यानुप्रयोगः । अत्रभवन्तो विदाङ्कुर्वन्तु, [1]विदन्तु । इतिकरणः प्रदर्शनार्थः, न केवलं [2]प्रथमपुरुषबहुवचनं, किं तर्हि सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते, विदाङ्करोतु, विदाङ्कुरुतात्, विदाङ्कुरुताम्, विदाङ्कुरु, विदाङ्कुरुतम्[3] इत्यादि ॥

## अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद् विदामक्रन्निति च्छन्दसि । (४२/३४०३)

अभ्युत्सादयाम् इत्येवमादयः छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते । सदिजनिरमीणां ण्यन्तानां लुङि आम् प्रत्ययो निपात्यते । चिनोतेरपि [4]तत्रैवाम्प्रत्ययो द्विर्वचनं कुत्वं च । अकर् इति चतुर्भिरपि प्रत्येकमनुप्रयोगः सम्बध्यते । पावयांक्रियात् इति पवतेः पुनातेर्वा ण्यन्तस्य लिङि आम् निपात्यते, गुणाभावश्च, अक्रन् इति चास्यानुप्रयोगः । विदामक्रन् इति विदेर्लुङि आम् निपात्यते, गुणाभावश्च, अक्रन् इति चास्यानुप्रयोगः । 'अभ्युत्सादयामकः' (मै.१.६.५) । अभ्युदसीषदत् इति भाषायाम् । 'प्रजनयामकः' (मै. १. ६. १०) । प्राजीजनत् इति भाषायाम् । चिकयामकः । अचैषीत् इति भाषायाम् । 'रमयामकः' (काठकसं. ७. ७) । अरीरमत् इति भाषायाम् । 'पावयाङक्रियात्' (मै.२.१.३) । पाव्यात् इति भाषायाम् । 'विदामक्रन्' (मै.१.४.७, तै.ब्रा.१.३.१०.३) । अवेदिषुः इति भाषायाम्[5] ॥

## च्लि लुङि । (४३/२२२१)

धातोः च्लिः प्रत्ययो भवति लुङि परतः । इकार उच्चारणार्थः, चकारः स्वरार्थः (६. १. ६३/३७१०) । अस्य सिजादीनादेशान् वक्ष्यति । तत्रैवोदाहरिष्यामः ॥

## च्लेः सिच् । (४४/२२२२)

च्लेः सिजादेशो भवति । इकार उच्चारणार्थः, चकारः स्वरार्थः । अकार्षीत् । अहार्षीत् । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेत इति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते ।

[२०७] स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः ।

अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् (३.१.४५/२३३६) । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । अकार्षीत्, अक्राक्षीत्, अकृक्षत् । अत्राप्सीत्, आताप्र्सीत्, अतृपत् (३.१.५५/२३४३) । अद्राप्सीत्, अदार्प्सीत्, अदृपत् ॥

---

1. अत्रभवन्तः इत्यधिकम् अ. 2. प्रथमपुरुषस्य ग. 3. विदांकुर्वन्तु विदांकुरुत विदांकरवाणि विदांकरवाव विदांकरवाम इत्यधिकम् । इत्यादि नास्ति अ. क. ड. हृ. 4. अत्रैव ड. 5. इतिकरणः प्रयोगप्रदर्शनार्थः इत्यधिकम् न्या.

## शल इगुपधादनिटः क्सः। (४५/२३३६)

शलन्तो यो धातुरिगुपधस्तस्मात् परस्य च्लेः अनिटः क्स आदेशो भवति। दुह[1] – अधुक्षत्। लिह – अलिक्षत्। शलः इति किम्? अभैत्सीत्। अच्छैत्सीत्। इगुपधात् इति किम्? [2]अधाक्षीत्। अनिटः इति किम्? अकोषीत्। [3]अमोषीत्॥

## श्लिष आलिङ्गने। (४६/२५१४)

श्लिषेः (धा. पा. ११८७) धातोः आलिङ्गन[4]क्रियावचनात् परस्य च्लेः क्सः आदेशो भवति। आलिङ्गनम् उपगूहनं, परिष्वङ्गः। [5]अत्र नियमार्थमेतत्। आश्लिक्षत् कन्यां देवदत्तः। आलिङ्गने इति किम्? समाश्लिषज्जतु काष्ठम् (म. भा. २.५४)॥

## न दृशः। (४७/२४०७)

पूर्वेण क्सः प्राप्तः (३.१.४५/२३३६) प्रतिषिध्यते। दृशेः धातोः परस्य च्लेः क्सादेशो न भवति। [6]अस्मिन् प्रतिषिद्धे '[7]इरितो वा' (३.१.५७/२२६९) इति अङ्सिचौ भवतः। अदर्शत्, अद्राक्षीत्॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ्। (४८/२३१२)

सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः, श्रि द्रु स्रु इत्येतेभ्यश्च परस्य च्लेः चङादेशो भवति कर्तवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारः 'चङि' (६.१.११/२३१५) इति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। [8]अदुद्रुवत्। असुस्रुवत्। कर्तरि इति किम्? अकारयिषातां कटौ देवदत्तेन।

[२०८] कमेरुपसङ्ख्यानम्।

'आयादयः आर्धधातुके वा' (३.१.३१/२३०५) इति यदा णिङ् नास्ति तदैतत् उपसङ्ख्यानम्। अचकमत। णिङ्पक्षे सन्वद्भावः। अचीकमत।

नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः॥ (म.भा. २.५५)

## विभाषा धेट्श्व्योः। (४९/२३७५)

'धेट् पाने' (धा. पा. ९०३), 'टुओश्वि गतिवृद्ध्योः' (धा. पा. १०११), एताभ्या[9]मुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत् – अदधत्। सिच्पक्षे 'विभाषा घ्राधेट्शाच्छासः' (२.४.७८/२३७६) इति लुक्। अधात्। अधासीत्। श्वयतेः खल्वपि। अशिश्वियत्। अङोऽप्यत्र विकल्प इष्यते। अश्वत्। अश्वयीत्। कर्तरि इत्येव, अधिषातां गावौ वत्सेन॥

---

1. प्रपूरणे इत्यधिकम् ग. 2. दहधातुः इत्यधिकम् ड. 3. अपोषीत् ब, नास्ति अ. 4. °क्रियात् ब. 5. तत्र ब. ह. 6. तस्मिन् विप्रतिषिद्धे ह. 7. इरितश्च क. 8. नास्ति ब. 9. परस्य ह.

## गुपेश्छन्दसि (५०/३४०४)

गुपेः परस्य च्लेः छन्दसि विषये विभाषा चङ आदेशो भवति। यत्र आयप्रत्ययो नास्ति तत्रायं विधिः। "[1]इमान् मे मित्रावरुणौ गृहानजुगुपतम् युवम्' (मै. १.५.१४)। [2]अगौप्तम्, अगोपिष्टम्, अगोपायिष्टम् इति वा। भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति॥

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः। (५१/३४०५)

'ऊन परिहाणे' (धा. पा. १८८९), 'ध्वन शब्दे' (धा. पा. ८१७), 'इल प्रेरणे' (धा. पा. १३५८), 'अर्द गतौ याचने च' (धा. पा. ५५), एतेभ्यो धातुभ्यः ण्यन्तेभ्यः [3]पूर्वेण च्लेश्चङि प्राप्तें छन्दसि विषये न भवति। 'काममूनयीः' (ऋ. १. ५३. ३)। [4]औनिनः इति भाषायाम्। 'मा त्वाग्निध्वनयीत्' (ऋ. १. १६१. १५)। अदिध्वनत् इति भाषायाम्। [5]काममैलयीत्। ऐलिलत् इति भाषायाम्। मैनमर्दयीत्। [6]आर्दिदत् इति भाषायाम्॥

## अस्यतिवक्तिख्यातिभ्योऽङ्। (५२/२४३८)

'असु क्षेपणे' (धा. पा. १२१०), 'वच परिभाषणे' (धा. पा. १०६४) ब्रूञादेशो वा (२. ४. ५३/२४५३), 'ख्या प्रकथने' (धा. पा. १०६१) चक्षिङादेशो वा (२. ४. ५४/२४३६), एभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः। अस्यतेः पुषादिपाठादेवाङि सिद्धे [7]पुनर्ग्रहणमात्मनेपदार्थम् (म. भा. २. ५५)। [8]पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति – अवोचत्, अवोचताम्, अवोचन्। ख्याति – [9]आख्यत्, आख्यताम्, आख्यन्। [10]कर्तरि इति किम्? पर्यासिषातां गावौ वत्सेन॥

## लिपिसिचिह्वश्च। (५३/२४१८)

'लिप उपदेहे' (धा. पा. १४३४), 'षिच क्षरणे' (धा. पा. १४३५), 'ह्वेञ् स्पर्धायाम्' (धा. पा. १००९), एतेभ्यश्च परस्य च्लेः अङ आदेशो भवति। अलिपत्। असिचत्। आह्वत्। [11]पृथग्योग उत्तरार्थः॥

## आत्मनेपदेष्वन्यतरस्याम्। (५४/२४१९)

पूर्वेण[12] प्राप्ते विभाषा आरभ्यते। लिपिसिचिह्व आत्मनेपदेषु परतः च्लेः अङादेशो भवति अन्यतरस्याम्। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (१. ३. ७२/२१५८) इत्यात्मनेपदम्। अलिपत, अलिप्त। असिचत, असिक्त। अह्वत, अह्वास्त॥

---

1. उदाहरणमिदं नास्ति ह. 2. अगोप्तम् ह. 3. चङ आदेशः प्राप्तः प्रतिषिध्यते अ.क.ह. 4. कामानौनयीत् अ. 5. कामैमलयीः ब.क.ड. 6. आर्दिदीत् अ. 7. पुनर्वचनम् ग. 8. पर्यास्थित अ. 9. आख्यात् आख्याताम् अ. ब. ड. 10. वाक्यमिदं नास्ति ग. 11. पृथग्योगकरणमुत्तरार्थम् अ.क.ड.ह. 12. नित्ये इत्यधिकम् क.ड.

## पुषादिद्युताद्यॢदितः परस्मैपदेषु । (५५/२३४३)

पुषादिभ्यः, [1]द्युतादिभ्यः, लृदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतः अङादेशो भवति । पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न [2]भ्वादिक्र्याद्यन्तर्गणः । [3]पुष – अपुषत् । द्युतादि – [4]अद्युतत् । अश्वितत् । लृदिद्भ्यः- गम्लृ – अगमत् । शक्लृ – अशकत् । परस्मैपदेषु इति किम् ? व्यद्योतिष्ट । [5]अलोटिष्ट ॥

## सर्तिशास्त्यर्तिभ्यश्च । (५६/२३८२)

'सृ गतौ' (धा. पा. ९३६), 'शासु अनुशिष्टौ' (धा.पा. १०७६) 'ऋ गतौ' (धा.पा. ९३७) इत्येतेभ्यः परस्य च्लेः अङादेशो भवति[6] । असरत् । [7]अशिषत् । आरत् । पृथग्योगकरणमात्मनेपदार्थम् । [8]समरन्त (ऋ. ४.१९.९) । चकारः परस्मैपदेषु इत्यनुकर्षणार्थः । तच्चोत्तरत्रोपयोगं यास्यति ॥

## इरितो वा । (५७/२२६९)

इरितो धातोः परस्य च्लेः अङादेशो वा भवति । [9]भिदिर् – अभिदत्, अभैत्सीत् । छिदिर् – अच्छिदत्, अच्छैत्सीत् । परस्मैपदेषु इत्येव, अभित्त । [10]अच्छित्त ॥

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । (५८/२२९१)

वा इति वर्तते । 'जॄष् वयोहानौ' (धा. पा. ११३१), स्तम्भुः सौत्रो धातुः, 'म्रुचु, म्लुचु गत्यर्थे' (धा. पा. १९५, १९६), 'ग्रुचु, ग्लुचु [11]स्तेयकरणे' (धा. पा. १९७, १९८), 'ग्लुञ्चु, [12]षस्ज गतौ' (धा. पा. २०१, २०२), 'टुओश्वि गतिवृद्ध्योः' (धा. पा. १०११), एतेभ्यो [13]धातुभ्यः परस्य च्लेर्वा अङादेशो भवति । अजरत्, अजारीत् । अस्तभत्, अस्तम्भीत् । अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । अग्रुचत्, अग्रोचीत् । अग्लुचत्, अग्लोचीत् । अग्लुञ्चत्, अग्लुञ्चीत् । [14]अश्वत्, अश्वयीत्, अशिश्वियत् ।

ग्लुचुग्लुञ्च्वो[15]रन्यतरोपादानेऽपि रूपत्रयं सिध्यति, अर्थभेदात् तु द्वयोरुपादानं कृतम् । केचित् तु वर्णयन्ति द्वयोरुपादानसामर्थ्याद् ग्लुञ्चेर[16]नुनासिकलोपो न भवति, अग्लुञ्चत् इति ॥

## कृमृदृरुहिभ्यश्छन्दसि । (५९/३४०६)

कृ मृ दृ रुहि इत्येतेभ्यः परस्य च्लेः छन्दसि विषये[17] अङादेशो भवति । शकलाङ्गुष्ठकोऽकरत् । [18]अथोऽमरत् । [19]अदरदर्थान् । [20]'सानुमारुहत्' (ऋ. १.१०.२) । '[21]अन्तरिक्षाद् दिवमारुहम्' । (अ. ४.१४.३) । छन्दसि इति किम् ? अकार्षीत् । [22]अमृत । [23]अदारीत् । अरुक्षत् ॥

---

1. द्युतादिभ्यः नास्ति ङ. 2. भूवादि° ङ. 3. पुषादि ग. 4. व्यद्युतन् ह, व्यद्योतिष्ट अ. 5. अलोभिष्ट ङ. 6. कर्तृवाचिनि लुङि परतः इत्यधिकम् ङ. 7. नास्ति ह. 8. समारत ङ. 9. भिदिरः ब. 10. आच्छित्त ब, अरुद्ध न्या. 11. स्तेये ह. 12. षस्ज नास्ति ङ. 13. धातुभ्यः नास्ति ह. 14. अश्वयत् ह. 15. एकतरोपादानेऽपि अ. ब. क. 16. °रनुनासिकस्य लोपो अ. 17. वा इत्यधिकम् अ ङ. फ. 18. अथोमरत् अ, अश्मोमरत् ङ. 19. अदरत् पर्वतानाम् ह, अदरत् पर्वतान् अ. क. ङ. 20. पर्वतम् मुद्रितः पाठः. ङ. 21. विमानम् ब. क. 22. वाक्यमिदं नास्ति अ. 23. नास्ति क. ङ. ग.

## चिण् ते पदः । (६०/२५१३)

'पद गतौ' (धा. पा. ११७०), अस्माद् [1]धातोः परस्य च्लेः चिणादेशो भवति तशब्दे परतः । सामर्थ्यादात्मनेपदैकवचनं गृह्यते । उदपादि [2]सस्यम् । समपादि [3]भैक्षम् । त इति किम् ? उदपत्साताम् । उदपत्सत ॥

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । (६१/२३२८)

चिण् ते इति वर्तते । 'दीपी दीप्तौ' (धा. पा. ११५१), 'जनी प्रादुर्भावे' (धा. पा. ११५०), 'बुध अवगमने' (धा. पा. ११७३), 'पूरी आप्यायने' (धा. पा. ११५२), 'तायृ सन्तानपालनयोः' (धा. पा. ४८९), '[4]ओप्यायी वृद्धौ' (धा. पा. ४८८), एतेभ्यः परस्य च्लेः तशब्दे परतोऽन्यतरस्यां चिणादेशो भवति । अदीपि, अदीपिष्ट । अजनि, अजनिष्ट । अबोधि, अबुद्ध । अपूरि, अपूरिष्ट । अतायि, अतायिष्ट । अप्यायि, अप्यायिष्ट ॥

## अचः कर्मकर्तरि । (६२/२७६८)

अजन्ताद् धातोः परस्य च्लेः [5]कर्मकर्तरि तशब्दे परतः चिणादेशो भवति । प्राप्तविभाषेयम् (३.१.८७/२७६६) । [6]अकारि कटः स्वयमेव, अकृत कटः स्वयमेव । अलावि केदारः स्वयमेव, अलविष्ट केदारः स्वयमेव । अचः इति किम् ? अभेदि [7]काष्ठं स्वयमेव । कर्मकर्तरि इति किम् ? अकारि कटो देवदत्तेन ॥

## दुहश्च । (६३/२७६९)

'दुह प्रपूरणे' (धा. पा. १०१५), [8]अस्मात् परस्य[9] च्लेः चिणादेशो[10] भवत्यन्यतरस्याम् । अदोहि गौः स्वयमेव, अदुग्ध गौः स्वयमेव । कर्मकर्तरि इत्येव, अदोहि गौर्गोपालकेन ॥

## न रुधः । (६४/२७७०)

'रुधिर् आवरणे' (धा. पा. १४३९), अस्मात् परस्य च्लेः कर्मकर्तरि[11] चिणादेशो न भवति । अन्ववारुद्ध गौः स्वयमेव । कर्मकर्तरि इत्येव, अन्ववारोधि गौः गोपालकेन ॥

## तपोऽनुतापे च । (६५/२७६०)

न इति वर्तते । 'तप सन्तापे' (धा.पा. ९८६), अस्मात् परस्य च्लेः चिणादेशो न भवति[12] कर्मकर्तरि अनुतापे च । अनुतापः पश्चात्तापः । तस्य [13]ग्रहणमकर्मकर्त्रर्थं, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति । [14]अतप्त तपस्तापसः । [15]अन्ववातप्त पापेन कर्मणा ॥

---

1. धातोः नास्ति ह. 2. सस्यम् अ. 3. भैक्ष्यम् ड. 4. स्फायी क. ड. 5. अन्यतरस्याम् इत्यधिकम् अ. क. 6. चिण् भावकर्मणोः इति नित्यं प्राप्तम् इत्यधिकम् अ. 7. कोष्ठः ड. 8. इति इत्यधिकम् क. 9. धातोः इत्यधिकम् ड. 10. कर्मकर्तरि तशब्दे इत्यधिकम् अ. क. ह, कर्मकर्तरि तशब्दे परतः इत्यधिकम् ड. 11. शब्दे परतः इत्यधिकम् ह. 12. तशब्दे परतः इत्यधिकम् ड. 13 करणम् ग. 14. अन्वतप्त ड. 15. अनुतापे इत्यधिकम् क. ड.

## चिण् भावकर्मणोः । (६६/२७५८)

धातोः परस्य च्लेः चिणादेशो भवति [1]भावे कर्मणि तशब्दे परतः । भावे तावत् — [2]अशायि भवता । कर्मणि खल्वपि — अकारि कटो देवदत्तेन । अहारि भारो [3]यज्ञदत्तेन । चिण्ग्रहणं विस्पष्टार्थम् ॥

## सार्वधातुके यक् । (६७/२७५६)

भावकर्मवाचिनि सार्वधातुके परतो [4]धातोः यक् प्रत्ययो भवति । आस्यते भवता । शय्यते भवता । कर्मणि — [5]क्रियते कटः । गम्यते ग्रामः[6] । ककारो गुणवृद्धिप्रतिषेधार्थः । यग्विधाने कर्मकर्तर्युपसङ्ख्यानम् । विप्रतिषेधाद्धि यकः शपो बलीयस्त्वम् । [7]क्रियते कटः स्वयमेव । पच्यते ओदनः स्वयमेव ॥

## कर्तरि शप् । (६८/२१६७)

कर्तृवाचिनि सार्वधातुके परतो धातोः शप् प्रत्ययो भवति। पकारः स्वरार्थः (३.१.४/३७०९) । शकारः [8]सार्वधातुकसञ्ज्ञार्थः (३.४.११३/२१६६) । भवति । पचति[9] ॥

## दिवादिभ्यः श्यन् । (६९/२५०५)

दिव् इत्येवमादिभ्यः धातुभ्यः श्यन् प्रत्ययो भवति । शपोऽपवादः । नकारः स्वरार्थः (६.१.१९७/३६८६) । शकारः सार्वधातुकार्थः । दीव्यति । सीव्यति[10] ॥

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । (७०/२३२१)

उभयत्रविभाषेयम् । 'टुभ्राशृ, टुभ्लाशृ दीप्तौ' (धा.पा. ८२५,८२६), 'भ्रमु अनवस्थाने' (धा. पा. १२०६), 'भ्रमु चलने' (धा.पा. ८५१), द्वयोरपि ग्रहणम्, 'क्रमु पादविक्षेपे' (धा. पा. ४७३), 'क्लमु ग्लानौ' (धा.पा. १२०८), 'त्रसी उद्वेगे' (धा.पा. ११११८), 'त्रुटी छेदने' (धा.पा. १३७६), लष कान्तौ' (धा.पा. ८८९), एतेभ्यो [11]वा श्यन् प्रत्ययो भवति। भ्राश्यते, भ्राशते । भ्लाश्यते, भ्लाशते । भ्राम्यति, भ्रमति[12] । क्राम्यति, क्रामति । क्लाम्यति, क्लामति । त्रस्यति, त्रसति । त्रुट्यति, त्रुटति । लष्यति, लषति ॥

## यसोऽनुपसर्गात् । (७१/२५२१)

'[13]यसु प्रयत्ने' (धा.पा. १२११) दैवादिकः । [14]तस्मान् नित्यं श्यनि प्राप्तेऽनुपसर्गाद् [15]विकल्प उच्यते । यसोऽनुपसर्गाद् वा श्यन् प्रत्ययो भवति । यस्यति, यसति । अनुपसर्गात् इति किम् ? आयस्यति । प्रयस्यति ॥

---

1. तशब्दे परतो भावकर्मणोरर्थयोः ड, भावकर्मवाचिनि ह. 2. आसि ह. 3. देवदत्तेन ड. ह. 4. धातोः नास्ति ह. 5. पच्यते ओदनो भवता अ. 6. भवता इत्यधिकम् अ. 7. वाक्यमिदं नास्ति अ.क.ह. 8. सार्वधातुकार्थः ब.इ.फ. 9. नयति इत्यधिकम् ड. 10. सीव्यतः सीव्यन्ति इत्यधिकम् ग. 11. धातुभ्यः इत्यधिकम् अ. 12. भ्रम्यति इत्यधिकम् अ.ब, भौवादिकोऽपि भ्रमतिरस्ति इत्यधिकम् ड. 13. यस ह. 14. ततः ग. 15. विकल्प्यते ह.

## संयसश्च । (७२/२५२२)

सोपसर्गार्थ आरम्भः । सम्पूर्वाच्च [1]यसेः वा श्यन् प्रत्ययो भवति । संयस्यति, संयसति ॥

## स्वादिभ्यः श्नुः । (७३/२५२३)

'षुञ् [2]अभिषवे' (धा. पा. १२४८), इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति[3] । शपोऽपवादः । सुनोति । सिनोति[4] ॥

## श्रुवः शृ च । (७४/२३८६)

[5]श्रुवः श्नुप्रत्ययो भवति, [6]तत्संनियोगेन श्रुवः [7]शृ इत्ययमादेशो भवति । शृणोति, शृणुतः, शृण्वन्ति[8] ॥

## अक्षोऽन्यतरस्याम् । (७५/२३३८)

'अक्षू व्याप्तौ' (धा.पा. ६५४) । भौवादिकः । [9]अस्मादन्यतरस्यां [10]श्नुप्रत्ययो भवति[11] । अक्ष्णोति,[12] अक्षति ॥

## तनूकरणे तक्षः । (७६/२३३९)

'तक्षू त्वक्षू तनूकरणे' (धा. पा. ६५५, ६५६), [13]अस्मात् तनूकरणे वर्तमानात् अन्यतरस्यां [14]श्नुप्रत्ययो भवति । अनेकार्थत्वाद् धातूनां [15]विशेषणोपादानम् । तक्ष्णोति काष्ठम्, तक्षति काष्ठम् । तनूकरणे इति किम्? संतक्षति वाग्भिः ॥

## तुदादिभ्यः शः । (७७/२५३४)

'तुद व्यथने' (धा. पा. १२८२) [16]इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति[17] । शपोऽपवादः । [18]शकारः सार्वधातुकसञ्ज्ञार्थः । तुदति[19] । नुदति ॥

## रुधादिभ्यः श्नम् । (७८/२५४३)

'रुधिर् आवरणे' (धा. पा. १४३९) इत्येवमादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति[20] । शपोऽपवादः । मकारो देशविध्यर्थः । शकारः 'श्नान् नलोपः' (६.४.२३/२५४४) इति विशेषणार्थः । रुणद्धि । भिनत्ति[21] ॥

---

1. यसो क. 2. अभिषवे नास्ति ह. 3. कर्तृवाचिनि सार्वधातुके परतः इत्यधिकम् ग. ह. 4. चिनोति इत्यधिकम् अ. 5. श्रुवः नास्ति ब. 6. तत्संनियोगे च ड. क. ह. 7. शृभावो अ. 8. भौवादिपाठात् शप् अपि भवति श्रवति इत्यधिकम् ड. 9. तस्मात् फ.ह. 10. अप्रत्ययो भवति ह. 11. शपोऽपवादः इत्यधिकम् ड. 12. भौवादिपाठात् शप् अपि भवति इत्यधिकम् अ. 13. तस्मात् ह. 14. अप्रत्ययो ह. 15. विशेषेणोपादानम् अ. ब. क. ड. 16. तुदादिभ्यः धातुभ्यः ग. 17. कर्तृवाचिनि सार्वधातुके परतः इत्यधिकम् ग. ह. 18. वाक्यमिदं नास्ति फ. 19. तुदतः इत्यधिकम् फ, नुदति नास्ति क. 20. कर्तृवाचिनि सार्वधातुके परतः इत्यधिकम् ह. 21. हिनस्ति इत्यधिकम् ह, श्नमः शबपवादत्वं कथं भिन्नप्रदेशिनः ? नैकदेशितया बाधा किं तर्हि एकप्रयोजनात् इत्यधिकम् अ, छिनत्ति छिन्त्तः छिन्दन्ति इत्यधिकम् फ.

## तनादिकृञ्भ्यः उः । (७९/२४६६)

'तनु [1]विस्तारे' (धा. पा. १४६४) इत्येवमादिभ्यो धातुभ्यः कृञश्च [2]उप्रत्ययो भवति[3]। शपोऽपवादः । तनोति । सनोति । क्षणोति । कृञः खल्वपि – करोति[4]। तनादिपाठादेव [5]उप्रत्यये सिद्धे[6] करोतेरुपादानं नियमार्थम्, अन्यत् तनादिकार्यं मा भूत् इति । 'तनादिभ्यस्तथासोः' (२.४.७९/२५४७) इति विभाषा सिचो लुग् [7]न भवति । [8]अकृत । अकृथाः ॥

## धिन्विकृण्व्योर च । (८०/२३३२)

'हिवि' (धा. पा. ५९१), '[9]धिवि' (धा. पा. ५९३) 'जिवि' (धा.पा. ५९४) प्रीणनार्थाः, 'कृवि [10]हिंसाकरणयोः' (धा. पा.५९८), [11]इत्येतयोः धात्वोः उप्रत्ययो भवति, अकारश्चान्तादेशः । धिनोति । कृणोति । अतो लोपस्य (६.४.४८/२३०८) स्थानिवद्भावात् (१.१.५७/५०) गुणो न भवति ॥

## क्र्यादिभ्यः श्ना । (८१/२५५४)

'डुक्रीञ् द्रव्यविनिमये' (धा. पा. १४७४) इत्येवमादिभ्यः [12]धातुभ्यः श्ना प्रत्ययो भवति[13]। शपोऽपवादः । [14]शकारः [15]सार्वधातुकसञ्ज्ञार्थः । क्रीणाति । प्रीणाति ॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च । (८२/२५५५)

आद्याश्चत्वारो धातवः सौत्राः, 'स्कुञ् आप्रवणे' (धा. पा. १४७९)[16], एतेभ्यः श्ना प्रत्ययो भवति, [17]श्नुः च । स्तभ्नाति, स्तभ्नोति । स्तुभ्नाति, स्तुभ्नोति । स्कभ्नाति, स्कभ्नोति । स्कुभ्नाति, स्कुभ्नोति । स्कुनाति, स्कुनोति । उदित्त्वप्रतिज्ञानात् सौत्राणामपि धातूनां [18]सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव[19] ॥

## हलः श्नः शानज्झौ । (८३/२५५७)

हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः । मुषाण[20]। पुषाण[21]। हलः इति किम् ? [22]क्रीणीहि । हौ इति किम् ? मुष्णाति[23]। श्नः इति[24] स्थानिनिर्देशः आदेशसम्प्रत्ययार्थः । इतरथा हि प्रत्ययान्तरमेव[25] सर्वविषयं विज्ञायेत ॥

---

1. विस्तारे नास्ति फ. 2. उः प्रत्ययो अ. 3. कर्तृवाचिनि सार्वधातुके परतः इत्यधिकम् ह. 4. कुरुतः कुर्वन्ति इत्यधिकम् फ. ह. 5. प्रत्यये ह. 6. पुनः इत्यधिकम् अ. क. 7. मा भूत् इति ह. 8. नास्ति फ. ह. 9. दिवि ड. 10. हिंसायां करणे च फ. 11. धिन्वि कृण्व्योः इ. 12. धातुभ्यः नास्ति फ. 13. कर्तृवाचिनि सार्वधातुके परतः इत्यधिकम् ह. 14. वाक्यमिदं नास्ति फ. 15. सार्वधातुकार्थः क. 16. क्र्यादिः इत्यधिकम् ह. ड, क्रैयादिकः अ. फ. 17. श्नुप्रत्ययश्च ह. फ. 18. अन्यार्थत्वम् क. 19. सर्वविधिविषयत्त्वमपि विज्ञायते इत्यधिकम् क. 20. रत्नानि इत्यधिकम् अ. 21. बधान वत्सम् इत्यधिकम् अ. क. ड. 22. प्रीणीहि अ. क. ड. 23. पुष्णाति इत्यधिकम् अ. ड. 24. किम् इत्यधिकम् ह. 25. एव नास्ति ह.

## छन्दसि शायजपि । (८४/३४३२)

छन्दसि विषये श्नः शायच् आदेशो भवति, शानजपि[1] । 'गृभाय जिह्वया मधु' (ऋ. ८.१७.५) । शानचः खल्वपि – 'बधान [2]देव सवितः' (शु.य.१.२५) ॥

## व्यत्ययो बहुलम् । (८५/३४३३)

यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति । व्यतिगमनं व्यत्ययः, [3]व्यतिहारः । विषयान्तरे विधानम्, क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च । '[4]आण्डा शुष्णस्य भेदति' (ऋ. ८.४०.११) । भिनत्ति इति प्राप्ते । '[5]ताश्चिन्नु न मरन्ति' (ऋ. १.१९१.१२) । न म्रियन्ते इति प्राप्ते । द्विविकरणता – इन्द्रो [6]वस्तेन नेषतु । [7]नयतु इति प्राप्ते । त्रिविकरणता – '[8]इन्द्रेण युजा तरुषेम वृत्रम्' (ऋ. ७.४८.२) । [9]तीर्यास्म इति प्राप्ते । बहुलग्रहणं सर्वविधिव्यभिचारार्थम् ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि [10]च सिध्यति बाहुलकेन ॥ (म. भा. २.६५)

## लिङ्याशिष्यङ् । (८६/३४३४)

आशिषि विषये यो लिङ् तस्मिन् परतः छन्दसि विषये [11]अङ् प्रत्ययो भवति । शपोऽपवादः । 'छन्दस्युभयथा' (३.४.११७/३४३५) इति [12]लिङः सार्वधातुकसञ्ज्ञाप्यस्ति । स्थागागमिवचिविदिशकिरुहयः प्रयोजनम् (म. भा. २.६५) । स्था – 'उपस्थेषं वृषभं तुग्रियाणाम्' (म. भा. २.६५) । गा – '(अञ्जसा) सत्यमुपगेषम्' (तै.सं.१.२.१०.२) । गमि – '[13]गृहं गमेम' (ऋ. १०.४०.११) । वचि – 'मन्त्रं वोचेमाग्नये' (ऋ. १.७४.१) । विदि – 'विदेयमेनां मनसि प्रविष्टाम्' (अ. १९.४.२) । शकि – 'व्रतं चरिष्यामि तच्छकेयम्' (आ.श्रौ. ८.१४.१) । रुहि – स्वर्गं लोकमारुहेयम् ।

[२०९] दृशेरग् वक्तव्यः । (म. भा. २.६५)

'पितरं दृशेयं मातरं च' (ऋ. १.२४.१) ॥

---

1. हौ परतः इत्यधिकम् अ. क. फ. 2. वत्सम् अ. ड. क, बधान त्वा फ, बधान पशुं मुद्रितः पाठः 3. व्यतिकरः न्या. अ. ह, व्यतिकरणम् फ. 4. आण्या ह. 5. स च न मरति न्या. प. मं 6. नस्तेन ग. 7. सिच्शपौ इत्यधिकम् फ. 8. इन्द्रेण नास्ति फ. 9. तरेम अ.फ.ह.प.मं. 10. हि मुद्रित पाठः 11. अञ् ह. 12. लिङः नास्ति ह. 13. गमेयमजानतो गृहान् क, गमेयमज्ञातो गृहान् ड.

## कर्मवत् कर्मणा तुल्यक्रियः । (८७/२७६६)

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति (म.भा. २.६६)। [1]यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत् क्रिया लक्ष्यते [2]यथा [3]कर्मणि, स कर्ता कर्मवद् भवति । कर्माश्रयाणि कार्याणि [4]प्रतिपद्यते । 'कर्तरि शप्' (३.१. ६८/२१६७) [5]इति कर्तृग्रहण[6]मिहानुवृत्तं प्रथमया विपरिणम्यते । यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम् । भिद्यते [7]काष्ठं स्वयमेव । अभेदि [8]काष्ठं स्वयमेव । [9]कारिष्यते कटः स्वयमेव । वत्करणं स्वाश्रयमपि यथा स्यात्, भिद्यते कुसूलेन इति । अकर्मकाणां भावे लः सिद्धो भवति (म. भा. २.६६)। 'लिङ्याशिष्यङ' (३. १. ८६/३४३४) इति द्विलकारको निर्देशः । तत्र लानुवृत्तेर्लान्तस्य कर्ता कर्मवद् भवति इति कुसूलाद् द्वितीया न भवति । कर्मणा इति किम् ? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत् । साध्वसिश्छिनत्ति । साधु स्थाली पचति । धात्वधिकारात् समाने धातौ कर्मवद्भावः (म.भा. २.६६)। इह न भवति, पचत्योदनं देवदत्तः, राध्यत्योदनं स्वयमेव इति । कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थभावकानां न वा कर्तृस्थक्रियाणाम् ।

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥

## तपस्तपःकर्मकस्यैव । (८८/२७७१)

'तप सन्तापे' (धा. पा. ९८६), अस्य कर्ता कर्मवद्भवति, स च तपःकर्मकस्यैव नान्यकर्मकस्य । क्रियाभेदाद् विध्यर्थमेतत् । उपवासादीनि तपांसि तापसं [10]तपन्ति । दुःखयन्ति इत्यर्थः । स तापसस्त्वगस्थिभूतः [11]स्वर्गाय तपस्तप्यते । अर्जयति इत्यर्थः[12] । पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते । तप्यते तपस्तापसः । अतप्त तपस्तापसः । तपःकर्मकस्यैव[13] इति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥

## न दुहस्नुनमां यक्चिणौ । (८९/२७६७)

दुह स्नु नम् इत्येतेषां कर्मकर्तरि यक्चिणौ[14] [15]कर्मवद्भावापदिष्टौ न भवतः । दुहेरनेन यक् प्रतिषिध्यते । चिण् तु 'दुहश्च' (३.१.६३/२७६९) इति पूर्वमेव विभाषितः । [16]दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव । अदोहि गौः स्वयमेव । प्रस्नुते गौः स्वयमेव । [17]प्रास्नोष्ट गौः स्वयमेव । नमते दण्डः स्वयमेव । अनंस्त दण्डः स्वयमेव ।

[२१०] यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम् । (म. भा. २.७०)

कारयति कटं देवदत्तः । कारयते कटः स्वयमेव । अचीकरत् कटं देवदत्तः । अचीकरत कटः स्वयमेव । उत्पुच्छयते गां गोपः । उत्पुच्छयते गौः स्वयमेव । उदपुपुच्छत गौः स्वयमेव । [18]श्रथ्नाति [19]ग्रन्थं देवदत्तः । श्रथ्नीते [20]ग्रन्थः स्वयमेव । [21]अश्रन्थिष्ट [22]ग्रन्थः स्वयमेव । ग्रथ्नाति श्लोकं देवदत्तः । ग्रथ्नीते

---

1. यस्मात् फ. 2. तथा फ. 3. कर्मवत् क्रिया लक्ष्यते फ. 4. प्रपद्यते अ. ब. क. 5. इत्यतः फ 6. अनुवर्तते फ, तत् ब. 7–8. कोष्ठः ड. 9. अकारि फ. 10. तापयन्ति क. 11. स्वर्गार्थम् इ.ह. 12. न॰ दुःखयति इत्यधिकम् फ. 13. एव नास्ति क. फ. 14. प्रत्ययौ इत्यधिकम् ह. 15. कर्मवद्भावादुपदिष्टौ अ. क. 16. दुग्धा ह. 17. प्रस्नोष्ट फ. ह. 18. श्नन्थते ड. 19. मेखलाम् न्या. प. मं. 20. मेखला न्या. प. मं. 21. अश्रन्थीत् ह. 22. मेखला न्या. प. मं.

श्लोकः स्वयमेव। अग्रन्थिष्ट श्लोकः स्वयमेव। ब्रवीति [1]श्लोकं देवदत्तः। ब्रूते [2]श्लोकः स्वयमेव। अवोचत् श्लोकं देवदत्तः। अवोचत श्लोकः स्वयमेव। आत्मनेपद[3]विधानेऽकर्मकाणाम् – [4]आहन्ति माणवकं देवदत्तः। आहते माणवकः स्वयमेव। आवधिष्ट माणवकः स्वयमेव, आहत इति वा। [5]विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव॥

## कुषिरजोः प्राचां श्यन् परस्मैपदं च। (९०/२७७२)

'[6]कुष निष्कर्षे' (धा.पा. १५१९), 'रञ्ज रागे' (धा.पा. ११६८), अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन् प्रत्ययो भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। [7]प्राचां ग्रहणं विकल्पार्थम्। कुष्यते। रज्यते। व्यवस्थितविभाषा चेयम्। तेन [8]लिट्लिङोः स्यादिविषये च न [9]भवतः। [10]चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। कोषिष्यते पादः स्वयमेव। [11]रङ्क्ष्यते वस्त्रं स्वयमेव। अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव (म. भा. २. ७०)॥

## धातोः। (९१/२८२९)

धातोः [12]इत्ययमधिकारो वेदितव्यः। आतृतीयाध्यायपरिसमाप्तेः [13]यदित ऊर्ध्वमनुक्रमिष्यामो धातोः इत्येवं तद् वेदितव्यम्। वक्ष्यति – 'तव्यत्तव्यानीयरः' (३.१.९६/२८३४) इति। कर्तव्यम्। करणीयम्। धातुग्रहणमनकर्थकं यङविधौ धात्वधिकारात् (म. भा. २. ७४)। कृदुपपदसञ्ज्ञार्थं [14]तर्हि, अस्मिन् धात्वधिकारे [15]ते यथा स्यातां, पूर्वत्र मा भूताम् इति। आर्धधातुकसञ्ज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्। धातोः इत्येवं विहितस्य[16] यथा स्यात्। इह मा भूत्, लूभ्याम्, लूभिः इति॥

## तत्रोपपदं सप्तमीस्थम्। (९२/७८१)

तत्रैतस्मिन् धात्वधिकारे तृतीये यत् [17]सप्तमीनिर्दिष्टं तद् उपपदसञ्ज्ञं भवति। वक्ष्यति – 'कर्मण्यण्' (३.२.१/२९१३)। [18]कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्। इतरथा हि सप्तमी श्रूयते यत्र तत्रैव स्यात्, स्तम्बेरमः, कर्णेजपः (म.भा.२.७५) इति। यत्र वा सप्तमीश्रुतिरस्ति 'सप्तम्यां जनेर्डः' (३.२.९७/३००७) इति, [19]उपसरजः, मन्दुरजः इति। स्थग्रहणात् तु सर्वत्र भवति। '[20]गुरुसञ्ज्ञाकरणमन्वर्थसञ्ज्ञा-विज्ञाने सति समर्थपरिभाषाव्यापारार्थम्। पश्य कुम्भं, करोति कटम् (म. भा. २. ७५) इति प्रत्ययो न भवति। उपपदप्रदेशाः – 'उपपदमतिङ' (२.२.१९/७८२) इत्येवमादयः॥

---

1. कथां ड. 2. कथा ड. 3. विधौ फ. 4. हन्ति अ. ब. क. 5. विकुरुते सैन्धवान् देवदत्तः अ. 6. कुषि निकर्षणे क. ह. 7. वाक्यमिदं नास्ति ह. 8. लिङलिटोः क.अ. 9. भविष्यति ड. 10. उदाहरणमिदं नास्ति ब. क. 11. रंक्षीष्ट क. 12. अयं नास्ति फ. 13. यान् इत अ. क. 14. तर्हि नास्ति क, तु ड. 15. तु फ. 16. च इत्यधिकम् क. 17. सप्तम्या निर्दिष्टं ब.क. 18. कुम्भकारकः क.ड.ह. 19. नास्ति फ. ह. 20. गुरुसञ्ज्ञाकरणमन्वर्थसञ्ज्ञार्थम्, अन्वर्थसंज्ञा° ब.

## कृदतिङ् । (९३/३७४)

अस्मिन् धात्वधिकारे[1] तिङ्वर्जितः प्रत्ययः [2]कृत्सञ्ज्ञको भवति । कर्तव्यम् । करणीयम् । अतिङ इति किम् ? [3]चीयात् । स्तूयात् । कृत्प्रदेशाः —'कृत्तद्धितसमासाश्च' (१.२.४६/१७९) इत्येवमादयः ॥

## वाऽसरूपोऽस्त्रियाम् । (९४/२८३०)

अस्मिन् धात्वधिकारे[4]ऽसमानरूपः प्रत्ययोऽपवादो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा । 'ण्वुल्तृचौ' (३.१.१३३/२८९५) उत्सर्गौ, 'इगुपधज्ञाप्रीकिरः कः' (३.१.१३५/२८९७) इत्यपवादः, तद्विषये 'ण्वुल्तृचौ' (३.१.१३३/२८९५) अपि भवतः । विक्षेपकः, विक्षेप्ता, [5]विक्षिपः (म.भा. २.७८) । असरूप इति किम् ? 'कर्मण्यण्' (३.२.१/२९१३) इत्युत्सर्गः, 'आतोऽनुपसर्गे कः' (३.२.३/२९१५) इत्यपवादः, स नित्यं बाधको भवति । गोदः । [6]कम्बलदः । नानुबन्धकृतमसारूप्यम् (व्या.प.१५) । अस्त्रियाम् इति किम् ? 'स्त्रियां क्तिन्' (३.३.९४/३२७२) इत्युत्सर्गः, 'अ प्रत्ययात्' (३.३.१०२/३२७९) इत्यपवादः, स बाधक एव भवति । चिकीर्षा । [7]जिहीर्षा ॥

## कृत्याः प्राङ् ण्वुलः । (९५/२८३१)

'ण्वुल्तृचौ' (३.१.१३३/२८९५) इति वक्ष्यति । प्रागेतस्माण् ण्वुल्संशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामः, [8]कृत्यसञ्ज्ञकास्ते वेदितव्याः । तत्रैवोदाहरिष्यामः । कृत्यप्रदेशाः –'कृत्यैरधिकार्थवचने' (२.१.३३/६९५), '[9]कृत्यानां कर्तरि [10]वा' (२.३.७१/६२९) इत्येवमादयः ॥

## तव्यत्तव्यानीयरः । (९६/२८३४)

'धातोः' (३.१.९१/२८२९) इति वर्तते । [11]धातोः तव्यत्, तव्य, अनीयर् इत्येते प्रत्यया भवन्ति । तकाररेफौ स्वरार्थौ । कर्तव्यम् । कर्तव्यम् । करणीयम् ।

[२११] वसेस्तव्यत् कर्तरि णिच्च । (म.भा.२.८१)

वास्तव्यः ।

[२१२] केलिमर उपसङ्ख्यानम् । (म.भा.२.८१)

पचेलिमाः माषाः (म.भा.२.८१) । भिदेलिमानि काष्ठानि । कर्मकर्तरि चायमिष्यते ॥

---

1. यः इत्यधिकम् ड. फ. ह. 2. स इत्यधिकम् ड. फ. ह. 3. भूयात् अ. 4. असरूपो ह, असरूपोऽपवादप्रत्ययो वा ड. 5. नास्ति ह. 6. शर्मदः ग. 7. नास्ति ह. 8. कृत्सञ्ज्ञाः अ. ह. 9. सूत्रमिदं नास्ति अ. फ. 10. च ब. 11. धातोः नास्ति ह.

## अचो यत् । (९७/२८४२)

अजन्ताद् धातोः यत् प्रत्ययो भवति । तकारो 'यतोऽनावः' (६.१.२१३/३७०१) इति[1] [2]स्वरार्थः । गेयम् । [3]पेयम् । [4]चेयम् । जेयम् । अज्ग्रहणं किं यावता हलन्ताण् ण्यतं वक्ष्यति ? अजन्तभूतपूर्वादपि यथा स्यात्, दित्स्यम्, धित्स्यम् (म.भा.२.८३) ।

[२१३] तकिशसिचतियतिजनीनामुपसङ्ख्यानम् । (म.भा.२.८२)

तकि -- तक्यम् । शसि -- शस्यम् । [5]चति -- चत्यम् । यति -- यत्यम् । [6]जनि -- जन्यम् ।

[२१४] हनो वा वध च । (म.भा.२.८२)

वध्यम्, घात्यम् ॥

## पोरदुपधात् । (९८/२८४४)

पवर्गान्ताद् धातोः अकारोपधात् यत् प्रत्ययो भवति । ण्यतोऽपवादः । शप् – शप्यम् । लभ् – लभ्यम् । पोः इति किम् ? पाक्यम् । [7]वाक्यम् । अदुपधात् इति किम् ? कोप्यम् । गोप्यम् । तपरकरणं [8]तत्कालार्थम् । आप्यम् ॥

## शकिसहोश्च । (९९/२८४७)

'शक्लृ शक्तौ' (धा.पा.१२६२), 'षह मर्षणे' (धा.पा.८५३), अनयोर्धात्वोः यत् प्रत्ययो भवति । शक्यम् । सह्यम् ॥

## गदमदचरयमश्चानुपसर्गे । (१००/२८४८)

'गद व्यक्तायां वाचि' (धा.पा.५२), 'मदी हर्षे' (धा.पा.१२०९), 'चर गतिभक्षणयोः' (धा.पा.५५९), 'यम उपरमे' (धा.पा.९८५), एतेभ्यश्चानुपसर्गेभ्यो यत् प्रत्ययो भवति[9] । गद्यम् । मद्यम् । चर्यम् । यम्यम् । अनुपसर्गे इति किम् ? प्रगाद्यम् । प्रमाद्यम् । यमेः[10] पूर्वेणैव सिद्धे [11]अनुपसर्गनियमार्थं [12]वचनम् ।

[२१५] चरेराङि चागुरौ । (म.भा.२.८३)

आचर्यो देशः । अगुरौ इति किम् ? आचार्य उपनेता ॥

---

1. च इत्यधिकम् क. 2. विशेषणार्थः क. 3. नास्ति ड. 4. नास्ति फ. 5. चति नास्ति फ. 6. जनि नास्ति फ. 7. वाज्यम् ब. क. ड. 8. तत्कालावधारणार्थम् अ. ब. क. ड. 9. ण्यतोऽपवादः इत्यधिकम् फ. 10. च इत्यधिकम् क. 11. अनुपसर्ग नास्ति अ. फ. ह. 12. इदम् इत्यधिकम् ह.

## अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु। (१०१/२८४९)

[1]अवद्य पण्य वर्या इत्येते शब्दा निपात्यन्ते गर्ह्य पणितव्य अनिरोध इत्येतेष्वर्थेषु यथासङ्ख्यम्। अवद्यम् इति निपात्यते गर्ह्यं चेत् [2]तद् भवति। अवद्यं पापम्। अनुद्यम् अन्यत्। 'वदः सुपि क्यप् च' (३.१.१०६/२८५४)। पण्यम् इति निपात्यते, पणितव्यं चेत् तद् भवति[3]। पण्यः कम्बलः। पण्या गौः। पाण्यम् अन्यत्। वर्या इति स्त्रियां निपात्यते, अनिरोधश्चेद् भवति। अनिरोधोऽप्रतिबन्धः। शतेन वर्या। [4]सहस्रेण वर्या। वृत्या अन्या। स्त्रीलिङ्गनिर्देशः किमर्थः? वार्या ऋत्विजः॥

## वह्यं करणम्। (१०२/२८५०)

[5]वहेर्धातोः करणे [6]यत् प्रत्ययो निपात्यते। [7]वहत्यनेन इति वह्यं शकटम्। [8]करणे इति किम्? [9]वाह्यम् अन्यत्॥

## अर्यः स्वामिवैश्ययोः। (१०३/२८५१)

'ऋ गतौ' (धा.पा. १०९९), अस्माण् ण्यति प्राप्ते स्वामिवैश्ययोः[10]अभिधेययोः यत् प्रत्ययो निपात्यते। अर्यः स्वामी। [11]अर्यो वैश्यः। 'यतोऽनावः' (६.१.२१३/३७०१) इत्याद्युदात्तत्वे प्राप्ते –

[२१६] स्वामिन्यन्तोदात्तत्वं [12]च वक्तव्यम्। (म.भा. २.८३)

स्वामिवैश्ययोः इति किम्? आर्यो ब्राह्मणः॥

## उपसर्या काल्या प्रजने। (१०४/२८५२)

उपसर्या [13]इति निपात्यते काल्या चेत् प्रजने भवति। उपपूर्वात् सर्तेः यत् प्रत्ययः[14]। प्राप्तकाला काल्या। प्रजनः [15]प्रजननं, [16]प्रथमगर्भग्रहणम्। गर्भग्रहणे प्राप्तकाला। उपसर्या [17]गौः। उपसर्या वडवा। काल्या प्रजने इति किम्? उपसार्या शरदि [18]मथुरा॥

## अजर्यं सङ्गतम्। (१०५/२८५३)

अजर्यम् इति निपात्यते, सङ्गतं चेद् भवति[19]। जीर्यतेः[20]नञ्पूर्वात् सङ्गते [21]सङ्गमने कर्तरि यत् प्रत्ययो [22]निपात्यते। न [23]जीर्यति इति अजर्यम्। अजर्यमार्यसङ्गतम्। अजर्यं नोऽस्तु सङ्गतम्। सङ्गतम् इति किम्? अजरिता कम्बलः॥

---

1. अवद्यादयः फ. 2. तत् नास्ति फ. 3. पणितव्यं व्यवहर्तव्यम् इत्यधिकम् अ.फ. 4. उदाहरणमिदं नास्ति अ. 5. वहतेः अ. 6. कारके इत्यधिकम् क, अर्थे इत्यधिकम् अ. 7. तेन इत्यधिकम् फ. 8. वह्यम् क. 9. वाहम् ह. 10. अभिधेययोः नास्ति फ. 11. नास्ति फ. 12. च नास्ति ड. 13. इति निपात्यते नास्ति ह. 14. भवति इत्यधिकम् फ. 15. प्रजननं नास्ति ह.फ, प्रजनं अ. क. 16. प्रथम नास्ति फ.ह. 17. गौः नास्ति फ. 18. मथुरा अ.ड. 19. अत्यर्थमिति इत्यधिकम् ह. 20. धातोः इत्यधिकम् अ.क. फ.ह. 21. सङ्गमने नास्ति अ.फ. 22. भवति फ. 23. जीर्यते ह.

## वदः सुपि क्यप् च । (१०६/२८५४)

अनुपसर्गे इति वर्तते । वदेर्धातोः सुबन्त उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद् यत् च । ब्रह्मोद्यम्, ब्रह्मवद्यम् । सत्योद्यम्, सत्यवद्यम् । सुपि इति किम् ? [1]वाद्यम् । अनुपसर्गे इत्येव, [2]प्रवाद्यम् ॥

## भुवो भावे । (१०७/२८५५)

[3]सुप्यनुपसर्गे इत्यनुवर्तते । भवतेर्धातोः सुबन्ते उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति । यत् तु नानुवर्तते । [4]ब्रह्मभूयं गतः, ब्रह्मत्वं गतः[5] । [6]देवभूयं, देवत्वं गतः । भावग्रहणमुत्तरार्थम् (म. भा. २. ८४) । सुपि इत्येव, भव्यम् । अनुपसर्गे इत्येव, प्रभव्यम् ॥

## हनस्त च । (१०८/२८५६)

सुप्यनुपसर्गे इति वर्तते, भावे इति च । हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः । ब्रह्महत्या । अश्वहत्या[7] । सुपि इत्येव, घातः । ण्यत् तु भावे न भवत्यनभिधानात् । अनुपसर्गे इत्येव, [8]प्रघातो वर्तते ॥

## एतिस्तुशास्वृदृजुषः क्यप् । (१०९/२८५७)

सुप्यनुपसर्गे[9]भावे इति निवृत्तम् । सामान्येन विधानमे[10]तत् । एति स्तु शास् वृ दृ जुष् इत्येतेभ्यः [11]क्यप् प्रत्ययो भवति । इत्यः । स्तुत्यः । शिष्यः । वृत्यः । आदृत्यः । जुष्यः । क्यप् इति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम् । 'ओरावश्यके' (३.१.१२५/२८८६) इति ण्यतं बाधित्वा क्यबेव भवति । अवश्यस्तुत्यः । वृग्रहणे वृञो ग्रहणम् इष्यते, न वृङः । वार्याः ऋत्विजः (म. भा. २.८४) ।

[२१७] शंसिदुहिगुहिभ्यो वेति वक्तव्यम् ।

शस्यम्, शंस्यम् । दुह्यम्, दोह्यम् । गुह्यम्, गोह्यम् ।

[२१८] आङ्पूर्वादञ्जेः सञ्ज्ञायामुपसङ्ख्यानम् । (म. भा. २.८५)

आज्यं घृतम् ।

कथम् उपेयम् ? [12]एः एतद् रूपं, न इणः ॥

---

1. वाद्यः ङ. 2. प्रवाद्यः ङ. 3. वाक्यमिदं नास्ति फ. 4. ब्रह्मभूतं यः गतः ह. 5. इत्यर्थः इत्यधिकम् ग. 6. उदाहरणमिदं नास्ति ग. 7. पशुहत्या इत्यधिकम् फ. ह. 8. घातो वर्तते ङ. 9. भावे नास्ति क. फ. 10. एतत् नास्ति फ. ह. 11. धातुभ्यः इत्यधिकम् फ. 12. इञः क. ह.

## ऋदुपधाच्चाक्लृपिचृतेः । (११०/२८५९)

[1]ऋकारोपधाच्च[2] धातोः क्यप् प्रत्ययो भवति क्लृपिचृती वर्जयित्वा । [3]वृतु – वृत्यम् । वृधु – वृध्यम् [4]अक्लृपिचृतेः इति किम् ? कल्प्यम् । चर्त्यम् (३.१.१२४/२८७२) । तपरकरणं किम् ? 'कृत संशब्दने' (धा. पा. १६५४) । ण्यदेव भवति । कीर्त्यम् ।

[२१९] पाणौ सृजेर्ण्यद् वक्तव्यः ।

पाणिसर्ग्या रज्जुः ।

[२२०] समवपूर्वाच्च ।

[5]समवसर्ग्या ॥

## ई च खनः । (१११/२८६०)

[6]खनेर्धातोः क्यप् प्रत्ययो भवति, ईकारश्चान्तादेशः । [7]खेयम् । दीर्घनिर्देशः [8]प्रश्लेषार्थः । तत्र द्वितीय इकारो 'ये विभाषा' (६.४.४३/२३१९) इति आत्वबाधनार्थः ॥

## भृञोऽसञ्ज्ञायाम् । (११२/२८६१)

भृञो धातोः असञ्ज्ञायां विषये क्यप् प्रत्ययो भवति । भृत्याः कर्मकराः । भर्तव्याः इत्यर्थः । असञ्ज्ञायाम् इति किम् ? [9]भार्यो नाम क्षत्रियः ।

[२२१] सम्पूर्वाद् विभाषा । (म. भा. २.८५)

सम्भृत्याः, सम्भार्याः ।

सञ्ज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति (म. भा. २.८६) ॥

## मृजेर्विभाषा । (११३/२८६२)

मृजेर्धातोः विभाषा क्यप् प्रत्ययो भवति । ऋदुपधत्वात् प्राप्तविभाषेयम् । परिमृज्यः, परिमार्ग्यः (३.१.१२४/२८७२) ॥

---

1. ऋदुपधात् ग. 2. च नास्ति ग. फ. ह. 3. वृ ब. 4. अकृपि ड. 5. समवर्ग्या ब. 6. खनतेः फ. 7. नास्ति फ. 8. स प्रश्लेषार्थः अ. 9. भार्या नाम क्षत्रियाः अ. ड.

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । (११४/२८६५)

[1]राजसूय सूर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य [2]इत्येते शब्दाः क्यपि निपात्यन्ते । राज्ञा सोतव्यः, राजा वा इह सूयते राजसूयः क्रतुः । सूसर्तिभ्यां क्यप्, सर्तेरुत्वं, सुवतेर्वा [3]रुडागमः । सरति सुवति वा सूर्यः । मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं [4]क्यब् निपात्यते । [5]मृषापूर्वस्य मृषोद्यम् । रोचतेऽसौ रुच्यः । [6]कर्तरि क्यप् । गुपेरादेः कत्वं च सञ्ज्ञायाम्[7] । कुप्यम् । गोप्यम् अन्यत् । कृष्टे पच्यन्ते कृष्टपच्याः[8] । कर्मकर्तरि निपातनम् । न व्यथते [9]अव्यथ्यः ॥

## भिद्योद्ध्यौ नदे । (११५/२८६६)

भिदेरु[10]ज्झेश्च क्यप् निपात्यते नदेऽभिधेये । उज्झेर्धत्त्वं च । भिनत्ति कूलं[11] भिद्यः । उज्झति उदकम्[12] उद्ध्यः । नदे इति किम् ? भेत्ता । उज्झिता[13] ॥

## पुष्यसिद्ध्यौ नक्षत्रे । (११६/२८६७)

[14]पुषेः सिधेश्चाधिकरणे क्यप् निपात्यते नक्षत्रे अभिधेये । पुष्यन्ति अस्मिन्नर्थाः इति पुष्यः । सिध्यन्ति[15] अस्मिन्निति सिद्ध्यः । नक्षत्रे इति किम् ? पोषणम् । सेधनम् ॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु । (११७/२८६८)

विपूय विनीय जित्य इत्येते शब्दा निपात्यन्ते यथासङ्ख्यं मुञ्ज कल्क [16]हलि इत्येतेषु अर्थेषु बोध्येषु । विपूर्वात् पवतेर्नयतेश्च [17]तथा जयतेर्यति प्राप्ते (३ . १ . ९७/२८४२) कर्मणि क्यब् निपात्यते । विपूयो मुञ्जः । विपाव्यम् अन्यत् । विनीयः कल्कः । विनेयम् अन्यत् । जित्यो हलिः । जेयम् अन्यत् ॥

## प्रत्यपिभ्यां ग्रहेश्छन्दसि । (११८/२८६९)

प्रति अपि इत्येवंपूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये । 'मत्तस्य न प्रतिगृह्यम् (अनृतम्)' (का. सं. १४. ५) । '[18]तस्मान्नापिगृह्यम्' (का. सं. २७. ३) । छन्दसि इति किम् ? प्रतिग्राह्यम् । अपिग्राह्यम् (३. १. १२४/२८७२) ॥

---

1. राजसूयादिशब्दाः क्यबन्ताः फ. 2. इति क्यप्प्रत्ययान्ताः अ, इत्येतेभ्यः क्यप् निपात्यते । राजशब्दे तृतीयान्ते प्रथमान्ते वा उपपदे सुनोतेः क्यप् ड. 3. रुगागमः अ. 4. क्यब् नास्ति ब. 5. °पूर्वात् अ, मृषाशब्दात् ड. 6. कर्तरि क्यप् नास्ति अ. फ. 7. वक्तव्यम् इत्यधिकम् फ. ह. 8. शालयः इत्यधिकम् फ. 9. इति इत्यधिकम् फ. ह. 10. उज्झतेश्च कर्तरि अ. ड. फ. ह. 11. इति इत्यधिकम् अ.क. ह, कूलानि ड. 12. इति इत्यधिकम् क. ह. 13. उज्झयिता ह. 14. पुष्यतेः सिध्यतेः अ. 15. अर्थाः इत्यधिकम् फ. 16. हलिषु वाच्येषु अ. ह, मुञ्जादिषु अर्थेषु फ. 17. तथा नास्ति अ. 18. तस्मादपि ड.

## पदास्वैरिबाह्यापक्ष्येषु च । (११९/२८७०)

पदे अस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति । पदे तावत् — प्रगृह्यं पदम्, यस्य प्रगृह्यसञ्ज्ञा विहिता । अवगृह्यं पदम्, यस्यावग्रहः क्रियते । अस्वैरी परतन्त्रः । गृह्यका इमे । गृहीतका इत्यर्थः । बाह्यायाम् — ग्रामगृह्या सेना । नगरगृह्या सेना । ग्रामनगराभ्यां बहिर्भूता इत्यर्थः । स्त्रीलिङ्ग-निर्देशादन्यत्र न भवति । पक्षे भवः पक्ष्यः । [1]वासुदेवगृह्याः । [2]अर्जुनगृह्याः । [3]तत्पक्षाश्रिताः इत्यर्थः ॥

## विभाषा कृवृषोः । (१२०/२८७१)

[4]कृञो वृषश्च विभाषा क्यप् प्रत्ययो भवति । करोतेर्ण्यति प्राप्ते (३. १. १२४/२८७२) वर्षतेः ऋदुपध-त्वात् नित्ये क्यपि प्राप्ते (३.१.११०/२८५९) [5]विभाषारभ्यते । कृत्यम्, [6]कार्यम् । वृष्यम्, वर्ष्यम् ॥

## युग्यं च पत्रे । (१२१/२८७३)

युग्यम् इति निपात्यते [7]पत्रं चेत् तद् भवति । पतत्यनेन इति पत्रं वाहन[8]मुच्यते । युग्यो गौः । युग्योऽश्वः । युग्यो हस्ती । युजेः क्यप् कुत्वं च निपात्यते । पत्रे इति किम् ? योग्यम् अन्यत् ॥

## अमावस्यदन्यतरस्याम् । (१२२/२८७४)

अमाशब्दः सहार्थे वर्तते । तस्मिन्नुपपदे [9]वसेर्धातोः कालेऽधिकरणे ण्यत् प्रत्ययो भवति, [10]तत्रान्यतरस्यां [11]वृद्ध्यभावो निपात्यते । सह वसतोऽस्मिन् काले सूर्याचन्द्रमसौ इति अमावास्या, अमावस्या । एकदेशविकृतस्यानन्य-त्वाद् 'अमावास्याया वा' (४.३. ३०/१४०३) इत्यत्र अमावस्याशब्दस्यापि ग्रहणं भवति ।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ (म.भा.२.८७)

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्म-वाद्यभाव्यस्ताव्योपचाय्यपृडानि । (१२३/३४०७)

निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते । यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम् । निष्टर्क्यः इति 'कृती छेदने' (धा.पा.१४३६) इत्यस्मान् निस्पूर्वात् क्यपि प्राप्ते [12]ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते । 'निष्टर्क्यं चिन्वीत पशुकामः' ( ऐ. आ. ५. १.३ ) । देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घस्तुगभावश्च । देवहूयः ( श. ब्रा. २. १. ३. २ ) ।

---

1. नास्ति अ. 2. नास्ति फ. 3. तत्पक्षमाश्रिताः फ. ह. 4. करोतेः वर्षतेश्च अ. इ. ह. 5. क्यप् विकल्प्यते फ. 6. नास्ति ब. 7. पत्रेऽभिधेये अ. ग. 8. उच्यते नास्ति अ. क. ड. ह. 9. वसतेः अ. 10. तत्र नास्ति फ. 11. वृद्ध्यभावश्च निपातनात् फ. 12. ण्यत् नास्ति फ.

प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्। प्रणीयः (श. ब्रा. ३.१.३.१)। उन्नीयः (श. ब्रा. ३.५.१६.१२)। उत्पूर्वाच्छिषेः क्यप्। [1]उच्छिष्यः (मै. सं. ३.९.२)। 'मृङ् प्राणत्यागे' (धा. पा. १४०४), 'स्तृञ् आच्छादने' (धा. पा. १२५३), 'ध्वृ हूर्च्छने' (धा. पा. ९४०), एतेभ्यो यत् प्रत्ययः। मर्यः (तै. आ. १.३.२.)। स्तर्या (श.ब्रा. २.१.२.१०)। स्त्रियामेव [2]निपातनम्। ध्वर्यः। खनेर्यत्। खन्या(तै.सं. ७.४.१३.१)। एतस्मादेव ण्यत्। खान्यः। देवशब्दे उपपदे यजेर्यत्। [3]देवयज्या (ऋ.१०.३०.२१)। [4]स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात् पृच्छेः क्यप्। आपृच्छ्यः (ऋ. १.६०.२)। प्रतिपूर्वात् सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः (मा. श्रौ. २.२.२.३५)। ब्रह्मण्युपपदे [5]वदेर्ण्यत्। ब्रह्मवाद्यम् (तै. सं. २.५.८.३)। भवतेः [6]स्तौतेश्च ण्यत्, आवादेशश्च भवति। भाव्यम् (अ.वे. १३.१.५४)। स्ताव्यः (म. भा. २.८८)। उपपूर्वस्य चिनोतेः ण्यद्आयादेशौ। उपचाय्यपृडम् (हिरण्यदक्षिणा) (का. सं. ११.१)। [7]पृडे चोत्तरपदे निपातनमेतत्।

[२२२] हिरण्य इति वक्तव्यम्। (म.भा. २.८८)

हिरण्यादन्यत्र [8]उपचेयपृडम् एव।

निष्टक्यें व्यत्ययं विद्यान्निसः षत्वं निपातनात्।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ॥

ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।
ण्यदेकस्माद् यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः (म.भा. २.८८)॥

## ऋहलोर्ण्यत्। (१२४/२८७२)

पञ्चम्यर्थे षष्ठी। [9]ऋवर्णान्ताद् धातोर्हलन्ताच् च ण्यत् प्रत्ययो भवति। कार्यम्। हार्यम्। [10]धार्यम् [11]वाक्यम्। [12]पाक्यम्॥

## ओरावश्यके। (१२५/२८८६)

अवश्यंभावः आवश्यकम्। उवर्णान्ताद् धातोः ण्यत् प्रत्ययो भवति आवश्यके द्योत्ये। [13]यतोऽपवादः। लाव्यम्। पाव्यम्। आवश्यके इति किम्? [14]लव्यम्। आवश्यके द्योत्ये इति चेत्, स्वरसमासानुपपत्तिः, (म. भा. २.८८) [15]अवश्यलाव्यम्, अवश्यपाव्यम् इति? नैष दोषः। मयूरव्यंसकादित्वात् (२.१.७२/७५४) समासः[16]। [17]उत्तरपदप्रकृति[18]स्वरे च यत्नः करिष्यते॥

---

1. उच्छिष्यम् अ. ब. इ. फ. ग. 2. निपात्यते फ. 3. देवयज्यया ड. 4. स्त्रीलिङ्गे ब. 5. वदेः नास्ति ब. 6. स्तुवतेश्च ब. 7. पृड एवोत्तरपदे च ड. 8. उपचेयं वृष्टममेव क. 9. हलन्ताद् ऋवर्णान्ताद् धातोः फ. 10. धार्यम् पाक्यम् नास्ति फ. 11. हलन्तात् इत्यधिकम् फ. ह. 12. पाठ्यम् इत्यधिकम् अ. 13. यतोऽपवादः नास्ति ह. 14. पठ्यम् अ. क.ड.फ.ह. 15. °लाव्यः °पाव्यः ब. 16. भविष्यति इत्यधिकम् क. ड. 17. उपपद° अ. 18. स्वरत्वे ड. फ.

## आसुयुवपिरपिलपित्रपिचमश्च । (१२६/२८८७)

[1]आङ्पूर्वात् सुनोतेः यु वपि रपि लपि त्रपि [2]चम इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति । यतोऽपवादः । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । लाप्यम् । [3]त्राप्यम् । [4]आचाम्यम् । अनुक्तसमुच्चयार्थश्चकारः । [5]दभि – दाभ्यम् ।।

## आनाय्योऽनित्ये । (१२७/२८८८)

आनाय्यः इति निपात्यते [6]अनित्येऽभिधेये । नयते[7]राङ्पूर्वाण् ण्यदायादेशौ [8]निपात्येते । आनाय्यो दक्षिणाग्निः । रूढिरेषा । तस्मादनित्यविशेषे दक्षिणाग्नावेवा[9]वतिष्ठते । तस्य चानित्यत्वं नित्यमजागरणात् । यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सह एकयोनिः, तत्रैतन् निपातनं, न दक्षिणाग्निमात्रे । तस्य हि योनिर्विकल्प्यते 'वैश्यकुलाद् वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद् वा' (पार. गृ. १.२.३) इति ।

आनाय्योऽनित्य इति चेद् दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् (म. भा. २.८९) ।।

## प्रणाय्योऽसम्मतौ । (१२८/२८८९)

अविद्यमाना सम्मतिरस्मिन् [10]इत्यसम्मतिः । सम्मननं सम्मतिः, सम्मतता, पूजा । प्रणाय्यः इति निपात्यतेऽसम्मतावभिधेये । प्रणाय्य[11]श्चोरः । असम्मतौ इति किम् ? प्रणेयोऽन्यः । यद्येवं कथम्[12]एतत्, 'ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् [13]प्रणाय्यान्तेवासिने, नान्यस्मै कस्मैचन' (छां. ३.१०.५.६) इति ? सम्मतिरभिलाषोऽप्युच्यते । तदभावेन निष्कामतया असम्मतिरन्तेवासी भवति । तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म ब्रूयात् इति युज्यते ।।

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । (१२९/२८९०)

पाय्यादयः शब्दा निपात्यन्ते यथासङ्ख्यं [14]माने हविषि निवासे सामिधेन्यां चाभिधेयायाम् । [15]पाय्य इति माङो ण्यत्प्रत्ययः, [16]आदेः पत्वं च निपात्यते माने । पाय्यं मानम् मेयम् अन्यत् । सम्पूर्वान्नयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च [17]निपात्यते । सानाय्यं हविः (तै.सं.७.५.१०३) । संनेयमन्यत् । रूढित्वाच्च हविर्विशेष एवावतिष्ठते । निपूर्वाच् चिनोतेः ण्यदायादेशावादिकुत्वं च [18]निपात्यते । निकाय्यो निवासः । निचेयम् अन्यत् । धाय्या इति धायो ण्यत् प्रत्ययो निपात्यते सामिधेनी चेत् [19]सा भवति । धाय्या [20]सामिधेनी । धेयम् अन्यत् । सामिधेनीशब्द ऋग्विशेषस्य वाचकः । तत्र च धाय्या इति न सर्वा सामिधेनी उच्यते, किं तर्हि, काचिदेव । रूढिशब्दो ह्ययम् । तथा चासामिधेन्यामपि दृश्यते, 'धाय्याः शंसत्यग्निर्नेता त्वं सोमक्रतुभिः' (ऐ. ब्रा. १२.७) इति ।।

---

1. स्वादिभ्यश्च फ. 2. चमि अ. क. 3. अवत्राप्यः क, त्राप्यम् ड. 4. आचाम्यः क. ड. 5. दभेः अ. क. फ. ह. 6. अनित्ये वाच्ये अ, वाच्येऽर्थे फ. 7. धातोः इत्यधिकम् फ. 8. भवतः फ. ह. 9. भवति अ, विशस्यते फ. ह, विज्ञायते ह. 10. सोऽयम् फ. ह. 11. चौरः अ. फ. 12. एतदेव फ. 13. प्रणाय्यचान्ते° ड. 14. मानादिषु अभिधेयेषु फ. 15. पाय्य इति नास्ति फ. 16. आदिषत्वं च फ. 17. निपात्यते नास्ति फ. 18. भवति अ. 19. सा नास्ति फ. 20. सामिधेनी नास्ति फ.

## क्रतौ कुण्डपाय्यसञ्चाय्यौ । (१३०/२८९१)

कुण्डपाय्य सञ्चाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये । कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत् प्रत्ययो निपात्यते युक् च । [1]कुण्डेन पीयतेऽस्मिन् सोमः इति कुण्डपाय्यः (ऋ. ८.१७.१३) [2]क्रतुः । 'यतोऽनावः' (६.१.२१३/३७०१) इति स्वरः । सम्पूर्वाच्चिनोतेः ण्यदायादेशौ निपात्येते । सञ्चीयते[3]ऽस्मिन् सोमः इति सञ्चाय्यः क्रतुः । क्रतौ इति किम् ? [4]कुण्डपानम् । सञ्चेयः ॥

## अग्नौ परिचाय्योपचाय्यसमूह्याः । (१३१/२८९२)

परिचाय्य उपचाय्य समूह्य इत्येते शब्दा निपात्यन्ते अग्नावभिधेये । [5]परिपूर्वात् उपपूर्वाच्च चिनोतेर्ण्यदायादेशौ [6]निपात्येते । [7]परिचाय्यम् (तै. सं. ५.४.११) । उपचाय्यः (मै. ३.४.७) । सम्पूर्वाद् वहेः सम्प्रसारणं दीर्घत्वं च [8]निपात्यते । 'समूह्यं चिन्वीत पशुकामः' (तै. सं. ५.४.११) । अग्नौ इति किम् ? [9]परिचेयम् । उपचेयम् । संवाह्यम् ॥

## चित्याग्निचित्ये च । (१३२/२८९३)

चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते । [10]चीयतेऽसौ चित्योऽग्निः । अग्निचयनमेव अग्निचित्या (शां. ब्रा. १९.१५.७) । भावे यकारप्रत्ययः तुक् च[11] । तेनान्तोदात्तत्वं भवति । अग्नावित्येव । चेयमन्यत् ॥

## ण्वुल्तृचौ । (१३३/२८९५)

धातोः इति वर्तते । सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः । कारकः । कर्ता । हारकः । हर्ता । चकारः [12]सामान्यग्रहणाविघातार्थः, 'तुश्छन्दसि' (५.३.५९/२००७), 'तुरिष्ठेमेयस्सु' (६.४.१५४/२००८) इति ॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । (१३४/२८९६)

आदिशब्दः प्रत्येकं [13]सम्बध्यते । त्रिभ्यो गणेभ्यः त्रयः प्रत्ययाः यथासङ्ख्यं भवन्ति । नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच् । नन्दिग्रहिपचादयश्च न [14]धातुपाठतः सन्निविष्टा गृह्यन्ते, किं तर्हि, नन्दन रमण इत्येवमादिषु प्रातिपदिक[15]गणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते ।

---

1. कुण्डैः अ. क. ड. फ. ह. 2. क्रतुः नास्ति अ. 3. अस्मिन् सोमः नास्ति ब, असौ अ. क. ड. 4. कुण्डपानां सञ्चेयः क. 5. पर्युपपूर्वात् ड. 6. निपात्यते नास्ति फ. 7. परिचाय्यः अग्निः ड. 8. निपात्यते नास्ति फ. 9. परिचेयः उपचेयः संवाह्यः ड. 10. चीयते असौ नास्ति अ. फ. 11. निपात्यते इत्यधिकम् अ. क. 12. सामान्यग्रहणार्थः क. फ, सामान्यग्रहणाविधानार्थः ब. 13. अभिसंबध्यते अ. फ. 14. धातुपाठसंनिविष्टाः क. 15. ग्रहणेषु फ.

नन्दिवासिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः सञ्ज्ञायाम् । नन्दनः । [1]वासनः । मदनः । [2]दूषणः । साधनः । वर्धनः । शोभनः । रोचनः । सहितपि[3]दमेः सञ्ज्ञायाम् (ग.सू. ३) । सहनः । तपनः । दमनः । जल्पनः । रमणः । दर्पणः । सङ्क्रन्दनः । सङ्कर्षणः । [4]संहर्षणः । जनार्दनः । [5]यवनः । [6]मधुसूदनः । [7]विभीषणः । लवणः । निपातनाण् णत्वम् । चित्तविनाशनः । कुलदमनः । [8]शत्रुदमनः । इति नन्द्यादिः ।

ग्रह । उत्सह । [9]उद्दस । [10]उद्भास । स्था । मन्त्र । सम्मर्द । ग्राही । उत्साही । उद्दासी । उद्भासी । स्थायी । मन्त्री । सम्मर्दी । रक्षश्रुवसवपशां नौ (ग.सू. २४) । निरक्षी । निश्रावी । [11]निवासी । निवापी । निशायी । [12]याचिव्याहृसंव्याहृव्रजवदवसां [13]प्रतिषिद्धानाम् (ग.सू. २५) । अयाची । [14]अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी । अचामचित्तकर्तृकाणाम् (ग. सू. २६) । प्रतिषिद्धानामित्येव[15] । अकारी । अहारी । अविनायी । अविशायी । विशयी विषयी देशे (ग. सू. २७) । विशयी, विषयी देशः । अभिभावी भूते (ग. सू. २८) । अभिभावी । अपराधी । [16]उपरोधी । परिभवी । परिभावी । इति ग्रह्यादिः ।

पच । [17]वप । वद । चल । शल । तप । पत । नदट् । [18]भषट् । वस । गरट् । प्लवट् । चरट् । तरट् । चोरट् । ग्राहट् । जर । मर । क्षर । क्षम । सूदट् । देवट् । मोदट् । सेव । मेष । कोप । मेधा । नर्त । व्रण । [19]दर्श । दंश । [20]दम्भ । जारभरा । श्वपच । पचादिराकृतिगणः ।

[21]अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः ।
अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः ॥ (म.भा. २.९१)

## इगुपधज्ञाप्रीकिरः कः । (१३५/२८९७)

इगुपधेभ्यः[22] जानातेः[23] प्रीणातेः किरतेश्च कप्रत्ययः भवति । विक्षिपः । विलिखः । [24]बुधः । कृशः । जानाति इति ज्ञः । प्रीणाति इति प्रियः । किरति इति किरः । देवसेवमेषादयः [25]पचादौ पठितव्याः ॥

## आतश्चोपसर्गे । (१३६/२८९८)

आकारान्तेभ्यो धातुभ्यः [26]उपसर्गे [27]उपपदे कप्रत्ययो भवति । [28]णस्यापवादः । [29]प्रस्थः । सुग्लः । सुम्लः[30] ॥

---

1. नास्ति अ, चाणनः ब. 2. पूषणः क. 3. °दमेभ्यः फ. 4. हर्षणः अ. ह, सहर्षणः इत्यपि पठन्ति अ. 5. नास्ति ब. ड. 6. 7. नास्ति फ. 8. नास्ति ड. 9. उद्दम क. 10. नास्ति क. 11. नास्ति ब. 12. याचृ अ. ब. क. 13. प्रतिषिद्धार्थानाम् क. 14. अव्यवहारी क. 15. नञ्पूर्वाणामित्यर्थः इत्यधिकम् फ. 16. अपरोधी ग. 17. चपि ब, वच क. 18. अवट् क, नास्ति अ. 19. सर्पदर्पे अ. फ. 20. दम्भ नास्ति अ. 21. एषः श्लोकः नास्ति इ. ब. क. ड. 22. धातुभ्यः इत्यधिकम् ब. क. ड. 23. च प्रीणातेश्च फ. 24. विबुधः ब. क. ग. 25. पचादिषु ब. 26. च इत्यधिकम् अ. ग. 27. उपपदे नास्ति क. 28. णप्रत्ययस्य ब. क. फ. 29. प्रदः फ. 30. उपसर्गे इति किम् ? दायः । धायः । इत्यधिकम् ब.

## पाघ्राध्माधेट्दृशः शः । (१३७/२८९९)

[1]पादिभ्यो धातुभ्यः [2]उपसर्गे उपपदे शप्रत्ययो भवति । उत्पिबः । विपिबः । उज्जिघ्रः । विजिघ्रः । उद्धमः । विधमः । उद्धयः । विधयः । उत्पश्यः । विपश्यः । उपसर्गे इति केचिन् नानुवर्तयन्ति । पश्यति इति पश्य (छां. ७.२८.२) ।

[२२३] [3]जिघ्रतेः सञ्ज्ञायां प्रतिषेधो वक्तव्यः । (म. भा.२. ९२)

व्याघ्रः ॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । (१३८/२९००)

अनुपसर्गेभ्यो लिम्पादिभ्यः[4] शप्रत्ययो भवति । लिम्पति इति लिम्पः । विन्दति इति विन्दः । धारयति इति धारयः । पारयति इति पारयः । वेदयति इति वेदयः । उदेजयति इति उदेजयः । चेतयति इति चेतयः । सातिः सौत्रो धातुः । सातयः । साहयः । अनुपसर्गात् इति किम् । प्रलिपः ।

[२२४] नौ लिम्पेरिति वक्तव्यम् । (म. भा. २.९२)

निलिम्पा [5]नाम देवाः ।

[२२५] गवादिषु विन्देः सञ्ज्ञायाम् । (म. भा. २.९२)

गोविन्दः[6] । अरविन्दः ॥

## ददातिदधात्योर्विभाषा । (१३९/२९०१)

दाञो धाञश्च विभाषा शप्रत्ययो भवति । [7]णस्यापवादः । ददः, [8]दायः । दधः, धायः । अनुपसर्गात् इत्येव, प्रदः, [9]प्रधः ॥

## ज्वलितिकसन्तेभ्यो णः । (१४०/२९०२)

इतिशब्दः [10]आद्यर्थः । 'ज्वल दीप्तौ' (धा. पा. ८०५) इत्येवमादिभ्यो धातुभ्यः 'कस गतौ' (धा. पा. ८६१) इत्येवम[11]न्तेभ्यो विभाषा णप्रत्ययो भवति । अचोऽपवादः । ज्वालः, ज्वलः । चालः, चलः । अनुपसर्गात् इत्येव, प्रज्वलः ।

[२२६] तनोतेर्णस्योपसङ्ख्यानं कर्तव्यम् । (म. भा. २.९२)

अवतनोति इति अवतानः ॥

---

1. पा घ्रा ध्मा धेट् दृश इत्येतेभ्यः ब. क. 2. उपसर्गे नास्ति फ. 3. जिघ्रातेः ब, जिघ्रः ड. 4. धातुभ्यः इत्यधिकम् क. 5. नाम नास्ति ग. 6. कुरुविन्दः इत्यधिकम् ग. फ. 7. ण्यस्य क. फ. 8. दयः फ. 9. प्रधा ब. 10. आद्यर्थे वर्तते ब. फ. 11. पर्यन्तेभ्यः ब.

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च । (१४१/२९०३)

अनुपसर्गात् इति, विभाषा इति च निवृत्तम् । [1]श्यैङः, आकारान्तेभ्यश्च धातुभ्यः, व्यध आस्रु संस्रु [2]अतीण् अवसा अवहृ लिह श्लिष श्वस इत्येतेभ्यश्च[3] ण प्रत्ययो भवति । आकारान्तत्वादेव श्यायतेः [4]प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम् । उपसर्गे कं (३.१.१३६/२८९८) बाधित्वाऽयमेव भवति । अवश्यायः । प्रतिश्यायः । दायः । धायः । [5]व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥

दुन्योरनुपसर्गे । (१४२/२९०४)

दुनोतेर्नयतेश्चानुपसर्गे णप्रत्ययो भवति । दुनोति इति दावः । नयति इति नायः । अनुपसर्गे इति किम् ? प्रदवः । प्रणयः (३.१.१३४/२८९६) ॥

विभाषा ग्रहः । (१४३/२९०५)

विभाषा ग्रहेः धातोः णप्रत्ययो भवति । अचः (३.१.१३४/२८९६) अपवादः । ग्राहः, ग्रहः । व्यवस्थितविभाषा चेयम् । [6]जलचरे नित्यं ग्राहः । ज्योतिषि नेष्यते, तत्र ग्रहः एव ।

[२२७] भवतेश्च इति वक्तव्यम् ।

[7]भवति इति भावः, भवः ॥

गेहे कः । (१४४/२९०६)

ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्तरि[8] । [9]गृहं वेश्म । तात्स्थ्यात् दाराश्च । गृह्णन्ति इति [10]गृहाः दाराः । [11]गृहाणि वेश्मानि ॥

शिल्पिनि ष्वुन् । (१४५/२९०७)

धातोः ष्वुन् प्रत्ययो भवति शिल्पिनि कर्तरि ।

[२२८] नृतिखनिरञ्जिभ्यः परिगणनं कर्तव्यम् ।

[12]नर्तकः । [13]खनकः । [14]रजकः । नर्तकी । [15]खनकी । रजकी । रञ्जेरनुनासिकलोपश्च ॥

---

1. श्यैङ् गतौ फ. 2. अतिपूर्व इण् फ. 3. धातुभ्यः इत्यधिकम् क. 4. णप्रत्यये ब.ग, णप्रत्यये सिद्धे वचनं क. 5. व्याधः नास्ति फ. 6. नित्यम् नास्ति फ, जलचरे ग्राह एव । ज्योतिषि ग्रह एव ब.क.फ. 7. भवति इति नास्ति क. 8. वाच्ये इत्यधिकम् फ. 9. गेहं ब.ड.फ. 10. गृहं ग, नास्ति फ. 11. गृहं वेश्म अ.क.ड.फ. 12. नृती गात्रविक्षेपे इत्यधिकम् अ.फ, नृती गात्रविनामे इत्यधिकम् ब. 13. खन अवदारणे इत्यधिकम् अ, खनुञ् विदारणे इत्यधिकम् ब. 14. रञ्ज रागे इत्यधिकम् अ.ब. 15. खनकी नास्ति ब.

## गस्थकन्। (१४६/२९०८)

गायतेः[1] थकन् प्रत्ययो भवति शिल्पिनि कर्तरि[2]। गाथकः, [3]गाथिका ॥

## ण्युट् च। (१४७/२९०९)

चकारेण गः[4] इत्यनुकृष्यते। गायतेः[5] ण्युट् [6]प्रत्ययो भवति शिल्पिनि कर्तरि। गायनः, गायनी। योगविभागः उत्तरार्थः ॥

## हश्च व्रीहिकालयोः। (१४८/२९१०)

चकारेण ण्युट् अनुकृष्यते। जहातेर्जिहातेश्च [7]धातोः ण्युट् प्रत्ययो भवति व्रीहौ काले च कर्तरि। हायना नाम व्रीहयः[8], जहत्युदकमिति कृत्वा। काले -- हायनः[9] संवत्सरः, जिहीते भावान् इति [10]कृत्वा ॥

## प्रुसृल्वः समभिहारे वुन्। (१४९/२९११)

[11]प्रु सृ लू इत्येतेभ्यः [12]धातुभ्यः समभिहारे वुन् प्रत्ययो भवति। प्रवकः। सरकः। लवकः। समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते। साधुकारिणि वुन्[13]विधानात् सकृदपि यः सुष्ठु करोति तत्र भवति। [14]बहुशो यो दुष्टं करोति तत्र न भवति ॥

## आशिषि च। (१५०/२९१२)

आशिषि गम्यमानायां धातुमात्रात् वुन् प्रत्ययो भवति। जीवतात् जीवकः। नन्दतात् नन्दकः[15]। आशीः प्रार्थनाविशेषः। स [16]चेह क्रियाविषयः। अमुष्याः क्रियायाः कर्ता [17]भवेत् इत्येवमाशास्यते ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

तृतीयाध्यायस्य प्रथमः पादः ॥

---

1. धातोः इत्यधिकम् ब. क. 2. वाच्ये इत्यधिकम् फ. 3. गाथिका नास्ति ब. क. फ. 4. गायतेः इत्यधिकम् ब. 5. धातोः इत्यधिकम् ब. 6. च इत्यधिकम् ड. 7. धातोः नास्ति क. 8. भवन्ति इत्यधिकम् ब. क. ड. फ. 9. नाम इत्यधिकम् अ. फ. 10. कृत्वा नास्ति अ. क. ड. 11. प्रुङ गतौ, सृ गतौ, लूञ् छेदने अ.ब. 12. धातुभ्यः नास्ति फ. 13. विधानम् अ. ब. क. ड. 14. बहुशोऽपि यो दुष्करोति ब. ड. फ. 15. भावतात् भावनः इत्यधिकम् क. फ, भवतात् भवकः इत्यधिकम् ब. 16. इह नास्ति ब. इ. फ. ग. 17. भवतु क. ड.

## तृतीयाध्यायस्य द्वितीयः पादः

### कर्मण्यण् । (१/२९१३)

त्रिविधं कर्म, निर्वर्त्यं, विकार्यं, प्राप्यं चेति । सर्वत्र कर्मणि उपपदे धातोः अण् प्रत्ययो भवति । [1]निर्वर्त्यं तावत्--कुम्भकारः । नगरकारः । [2]विकार्यम्--काण्डलावः । शरलावः । [3]प्राप्यम्–वेदाध्यायः । चर्चापारः[4] । ग्रामं [5]गच्छति, आदित्यं [6]पश्यति, हिमवन्तं [7]शृणोति इत्यत्र न भवति, अनभिधानात् (म.भा. २.९४) ।

[२२९] शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । (म.भा. २.९५)

[8]मांसशीलः, मांसशीला । मांसकामः, मांसकामा । मांसभक्षः, मांसभक्षा । कल्याणाचारः, कल्याणाचारा ।

[२३०] ईक्षिक्षमिभ्यां [9]चेति वक्तव्यम् । (म.भा. २.९५)

[10]सुखप्रतीक्षः, सुखप्रतीक्षा । बहुक्षमः, बहुक्षमा ॥

### ह्वावामश्च । (२/२९१४)

'ह्वेञ् स्पर्धायां [11]शब्दे च' (धा.पा. १००९), 'वेञ् तन्तुसन्ताने' (धा.पा. १००७), 'माङ माने' (धा.पा. १०८९) इत्येतेभ्यश्च[12] कर्मण्युपपदे अण् प्रत्ययो भवति । [13]कप्रत्ययस्यापवादः । [14]स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥

### आतोऽनुपसर्गे कः । (३/२९१५)

आकारान्तेभ्यः [15]अनुपसर्गेभ्यः कर्मण्युपपदे[16] कप्रत्ययो भवति । अणोऽपवादः । गोदः । कम्बलदः । पार्ष्णित्रम् । अङ्गुलित्रम् । अनुपसर्गे इति किम् ? [17]गोसन्दायः । [18]वडवासन्दायः (३.२.१/२९१३) ॥

### सुपि स्थः । (४/२९१६)

सुबन्ते उपपदे तिष्ठतेः[19] कप्रत्ययो भवति । समस्थः । विषमस्थः[20] । अत्र योगविभागः [21]कर्तव्यः सुपि इति । सुपि आकारान्तेभ्यः[22] कप्रत्ययो भवति । द्वाभ्यां पिबति इति द्विपः । पादपः । कच्छपः[23] । [24]ततः स्थः इति । [25]स्थश्च सुपि कप्रत्ययो भवति । किमर्थमिदम् ? कर्तरि पूर्वयोगः । अनेन भावेऽपि यथा स्यात् । आखूनामुत्थानम् [26]आखूत्थः । शलभोत्थः । [27]इत उत्तरं कर्मणि (३.२.१/२९१३) इति च सुपि इति च द्वयमप्य[28] नुवर्तते । तत्र सकर्मकेषु धातुषु कर्मणि इत्येतदुपतिष्ठते । अन्यत्र सुपि इति ॥

---

1. निर्वर्त्ये अ.ब.क.फ. 2. विकार्ये अ.फ. 3. प्राप्ये अ.फ. 4. व्यासो विज्ञायते इत्यधिकम् फ. 5. ऋच्छति क. 6. पश्य फ. 7. करोति फ. 8. मांसं शीलयति इत्यधिकम् अ.ब. 9. इति वक्तव्यम् नास्ति फ. 10. सुखप्रतीक्षः नास्ति फ. 11. वाचि अ.क.ड, नास्ति फ. 12. धातुभ्यः इत्यधिकम् ड, च नास्ति फ. 13. कस्यापवादः अ. 14. स्वर्गाह्वायः ब. 15. धातुभ्यः इत्यधिकम् ड. 16. च इत्यधिकम् ग. 17. गोसंदायः नास्ति ड. 18. वडवासंदायः नास्ति ग.फ. 19. धातोः इत्यधिकम् अ.ब.क.ग. 20. कूटस्थः इत्यधिकम् अ.क.ग.ड.फ, पर्वतस्थः इत्यधिकम् ग. 21. क्रियते क.ड.फ. 22. धातुभ्यः इत्यधिकम् क.फ. 23. समस्थः विषमस्थः इत्यधिकम् क.ड.फ. 24. तटस्थः अ.क.ड. 25. स्थ इति एको योगः क. 26. आखूत्थं वर्तते अ.क.ग.ड, नास्ति ब.ह. 27. इतः परम् ग. 28. अधिक्रियते क.ड.

## तुन्दशोकयोः परिमृजापनुदोः। (५/२९१९)

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोः धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्रो जातः (म. भा. २.९८)।

[२३१] आलस्यसुखाहरणयोः इति वक्तव्यम्। (म. भा. २.९८)

अलसस्तुन्दपरिमृज [1]उच्यते। तुन्दपरिमार्जः एवान्यः। सुखस्याहर्ता शोकापनुदः[2]। शोकापनोदः एवान्यः।

[२३२] कप्रकरणे मूलविभुजादिभ्यः उपसङ्ख्यानम्। (म.भा. २.९८)

मूलानि विभुजति इति मूलविभुजो रथः। [3]नखमुचानि धनूंषि। काकगुहास्तिलाः। कौ मोदते कुमुदम्॥

## प्रे दाज्ञः। (६/२९२०)

सोपसर्गार्थ आरम्भः। ददातेः जानातेश्च धातोः [4]प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्रे इति किम्? गोसन्दायः[5]॥

## समि ख्यः। (७/२९२१)

सोपसर्गार्थः आरम्भः। संपूर्वात् ख्या इत्येतस्माद् धातोः कर्मण्युपपदे कप्रत्ययो भवति। [6]अणोऽपवादः। गां संचष्टे गोसङ्ख्यः[7]॥

## गापोष्टक्। (८/२९२२)

कर्मण्य[8]नुपसर्गे इति [9]वर्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति। [10]कस्यापवादः। शक्रं गायति शक्रगः, शक्रगी। सामगः, [11]सामगी।

[२३३] सुराशीध्वोः पिबतेरिति वक्तव्यम्। (म. भा. २.९९)

सुरापः, सुरापी। शीधुपः, शीधुपी। सुराशीध्वोः इति किम्? [12]क्षीरपा ब्राह्मणी। पिबतेः इति किम्? सुरां पाति इति सुरापा। अनुपसर्गे इत्येव, [13]शक्रसङ्गायः। [14]सामसङ्गायः।

[२३४] बहुलं[15] छन्दसीति [16]वक्तव्यम्। (म. भा. २.९९)

या ब्राह्मणी सुरापी भवति [17]नैनां देवाः पतिलोकं नयन्ति (म. भा. २.९९)। या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति (म. भा. २.९९)॥

---

1. आस्ते अ. 2. इति इत्यधिकम् फ, पुत्रो जातः इत्यधिकम् अ. फ. 3. नखमुच्यानि फ. 4. प्रोपसृष्टात् फ. 5. वडवासंदायः इत्यधिकम् फ, अश्वसंदायः इत्यधिकम् ग. 6. अणोऽपवादः नास्ति अ. क. फ. 7. पशुसंख्यः इत्यधिकम् अ. ब. क. ग. 8. अनुपसर्गात् फ. 9. द्वयमप्यनुवर्तते फ. 10. कप्रत्ययस्य फ. 11. सामगी नास्ति फ. 12. क्षीरं पिबति इति इत्यधिकम् क. 13. शक्रसंगायः नास्ति अ, वक्त्रसंगायः फ, चक्रसंगायः ब. ड. 14. सामसंगायः नास्ति फ. 15. सञ्ज्ञा इत्यधिकम् फ. 16. वा इत्यधिकम् क. 17. न तां अ.

## हरतेरनुद्यमनेऽच् । (९/२९२३)

हरतेर्धातोरनुद्यमने[1] वर्तमानात् [2]कर्मणि उपपदे अच् प्रत्ययो भवति । अणोऽपवादः । उद्यमनम् उत्क्षेपणम् । [3]अंशं हरति [4]अंशहरः । रिक्थहरः[5] । अनुद्यमने इति किम् ? [6]भारहारः ।

[२३५] अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटी[7]धनुष्षु ग्रहेरुपसङ्ख्यानम् । (म.भा.२.९९)

शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । [8]घटीग्रहः । धनुर्ग्रहः ।

[२३६] सूत्रे च धार्यर्थे । (म.भा.२.९९)

[9]सूत्रग्रहः । सूत्रं [20]धारयति इत्यर्थः । सूत्रग्राहः एवान्यः ।।

## वयसि च । (१०/२९२४)

वयसि गम्यमाने हरतेः[11] कर्मण्युपपदे अच् प्रत्ययो भवति[12] । उद्यमनार्थोऽयमारम्भः । कालकृता शरीरावस्था यौवनादिर्वयः[13] । यदुद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति, तत्रायं विधिः । अस्थिहरः श्वा । कवचहरः क्षत्रियकुमारः[14] ।।

## आङि ताच्छील्ये । (११/२९२५)

आङ्पूर्वाद् हरतेः[15] कर्मण्युपपदे अच् प्रत्ययो भवति ताच्छील्ये गम्यमाने । ताच्छील्यं तत्स्वभावता । पुष्पाहरः । फलाहरः । पुष्पाद्याहरणे स्वाभाविकी [16]फलानपेक्षा प्रवृत्तिरस्य इत्यर्थः । ताच्छील्ये इति किम् ? [17]भारमाहरति इति भाराहारः ।।

## अर्हः । (१२/२९२६)

'अर्ह पूजायाम्' (धा.पा.७४०), अस्माद्धातोः कर्मण्युपपदे अच्प्रत्ययो भवति । अणोऽपवादः[18] । [19]स्त्रीलिङ्गे विशेषः । पूजार्हा । [21]गन्धार्हा । [22]मालार्हा ।।

## स्तम्बकर्णयो रमिजपोः । (१३/२९२७)

स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपोः धात्वोः [23]अच्प्रत्ययो भवति । रमेः अकर्मकत्वात्, जपेः शब्दकर्मकत्वात् कर्म न सम्भवति इति सुपि इत्येतदिहाभिसम्बध्यते ।

[२३७] हस्तिसूचकयोरिति वक्तव्यम् । (म.भा.२.९९)

[24]स्तम्बे रमते इति स्तम्बेरमः हस्ती । [25]कर्णे जपति इति कर्णेजपः [26]सूचकः । हस्तिसूचकयोः इति किम् ? स्तम्बे रन्ता । कर्णे जपिता [27]मशकः ।।

---

1. अर्थे इत्यधिकम् क. ड. फ. 2. कर्मणि नास्ति फ. 3. अंशं हरति नास्ति अ. 4. अंशहरः नास्ति फ. 5. कवचहरः इत्यधिकम् अ. 6. भारं हरति इति इत्यधिकम् फ. 7. °जुटी ब. 8. तुरीग्रहः ब. 9. सूत्रग्रहः विद्वान् ड. 10. संधारयति ड. 11. धातोः इत्यधिकम् ब. फ. 12. अणोऽपवादः इत्यधिकम् फ. 13. उच्यते इत्यधिकम् ब. फ. 14. वयसि इति किम् ? भारहारः इत्यधिकम् क. फ. 15. धातोः इत्यधिकम् क. 16. फलनिरपेक्षा ब. क. फ. 17. हारमाहरति इति हाराहारः फ. 18. पूजार्हो ब्राह्मणः इत्यधिकम् क. 19. स्त्रियां विशेषः ब. क. 20. पूजार्हा ब्राह्मणी अ. ब. ग. फ. 21. गन्धार्हा मालार्हा नास्ति फ. 22. माल्यार्हा ड. 23. अच् नास्ति ब. 24. स्तम्बे रमते इति नास्ति फ. 25. कर्णे जपति नास्ति फ. 26. खलः क.फ. 27. मशकः नास्ति क. ड.

## शमि धातोः सञ्ज्ञायाम् । (१४/२९२८)

शम्युपपदे [1]धातुमात्रात् सञ्ज्ञायां विषये अच्प्रत्ययो भवति । शङ्करः । शंभवः । [2]शंवदः । धातुग्रहणं किं यावता धातोः इति वर्तत एव ? शमिसञ्ज्ञायामिति[3] सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् (म. भा. २.१००) । शङ्करा [4]नाम परिव्राजिका । शङ्करा नाम शकुनिका । तच्छीला च ॥

## अधिकरणे शेतेः । (१५/२९२९)

सुपि इति [5]सम्बध्यते । शेतेर्धातोरधिकरणे सुबन्त उपपदे अच् प्रत्ययो भवति । खे शेते खशयः । [6]गर्तशयः ।

[२३८] पार्श्वादिषूपसङ्ख्यानम् । (म.भा.२.१००)

[7]पार्श्वाभ्यां शेते पार्श्वशयः । [8]उदरशयः । [9]पृष्ठशयः ।

[२३९] दिग्धसहपूर्वाच्च । (म. भा. २.१००)

दिग्धेन सह शेते दिग्धसहशयः[10] ।

[२४०] उत्तानादिषु कर्तृषु । (म. भा. २.१००)

उत्तानः शेते उत्तानशयः । अवमूर्धा शेते अवमूर्धशयः ।

[२४१] गिरौ डश्छन्दसि । (म. भा. २. १००)

गिरौ शेते गिरिशः[11] (मै. २.९.२) ॥

## चरेष्टः । (१६/२९३०)

अधिकरणे इति वर्तते । चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति । [12]कुरुषु चरति[13] कुरुचरः । मद्रचरः । कुरुचरी । [14]मद्रचरी । प्रत्ययान्तरकरणं ङीबर्थम् ॥

## भिक्षासेनादायेषु च । (१७/२९३१)

अनधिकरणार्थः आरम्भः । भिक्षा सेना आदाय इत्येतेषु उपपदेषु [15]चरेः धातोः टप्रत्ययो भवति । भिक्षाचरः । सेनाचरः । [16]आदायचरः ॥

---

1. धातोः फ. 2. शम्बः फ, नास्ति अ. 3. इति नास्ति ब. फ. 4. नाम नास्ति ब. 5. वर्तते अ. फ, नास्ति ब. 6. गर्तशयः नास्ति अ. 7. पार्श्व उदर पृष्ठ उत्तान अपमूर्धन् इति पार्श्वादिः इत्यधिकम् ड. 8. उरःशयः फ. 9. पृष्ठशयः नास्ति अ. 10. लिप्तांगः एव शेते इत्यर्थः फ.ह. 11. छन्दसि इति किम् ? गिरिशयः इत्यधिकम् क. 12. कुरुषु चरति नास्ति फ. 13. इति -इत्यधिकम् ब. 14. मद्रचरी नास्ति फ. 15. चरतेः ब. क. फ. 16. आदाय चरति इति इत्यधिकम् ड.

## पुरोऽग्रतोऽग्रेषु सर्तेः । (१८/२९३२)

पुरस् अग्रतस् अग्रे इत्येतेषु उपपदेषु सर्तेः धातोः टप्रत्ययो भवति । पुरः सरति[1] पुरःसरः । अग्रतःसरः । अग्रेसरः[2] ॥

## पूर्वे कर्तरि । (१९/२९३३)

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेर्धातोः टप्रत्ययः भवति । पूर्वः सरति इति पूर्वसरः[3] । कर्तरि इति किम् ? पूर्वं देशं सरति इति पूर्वसारः ॥

## कृञो हेतुताच्छील्यानुलोम्येषु । (२०/२९३४)

[4]कर्मणि उपपदे करोतेः धातोः टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च [5]गम्यमाने । [6]हेतुः ऐकान्तिकं कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यम् अनुकूलता । हेतौ तावत् – शोककरी [7]कन्या । यशस्करी विद्या । कुलकरं [8]धनम् । ताच्छील्ये – [9]श्राद्धकरः । [10]अर्थकरः[11] । आनुलोम्ये – प्रैषकरः । [12]वचनकरः । एतेषु इति किम् ? कुम्भकारः । [13]नगरकारः ॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । (२१/२९३५)

कर्मणि सुपि इति च द्वयमप्यनुवर्तते । [14]तत्र यथायोगं सम्बन्धः । दिवादिषु उपपदेषु करोतेर्धातोः टप्रत्ययो भवति । अहेत्वाद्यर्थ आरम्भः । दिवाशब्दो अधिकरण[15]वचनः सुपि इत्यस्य विशेषणम् । दिवा करोति प्राणिनश्चेष्टायुक्तान् इति दिवाकरः । विभां करोति इति विभाकरः । [16]निशाकरः । प्रभाकरः । भास्करः । सकारस्य निपातनाद् विसर्जनीयजिह्वामूलीयौ न भवतः । कारकरः । अन्तकरः । अनन्तकरः । आदिकरः । बहुकरः । नान्दीकरः । किङ्करः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । सङ्ख्या – एककरः, द्विकरः, त्रिकरः । जङ्घाकरः । बाहुकरः । [17]अहस्करः । यत्करः । तत्करः । धनुष्करः । अरुष्करः ।

[२४२] किंयत्तद्बहुषु कृञोऽज्विधानम् । (म. भा. २. १०१)

किङ्करा । यत्करा । तत्करा । बहुकरा । अथवा अजादिषु पाठः करिष्यते ॥

---

1. इति इत्यधिकम् ब. 2. अग्रसरः इत्यधिकम् फ. ह. 3. पूर्वसरी इत्यधिकम् ह. 4. कर्मणि इति वर्तते इत्यधिकम् अ. क. ड. फ. 5. गम्यमाने नास्ति अ. 6. हेतुः – स्वभावता नास्ति अ. 7. कन्था ग. 8. धनम् नास्ति अ. ड. 9. श्रद्धाकरः ग. 10. अर्धकरः ड, नास्ति फ. 11. ज्ञानकरः इत्यधिकम् ग. 12. वचनकरः नास्ति फ. 13. नगरकारः नास्ति फ, रथकारः क. ड. 14. तथा अ. क. ड. 15. °वाच्यः क. 16. निशां करोति इति इत्यधिकम् फ. 17. अहस्करः नास्ति ब.

## कर्मणि भृतौ । (२२/२९३६)

कर्मणि इति स्वरूपग्रहणम् । कर्मशब्दे उपपदे कर्मवाचिनि करोतेः[1] टप्रत्ययो भवति भृतौ गम्यमानायाम् । भृतिः वेतनं, कर्मनिर्वेशः । कर्म करोति इति कर्मकरः । [2]भृतकः [3]इत्यर्थः । भृतौ इति किम् ? कर्मकारः ।।

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । (२३/२९३७)

[4]शब्दादिषूपपदेषु[5] करोतेः टप्रत्ययो न भवति । हेत्वादिषु [6]प्राप्तः प्रतिषिध्यते । शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । [7]वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ।।

## स्तम्बशकृतोरिन् । (२४/२९३८)

स्तम्ब शकृत् इत्येतयोः कर्मणोरुपपदयोः [8]इन्प्रत्ययो भवति[9] ।

[२४३] व्रीहिवत्सयोरिति वक्तव्यम् । (म. भा. २.१०१)

[10]स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः इति किम् ? स्तम्बकारः । शकृत्कारः ।।

## हरतेर्दृतिनाथयोः पशौ । (२५/२९३९)

दृति नाथ इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्तरि इन् प्रत्ययो भवति[11] । दृतिं हरति दृतिहरिः पशुः । [12]नाथहरिः पशुः । पशौ इति किम् ? दृतिहारः । नाथहारः ।।

## फलेग्रहिरात्मम्भरिश्च । (२६/२९४०)

फलेग्रहिः आतमम्भरिः इत्येतौ शब्दौ निपात्येते । फलशब्दस्य [13]उपपदस्य एकारान्तत्वम् इन्प्रत्ययश्च ग्रहेर्निपात्यते । फलानि गृह्णाति इति फलेग्रहिर्वृक्षः । [14]आत्मशब्दस्य उपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते। आत्मानं बिभर्ति आत्मम्भरिः । अनुक्तसमुच्चयार्थश्चकारः । कुक्षिम्भरिः । [15]उदरम्भरिः ।।

## छन्दसि वनसनरक्षिमथाम् । (२७/३४०८)

'वन षण सम्भक्तौ' (धा.पा.४६३, ४६४), 'रक्ष पालने' (धा. पा. ६५८), 'मन्थ विलोडने' (धा. पा. ४२), एतेभ्यः[16] कर्मण्युपपदे [17]छन्दसि विषये इन्प्रत्ययो भवति । '[18]ब्रह्मवनिं त्वा क्षत्रवनिम् सुप्रजावनिं रायस्पोषवनिं पर्यूहामि' (तै. १.३.१.२) । 'गोसनिं वाचमुदेयम्' (अ. वे. ३.२०.१०) । 'यौ पथिरक्षी श्वानौ' (अ. वे. ८.१.९) । 'हविर्मथीनामभ्या ३ विवासताम्' (ऋ. ७.१०४.२०) ।।

---

1. धातोः इत्यधिकम् ब. क. 2. भृतकः – कर्मकारः नास्ति फ. 3. इत्यर्थः नास्ति क. 4. शब्द-श्लोक कलह गाथा वैर चाटु सूत्र मन्त्र पद इत्येतेषु क.फ.ह. 5. कर्मणि इत्यधिकम् फ. 6. प्राप्ते क. 7. वैर-कारः नास्ति फ. 8. करोतेः इत्यधिकम् क, करोतेः धातोः इत्यधिकम् ड. 9. नकारः स्वरार्थः इत्यधिकम् क. 10. स्तम्बकारिः ब. 11. नकारः स्वरार्थः इत्यधिकम् क. 12. उदाहरणमिदं नास्ति ब. फ. 13. एकारान्त-त्वमुपपदस्य अ. क. 14. आत्म नास्ति फ. 15. उदरंभरिः नास्ति अ. क. फ. 16. धातुभ्यः इत्यधिकम् क.फ. 17. छन्दसि नास्ति फ. 18. ब्रह्मवनि त्वा क्षत्रवनि त्वा तत्रवनि त्वा क. ड.

## एजेः खश्। (२८/२९४१)

'एजृ कम्पने' (धा.पा. २३४) इत्यस्मात् ण्यन्तात् कर्मण्युपपदे खश् प्रत्ययो भवति। खकारो मुमर्थः। शकारः [1]सार्वधातुकसञ्ज्ञार्थः। अङ्गमेजयति[2] अङ्गमेजयः। जनमेजयः।

[२४४] खश्[3]प्रत्यये वातशुनीतिलशर्धेष्वजधेट्तुद[4]जहातीनामुपसङ्ख्यानम्। (म.भा. २.१०२)

वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा[5] [6]माषाः॥

## नासिकास्तनयोर्ध्माधेटोः। (२९/२९४४)

नासिकास्तनयोः कर्मणोरुपपदयोः ध्माधेटोर्धात्वोः खश् प्रत्ययो भवति। यथासङ्ख्यमत्र नेष्यते।

[२४५] स्तने धेटः। (म.भा. २.१०२)

[7]स्तनन्धयः।

[२४६] नासिकायां तु ध्मश्च धेटश्च। (म.भा. २.१०२)

नासिकन्धमः, नासिकन्धयः।

तच्चैतन्नासिकस्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते। धेटः टित्वात् स्त्रियां [8]ङीप् प्रत्ययो भवति। स्तनन्धयी[9]॥

## नाडीमुष्ट्योश्च। (३०/२९४५)

नाडी मुष्टि इत्येतयोः कर्मणोरुपपदयोः ध्माधेटोः[10] खश्प्रत्ययो भवति। अत्रापि [11]घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नम्। तेन सङ्ख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः। घटिन्धमः। घटिन्धयः। खारिन्धमः। खारिन्धयः (म.भा. २.१०२)। वातन्धमः [12]पर्वतः। वातन्धयः॥

## उदि कूले रुजिवहोः। (३१/२९४६)

'रुजो भङ्गे' (धा.पा. १४१७), 'वह प्रापणे' (धा.पा. १००५) इत्येताभ्यामुत्पूर्वाभ्यां[13] कूले कर्मणि उपपदे खश् प्रत्ययो भवति। कूलम् उद्रुजति इति कूलमुद्रुजो [14]रथः। [15]कूलमुद्वहः॥

## वहाभ्रे लिहः। (३२/२९४७)

वह अभ्र इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खश् प्रत्ययो भवति। [16]वहं लेढि इति वहंलिहो गौः। अभ्रंलिहो वायुः॥

---

1. सार्वधातुकार्थः फ. 2. इति इत्यधिकम् फ. 3. °प्रकरणे ब.क.ड.फ.न्या. 4. °जहातिभ्यः क. 5. गन्धहरा, गन्धवहाः इत्यधिकम् फ. 6. मृगाः अ.क.फ. 7. स्तनंधयाः ब. 8. ङीप् नास्ति क. 9. इति इत्यधिकम् फ. 10. धात्वोः इत्यधिकम् क.फ. 11. घ्यन्तस्य अपूर्वनिपातनात् चिह्नात् अ.क.फ. 12. पर्वतः नास्ति ब. 13. धातुभ्याम् इत्यधिकम् फ. 14. गजः अ.क., नास्ति ग.फ. 15. कूलमुद्वहति इति कूलमुद्वहा नदी फ. 16. वहं स्कन्धः इत्यधिकम् ड.

## परिमाणे पचः । (३३/२९४८)

परिमाणं प्रस्थादि, तस्मिन् कर्मण्युपपदे पचेः खश् प्रत्ययो भवति । प्रस्थं पचति प्रस्थंपचा [1]स्थाली । [2]द्रोणंपचः । खारिंपचः कटाहः ॥

## मितनखे च । (३४/२९४९)

मित नख इत्येतयोः कर्मणोरुपपदयोः पचेः[3] खश् प्रत्ययो भवति । [4]अपरिमाणार्थः आरम्भः । मितं पचति[5] मितम्पचा ब्राह्मणी[6] । नखंपचा यवागूः ॥

## विध्वरुषोस्तुदः । (३५/२९५०)

विधु अरुस् इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश् प्रत्ययो भवति । विधुन्तुदः [7]राहुः । अरुन्तुदः ॥

## असूर्यललाटयोर्दृशितपोः । (३६/२९५१)

असूर्य ललाट इत्येतयोः कर्मणोरुपपदयोः[8] दृशितपोः धात्वोः खश् प्रत्ययो भवति । असूर्यंपश्या राजदाराः। ललाटंतपः आदित्यः । [9]असूर्य इति चासमर्थसमासोऽयं, दृशिना नञः सम्बन्धात्, सूर्यं न पश्यन्ति इति । गुप्तिपरं चैतत् । एवं नाम गुप्ता यदपरिहार्यदर्शनं [10]सूर्यमपि न पश्यन्ति इति ॥

## उग्रम्पश्येरम्मदपाणिन्धमाश्च । (३७/२९५२)

उग्रम्पश्य इरम्मद पाणिन्धम इत्येते शब्दा निपात्यन्ते । उग्रं [11]पश्यति इति उग्रम्पश्यः । इरया[12] माद्यति इति इरम्मदः[13] । पाणयो ध्मायन्ते एषु इति पाणिन्धमाः पन्थानः[14] ॥

## प्रियवशे वदः खच् । (३८/२९५३)

प्रिय वश इत्येतयोः कर्मणोः उपपदयोः वदेः धातोः खच् प्रत्ययो भवति । प्रियं वदति इति प्रियंवदः । वशंवदः । चकारः 'खचि ह्रस्वः' (६.४.९४/२९५५) इति विशेषणार्थः । [15]खकारो मुमर्थः । प्रत्ययान्तर-करणमुत्तरार्थम् ।

---

1. स्थाली नास्ति फ. 2. द्रोणंपचा स्थाली ब. फ. 3. धातोः इत्यधिकम् क. फ. 4. अपरिमाणार्थो अयम् फ. 5. इति इत्यधिकम् फ. 6. निःस्वा इत्यधिकम् ग. 7. राहुः नास्ति ब. क. फ. 8. यथासंख्यम् इत्यधिकम् अ. ब. क. 9. असूर्यम् फ. 10. अपि इत्यधिकम् ब. 11. पश्यन्ति फ. 12. उदकेन इत्यधिकम् अ. 13. मेघज्योतिः इत्यधिकम् फ. 14. चकारात् करन्धयः शुनिंधमः इत्यधिकम् ग. 15. खकारो मुमर्थः नास्ति फ.

[२४७] खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम् । (म. भा. २.१०२)

मितङ्गमो हस्ती । मितङ्गमा [1]हस्तिनी ।

[२४८] विहायसो विह च । (म.भा. २.१०२)

विहायसा गच्छति विहङ्गमः ।

[२४९] खच्च डिद्वा[2] वक्तव्यः । (म. भा. २. १०३)

विहङ्गः, [3]विहङ्गमः ।

[२५०] डे च विहायसो विहादेशो वक्तव्यः । (म. भा. २. १०३)

विहगः ॥

## द्विषत्परयोस्तापेः । (३९/२९७४)

द्विषत्परयोः[4] कर्मणोरुपपदयोः तापेः धातोः खच् प्रत्ययो भवति । 'तप दाहे' (धा. पा. १८१९) चुरादिः, 'तप सन्तापे' (धा. पा. ९८६) [5]भ्वादिः, द्वयोरपि ग्रहणम् । द्विषन्तं तापयति द्विषन्तपः । परन्तपः । द्विषत्परयोः इति [6]द्वितकारको निर्देशः । तेन स्त्रियां न भवति । द्विषतीं तापयति द्विषतीतापः[7] ॥

## वाचि यमो व्रते । (४०/२९७६)

वाक्शब्दे [8]कर्मणि उपपदे यमेः धातोः खच् प्रत्ययो भवति व्रते गम्यमाने । [9]व्रत इति शास्त्रितो नियमः उच्यते । वाचंयमः आस्ते । व्रते इति किम् ? वाग्यामः ॥

## पूःसर्वयोर्दारिसहोः । (४१/२९७८)

पुर् सर्व इत्येतयोः कर्मणोः उपपदयोः यथासङ्ख्यं दारिसहोः धात्वोः खच् प्रत्ययो भवति । पुरं दारयति पुरन्दरः । सर्वंसहो [10]राजा ।

[२५१] भगे च दारेरिति वक्तव्यम् ।

[11]भगन्दरः ॥

## सर्वकूलाभ्रकरीषेषु कषः । (४२/२९७९)

सर्व कूल अभ्र करीष इत्येतेषु कर्मसूपपदेषु कषेः धातोः खच् प्रत्ययो भवति । [12]सर्वं कषति सर्वंकषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो [13]गिरिः । करीषङ्कषा वात्या ॥

---

1. हस्तिनी नास्ति फ. 2. वा नास्ति ड. 3. विहंगमः नास्ति ड. फ. 4. इत्येतयोः इत्यधिकम् फ द्विषत् पर इत्येतयोः क. 5. भूवादिः क. 6. द्वितकारो निर्देशः फ. 7. कर्मणि अणेव भवति इत्यधिकम् क 8. कर्मवाचिनि अ. फ. 9. व्रतम् इति ड. फ. 10. राजा नास्ति क. ड. 11. भगं दारयति इत्यधिकम् फ 12. सर्वं कषति नास्ति अ. फ. 13. वायुः क.

## मेघर्तिभयेषु कृञः । (४३/२९६०)

मेघ ऋति भय इत्येतेषु कर्मसूपपदेषु [1]कृञः खच् प्रत्ययो भवति । मेघङ्करः[2] । ऋतिङ्करः । भयङ्करः। उपपदविधौ [3]भयादिग्रहणं तदन्तविधिं प्रयोजयति । अभयङ्करः ॥

## क्षेमप्रियमद्रेऽण् च । (४४/२९६१)

क्षेम प्रिय मद्र इत्येतेषु कर्मसूपपदेषु करोतेः[4] अण् प्रत्ययो भवति, चकारात् खच् च । क्षेमकारः, क्षेमङ्करः। प्रियकारः, प्रियङ्करः । मद्रकारः, मद्रङ्करः । वा इति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु [5]टप्रतिषेधार्थम् ॥

## आशिते भुवः करणभावयोः । (४५/२९६२)

अत्र सुपि इत्युपतिष्ठते । आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति । आशितो भवति अनेन आशितम्भव ओदनः । भावे – आशितस्य भवनम् [6]आशितम्भवं वर्तते[7] ॥

## सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः । (४६/२९६३)

[8]कर्मणि इति सुपि इति च प्रकृतं सञ्ज्ञावशाद् यथासम्भवं सम्बध्यते । भृ तॄ वृ जि धारि सहि तपि दम इत्येतेभ्यो [9]धातुभ्यः सञ्ज्ञायां विषये खच् प्रत्ययो भवति । [10]विश्वम्भरा वसुन्धरा । रथन्तरं [11]साम । पतिंवरा कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुंतपः । [12]अरिंदमः । सञ्ज्ञायाम् इति किम् ? [13]कुटुम्बं बिभर्ति इति कुटुम्बभारः[14] ॥

## गमश्च । (४७/२९६४)

[15]गमेः धातोः [16]सुपि उपपदे सञ्ज्ञायां विषये खच् प्रत्ययो भवति। सुतङ्गमो नाम, [17]यस्य पुत्रः सौतङ्गमिः । योगविभागः उत्तरार्थः ॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । (४८/२९६५)

सञ्ज्ञायाम् इति नानुवर्तते । [18]अन्त अत्यन्त अध्वन् दूर पार सर्व अनन्त इत्येतेषु कर्मसूपपदेषु [19]गमेः डप्रत्ययो भवति । [20]अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । अनन्तगः । डकारः टिलोपार्थः, डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् [21]इति ॥

---

1. करोतेः धातोः अ. क. फ. 2. वायुः इत्यधिकम् अ. 3. भयार्थादिवार्तिकग्रहणं फ. 4. धातोः इत्यधिकम् अ. क. फ. 5. टप्रत्ययप्रतिषेधार्थम् अ. फ. 6. आशितंभवो वर्तते क. फ. ह. 7. भावे इदमुदाहरणम् इत्यधिकम् ह. 8. कर्मणि इति सुपीति कृतं ह. फ, कर्मणि सुपीति च कृते क. 9. धातुभ्यः नास्ति फ. 10. विश्वं बिभर्ति इति इत्यधिकम् फ, वसुन्धरा नास्ति ह. 11. गायत्री क. 12. गायत्री क. 13. अरिंदमः नास्ति अ. 14. कुद्दालं बिभर्ति इति कुद्दालभारः क. ड. 15. गमेश्च ह. 16. सुबन्ते उपपदे फ. 17. यस्य सौतंगमिः पुत्रः क. न्या. 18. अन्तादिषु ह. 19. गमेर्धातोः ग.ह. 20. अन्तं गच्छति इत्यधिकम् अ.फ. 21. टेरिति फ.ह.

[२५२] डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम्[1] । (म. भा. २.१०३)

सर्वत्रगः । [2]पन्नगः ।

[२५३] उरसो लोपश्च । (म. भा. २.१०३)

उरसा गच्छति इति उरगः ।

[२५४] सुदुरोरधिकरणे । (म. भा. २.१०३)

सुखेन गच्छत्यस्मिन् इति सुगः । दुर्गः ।

[२५५] [3]निरो देशे ।

निर्गो देशः । अपर आह–

[२५६] डप्रकरणे[4]ऽन्येष्वपि दृश्यते इति[5] । (म. भा. २.१०३)

स्त्र्यगारगः । ग्रामगः । गुरुतल्पगः ॥

## आशिषि हनः । (४९/२९६६)

ड इति वर्तते । आशिषि गम्यमानायां हन्तेर्धातोः [6]कर्मण्युपपदे डप्रत्ययो भवति । तिमिं वध्यात् तिमिहः । [7]शत्रुहः । [8]आशिषि इति किम् ? शत्रुघातः ।

[२५७] दारावाहनोऽणन्तस्य च टः सञ्ज्ञायाम् । (म. भा. २.१०३)

[9]दारावुपपदे आङ्पूर्वाद् हन्तेः[10] अण् प्रत्ययो भवति, अन्तस्य च ट[11]कारादेशो भवति, सञ्ज्ञायां विषये । [12]दारु आहन्ति दार्वाघाटः ।

[२५८] चारौ वा[13] । (म. भा. २.१०३)

आङ्पूर्वात् हन्तेश्चारावुपपदे अण्, [14]अन्तस्य वा टकारादेशः । चार्वाघाटः, चार्वाघातः ।

[२५९] कर्मणि समि च । (म. भा. २.१०३)

कर्मण्युपपदे [15]सम्पूर्वात् हन्तेः धातोः [16]अण् प्रत्ययो भवति, अन्तस्य च वा टकारादेशः । वर्णान् [17]संहन्ति [18]वर्णसङ्घाटः, वर्णसङ्घातः । [19]पदानि संहन्ति पदसङ्घाटः, पदसङ्घातः ॥

---

1. वक्तव्यम् इत्यधिकम् फ. 2. पन्नं गच्छति इत्यधिकम् अ, पन्नः गच्छति इत्यधिकम् ह. 3. निसो देशे अ. ह. ड. भाष्ये. अष्टाध्यायीसूत्रपाठे (मद्रास) 4. अन्यत्र फ. पमं, अत्रापि क. 5. वक्तव्यम् इत्यधिकम् फ. 6. डप्रत्ययो भवति कर्मण्युपपदे फ. 7. शत्रुं वध्यात् इति इत्यधिकम् फ. 8. आशिषि–किम् नास्ति ड.ह. 9. दारा उपपदे ह. 10. धातोः इत्यधिकम् ह. 11. टकार आदेशः ह. 12. दार्वा आहन्ति ह. 13. तस्य च टकारः इत्यधिकम् ड. 14. अन्तस्य नास्ति ह. 15. सम्पूर्वस्य ह. 16. अण्प्रत्ययो नास्ति ह. 17. संहरन्ति इति ह. 18. वर्णसंघाटः नास्ति ह. 19. उदाहरणमिदं नास्ति ह.

## अपे क्लेशतमसोः । (५०/२९६७)

अपपूर्वात् हन्तेः [1]धातोः क्लेशतमसोः कर्मणोरुपपदयोः डप्रत्ययो भवति । क्लेशापहः पुत्रः । तमोपहः सूर्यः । अनाशीरर्थ आरम्भः ॥

## कुमारशीर्षयोर्णिनिः । (५१/२९६८)

[2]हन इति वर्तते । [3]कुमार शीर्ष इत्येतयोः उपपदयोः हन्तेः[4] णिनिः प्रत्ययो भवति । कुमारघाती । शीर्षघाती । निपातनाच् छिरसः शीर्षभावः ॥

## लक्षणे जायापत्योष्टक् । (५२/२९६९)

हन्तेः[5] जायापत्योः कर्मणोः उपपदयोः लक्षणवति कर्तरि टक् प्रत्ययो भवति । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली । [6]अथ वा लक्षणे द्योत्ये टक् प्रत्ययः[7] ॥

## अमनुष्यकर्तृके च । (५३/२९७०)

अमनुष्यकर्तृके[8] वर्तमानाद् हन्तेः धातोः कर्मणि उपपदे टक् प्रत्ययो भवति । [9]जायाघ्नस्तिलकालकः । पतिघ्नी [10]पाणिरेखा । श्लेष्मघ्नं मधु । पित्तघ्नं घृतम्[11] । [12]अमनुष्यकर्तृके इति किम् ? आखुघातः शूद्रः । इह कस्मान् न भवति, चौरघातो हस्ती ? 'कृत्यल्युटो बहुलम्' (३. ३. ११३/२८४१) इति [13]बहुलवचनाद् अण् [14]भवति ॥

## शक्तौ हस्ति[15]कपाटयोः । (५४/२९७१)

शक्तौ गम्यमानायां हस्ति[16]कपाटयोः कर्मणोरुपपदयोः हन्तेः[17] टक् प्रत्ययो भवति । मनुष्यकर्तृकार्थ आरम्भः । हस्तिनं हन्तुं [18]शक्तः हस्तिघ्नः मनुष्यः । [19]कं पाटयति प्रविशत इति कपाटघ्नश्चौरः । शक्तौ इति किम्? विषेण हस्तिनं हन्ति हस्तिघातः ॥

## पाणिघताडघौ शिल्पिनि । (५५/२९७२)

पाणिघ ताडघ इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि[20] । पाणि ताड इत्येतयोः कर्मणोः उपपदयोः

---

1. धातोः नास्ति ब. ग. ह. 2. वाक्यमिदं नास्ति ब. फ. 3. कुमारशीर्षयोः कर्मणोः क. ब. फ. ह. 4. धातोः इत्यधिकम् ब. फ. ह, णिनिप्रत्ययो ह. 5. धातोः इत्यधिकम् अ. क. ह, कर्तरि हन्तेः धातोः फ. 6. अथवा – प्रत्ययः नास्ति ह. 7. भवति इत्यधिकम् क. 8. धात्वर्थे इत्यधिकम् क. ड. फ. ह. 9. उदाहरणमिदं नास्ति फ. 10. रेषा क, पाणिलेखा ड. 11. वातघ्नं तैलम् इत्यधिकम् अ. ब. क. ड. फ. ह. 12. अमनुष्येव फ. 13. बहुल नास्ति ह. 14. भविष्यति ब. ड. फ. 15–16. कवाटयोः ह. ब. क. 17. धातोः इत्यधिकम् ह. 18. समर्थः फ. ह. 19. कं . . . इति नास्ति अ. ब. क. ड. 20. वाच्ये इत्यधिकम् अ. क.

हन्तेः [1]धातोः टक् प्रत्ययो [2]भवति, तस्मिंश्च परतो [3]हन्तेः [4]टिलोपो घत्वं च [5]निपात्यते । [6]पाणिघः । ताडघः । शिल्पिनि इति किम् ? [7]पाणिघातः । ताडघातः ।

[२६०] [8]राजघ उपसङ्ख्यानम् । (म. भा. २. १०४)
राजानं हन्ति राजघः ॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । (५६/२०७३)

आढ्यादिषु कर्मसूपपदेषु च्व्यर्थेषु अच्व्यन्तेषु करोतेः धातोः [9]करणे कारके ख्युन् प्रत्ययो भवति । च्वेर्विकल्पेन विधानाद् द्विविधाः च्व्यर्थाः, [10]च्व्यन्ता अच्व्यन्ताश्च । [11]तत्र च्व्यन्ताः पर्युदस्यन्ते । अनाढ्यं आढ्यं [12]कुर्वन्ति अनेन आढ्यङ्करणम् । सुभगङ्करणम्[13] । स्थूलङ्करणम् । पलितङ्करणम् । नग्नङ्करणम् । अन्धङ्करणम् । प्रियङ्करणम् । च्व्यर्थेषु इति किम् ? आढ्यं [14]तैलेन कुर्वन्ति अभ्यञ्जयन्ति इत्यर्थः । प्रकृतेरविवक्षायामभूत-[15]प्रादुर्भावेऽपि प्रत्युदाहरणं भवति । अच्वौ इति किम् ? आढ्यीकुर्वन्त्यनेन ।

ननु च ख्युना मुक्ते[16] ल्युटा भवितव्यम्, न च [17]ल्युटः ख्युनश्च विशेषोऽस्ति, (म. भा. २. १०५) तत्र किं प्रतिषेधेन ? एवं तर्हि प्रतिषेधसामर्थ्यात् ख्युनि असति ल्युडपि न भवति, [18]तेन ल्युटोऽप्ययमर्थतः प्रतिषेधः । [19]उत्तरार्थश्च च्विप्रतिषेधः क्रियते ॥

## कर्तरि भुवः खिष्णुच्खुकञौ । (५७/२०७४)

आढ्यादिषु [20]सुबन्तेषु उपपदेषु च्व्यर्थेषु अच्व्यन्तेषु भवतेर्धातोः कर्तरि कारके [21]खिष्णुच्, खुकञ् इत्येतौ प्रत्ययौ भवतः । अनाढ्य आढ्यो भवति आढ्यंभविष्णुः, आढ्यंभावुकः । सुभगंभविष्णुः, सुभगंभावुकः । स्थूलंभविष्णुः, स्थूलंभावुकः । पलितंभविष्णुः, [22]पलितंभावुकः । नग्नंभविष्णुः, नग्नंभावुकः । अन्धंभविष्णुः, अन्धंभावुकः । प्रियंभविष्णुः, प्रियंभावुकः । कर्तरि इति किम् ? करणे मा भूत् । च्व्यर्थेषु इत्येव, आढ्यो भविता । अच्वौ इत्येव, आढ्यीभविता ।

[23]उदात्तत्वाद् भुवः सिद्धमिकारादित्वमिष्णुचः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ॥ (म.भा.२.१०६)

## स्पृशोऽनुदके क्विन । (५८/४३२)

स्पृशेर्धातोरनुदके सुबन्त उपपदे क्विन् प्रत्ययो भवति । ननु सकर्मकत्वात् स्पृशेः [24]कर्मैवोपपदं प्राप्नोति? नैष दोषः । कर्तरि इति पूर्वसूत्रादनुवर्तते, तत् कर्तृप्रचयार्थं [25]विज्ञायते । सुबन्तमात्रे [26]चोपपदे कर्तृप्रचयो लभ्यते घृतं स्पृशति[27] घृतस्पृक् । [28]मन्त्रेण स्पृशति मन्त्रस्पृक् । [29]जलेन स्पृशति जलस्पृक् । अनुदके इति किम् ? उदकस्पर्शः । नकारः 'क्विन्प्रत्ययस्य कुः' (८.२.६२/३७७) इति विशेषणार्थः ॥

---

1. धातोः नास्ति ह. 3. भवति नास्ति क. ड. 3. हन्तेः नास्ति क. फ, परतो हन्तेः नास्ति ह. 4. टिलोपघत्वे ह. 5. निपात्यते नास्ति ह. 6. पाणिघातः ताडघातः ह. 7. पाणिघातः नास्ति ह. 8. राजक ह. 9. करणे कारके नास्ति ब, करणकारके ह. 10. आढ्यादयः इत्यधिकम् क. ड, च्व्यन्ता नास्ति फ. 11. तत्र नास्ति फ. 12. करोति अ. 13. औषधम् इत्यधिकम् अ. ग. 14. तैलेन नास्ति फ. 15. प्रादुर् नास्ति अ. क. 16. पक्षे इत्यधिकम् अ. ड, करणाधिकरणयोश्च ल्युटः इति पक्षे इत्यधिकम् क. 17. ल्युट् ह. 18. तेन नास्ति फ. 19. उत्तरार्थं च क. 20. सुबन्तेषु च्व्यर्थेषु अच्व्यर्थेषु उपपदेषु ह. 21. खिष्णुच्खुकञौ प्रत्ययौ ब. ह. 22. पलितंभावुकः नास्ति ह. 23. इष्णुच इकारादित्वमुदात्तत्वात् (म. भा. 2. 106). 24. कर्मण उपपदत्वम ब. क. 25. विज्ञास्यते ब. क. 26. च नास्ति ब. 27. इति इत्यधिकम् ह. 28. मन्त्रेण स्पृशति नास्ति ब. फ. ह. 29. जले स्पृशति क, दशेन स्पृशति दशस्पृक् ग, हलस्पृक् ह.

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । (५९/३७३)

[1]ऋत्विगादयः पञ्चशब्दाः क्विन्प्रत्ययान्ताः निपात्यन्ते, [2]अपरे त्रयो धातवो निर्दिश्यन्ते । ऋतुशब्द उपपदे यजेर्धातोः क्विन् प्रत्ययो [3]निपात्यते । ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति[4] ऋत्विक् । रूढिरेषा यथाकथंचिद[5]नुगन्तव्या । धृषेः [6]क्विन् प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च [7]निपात्यते । [8]धृष्णोति इति दधृक् । [9]सृजेः कर्मणि क्विन्, अमागमः च [10]निपात्यते । [11]सृजन्ति ताम् इति स्रक् । दिशेः कर्मणि [12]क्विन् निपात्यते । [13]दिशन्ति ताम् इति दिक् । [14]उत्पूर्वात् स्निहेः [15]क्विन्, उपसर्गान्तलोपः, षत्वं च निपात्यते । उष्णिक् । अञ्चु युजि क्रुञ्च इत्येतेषां [16]धातूनां क्विन् प्रत्ययो भवति । निपातनैः सह निर्देशात् अत्रापि किंचिदलाक्षणिकं[17]कार्यमस्ति । अञ्चतेः सुबन्तमात्र [18]उपपदे [19]क्विन् प्रत्ययो [20]भवति । प्राङ् । प्रत्यङ् । [21]उदङ् । युजेः क्रुञ्चेश्च केवला-देव[22] । युङ्, युञ्जौ, युञ्जः । सोपपदात् तु 'सत्सूद्विष°' (३.२.६१/२९७५) इत्यादिना [23]क्विप् भवति । अश्वयुक्, [24]अश्वयुजौ, अश्वयुजः । क्रुङ्, क्रुञ्चौ, क्रुञ्चः । [25]नलोपः कस्मान् न भवति ? [26]निपातनसाह-चर्यात् ॥

## त्यदादिषु दृशोऽनालोचने कञ् च । (६०/४२०)

[27]त्यदादिषु उपपदेषु दृशेर्धातोरनालोचने[28]ऽर्थे वर्तमानात् कञ् प्रत्ययो भवति, चकारात् क्विन् च । त्या-दृशः,[29]त्यादृक् । तादृशः, तादृक् । यादृशः, यादृक्[30] । [31]कञो ञकारो विशेषणार्थः, [32]ठक् ठञ् कञ् (४.१.१५/४७०) इति । अनालोचने इति किम् ? तं पश्यति [33]तद्दर्शः । [34]तादृगादयो हि रूढिशब्दप्रकाराः, नैवात्र दर्शन-क्रिया विद्यते ।

[२६१] [35]समानान्ययोश्चेति वक्तव्यम् । (म. भा. २.१०७)

सदृशः, सदृक् । अन्यादृशः, अन्यादृक् ।

[२६२] [36]दृशेः क्सश्च वक्तव्यः । (म. भा. २.१०७)

तादृक्षः । यादृक्षः । [37]अन्यादृक्षः । [38]कीदृक्षः[39] ॥

---

1. ऋत्विगाद्याः ब. 2. परे तु ड. 3. भवति अ. ब. क. 4. इति इत्यधिकम् अ. 5. अवगन्तव्या ग. 6. क्विन् नास्ति फ, क्विन्निर्वचनमन्तोदात्तत्वम् ह. 7. निपात्यते नास्ति अ. 8 धृष्णोति इति नास्ति ब. ह, इति नास्ति फ. 9. सृजेः नास्ति ब. 10. निपात्यते नास्ति फ. 11. सृजति फ. 12. क्विन्प्रत्ययः ब. क. ह. 13. दिशति फ. 14. उपूर्वात् ह. 15. क्विप् ह, क्विन् प्रत्ययः ब. 16. धातूनां नास्ति ब. 17. कार्यम् नास्ति क. ब. 18. उपपदे नास्ति ब. क. 19. क्विप्रत्ययो ह. 20. भवति नास्ति ब. 21. दध्यङ् ड. 22. एव नास्ति फ. 23. क्विबेव फ. ह. 24. अश्वयुजौ अश्वयुजः नास्ति क. 25. इह इत्यधिकम् अ. 26. निपातनैः सह निर्देशात् अ. ब. फ. ह. 27. त्यदादिषु उपपदेषु वर्तमानात् पश्चात् दृश्यते ह. 28. अर्थे नास्ति ह. 29. त्यादृक् नास्ति ब. फ. 30. सदृक् सदृशः । अन्यादृक् अन्यादृशः इत्यधिकम् क. 31. कञः नास्ति फ. कंञकारः ब. 32. ठक् नास्ति फ, ठक्–इति नास्ति ह. 33. तन्दर्शः ह. 34. तादृशादयः फ. 35. वार्तिकमिदं नास्ति ग. 36. दृशेश्च इति वक्तव्यम् फ, कश्च ह. 37. अन्यादृक्षः नास्ति ब. 38. ईदृक्षः क. 39. सदृक्षः इत्यधिकम् ह.

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। (६१/२९७५)

सुपि [1]इत्यनुवर्तते। कर्मग्रहणं [2]तु 'स्पृशोऽनुदके क्विन्' (३.२.५८/४३२) इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यः धातुभ्यः सुबन्ते उपपदे उपसर्गेऽपि अनुपसर्गेऽपि क्विप् प्रत्ययो भवति। उपसर्गग्रहणं ज्ञापनार्थम्, अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति इति, 'वदः सुपि क्यप् च' (३.१.१०६/२८५४) इति। सू इति द्विषा (धा. पा. १०१४) साहचर्यात् सूतेः (धा.पा.१०३२) आदादिकस्य ग्रहणं, न सुवतेः (धा. पा. १४०९) [3]तौदादिकस्य। 'युजिर् योगे' (धा. पा. १४४५), 'युज समाधौ' (धा. पा. ११७८), द्वयोरपि ग्रहणम्। 'विद ज्ञाने' (धा. पा. १०६५), 'विद सत्तायाम्' (धा. पा. ११७२), 'विद विचारणे' (धा. पा. १४५१), [4]त्रयाणामपि ग्रहणम्। न लाभार्थस्य विदेः (धा. पा. १४३३), अकारस्य [5]विवक्षितत्वात्। सद्–'शुचिषत्' (ऋ. ४.४०.५)। 'अन्तरिक्षसत्' (ऋ. ४.४०.५)। '[6]उपसत्' (तै.सं. ६.२.३.२)। सू—[7]अण्डसूः। शतसूः। प्रसूः (तै.४.७.३.२)। द्विष–मित्रद्विट्। प्रद्विट्। द्रुह–मित्रध्रुक् (मै.सं.४.३.४)। [8]प्रध्रुक्। दुह–गोधुक्। प्रधुक्। युज–[9]अश्वयुक्। प्रयुक्। विद–वेदवित्। [10]प्रवित्। [11]ब्रह्मवित्। भिद–काष्ठभित्। [12]प्रभित्। छिद–रज्जुच्छिद्। प्रच्छिद्। जि–शत्रुजित्। [13]प्रजित्। नी–सेनानीः। [14]प्रणीः। ग्रामणीः। [15]अग्रणीः। कथमत्र णत्वम्? 'स एषां ग्रामणीः' (५.२.७८/१८७८) इति [16]निपातनात्, नयतेः 'पूर्वपदात् सञ्ज्ञायामगः' (८.४.३/८५७) इति णत्वम्[17]। राज–राट्। [18]विराट्। सम्राट्। 'मो राजि समः क्वौ' (८.२.३५/१२६) इति मत्वम्। 'अन्येभ्योऽपि[19] दृश्यते' (३.२.१७८/३१५८), 'क्विप् च' (३.२.७६/२९८३) इति सामान्येन वक्ष्यति, तस्यैवायं प्रपञ्चः॥

## भजो ण्विः। (६२/२९७६)

उपसर्गे सुपि इति वर्तते। भजेर्धातोः [20]सुबन्त उपपदे उपसर्गेऽपि [21]अनुपसर्गेऽपि ण्विप्रत्ययो भवति। अर्धं भजते अर्धभाक्[22]। उपसर्गेऽपि – [23]प्रभाक्[24]॥

## छन्दसि सहः। (६३/३४०९)

उपसर्गे सुपि [25]इत्येव। छन्दसि विषये सहेर्धातोः [26]सुबन्ते उपपदे ण्विप्रत्ययो भवति। '[27]तुराषाट्' (ऋ. ३.४८.४)। 'सहेः साडः सः' (८.३.५६/३३५) इति षत्वम्, 'अन्येषामपि दृश्यते' (६.३.१३७/३५३९) इति दीर्घत्वम्[28]॥

---

1. इति वर्तते ब. फ. 2. तु नास्ति फ. 3. तुदादिकस्य क. 4. इति इत्यधिकम् क. 5. लोपस्य इत्यधिकम् क. फ. 6. संसद् ब. फ. 7. अण्डसूः शतसूः नास्ति फ, प्रसूः नास्ति क. 8. प्रध्रुक् नास्ति फ. 9. क्षिप्रयुक्'इत्यधिकम् क. 10. संवित् क. नास्ति ब. 11. निविद् ब. क, नास्ति ड. 12. प्रभिद् ग, नास्ति फ. 13. प्रजित् नास्ति ब. फ. 14. प्रणीः नास्ति फ. 15. अग्रणीः नास्ति फ. 16. ज्ञापकात् अ. क. ड. 17. पूर्वपदात् असंज्ञायामपि णत्वं भवति इत्यधिकम् ड. 18. स्वराट् अ. ड. 19. क्विबन्तेभ्यो इत्यधिकम् ग. 20. सुबन्ते प्रादौ क. 21. अनुपसर्गेऽपि नास्ति अ. फ. 22. पादभाक् इत्यधिकम् अ. ब. फ, पदभाक् इत्यधिकम् क. 23. प्रभजते इति इत्यधिकम् अ. क. फ. 24. तुर्वभाक् इत्यधिकम् अ. क. 25. इति वर्तते फ. 26. सुबन्ते नास्ति फ. 27. जलाषाट् अ. फ. न्या. ग, पृतनाषाट् क. 28. छन्दसि इति किम्? जलाषाहः इत्यधिकम् ड.

## वहश्च । (६४/३४१०)

वहेर्धातोः छन्दसि [1]विषये सुबन्त उपपदे ण्विप्रत्ययो भवति । [2]प्रष्ठवाट् । दित्यवाट् । योगविभाग उत्तरार्थः ॥

## क्रव्यपुरीषपुरीष्येषु ञ्युट् । (६५/३४११)

[3]कव्य पुरीष पुरीष्य इत्येतेषु उपपदेषु छन्दसि विषये वहेर्धातोः ञ्युट् प्रत्ययो भवति । 'कव्यवाहनः [4]पितॄणाम्' (तै. सं. २.५.८.६) । '(अग्नेः) [5]पुरीषवाहणः' (वा. सं. ११.४४) । 'पुरीष्यवाहनः' (मै.सं. २.७.४) ॥

## हव्येऽनन्तःपादम् । (६६/३४१२)

हव्यशब्दे उपपदे छन्दसि विषये वहेर्धातोः ञ्युट् प्रत्ययो भवति, [6]अनन्तःपादं चेद् बहिर्वर्तते । 'अग्निश्च हव्यवाहनः' (अ. वे. ७.२०.१) अनन्तःपादम् इति किम् ? 'हव्यवाडग्निरजरः पिता नः' (ऋ. ५.४.२) ॥

## जनसनखनक्रमगमो विट् । (६७/३४१३)

छन्दसि उपसर्गे सुपि इति [7]अनुवर्तते । 'जन जनने' (धा. पा. ११०६), 'जनी प्रादुर्भावे' (धा. पा. ११५०), द्वयोरपि ग्रहणम् । तथा 'षणु दाने' (धा. पा. १४६५), 'वन षण संभक्तौ' (धा. पा. ४६३, ४६४), [8]द्वयोरपि ग्रहणम् । जनादिभ्यः धातुभ्यः [9]सुबन्त उपपदे छन्दसि [10]विषये विट् प्रत्ययो भवति । [11]टकारः सामान्यग्रहणाविघातार्थः 'वेरपृक्तस्य' (६.१.६७/३७५) इति, विशेषणार्थश्च विड्वनोरनुनासिकस्यात्' (६.४.४१/२९८२) इति । जन – 'अब्जाः गोजाः' (ऋ. ४.४०.५) । सन – 'गोषा [12]इन्दो नृषा असि' (ऋ. ९.२.१०) । खन – 'बिसखाः' (ऋ. ६.१.२) । कूपखाः । क्रम – '[13]दधिक्राः' (ऋ. ४.३८.१०) । गम – 'अग्रेगा [14]उन्नेतॄणाम्' (तै. सं. १.३.६.१) ॥

## अदोऽनन्ने । (६८/२९७७)

छन्दसि इति निवृत्तम् । अदेर्धातोरनन्ने सुप्युपपदे विट् प्रत्ययो भवति । आममत्ति आमात् । सस्यात् । अनन्ने इति किम् ? अन्नादः ॥

## क्रव्ये च । (६९/२९७८)

क्रव्यशब्द उपपदे अदेर्धातोः विट् [15]प्रत्ययो भवति । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे [16]वचनमसरूप-बाधनार्थम् । तेन अण् न भवति । कथं तर्हि क्रव्यादः[17] ? कृत्तविकृत्तशब्दे उपपदे अण्, तस्य च [18]पृषोदरा-दिपाठात् क्रव्यभावः । कृत्तविकृत्तपक्व[19]मांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यात् इति ॥

---

1. विषये नास्ति क. 2. तुर्यवाट् ग. फ. 3. कव्यादिषु फ. 4. पितॄणाम् नास्ति फ. 5. पुरीष-वाहनः ब, मुद्रितपुस्तकेषु 6. अनन्तःपादात् ड. 7. वर्तते क. 8. इति च इत्यधिकम् फ, द्वयो-रपि ग्रहणं नास्ति अ. 9. सुबन्ते उपपदे नास्ति फ. 10. विषये नास्ति फ. 11. इकारः सामान्यग्रहणार्थः अ. ग. 12. इन्द्रो मुद्रितः पाठः 13. आदधिक्राः शवसा पञ्चकृष्टीः ड. 14. नेतॄणाम् ब. 15. प्रत्ययो नास्ति फ. 16. इदम् इत्यधिकम् फ. 17. इति इत्यधिकम् फ. 18. पृषोदरादित्वात् ब. क. 19. °मांसभक्षकः ब.

## दुहः कब् घश्च । (७०/२९७९)

दुहेर्धातोः सुप्युपपदे कप् प्रत्ययो भवति, घकारश्चान्तादेशः । कामदुघा धेनुः । [1]अर्घदुघा । धर्मदुघा ॥

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । (७१/३४१४)

श्वेतवह् उक्थशस् पुरोडाश् इत्येतेभ्यो ण्विन् प्रत्ययो भवति [2]मन्त्रे विषये । धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्धचर्थम् । प्रत्ययस्तु[3] विधीयत [4]एव । श्वेतशब्दे कर्तृवाचिनि उपपदे वहेर्धातोः कर्मणि कारके ण्विन् प्रत्ययो भवति । श्वेता एनं वहन्ति [5]श्वेतवा इन्द्रः । उक्थशब्दे कर्मणि करणे [6]वा उपपदे [7]शंसतेर्धातोः ण्विन् प्रत्ययो भवति, [8]नलोपश्च [9]निपात्यते । उक्थानि शंसति, उक्थैर्वा शंसति, उक्थशा यजमानः (ऋ. ४.२.१६) । 'दाशृ दाने' (धा.पा. ८८२) इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च [10]प्रत्ययः । पुरो दाशन्त एनं[11] पुरोडाः (ऋ. ३.२८.२) ।

[२६३] श्वेतवहादीनां डस्पदस्येति वक्तव्यम् । (म. भा. २.१०८)

श्वेतवोभ्याम् । श्वेतवोभिः । पदस्य इति किम्? श्वेतवाहौ । श्वेतवाहः ॥

## अवे यजः । (७२/३४१५)

अवे उपपदे यजेः धातोः ण्विन् प्रत्ययो भवति [12]मन्त्रे विषये । 'त्वं[13] यज्ञे [14]वरुणस्यावया असि' (काठ.सं. ३५.६५) । योगविभाग उत्तरार्थः ॥

## विजुपे छन्दसि । (७३/३४१७)

उपे उपपदे यजेः[15]छन्दसि विषये विच् प्रत्ययो भवति । उपयड्भिरूर्ध्वं [16]वहन्ति । [17]उपयट्त्वम् । छन्दोग्रहणं [18]ब्राह्मणार्थम् । विचः चित्करणं सामान्यग्रहणा[19]विघातार्थम् 'वेरपृक्तस्य' (६.१.६७/३७५) इति । किमर्थ[20]मिदमुच्यते, यावता 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५/२९८०) इति यजेरपि [21]विच् सिद्ध [22]एव? [23]यजेर्नियमार्थमेतत्, उपयजेः छन्दस्येव, [24]न भाषायाम् इति ॥

---

1. अर्घदुघा नास्ति ब, कर्मदुघा अ, चर्मदुघा ब. 2. मन्त्रविषये अ, तन्त्रविषये ब. 3. तु नास्ति अ. 4. एव नास्ति फ. 5. इति इत्यधिकम् फ. ह. 6. च क. 7. शंसतेः नास्ति फ, धातोः नास्ति ब. क. ह. 8. नकारलोपः अ. ह. 9. निपात्यते नास्ति क. फ. ह. 10. ण्विन् प्रत्ययो भवति ह. 11. इति इत्यधिकम् फ, पुरोडाश् ह. 12. मन्त्रविषये ब. क. फ. 13. हि इत्यधिकम् क. 14. वारुणस्य ह. 15. धातोः इत्यधिकम् फ. 16. यजन्ति अ, उपवहन्ति फ, रुद्रं वहन्ति तदुपयजः ह. 17. तद् उपयजां उपयत्त्वम् ब. क. ड, उपपदत्वं छन्दोग्रहणं क.ह. 18. उत्तरार्थम् ड. 19. °विघातार्थः ह. 20. पुनरिदं ह. 21. इत्थं सिद्धं फ. 22. एव नास्ति अ. क. ह. 23. यजेः नास्ति ब. क. 24. न भाषायाम् नास्ति ह.

## आतो मनिन्क्वनिब्वनिपश्च । (७४/३४१८)

छन्दसि इति वर्तते, सुपि उपसर्गेऽपि इति च । आकारान्तेभ्यो धातुभ्यः [1]सुपि उपपदे छन्दसि विषये मनिन् क्वनिप् वनिप् इत्येते प्रत्यया भवन्ति । चकारात् [2]विच् भवति । '[3]सुदामा' (ऋ. ६. २०. ७) । अश्वत्थामा । क्वनिप् – सुधीवा । सुपीवा । वनिप् – 'भूरिदावा' (ऋ. ९. ८७. ४) । '[4]घृतपावा' (अथर्व. १३. १. २४) । विच् खल्वपि – 'कीलालपाः' (ऋ. १०. ९१. १४) । 'शुभंयाः' (ऋ. ४. ३. ६) । [5]रामस्योपदाः ॥

## अन्येभ्योऽपि दृश्यन्ते । (७५/२९८०)

छन्दसि इति निवृत्तम् । अन्येभ्योऽपि [6]धातुभ्योऽनाकारान्तेभ्यो मनिन् क्वनिप् वनिप् इत्येते प्रत्यया दृश्यन्ते, विच् च । [7]सुशर्मा । [8]क्वनिप् – 'प्रातरित्वा' (ऋ. १. १२५. १) । 'प्रातरित्वानौ[9]' (काठ. ३०. १) । वनिप् – 'विजावाग्ने' (ऋ. ३. १. २३) । 'अग्रेयावा' (मै. सं. ४. १४. ९) । [10]विच् खल्वपि – 'रेडसि' (वा. सं. ६. १८)[11] । अपिशब्दः [12]सर्वोपाधिव्यभिचारार्थः । निरुपपदादपि भवति । 'धीवा' (अथर्व. ३. ५. ६) । '[13]पीवा' (मै. सं. २. ५१) । दृशिग्रहणं [14]प्रयोगानुसरणार्थम् ॥

## क्विप् च । (७६/२९८३)

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि [15]भाषायां च क्विप् प्रत्ययो भवति । [16]उखायाः स्रंसते उखास्रत् । [17]पर्णध्वत् । वाहात् भ्रश्यति, [18]वाहाभ्रट् । 'अन्येषामपि दृश्यते' (६. ३. १३७/३५३९) इति दीर्घः ॥

## स्थः क च । (७७/२९८७)

[19]सुपि उपसर्गेऽपि इति [20]च वर्तते । स्था इत्येतस्माद् धातोः [21]सुपि उपपदे कप्रत्ययो भवति, क्विप् च । किमर्थमिदमुच्यते[22], [23]यावता 'सुपि स्थः' (३. २. ४/२९१६) इति कः सिद्ध एव[24], 'अन्येभ्योऽपि [25]दृश्यते' (३. २. १७८/३१५८) इति क्विप् ? बाधकबाधनार्थं पुनर्वचनम् । 'शमि धातोः सञ्ज्ञायाम्' (३. २. १४/२९२८) [26]अचं बाधते – शंस्थः । शंस्थाः ॥

---

1. सुपि नास्ति फ. 2. विच्च ब. 3. सुदामा नास्ति ह. 4. घृतपावा नास्ति ह, घृतपाता ग. 5. शयस्योपदाः ब. क, रायस्योषदाः ड, नास्ति फ. 6. धातुभ्यः नास्ति फ. 7. सुकर्मा ग. ह. 8. क्वनिप् नास्ति फ. 9. प्रातरित्वानः इत्यधिकम् ब. क. ड. 10. विच् . . . प्रयोगानुसरणार्थम् नास्ति ग. 11. पर्णं न वेः इत्यधिकम् अ. ब. क. ड. 12. सर्वविधिव्यतिचारार्थः क. 13. पीडा क. ह, नास्ति ग. 14. प्रयोगानुसारार्थम् क. 15. विषये इत्यधिकम् फ. 16. उषायाः स्रंसते उषास्रत् क. 17. पर्णं विध्वंसते इत्यधिकम् फ, वर्णानि ध्वंसते वर्णध्वत् ग. 18. वाहभ्रट् अ. ह, वहात् भ्रश्यति वहाभ्रट् ब. क. 19. सुपि नास्ति ह. 20. च वर्तते नास्ति ड. 21. सुबन्ते फ. 22. इति इत्यधिकम् अ, किमर्थमिदं वचनम् ह, उच्यते नास्ति क. 23. यावता नास्ति अ. फ. 24. चकारात् क्विप् च प्रत्ययो भवति । उखायाः स्रंसते उखास्रत्, पर्णानि ध्वंसते पर्णध्वत् । वहात् भ्रश्यति वहाभ्रट् इत्यधिकम् ह. 25. दृश्यन्ते ह. 26. इति इत्यधिकम् अ.

## सुप्यजातौ णिनिस्ताच्छील्ये । (७८/२९८८)

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोः णिनिः प्रत्ययो भवति । उष्णभोजी । [1]शीतभोजी । अजातौ इति किम् ? [2]ब्राह्मणानामन्त्रयिता । ताच्छील्ये इति किम् ? उष्णं भुङ्क्ते कदाचित् । सुपि इति [3]वर्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम् (म. भा. २.१०९) ।

[२६४] उत्प्रतिभ्यामाङि सर्तेरुपसङ्ख्यानम् (म. भा. २.१०९) ।

उदासारिण्यः । प्रत्यासारिण्यः (म. भा. २.१०९) ।

[२६५] साधुकारिणि च (म. भा. २. १०९) ।

साधुकारी । साधुदायी ।

[२६६] ब्रह्मणि वदः (म. भा. २. १०९) ।

'ब्रह्मवादिनो वदन्ति' (तै. सं. २.५.४.१) ॥

## कर्तर्युपमाने । (७९/२९८९)

कर्तृवाचिनि उपमाने उपपदे धातोः णिनिप्रत्ययो भवति । [4]उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । [5]ध्वाङ्क्षरावी । अताच्छील्यार्थ आरम्भः, जात्यर्थो वा । कर्तरि इति किम् ? अपूपानिव भक्षयति माषान् । उपमाने इति किम् ? उष्ट्रः क्रोशति ॥

## व्रते । (८०/२९९०)

व्रत इति शास्त्रतो नियम [6]उच्यते । व्रते[7] गम्यमाने सुबन्त उपपदे धातोः णिनिः प्रत्ययो भवति । समुदायोपाधिश्चायम् । धातूपपदप्रत्ययसमुदायेन[8] व्रतं गम्यते[9] । स्थण्डिलशायी । अश्राद्धभोजी । कामचारप्राप्तौ नियमः । सति शयने स्थण्डिल एव शेते नान्यत्र । सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धम् इति । व्रते इति किम् ? स्थण्डिले शेते देवदत्तः । अताच्छील्यार्थ आरम्भः, जात्यर्थो वा ॥

---

1. शीतभोजी नास्ति क. 2. ब्राह्मणानां मन्त्रयिता क. 3. वर्तते ह. 4. उपपदस्थकर्ता अ. ग. 5. ध्वांक्षविरावी अ. क. 6. उच्यते नास्ति फ. 7. इति इत्यधिकम् इ. 8. चेत् इत्यधिकम् ब. क. ह. 9. इति इत्यधिकम् ब.

## बहुलमाभीक्ष्ण्ये । (८१/२९९१)

आभीक्ष्ण्ये गम्यमाने[1] धातोः बहुलं [2]णिनिः प्रत्ययो भवति । आभीक्ष्ण्यं पौनःपुन्यम् । [3]तात्पर्यम् आसेवैव, ताच्छील्यादन्यत् । कषायपायिणो गान्धाराः । क्षीरपायिणः [4]उशीनराः । सौवीरपायिणो बाह्लीकाः । बहुलग्रहणात् [5]कुल्माषखादः इत्यत्र न भवति ॥

## मनः । (८२/२९९२)

सुपि इति वर्तते । मन्यतेः[6] सुबन्ते उपपदे णिनिः प्रत्ययो भवति । दर्शनीयमानी । शोभनमानी । बहुलग्रहणानुवृत्तेः मन्यतेः ग्रहणं, न मनुतेः । उत्तरसूत्रे हि[7] खश्प्रत्यये [8]विकरणकृतो विशेषः [9]स्यात् ॥

## आत्ममाने खश् च । (८३/२९९३)

आत्मनो [10]मननमात्ममानः । आत्ममाने वर्तमानान् मन्यतेः[11] [12]सुप्युपपदे खश्प्रत्ययो भवति । चकाराण् णिनिः च । यदा प्रत्ययार्थः कर्ता आत्मानमेव [13]दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदाऽयं विधिः । दर्शनीयम् [14]आत्मानं मन्यते दर्शनीयंमन्यः, दर्शनीयमानी । पण्डितंमन्यः[15], पण्डितमानी । आत्ममाने इति किम् ? दर्शनीयमानी [16]देवदत्तस्य यज्ञदत्तः[17] ॥

## भूते । (८४/२९९५)

भूते [18]इत्यधिकारो 'वर्तमाने लट्' (३.२.१२३/२१५१) इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामः[19] भूते इत्येवं तद् वेदितव्यम् । धात्वधिकाराच्च धात्वर्थे भूते इति विज्ञायते । वक्ष्यति – 'करणे यजः' (३.२.८५/२९९६)[20], अग्निष्टोमेन इष्टवान् अग्निष्टोमयाजी । भूते इति किम् ? अग्निष्टोमेन [21]यजते ॥

## करणे यजः । (८५/२९९६)

णिनिः[22] अनुवर्तते, [23]न खश् । [24]यजतेर्धातोः करणे उपपदे णिनिप्रत्ययो भवति [25]भूते । अग्निष्टोमयाजी[26] । अग्निष्टोमः फलभावनायां करणं भवति ॥

---

1. सुबन्ते उपपदे इत्यधिकम् क. फ. ह. 2. णिनिः नास्ति फ. 3. आसेवा तात्पर्यम् फ. ह, तात्पर्यमेव वा ब. क. 4. उशीनराः नास्ति ह. 5. कुल्माषखादाः क, कुन्मासखादाः ह. 6. धातोः इत्यधिकम् क. ड. फ. ह. 7. एवं इत्यधिकम् ग. अ, प्रत्यये नास्ति फ. 8. विकरणकृतौ ह. 9. स्यात् नास्ति फ. 10. मानं ह, मननं मानः । भावे घञ् क. 11. धातोः इत्यधिकम् ह. 12. सुबन्त उपपदे अ. फ. 13. दर्शनीयादिना गुणेन क. ड. 14. आत्मानं नास्ति फ. 15. दिवादिभ्यः श्यन् इत्यधिकम् ड. 16. देवदत्तः यज्ञदत्तस्य क. ड. ह. 17. अतः सार्वकालिका विधयो वेदितव्याः इत्यधिकम् ड. इ. ग. 18. इत्ययमधिकारो वेदितव्यः ह. 19. वर्तमाने लट् इति यावत् इत्यधिकम् क. 20. इति इत्यधिकम् ह. 21. यजति ब. 22. इति इत्यधिकम् अ. क. फ. 23. न वर्तते च खश् ब. 24. यजेः ब. 25. भूतेऽर्थे वर्तमानात् फ. 26. वाजपेययाजी इत्यधिकम् अ.ब.क.ड.फ.ह.

## कर्मणि हनः । (८६/२९९७)

कर्मणि उपपदे हन्तेर्धातोः णिनिः प्रत्ययो भवति भूते [1]काले । पितृव्यघाती । मातुलघाती ।

[२६७] कुत्सितग्रहणं कर्तव्यम् ।
इति मा भूत्, चौरं हतवान् ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् । (८७/२९९८)

कर्मणि इति वर्तते । ब्रह्मादिषु कर्मसु उपपदेषु हन्तेर्धातोः क्विप् प्रत्ययो भवति [2]भूते । [3]ब्रह्महा । भ्रूणहा । वृत्रहा । किमर्थमिदमुच्यते यावता सर्वधातुभ्यः क्विप् [4]विहित एव ? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् । चतुर्विधश्चात्र नियम इष्यते[5] । ब्रह्मादिष्वेव हन्तेः, [6]नान्यस्मिन्नुपपदे, पुरुषं हतवान् इति । ब्रह्मादिषु[7] हन्तेरेव, [8]नान्यस्मात् स्यात्, ब्रह्म अधीतवान् इति । ब्रह्मादिषु हन्ते[9]र्भूतकाले क्विप् एव नान्यः प्रत्ययः, तथा [10]भूतकाले एव नान्यस्मिन्[11], ब्रह्माणं हन्ति हनिष्यति [12]वा इति । तदेतद् वक्ष्यमाणबहुल[13]ग्रहणस्य [14]पुरस्तादपकर्षणाल् लभ्यते ॥

## बहुलं छन्दसि । (८८/३४१९)

पूर्वेण नियमादप्राप्तः क्विप् प्रत्ययः विधीयते । छन्दसि विषये उपपदान्तरेष्वपि हन्तेर्बहुलं क्विप् प्रत्ययो भवति । मातृहा [15]सप्तमं नरकं व्रजेत् । पितृहा (छां. ७. १५२) । न च भवति । [16]मातृघातः । पितृघातः ॥

## सुकर्मपापमन्त्रपुण्येषु कृञः । (८९/२९९९)

कर्मणि इति वर्तते । तदसम्भवात् सुशब्दं वर्जयित्वा [17]परिशिष्टानां विशेषणं [18]भवति । स्वादिषु कर्मसूपपदेषु करोते[19]र्धातोः क्विप् प्रत्ययो भवति । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । अयमपि नियमार्थ आरम्भः । त्रिविधश्चात्र नियम इष्यते । धातुनियमं वर्जयित्वा कालोपपदप्रत्यय[20]नियमः । धातोरनियतत्वादन्यस्मिन्नुपपदे अपि भवति । शास्त्रकृत् । भाष्यकृत् ॥

## सोमे सुञः । (९०/३०००)

कर्मणि [21]इति वर्तते । सोमे कर्मणि उपपदे सुनोतेर्धातोः क्विप् प्रत्ययो भवति[22] । सोमसुत्, सोमसुतौ, सोमसुतः । अयमपि नियमार्थ आरम्भः । चतुर्विधश्चात्र नियमः इष्यते, [23]धातुकालोपपदप्रत्ययविषयः ॥

---

1. काले नास्ति ब. फ. 2. भूते नास्ति ब. 3. ब्रह्माणं हतवान् इत्यधिकम् फ. 4. विहितः नास्ति फ, सिद्धः क. 5. धातूपपदप्रत्ययकालविषयः इत्यधिकम् क. 6. नान्येषु उपपदेषु क. 7. कर्मण्युपपदेषु इत्यधिकम् फ, कर्मसु उपपदेषु इत्यधिकम् क. 8. नान्यत् स्यात् फ, नान्यतः क. 9. भूते ब. 10. भूत एव फ. 11. काले इत्यधिकम् ब. क. 12. च क. 13. ग्रहणस्य नास्ति फ. 14. पुरस्तादपरस्ताल् ड. 15. सप्तमं नास्ति अ. ब. क. ड. 16. मातृघातः नास्ति ड. 17. परेषां शब्दानां क. 18. भवति नास्ति ब. क. ड. 19. धातोः नास्ति फ. 20. °विषयः ब. क. ड. 21. इत्येव अ. फ. 22. भूते इत्यधिकम् फ. 23. काल-धातूपपदप्रत्ययविषयः फ.

## अग्नौ चेः। (९१/३००१)

[1]कर्मणि इत्येव। अग्नौ कर्मण्युपपदे चिनोतेर्धातोः क्विप् प्रत्ययो भवति। अग्निचित्, अग्निचितौ, अग्निचितः। अत्रापि पूर्ववच् चतुर्विधो नियम [2]इष्यते ॥

## कर्मण्यग्न्याख्यायाम्। (९२/३००२)

[3]चेः कर्मणि इति वर्तते। कर्मणि उपपदे चिनोतेः[4] कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायां, धातूपपद[5]प्रत्ययसमुदायेन चेदग्न्याख्या गम्यते। श्येन इव चीयते श्येनचित्। कङ्कचित्[6]। आख्याग्रहणं रूढिसम्प्रत्ययार्थम्। [7]अग्न्यर्थो हि इष्टकाचय उच्यते श्येनचित् इति ॥

## कर्मणीनिर्विक्रियः। (९३/३००३)

कर्मणि उपपदे विपूर्वात् क्रीणाते[8]र्धातोः इनिः प्रत्ययो भवति। कर्मणि इति वर्तमाने पुनः कर्मग्रहणं [9]कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्। सोमविक्रयी। रसविक्रयी[10]। इह न भवति, [11]धान्यविक्रायः ॥

## दृशेः क्वनिप्। (९४/३००४)

कर्मणि [12]इत्येव। दृशेः [13]धातोः कर्मणि उपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। 'अन्येभ्योऽपि दृश्यन्ते' (३.२.७५/२९८०) इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम् ॥

## राजनि युधिकृञः। (९५/३००५)

कर्मणि इत्येव। [14]राजन्शब्दे [15]कर्मणि उपपदे युध्यतेः करोतेश्च[16] क्वनिप् प्रत्ययो भवति। ननु च युधिरकर्मकः ? अन्तर्भावितण्यर्थः सकर्मको भवति। राजयुध्वा। राजानं योधितवान् इत्यर्थः। राजकृत्वा ॥

## सहे च। (९६/३००६)

[17]सहशब्दे चोपपदे [18]युधिकृञोः धात्वोः क्वनिप् प्रत्ययो भवति। असत्त्ववाचित्वान्नोपपदं कर्मणा विशेष्यते। सहयुध्वा। सहकृत्वा ॥

## सप्तम्यां जनेर्डः। (९७/३००७)

सप्तम्यन्त उपपदे जनेर्धातोः डः प्रत्ययो भवति। उपसरे [19]जातः उपसरजः। मन्दुरजः[20] ॥

---

1. वाक्यमिदं नास्ति फ. 2. इष्यते नास्ति फ. 3. चेः नास्ति फ. 4. धातोः इत्यधिकम् ब. 5. प्रत्यय नास्ति फ. 6. रथचक्रचित् इत्यधिकम् फ. 7. श्येनचित् इति समुदायेनाग्न्याधारस्थलविशेषः इष्टकाचय उच्यते अ. 8. धातोः नास्ति फ. 9. कर्तृकुत्सा ह. 10. घृतविक्रयी इत्यधिकम् अ. ब. ड, तैलविक्रयी इत्यधिकम् ब. क. ड. ह. 11. धान्यविक्रयः ब. क. 12. इत्यनुवर्तते क. 13. धातोः नास्ति फ. 14. राजनि शब्दे ह. 15. कर्मवाचिनि ह. 16. धातोः इत्यधिकम् फ.ब. 17. कर्मणि इत्यधिकम् इ. 18. युधेः कृञश्च धातोः ब, युध्यतेः कृञश्च क. 19. जातवान् अ. ब. क. फ. 20. द्विर्जातो द्विजः इत्यधिकम् ह.

## पञ्चम्यामजातौ। (९८/३००८)

पञ्चम्यन्त उपपदे जातिवर्जिते [1]जनेर्डः प्रत्ययो भवति। [2]बुद्धिजः। संस्कारजः। [3]दुःखजः। अजातौ इति किम्? [4]हस्तिनो जातः। अश्वाज्जातः॥

## उपसर्गे च सञ्ज्ञायाम्। (९९/३००९)

उपसर्गे च उपपदे जनेः[5] डः प्रत्ययो भवति सञ्ज्ञायां [6]विषये। समुदायोपाधिः सञ्ज्ञा। अथेमा मानवीः प्रजाः॥

## अनौ कर्मणि। (१००/३०१०)

अनुपूर्वात् जनेः कर्मणि उपपदे डः प्रत्ययो भवति। पुमांसमनुजातः पुमनुजः। [7]स्त्र्यनुजः॥

## अन्येष्वपि दृश्यते। (१०१/३०११)

अन्येष्वपि उपपदेषु [8]कारकेषु जनेः डः प्रत्ययो [9]दृश्यते। सप्तम्याम् इत्युक्तमसप्तम्यामपि दृश्यते[10]। [11]न जायते इति अजः। [12]द्विर्जाताः द्विजाः। 'पञ्चम्यामजातौ' (३. २. ९८/३००८) इत्युक्तं, जातावपि दृश्यते। ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम्। 'उपसर्गे च सञ्ज्ञायाम्' (३. २. ९९/३००९) इत्युक्तम्, असञ्ज्ञायामपि दृश्यते। अभिजाः[13], [14]परिजाः केशाः। 'अनौ कर्मणि' (३. २. १००/३०१०) इत्युक्तम्, अकर्मण्यपि दृश्यते। [15]अनुजातः अनुजः। [16]अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, [17]कारकान्तरेऽपि। परितः खाता परिखा। [18]आखा॥

## निष्ठा। (१०२/३०१३)

'क्तक्तवतू निष्ठा' (१. १. २६/३०१२) इत्युक्तं, स निष्ठासञ्ज्ञकः प्रत्ययो भूते भवति। [19]कृतम्। कृतवान्। [20]भुक्तम्। भुक्तवान्। निष्ठायाम् इतरेतराश्रयत्वादप्रसिद्धिः (म.भा. २. ११३)। [21]सञ्ज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः सञ्ज्ञया [22]भाव्यम्। नैष दोषः। [23]भाविनी सञ्ज्ञा विज्ञायते। स भूते भवति, यस्योत्पन्नस्य निष्ठा इत्येषा सञ्ज्ञा [24]भवति। सामर्थ्यात् क्तक्तवत्वोर्विधानमेतत्[25]।

[२६८] आदिकर्मणि निष्ठा वक्तव्या (म. भा. २. ११३)।

प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः॥

---

1. जनेः धातोः ब. क. 2. बुद्धिजम् फ, बुद्धेः जातः इत्यधिकम् क. 3. दुःखजः नास्ति फ, स्वेदजं दुःखम् ब. क, सुखजः ड. 4. उदाहरणमिदं नास्ति फ. 5. धातोः इत्यधिकम् ब. ह. 6. इति फ. 7. स्त्रियमनुजातः अ. क, स्त्र्यनुजः नास्ति ब. 8. कारकेषु नास्ति फ, कारकेषु च ड. ह. 9. भवति ड. ह. 10. इत्यर्थः इत्यधिकम् ब. 11. न जातः अजः ड.फ. 12. उदाहरणमिदं नास्ति फ. 13. केशाः इत्यधिकम् ब. 14. परिजाः नास्ति ब. 15. अनुजातः नास्ति फ. 16. अपिः अ. फ. 17. कारकान्तरेषु अ, कारकान्तरेऽपि च ब. ह. 18. आख्या अ. क, नास्ति फ. 19. कृतः ब. फ. 20. भूतः भूतवान् फ, भुक्तः ब. 21. सञ्ज्ञया ब. ड. 22. भवितव्यम् ब. क. फ. 23. भाविनि ब. 24. भवति इति ब. फ. ह, भविष्यति इति ड. 25. इदम् फ.

## सुयजोर्ङ्वनिप् । (१०३/३०९१)

सुनोतेर्यजतेश्च[1] ङ्वनिप् प्रत्ययो भवति । [2]सुत्वा । यज्वा ॥

## जीर्यतेरतृन् । (१०४/३०९२)

'भूते' (३.२.८४/२९९५) [3]इति वर्तते । जीर्यतेः[4] अतृन् प्रत्ययो भवति भूते । जरन्, जरन्तौ, जरन्तः । वाऽसरूपेण निष्ठा, [5]जीर्णः, जीर्णवान् [6]इति ।

## छन्दसि लिट् । (१०५/३०९३)

भूते इत्येव । छन्दसि विषये धातोः लिट् प्रत्ययो भवति । 'अहं सूर्यमुभयतो ददर्श' (वा.सं. ८.९) । 'अहं द्यावापृथिवी आततान' (तै. ब्रा. १.२.१.३३) । ननु च 'छन्दसि लुङ्लङ्लिटः' (३.४.६/३४२३) इति सामान्येन [7]लिट् विहित एव ? धातुसम्बन्धे स [8]विधिः, अयं त्वविशेषेण ॥

## लिटः कानज्वा । (१०६/३०९४)

[9]छन्दसि लिटः कानजादेशो भवति वा । 'अग्निं चिक्यानः' (मै. सं. ३.३.९) । [10]सोमं सुषुवाणः (मै.सं. ४.४.१०) । 'वरुणं [11]सुषुवाणम्' (तै.सं. २.१.९.१) । न च भवति । '[12]अहं सूर्यमुभयतो ददर्श' (वा.सं. ८.९) । 'अहं द्यावापृथिवी आततान' (तै. ब्रा. १.२.१.३३) । लिड्ग्रहणं किम्, न पूर्वस्यैव प्रकृतस्यादेशविधाने विभक्तिविपरिणामो[13]भविष्यति ? [14]लिण्मात्रस्य यथा स्यात्, योऽपि परोक्षे [15]विहितस्तस्याप्ययम् आदेशो भवति ॥

## क्वसुश्च । (१०७/३०९५)

[16]छन्दसि लिटः [17]क्वसुरादेशः भवति[18] । 'जक्षिवान्' (अ. ४.७.३) । '[19]पपिवान्' (ऋ. १.६१.७) । न च भवति । 'अहं सूर्यमुभयतो ददर्श (वा. सं. ८.९) । योगविभाग उत्तरार्थः ॥

## भाषायां सदवसश्रुवः । (१०८/३०९७)

[20]सद वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये [21]वा क्वसुरादेशो भवति । आदेशविधानादेव लिडपि तद्विषयोऽनुमीयते । उपसेदिवान् कौत्सः पाणिनिम् (म. भा. २.११५) । [22]तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति । [23]उपासदत् । [24]उपासीदत् । [25]उपससाद । अनूषिवान् कौत्सः पाणिनिम् । [26]अन्ववात्सीत् । अन्ववसत् । अनूवास । उपशुश्रुवान् कौत्सः पाणिनिम् । उपाश्रौषीत् । उपाशृणोत् । उपशुश्राव । लुङ्लङ्विषये[27] [28]परस्तादनुवृत्तेः [29]क्वसुर्भवति ॥

---

1. धातोः इत्यधिकम् फ, धात्वोः इत्यधिकम् ब. 2. सुत्वा सुत्वानौ सुत्वानः । यज्वा यज्वानौ यज्वानः अ.ब.फ. 3. इत्येव अ.ब. 4. धातोः इत्यधिकम् अ.फ. 5. एते उदाहरणे न स्तः फ. 6. वा ड. 7. विहित एव लिट् फ. 8. विधिस्त्वयमविशेषणः ब. 9. छन्दसि विषये अ. क. 10. सोमं नास्ति अ. व. क. ड. 11. सुषुवाणः अ. ब. क. ड. इ. 12. उदाहरणमिदं नास्ति अ. ब. क. ड. 13. भवति अ. ड. 14. एवं तर्हि इत्यधिकम् फ. 15. लिड् इत्यधिकम् अ. क. ड. फ. ह. 16. छन्दसि नास्ति फ, छन्दसि इत्येव अ, छन्दसि इति वर्तते ब. क. 17. क्वसुश्च अ. 18. वा इत्यधिकम् ह. ड. 19. पेचिवान् अ. 20. सदादिभ्यः धातुभ्यः फ. 21. विभाषायां ह. 22. वाक्यमिदं नास्ति ब. 23. लुङि इत्यधिकम् अ. 24. लङि इत्यधिकम् अ. 25. लिटि इत्यधिकम् अ. क. 26. अवात्सीत् फ. 27. अपि इत्यधिकम् फ. 28. पुरस्तात् अ. ब. क. ह. 29. क्वसुः नास्ति अ. ब. क. फ.

## उपेयिवाननाश्वाननूचानश्च । (१०९/३०९८)

उपेयिवान् अनाश्वान् अनूचान इत्येते शब्दा निपात्यन्ते । उपपूर्वाद् इणः क्वसुः, द्विर्वचनमभ्यासदीर्घत्वं[1] (७.४.६९/२४५६), तत्सामर्थ्यादेकादेशप्रतिबन्धः, तत्र 'वस्वेकाजाद्घसाम्' (७.२.६७/३०९६) इत्यनेकाच्त्वादिण् न प्राप्नोति, स निपात्यते, अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः (६.४.८१/२४५५) । उपेयिवान् । क्रादिनियमात्[2] (७.२.१३/२२९३) प्राप्तश्च 'वस्वेकाजाद्घसाम्' (७.२.६७/३०९६) इति प्रतिषिद्धः, स [3]पुनर् इट् प्रतिप्रसूयते, तेनाजादौ न भवति । उपेयुषः । [4]उपेयुषा । न चात्रोपसर्गास्तन्त्रम्, अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव । समीयिवान् । ईयिवान् । वावचनानुवृत्तेश्च पूर्ववल् लुङादयो[5]ऽपि भवन्ति । उपागात् । उपैत् । उपेयाय । अश्नातेर्नञ्पूर्वात् क्वसुर्निपात्यते, इडभावश्च । अनाश्वान् । [6]नाशीत् । [7]नाश्नात् । [8]नाश । वचेरनुपूर्वात् कर्तरि कानज् निपात्यते । अनूचानः । अन्ववोचत् । अन्वब्रवीत् । अनूवाच ॥

## लुङ् । (११०/२२१८)

[9]भूते इत्येव । भूतेऽर्थे वर्तमानाद्धातोः लुङ् प्रत्ययो भवति । अकार्षीत् । अहार्षीत् ।

[२६९] वसतेर्लुङ् रात्रिविशेषे जागरणसन्ततौ [10]वक्तव्यः । (म.भा. २.११८)

क्व भवानुषितः । [11]अहमत्रावात्सम्[12] ॥

## अनद्यतने लङ् । (१११/२२०५)

[13]भूते इत्येव । अनद्यतने इति[14] बहुव्रीहिनिर्देशः । अविद्यमानाद्यतने भूतेऽर्थे वर्तमानाद्धातोर्लङ् प्रत्ययो भवति । अकरोत् । अहरत् । बहुव्रीहिनिर्देशः [15]किमर्थः ? अद्य ह्यो वा [16]अभुक्ष्महि इति व्यामिश्रे मा भूत् (म. भा. २. ११८) ।

[२७०] परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः । (म.भा. २.११९)

अरुणद्यवनः साकेतम् । अरुणद् यवनो [17]माध्यमिकान् इति ॥

## अभिज्ञावचने लृट् । (११२/२७७३)

अभिज्ञा स्मृतिः । तद्वचने उपपदे [18]भूतानद्यतने लृट् प्रत्ययो भवति । [19]लङोऽपवादः । अभिजानासि देवदत्त [20]कश्मीरेषु वत्स्यामः । वचनग्रहणं [21]पर्यायार्थम्, अभिजानासि, स्मरसि, बुध्यसे, [22]चेतयसे इति ॥

---

1. च इति इत्यधिकम् अ.ब, क्ङिति च इति दीर्घः इत्यधिकम् क. 2. इट् इत्यधिकम् फ. 3. पुनरपि क, इट् नास्ति फ. 4. उपेयुषे ब.क. 5. अपि नास्ति ब. 6. लुङि इत्यधिकम् फ. 7. लङि इत्यधिकम् फ. 8. लिटि इत्यधिकम् फ. 9. भूते इत्येव नास्ति ब.क. 10. वक्तव्यः नास्ति फ. 11. अमुत्र अ.फ. 12. अङ प्रत्ययो भवति इत्यधिकम् अ. 13. भूते इत्येव नास्ति फ, भूते इति वर्तते ह. 14. विशिष्टेऽर्थे इत्यधिकम् फ. 15. किम् अ. 16. अभुंक्ष्महि फ. 17. माध्यमिकाम् फ, माध्यमिकम् क, माध्यमिकीं अ. 18. भूतेऽर्थे ड.ह. 19. लुङोऽपवादः ब. 20. मगधेषु अ.क.ड.ह, मगधेषु अवसाम ग. 21. पर्यायार्थे ब. 22. चेतसि अ.क, इति नास्ति फ, चेतसे इति ब.

## न यदि । (११३/२७७४)

यच्छब्दसहिते अभिज्ञावचन उपपदे लृट् [1]प्रत्ययो न भवति । पूर्वेण [2]प्राप्तः प्रतिषिध्यते । अभिजानासि देवदत्त यत् [3]कश्मीरेष्ववसाम । वासमात्रं[4] स्मर्यते, न तु अपरं किंचिल्लक्ष्यते । [5]तेन उत्तरसूत्रस्य नायं विषयः[6] ॥

## विभाषा साकाङ्क्षे । (११४/२७७८)

यदि इति [7]नानुवर्तते । उभयत्रविभाषेयम् । अभिज्ञावचने उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति, साकाङ्क्षश्चेत् प्रयोक्ता । लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति[8] । अभिजानासि देवदत्त कश्मीरेषु[9] वत्स्यामस्तत्रौदनं भोक्ष्यामहे । अभिजानासि देवदत्त मगधेषु वत्स्यामः, तत्रौदनं [10]भोक्ष्यामहे । यदि खल्वपि – अभिजानासि देवदत्त यत् कश्मीरेषु वत्स्यामः, [11]यत्तत्रौदनं भोक्ष्यामहे । अभिजानासि देवदत्त यत् कश्मीरेष्ववसाम, [12]यत्तत्रौदनमभुञ्ज्महि । वासो लक्षणं, भोजनं [13]लक्ष्यम् ॥

## परोक्षे लिट् । (११५/२१७१)

[14]भूतानद्यतने इति [15]वर्तते । तस्य विशेषणं परोक्षग्रहणम् । भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद् धातोः लिट् प्रत्ययो भवति । ननु[16] धात्वर्थः सर्वः परोक्ष एव ? सत्यमेतत् । अस्ति तु लोके [17]धात्वर्थेनापि कारकेषु प्रत्यक्षाभिमानः । स यत्र नास्ति तत् परोक्षम् इत्युच्यते । चकार । जहार । [18]उत्तमविषयेऽपि चित्तव्याक्षेपात् परोक्षता [19]सम्भवत्येव । तद् यथा—सुप्तोऽहं किल विललाप (म.भा.२.१२०) ।

[२७१] [20]अत्यन्तापह्नवे च लिड् वक्तव्यः (म.भा. २. १२०) ।

कलिङ्गेषु स्थितोऽसि ? नाहं कलिङ्गाञ् जगाम । [21]दक्षिणापथं प्रविष्टोऽसि ? नाहं दक्षिणापथं प्रविवेश ॥

## हशश्वतोर्लङ् च । (११६/२७७६)

भूतानद्यतनपरोक्षेऽर्थे[22] लिटि प्राप्ते हशश्वतोः उपपदयोः लङः प्रत्ययो भवति, चकाराल् लिट् च । इति ह अकरोत्, इति ह चकार । शश्वदकरोत्, शश्वच् चकार ॥

---

1. प्रत्ययो नास्ति फ. 2. प्राप्तः नास्ति फ. 3. मगधेषु ब. क. ड. 4. तत्र इत्यधिकम् ब. क. ड. 5. वाक्यमिदं नास्ति ब. ग. फ. 6. इति इत्यधिकम् ड. 7. च इत्यधिकम् क. 8. चेत् इत्यधिकम् अ. 9. च इत्यधिकम् ब. 10. अभुञ्ज्महि क.फ. 11. यत् नास्ति फ. 12. यत् नास्ति फ. 13. लक्ष्ये ब. 14. भूतेऽनद्यतने ब 15. च इत्यधिकम् ब. 16. च इत्यधिकम् ब. ड. फ. 17. तत्रापि ब. ड. फ. 18. उन्मत्तविषये अ. क. 19. भवत्येव क. 20. अपि अत्यन्तापह्नवेऽपि ड. 21. दक्षिणापथे किंचिदतिष्ठं कृतवान् नाहं दक्षिणापथं प्रविवेश अ. क. ड, उदाहरणमिदं नास्ति ब. 22 वर्तमानात् धातोः इत्यधिकम् फ, अर्थे नास्ति अ. ब. क.

## प्रश्ने चासन्नकाले । (११७/२७७७)

[1]भूतानद्यतनपरोक्षे इति वर्तते । तस्य विशेषणमेतत् । प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छ्यमाने भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद् धातोः लङ्लिटौ प्रत्ययौ भवतः । कश्चित् कञ्चित् पृच्छति । अगच्छद् देवदत्तः? जगाम देवदत्तः? अयजद् देवदत्तः? इयाज देवदत्तः? प्रश्ने इति किम्? जगाम देवदत्तः । [2]आसन्नकाले इति किम्? भवन्तं पृच्छामि, जघान कंसं किल वासुदेवः? ॥

## लट् स्मे । (११८/२७७८)

भूतान[3]द्यतनपरोक्षे इति वर्तते । स्मशब्दे उपपदे भूतानद्यतनपरोक्षे[4] लट् प्रत्ययो भवति । लिटोऽपवादः । [5]नडेन स्म पुराधीयते । [6]ऊर्णया स्म पुराधीयते ॥

## अपरोक्षे च । (११९/२७७९)

अपरोक्षे च भूतानद्यतनेऽर्थे वर्तमानाद् धातोः [7]स्मे उपपदे लट् प्रत्ययो भवति । [8]एवं स्म[9] पिता ब्रवीति । [10]इति स्मोपाध्यायः कथयति ॥

## ननौ पृष्टप्रतिवचने । (१२०/२७८०)

[11]अनद्यतने परोक्षे इति निवृत्तम् । भूतसामान्ये विधिरयम् । ननुशब्दे उपपदे प्रश्नपूर्वके प्रतिवचने[12] [13]भूतेऽर्थे लट् प्रत्ययो भवति । [14]लुङोऽपवादः । अकार्षीः कटं देवदत्त? ननु करोमि भोः । अवोचस्तत्र किंचिद् [15]देवदत्त? ननु ब्रवीमि भोः । पृष्टप्रतिवचने इति किम्? ननु अकार्षीत् माणवकः ॥

## नन्वोर्विभाषा । (१२१/२७८१)

भूते इत्येव[16] । नशब्दे नुशब्दे च उपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति भूते[17] । अकार्षीः कटं देवदत्त? न करोमि भोः, नाकार्षम् । अहं नु करोमि, [18]अहं नु अकार्षम् ॥

## पुरि लुङ् चास्मे । (१२२/२७८२)

अनद्यतनग्रहणमिह मण्डूकप्लुत्याऽनुवर्तते । पुराशब्दे उपपदे [19]स्मशब्दवर्जिते [20]भूतानद्यतनेऽर्थे विभाषा लुङ् प्रत्ययो भवति, लट् च । ताभ्यां मुक्ते पक्षे यथाविषयमन्येऽपि प्रत्यया भवन्ति । वसन्तीह पुरा छात्राः, अवात्सुरिह पुरा छात्राः, अवसन्निह पुरा छात्राः, ऊषुरिह [21]पुरा छात्राः । अस्मे इति [22]किम्? नडेन स्म पुरा अधीयते ॥

---

1. भूते इति वर्तते फ. 2. पञ्चवर्षाभ्यन्तरं आसन्नकालः इत्यधिकम् फ. 3. अनद्यतन नास्ति फ. 4. वर्तमानात् धातोः इत्यधिकम् ब.ड.फ.ह. 5. नटेन क. 6. उदाहरणमिदं नास्ति फ. 7. स्मशब्दे अ.ब.क. ड.फ.ह. 8. अपरोक्षे इत्यधिकम् अ. 9. मे इत्यधिकम् अ. 10. परोक्षे इत्यधिकम् अ. 11. अनद्यतने— लुङोऽपवादः नास्ति ह. 12. गम्यमाने इत्यधिकम् अ. ब. क. ड. फ. 13. भूते अ. ब, धातोः इत्यधिकम् फ. 14. लुङोऽपवादः नास्ति अ.ब.क. 15. देवदत्त नास्ति फ, किं देवदत्त अ.ब. 16. वर्तते इत्यधिकम् फ. 17. अर्थे वर्तमानात् धातोः इत्यधिकम् फ. 18. भो इत्यधिकम् फ. 19. स्मवर्जिते ब.क. 20. भूतेऽनद्यतने क, धातोः इत्यधिकम् फ. 21. वा इत्यधिकम् फ. 22. किम् नास्ति क.

## वर्तमाने लट्। (१२३/२१५३)

[1]आरब्धोऽपरिसमाप्तश्च वर्तमानः। [2]तस्मिन् वर्तमानेऽर्थे वर्तमानाद् धातोः लट् प्रत्ययो भवति। पचति। [3]पठति ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे। (१२४/३१००)

लटः[4] शतृशानचौ इत्येतावादेशौ भवतः, अप्रथमान्तेन चेत् तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पश्य। पचता कृतम्। पचमानेन कृतम्। अप्रथमासमानाधिकरणे इति किम्? [5]देवदत्तः पचति। लट् इति वर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। क्वचित् प्रथमासमानाधिकरणेऽपि [6]भवति। सन् ब्राह्मणः। अस्ति ब्राह्मणः। [7]विद्यमानः ब्राह्मणः। विद्यते ब्राह्मणः। जुह्वत्[8]। जुहोति। अधीयानः[9]। अधीते ॥

[२७२] [10]माङ्याक्रोशे।

मा पचन्। मा पचमानः।

केचिद् विभाषाग्रहणमनुवर्तयन्ति 'नन्वोर्विभाषा' (३.२.१२१/२७८१) [11]इति। सा च [12]व्यवस्थिता। तत्र यथादर्शनं [13]प्रयोगा नेतव्याः ॥

## सम्बोधने च। (१२५/३१०२)

प्रथमासमानाधिकरणार्थ आरम्भः। सम्बोधने च विषये लटः शतृशानचौ [14]प्रत्ययौ भवतः। हे पचन्। हे पचमान ॥

## लक्षणहेत्वोः क्रियायाः। (१२३/३१०६)

लक्ष्यते चिह्न्यते येन तल्लक्षणम्। जनको हेतुः। धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ चार्थे वर्तमानाद धातोः परस्य लटः शतृशानचौ आदेशौ भवतः, तौ चेल्लक्षणहेतू क्रियाविषयौ भवतः। [15]लक्षणे – शयाना भुञ्जते यवनाः। तिष्ठन्तोऽनुशासति गणकाः। हेतौ – अर्जयन् वसति। अधीयानो वसति। लक्षणहेत्वोः इति किम्? [16]पचति, पठति। क्रियायाः इति किम्? द्रव्यगुणयोर्मा भूत्। यः कम्पते सोऽश्वत्थः। यदुत्प्लवते तल्लघु। यन्निषीदति तद्गुरु। लक्षणहेत्वोः इति निर्देशः [17]पूर्वनिपातव्यभिचारलिङ्गम् ॥

---

1. प्रारब्धः अ. क. ब. फ. 2. तस्मिन् नास्ति ब. क, वर्तमानेऽर्थे नास्ति अ. 3. पठति नास्ति अ. ब. क. 4. स्थाने इत्यधिकम् अ. ड. 5. देवदत्तः नास्ति फ़. 6. भवतः ड. 7. विद्यमानो विद्यते ब, ब्राह्मणः नास्ति अ. 8–9. ब्राह्मणः इत्यधिकम् फ. 10. माङ चाक्रोशे ब. 11. इत्यतः ब. ड. 12. व्यवस्थिते विभाषा अ. ब. क. फ. ह. 13. प्रयोगो नेतव्यः इ. फ. ग. ह. 14. आदेशौ अ. ब. क. ड. ह. 15. लक्षणे नास्ति क. 16. पचति च पठति च अ. ब. क. 17. पूर्वनिपातव्यभिचारार्थः अ, पूर्वनिपातव्यभिचारचिह्नम् ड. इ. ग.

## तौ सत्। (१२७/३१०६)

तौ शतृशानचौ सत्सञ्ज्ञौ भवतः। तौग्रहणमुपाध्यसंसर्गार्थम्। शतृशानज्मात्रस्य सञ्ज्ञा भवति। ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः। सत्प्रदेशाः – 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' (२.२.११/७०५) इत्येवमादयः॥

## पूङ्यजोः शानन्। (१२८/३१०८)

पूङो यजेश्च [1]धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः। यदि प्रत्ययाः शानन्नादयः न लादेशाः, कथं [2]सोमं पवमानः, नडमाघ्नानः इति षष्ठीप्रतिषेधः? तृन् इति [3]प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः? 'लटः शतृशानचावप्रथमासमानाधिकरणे' (३.२.१२४/३१००) इत्यतःप्रभृति आ तृनो (३.२.१३५/३११५) नकारात्।

[२७३] द्विषः शतुर्वा वचनम्।

चौरस्य द्विषन्, चौरं द्विषन्॥

## ताच्छील्यवयोवचनशक्तिषु चानश्। (१२९/३१०९)

ताच्छील्यं तत्स्वभावता। वयः[4] शरीरावस्था यौवनादिः। शक्तिः सामर्थ्यम्। ताच्छील्यादिषु[5] धातोः चानश् प्रत्ययो भवति। ताच्छील्ये तावत् – कतीह मुण्डयमानाः। कतीह भूषयमाणाः। वयोवचने – कतीह कवचं पर्यस्यमानाः। कतीह शिखण्डं वहमानाः। शक्तौ – कतीह निघ्नानाः। कतीह पचमानाः (म.भा. २.१३०)॥

## इङ्धार्योः शत्रकृच्छ्रिणि। (१३०/३११०)

इङो धारेश्च [6]धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्तरि। अकृच्छ्रः सुखसाध्यो यस्य [7]कर्तुर्धात्वर्थः सोऽकृच्छ्री। अधीयन् पारायणम्। धारयन्नुपनिषदम्। अकृच्छ्रिणि इति किम्? कृच्छ्रेण अधीते। कृच्छ्रेण धारयति॥

## द्विषोऽमित्रे। (१३१/३१११)

अमित्रः शत्रुः। अमित्रे कर्तरि द्विषेर्धातोः शतृप्रत्ययो भवति। द्विषन्, द्विषन्तौ, द्विषन्तः। अमित्रे इति किम्? द्वेष्टि भार्या पतिम्॥

---

1. धातोः नास्ति फ. 2. सोऽयं ब. 3. प्रत्याहारनिर्देशग्रहणात् फ, प्रत्याहारः ब. 4. कालकृता इत्यधिकम् अ. ड. 5. गम्यमानेषु इत्यधिकम् अ. क. ड. फ. 6. धात्वोः नास्ति अ. क. फ. 7. कर्तुः नास्ति फ.

## सुञो यज्ञसंयोगे। (१३२/३११२)

यज्ञेन संयोगः यज्ञसंयोगः। [1]यज्ञसंयुक्तेऽभिषवे वर्तमानात् [2]सुनोतेर्धातोः शतृप्रत्ययो भवति। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्रिण उच्यन्ते। [3]संयोगग्रहणं [4]प्रधानकर्तृप्रतिपत्त्यर्थम्। याजकेषु मा भूत्। यज्ञसंयोगे इति किम्? सुनोति सुराम्॥

## अर्हः प्रशंसायाम्। (१३३/३११३)

प्रशंसा स्तुतिः। अर्हतेर्धातोः प्रशंसायां[5] शतृप्रत्ययो भवति। [6]अर्हन्निह भवान् विद्याम्। अर्हन्निह भवान् पूजाम्। प्रशंसायाम् इति किम्? अर्हति चौरो [7]वधम्॥

## आ क्वेः तच्छीलतद्धर्मतत्साधुकारिषु। (१३४/३११४)

'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' (३.२.१७७/३१५७) इति क्विपं वक्ष्यति। आ एतस्मात् क्विप्[8]संशब्दाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ चायम् [9]आङः। तेन क्विपोऽप्ययमर्थनिर्देशः। तदिति धात्वर्थः शीलादि[10]विशेषणत्वेन निर्दिश्यते। तच्छीलो यः स्वभावतः फलनिरपेक्ष- स्तत्र प्रवर्तते। तद्धर्मा तदाचारः, यः [11]स्वधर्मे ममायमिति प्रवर्तते विनापि शीलेन। तत्साधुकारी यो धात्वर्थं साधु करोति। उत्तरत्रै[12]वोदाहरिष्यामः॥

## तृन्। (१३५/३११५)

सर्वधातुभ्यः तृन्प्रत्ययो भवति [13]तच्छीलादिषु कर्तृषु। [14]नकारः स्वरार्थः। तच्छीले [15]तावत्—कर्ता कटान्। वदिता जनापवादान्। तद्धर्मणि—[16]मुण्डयितारः श्राविष्ठायनाः भवन्ति वधूमूढाम्। अन्नमपहर्तारः आह्वरकाः भवन्ति श्राद्धे सिद्धे[17]। [18]उन्नेतारः तौल्वलायनाः भवन्ति पुत्रे जाते। तत्साधुकारिणि—कर्ता[19]कटम्। गन्ता [20]खेटम्।

[२७४] तृन्विधावृत्विक्षु चानुपसर्गस्य (म. भा. २.१३०)।

होता। पोता। अनुपसर्गस्य इति किम्? उद्गाता। प्रतिहर्ता। तृजेव भवति। स्वरे विशेषः।

[२७५] नयतेः षुक् च (म. भा. २.१३०)।

नेष्टा।

---

1. यज्ञसंयोगे अ. फ. 2. सुञः फ. 3. संयोगोपाधिग्रहणम् फ. 4. प्रधानकर्तृत्वसंप्रत्ययार्थम् फ, प्रधानभूतकर्तृत्वप्रत्ययार्थम् क, प्रधानकर्तृसंप्रत्ययार्थम् ब. ड. 5. विषये इत्यधिकम् फ. ड, प्रशंसायाः विषये क. 6. उदाहरणमिदं नास्ति अ. फ. 7. वधम् नास्ति फ, बन्धम् क. ड. 8. शब्दनात् फ. 9. आङ्कारः फ, आकारः अ. ब. क, आङ नास्ति ह. 10. °विशेषणत्वे ह.व.क.ड. 11. स्वधर्मो अ.ब.क.ड. 12. एव नास्ति अ. 13. ताच्छील्यादिषु ब.फ. 14. नकारः ड. 15. न चेत् कर्ता क. 16. मुण्ड इति क्विप् इत्यधिकम् फ. 17. सति इत्यधिकम् अ. ड. 18. उन्नेतारः नास्ति क.ड, तौल्वलायनाः नास्ति ग, भवन्ति नास्ति फ. 19. विकटम् अ.क. 20. खेलम् ड.

[२७६] त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च। (म.भा.२.१३१)

त्वष्टा[1]।

[२७७] क्षदेश्च [2]नियुक्ते। (म.भा.२.१३१)

क्षत्ता। क्वचिदधिकृत उच्यते।

[२७८] छन्दसि तृच् च। (म.भा.२.१३१)

क्षतृभ्यः [3]सङ्ग्रहीतृभ्यः (वा.सं.१६.२६)। स्वरे विशेषः॥

## अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्। (१३६/३११६)

अलङ्कृञादिभ्यो [4]धातुभ्यः तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलङ्करिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः।

[२७९] [5]अलङ्कृञो मण्डनार्थाद् युचः पूर्वविप्रतिषेधेनेष्णुज् वक्तव्यः।

## णेश्छन्दसि। (१३७/३११७)

ण्यन्ताद् धातोः छन्दसि विषये [6]तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। 'दृषदं [7]धारयिष्णवः' (शां.आ.१२.२)। '[8]वीरुधः पारयिष्णवः' (ऋ.१०.९७.३)॥

## भुवश्च। (१३८/३११८)

भवतेर्धातोः छन्दसि विषये तच्छीलादिषु इष्णुच् प्रत्ययो भवति। भविष्णुः (मै.सं.१.८.१)। योगविभागः उत्तरार्थः। चकारोऽनुक्तसमुच्चयार्थः। [9]भ्राजिष्णुना लोहितचन्दनेन॥

## ग्लाजिस्थश्च क्स्नुः। (१३९/३११९)

छन्दसि इति निवृत्तम्। ग्ला जि स्था इत्येतेभ्यो धातुभ्यः, चकारात् भुवश्च तच्छीलादिषु क्स्नुः प्रत्ययो भवति। ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः। गिच्चायं प्रत्ययो न कित्। तेन स्थः ईकारो न भवति। 'क्ङिति च' (१.१.५/२२१७) इत्यत्र गकारोऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति। 'श्र्युकः किति' (७.२.११/२३८१) इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति।

---

1. देवता इत्यधिकम् ह. 2. युक्ते फ. 3. संगृहीतृभ्यः ड. 4. धातुभ्यः – कर्तृषु नास्ति फ. 5. वाक्यमिदं नास्ति अ. ब. क. ड. फ. 6. तच्छीलादिषु कर्तृषु नास्ति अ. ह. 7. धारयिश्णुः ह. 8. वीरुधः नास्ति फ. 9. भ्राजिष्णुः फ.

क्स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥ (म. भा. २. १३२)

[२८०] दंशेश्छन्दस्युपसङ्ख्यानम् ।

'दंक्ष्णवः पशवः' (वा. सं. १५. १५. ३) ।

## त्रसिगृधिधृषिक्षिपेः क्नुः । (१४०/३१२०)

त्रसादिभ्यो धातुभ्यः तच्छीलादिषु[1] क्नुः [2]प्रत्ययो भवति । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥

## शमित्यष्टाभ्यो घिनुण् । (१४१/३१२१)

इति शब्दः [3]आद्यर्थः । शमादिभ्यो धातुभ्योऽ[4]ष्टाभ्यः तच्छीलादिषु कर्तृषु घिनुण् प्रत्ययो भवति । 'शम उपशमे' (धा. पा. १२०२) इत्यतः [5]प्रभृति 'मदी हर्षे' (धा.पा. १२०९) इत्येवमन्तः शमादिर्दिवाद्यन्तर्गणः । घकार [6]उत्तरत्र कुत्वार्थः । उकार उच्चारणार्थः । [7]णकारो वृद्ध्यर्थः । [8]शमी । तमी । दमी । श्रमी । भ्रमी । [9]क्लमी । प्रमादी । उन्मादी । अष्टाभ्यः इति किम् ? असिता ॥

## संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । (१४२/३१२२)

घिनुण् अनुवर्तते । संपृचादिभ्यो धातुभ्यो घिनुण्[10] भवति तच्छीलादिषु[11] । 'पृची सम्पर्के' (धा. पा. १४६३) इति रुधादिर्गृह्यते नत्वदादिर्लुग्विकरणत्वात् । परिदेवि[12]र्भ्वादिर्गृह्यते 'देवृ देवने' (धा. पा. ५००) इति । 'क्षिप प्रेरणे' (धा. पा. ११२२, १२८६) दिवादिस्तुदादिश्च सामान्येन गृह्यते । 'युज समाधौ' (धा. पा. ११७८) दिवादिः, 'युजिर् योगे' (धा. पा. १४४५) रुधादिः । द्वयोरपि ग्रहणम् । 'रञ्ज रागे' (धा. पा. ११६८) इत्यस्य निपातनादनुनासिकलोपः । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । [13]त्यागी । [14]रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ॥

## वौ कषलसकत्थस्रम्भः । (१४३/३१२३)

'कष [15]हिंसार्थः' (धा. पा. ६८५), 'लस श्लेषणक्रीडनयोः' (धा. पा. ७१४), 'कत्थ श्लाघायाम्' (धा. पा. ३७), 'स्रम्भु विश्वासे' (धा. पा. ७५७), [16]एतेभ्यो धातुभ्यो विशब्दे उपपदे घिनुण् प्रत्ययो भवति[17] । विकाषी । विलासी । विकत्थी । विस्रम्भी ॥

---

1. कर्तृषु इत्यधिकम् अ. ब. क. फ. ह. 2. प्रत्ययो भवति नास्ति फ. 3. आद्यर्थेऽनुवर्तते फ. ह, आद्यर्थे वर्तते अ. 4. अष्टाभ्यः नास्ति ब. 5. आरभ्य ब. 6. उत्तरसूत्रे ब. 7. वाक्यमिदं नास्ति ब. क. फ. 8. शमी नास्ति अ. 9. क्षमी फ. 10. प्रत्ययः इत्यधिकम् फ. 11. कर्तृषु इत्यधिकम् अ. ब. क. 12. भौवादिकः ब, भूवादिः अ. क, गृह्यते नास्ति फ. 13. यागी फ. 14. राजी ग. 15. हिंसायाम् ह. 16. इत्येतेभ्यः कषादिभ्यः फ. 17. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. ड.

## अपे च लषः । (१४४/३१२४)

'लष कान्तौ' (धा.पा.८८९), अस्माद् धातोः [1]अप उपपदे, [2]चकाराद् वौ च घिनुण्[3] भवति। अपलाषी । [4]विलाषी ॥

## प्रे लपसृद्रुमथवदवसः । (१४५/३१२५)

प्रे उपपदे [5]लपादिभ्यः घिनुण्[6] भवति। प्रलापी। [7]प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। [8]वसः इति 'वस निवासे' (धा. पा. १००६) इत्यस्य ग्रहणं नाच्छादनार्थस्य, [9]लुग्विकरणत्वात् ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् । (१४६/३१२६)

निन्दादिभ्यो धातुभ्यः[10]तच्छीलादिषु कर्तृषु वुञ् प्रत्ययो भवति। पञ्चम्यर्थे प्रथमा। '[11]क्लिश उपतापे' (धा. पा. ११६२), 'क्लिशू विबाधने' (धा. पा. १५२३)। द्वयोरपि ग्रहणम्। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। [12]परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। [13]असूयकः। [14]ण्वुलैव सिद्धे वुञ्विधानं [15]ज्ञापनार्थं, [16]ताच्छीलिकेषु[17]वाऽसरूपन्यायेन [18]तृजादयो न भवन्ति इति (म. भा. २. १३३) ॥

## देविक्रुशोश्चोपसर्गे । (१४७/३१२७)

देवयतेः क्रुशेश्च उपसर्गे उपपदे[19] वुञ् प्रत्ययो भवति। आदेवकः। [20]परिदेवकः। [21]आक्रोशकः। परिक्रोशकः। उपसर्गे इति किम्? देवयिता। क्रोष्टा[22] ॥

## चलनशब्दार्थादकर्मकाद् युच् । (१४८/३१२८)

चलनार्थेभ्यः शब्दार्थेभ्यश्च [23]अकर्मकेभ्यो धातुभ्यस्त[24]च्छीलादिषु कर्तृषु युच् प्रत्ययो भवति। चलनः। [25]चोपनः। शब्दार्थेभ्यः – शब्दनः। [26]रवणः। अकर्मकात् इति किम्? पठिता विद्याम् ॥

## अनुदात्तेतश्च हलादेः । (१४९/३१२९)

अनुदात्तेद् यो धातुः हलादिरकर्मकः[27], [28]ततश्च युच् प्रत्ययो भवति। वर्तनः। वर्धनः। अनुदात्तेतः इति किम्? भविता। हलादेः इति किम्? एधिता। आदिग्रहणं किम्? जुगुप्सनः। मीमांसनः। अकर्मकात् [29]इत्येव, वसिता वस्त्रम् ॥

---

1. अपशब्दे फ, अपशब्दादौ अ. क. 2. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. फ. ड. 3. प्रत्ययो इत्यधिकम् ब. ग. ड. ह. 4. अविलाषी अ. 5. लषादिभ्यः धातुभ्यः अ. ब. क. ड, तच्छीलादिषु कर्तृषु इत्यधिकम् ब. फ. 6. प्रत्ययो इत्यधिकम् अ. ग. 7. प्रस्रापी, प्रस्ताती फ. 8. वस इति नास्ति क. ह. 9. तस्य इत्यधिकम् ग. 10. तच्छीलादिषु नास्ति फ. 11. क्लिशु ड, क्लिश विवासने ह. 12. परिक्षेपकः नास्ति ब. 13. आसूयकः ह. 14. निन्दादिभ्यः धातुभ्यः इत्यधिकम् फ. 15. ज्ञापकं अ. क. फ. 16. तच्छीलादिषु अ. 17. वासरूपेण फ. 18. तृनादयः ड. 19. तच्छीलादिषु कर्तृषु इत्यधिकम् अ. ब. क. ह, तच्छीलादिषु फ. 20. प्रदेवयितुं शीलमस्य इत्यधिकम् क. 21. व्याक्रोशकः ड. 22. तृनेव इत्यधिकम् ड. 23. अकर्मकेभ्यः नास्ति फ. 24. तच्छीलेषु फ. 25. कम्पनः अ. 26. कवनः अ. 27. अकर्मकः नास्ति ब. ह. 28. तस्मात् फ. ह, तच्छीलादिषु कर्तृषु इत्यधिकम् अ. ब. क. फ. ह. 29. इति किम् फ.

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । (१५०/३१३०)

जुप्रभृतिभ्यो [1]धातुभ्यो युच् प्रत्ययो भवति [2]तच्छीलादिषु कर्तृषु । [3]जु इति सौत्रो धातुः[4] । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थमिह[5] । [6]ज्ञापनार्थं च पदिग्रहणमन्ये वर्णयन्ति, ताच्छीलिकेषु [7]मिथो वाऽसरूपविधिर्नास्ति इति । तेन अलङ्कृञः तृन् न भवति [8]अलङ्कर्ता इति । तथाहि पदेरुकञा विशेषविहितेन [9]सामान्यविहितस्य युचोऽसरूपत्वात् समावेशो [10]भवेदेव, किमनेन विधानेन ? [11]ज्ञापनार्थं पुनर्विधीयते । प्रायिकं चैतद् [12]ज्ञापकम् । क्वचित् समावेश इष्यत एव, [13]गन्ता खेटं विकत्थनः ॥

## क्रुधमण्डार्थेभ्यश्च । (१५१/३१३१)

'क्रुध कोपे' (धा. पा. ११९०), 'मडि भूषायाम्' (धा. पा. १५८८) [14]इत्येतदर्थेभ्यः च धातुभ्यो युच् प्रत्ययो भवति[15] । क्रोधनः । [16]रोषणः । [17]मण्डनः । भूषणः ॥

## न यः । (१५२/३१३२)

यकारान्तात् धातोः[18] युच् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । [19]क्नूयिता । क्ष्मायिता[20] ॥

## सूददीपदीक्षश्च । (१५३/३१३३)

[21]सूद दीप दीक्ष इत्येतेभ्यश्च[22] युच् प्रत्ययो न भवति[23] । [24]अनुदात्तेत्त्वात् प्राप्तः प्रतिषिध्यते । सूदिता । दीपिता । दीक्षिता[25] । ननु च दीपेर्विशेषविहितो रप्रत्ययः [26]दृश्यते, 'नमिकम्पिस्म्यजसकमहिंसदीपो [27]रः' (३. २. १६७/३१४७) इति, स एव बाधको [28]भविष्यति, किं प्रतिषेधेन ? वाऽसरूपेण [29]युजपि प्राप्नोति । ताच्छीलिकेषु च वाऽसरूपविधिर्नास्ति इति प्रायिकमेतद् इत्युक्तम् । तथा च समावेशो दृश्यते, कम्रा युवतिः, कमना युवतिः, कम्प्रा शाखा, कम्पना शाखा इति[30] । सूदेः [31]युचि प्रतिषिद्धे कथं मधुसूदनः, [32]रिपुसूदनः इति ? अनित्योऽयं प्रतिषेधः इति योगविभागाद् विज्ञायते । अथवा मधुसूदनादयो नन्द्यादिषु [33]द्रक्ष्यन्ते । '[34]कृत्यल्युटो बहुलम्' (३.३.११३/२८४१) इति ल्युडन्ता वा ॥

---

1. दशभ्यः इत्यधिकम् अ. 2. तच्छीलादिषु कर्तृषु नास्ति फ. ह. 3. जुस् फ. 4. वर्गे वर्तते इत्यधिकम् फ. 5. इह नास्ति अ. ह. 6. ज्ञापकार्थं च ह, ज्ञापकार्थं च परिग्रहणं ब, च नास्ति अ. 7. मिथो नास्ति ह. 8. अलङ्करणम् ह. 9. सामान्यविहितो युज् असरूपत्वात् समाविशत्येव अ. 10. सिद्ध एव ह. 11. ज्ञापकार्थं अ. ब. क. ह. 12. ज्ञापकम् नास्ति ह. 13. गन्ता वेदं विकत्थन एव ह, गन्ता खेलं विकत्थनः अ. क, गन्ता स्वेरं विकसनः ब. 14. इत्येव फ. 15. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. 16. शोषणः क. 17. मण्डार्थेभ्यः इत्यधिकम् अ. ब. क. ह, मण्डनार्थेभ्यः च इत्यधिकम् ड. 18. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. 19. क्नेयिता ह. 20. तृन् इत्यधिकम् ड. 21. सूदादिभ्यः धातुभ्यः फ. 22. धातुभ्यः इत्यधिकम् ड. 23. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. 24. अनुदात्तेत् इत्यतः ग. ह. 25. तृन् इत्यधिकम् ड. 26. दृश्यते नास्ति ब. फ. 27. र प्रत्ययः फ. 28. भवति फ. 29. अपि नास्ति फ. 30. इति नास्ति फ. 31. युच् प्रतिषिद्धः ह. 32. बलसूदनः फ. ह, नास्ति अ. क. 33. दृश्यन्ते फ. ह. 34. वाक्यमिदं नास्ति अ. ब. क. ड. फ. ह.

## लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्। (१५४/३१३४)

लषादिभ्यो धातुभ्यः [1]तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। [2]अपलाषुकं वृषलसङ्गतम्। प्रपातुका [3]गर्भा भवन्ति। [4]उपपादुकं सत्त्वम्। उपस्थायुका एनं [5]पशवो भवन्ति। प्रभावुकमन्नं [6]भवति। [7]प्रवर्षुकाः पर्जन्याः। आघातुकं [8]पाकलिकस्य मूत्रम्। [9]कामुका एनं स्त्रियो भवन्ति। आगामुकं वाराणसीं रक्ष आहुः। [10]किंशारुकं तीक्ष्णमाहुः॥

## जल्पभिक्षकुट्टलुण्टवृङः षाकन्। (१५५/३१३५)

जल्पादिभ्यो धातुभ्यः [11]तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः। भिक्षाकः। [12]कुट्टाकः। लुण्टाकः। वराकः। वराकी॥

## प्रजोरिनिः। (१५६/३१३६)

प्रपूर्वाज् जवतेः[13] तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति। प्रजवी, प्रजविनौ[14]॥

## जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च। (१५७/३१३७)

'[15]जि जये' (धा. पा. ५६१)। '[16]दृङ आदरे' (धा. पा. १४१२)। 'क्षि क्षये[17]' (धा. पा. २३६), 'क्षि निवासगत्योः' (धा. पा. १४०८) इति द्वयोरपि ग्रहणम्। प्रसू इति 'षू प्रेरणे' (धा. पा. १४०९) इत्यस्य ग्रहणम्। जिप्रभृतिभ्यो धातुभ्यः इनिः प्रत्ययो भवति तच्छीलादिषु [18]कर्तृषु। जयी। [19]दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। (१५८/३१३८)

'स्पृह ईप्सायाम्' (धा. पा. १८७२), 'ग्रह ग्रहणे' (धा. पा. १९००), 'पत गतौ' (धा. पा. १८६२), चुरादौ [20]अदन्ताः पठ्यन्ते। 'दय [21]दानगतिरक्षणेषु' (धा. पा. ४८१)। 'द्रा कुत्सायां गतौ' (धा. पा. १०५५), निपूर्वस्तत्पूर्वश्च, तदो नकारान्तता च निपात्यते। 'डुधाञ्' (धा. पा. १०९३) श्रत्पूर्वः। एतेभ्यस्त[22]-च्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तन्द्रालुः। श्रद्धालुः।

[२८१] आलुचि[23] शीङो ग्रहणं कर्तव्यम्। (म. भा. २. १३४)

शयालुः॥

---

1. तच्छीलादिषु कर्तृषु नास्ति अ. क. ह. 2. अभिलाषुकं वृषलसंगमम् ग. 3. गर्भा नास्ति ब, भवन्ति नास्ति फ. 4. उपपादुकः सत्त्वः अ. क. फ. 5. सत्त्वा अ. 6. भवति नास्ति फ. 7. प्रवर्षुकः पर्जन्यः फ. ह. 8. पाकलिकस्य सूपम् फ, पाकतिलस्य अ. ब, कापालिकस्य शूलम् इ. ग. 9. कारका ह. 10. शारुकः हन्ता अ. 11. तच्छीलादिषु नास्ति ह. 12. कुट्टाकः नास्ति फ. 13. धातोः इत्यधिकम् अ. फ, तच्छीलादिषु नास्ति अ. क. ह. 14. प्रजविनः इत्यधिकम् अ. ब. क. ड. फ. ह. 15-16. नास्ति ह. 17. इति इत्यधिकम् ह. 18. कर्तृषु नास्ति फ. ह. 19. दरी नास्ति अ. क. 20. अदन्तोऽपि उच्यते ब. क, पठ्यन्ते नास्ति फ. 21. रक्षणहिंसादानेषु फ. 22. सप्तधातुभ्यः इत्यधिकम् अ. 23. प्रत्यये इत्यधिकम् अ.

## दाधेट्सिशदसदो रुः । (१६०/३१३०)

[1]दा धेट् सि शद सद इत्येतेभ्यः[2] रुः प्रत्ययो भवति । दारुः । [3]धारुर्वत्सो मातरम् 'न लोकाव्ययनिष्ठा[4]खलर्थतृनाम्' (२.३.६९/६२७) इति उकारप्रश्लेषात् षष्ठी न भवति । [5]सेरुः । शद्रुः । सद्रुः ॥

## सृघस्यदः क्मरच् । (१६०/३१४०)

सृ घसि अद इत्येतेभ्यो [6]धातुभ्यः [7]तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति । सृमरः । घस्मरः । अद्मरः ॥

## भञ्जभासमिदो घुरच् । (१६१/३१४१)

भञ्ज भास मिद इत्येतेभ्यो घुरच् प्रत्ययो भवति [8]तच्छीलादिषु कर्तृषु । भङ्गुरं काष्ठम् । [9]घित्वात् कुत्वम् । भासुरं ज्योतिः । मेदुरः पशुः । [10]भञ्जेः कर्मकर्तरि प्रत्ययः, स्वभावात् ॥

## विदिभिदिच्छिदेः कुरच् । (१६२/३१४२)

ज्ञानार्थस्य विदेः (धा. पा. १०६५) ग्रहणं न [11]लाभाद्यर्थस्य (धा. पा. १४३३), स्वभावात् । विदादिभ्यो [12]धातुभ्यः [13]तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति । विदुरः पण्डितः । भिदुरं काष्ठम् । छिदुरा रज्जुः । [14]भिदिच्छिद्योः कर्मकर्तरि [15]प्रयोगः ।

[२८२] [16]व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः ।

विधुरः ॥

## इण्नश्जिसर्तिभ्यः क्वरप् । (१६३/३१४३)

इण् नश् जि सर्ति इत्येतेभ्यो [17]धातुभ्यः तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति । [18]पकारस्तुगर्थः इत्वरः । इत्वरी । नश्वरः । [19]नश्वरी । जित्वरः । जित्वरी । सृत्वरः । सृत्वरी । [20]'नेड्वशि कृति' (७.२.८/२९८१) इति इट्प्रतिषेधः ॥

---

1. दादिभ्यो धातुभ्यः अ. ब. क. फ. 2. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. फ. 3. धारुः – न भवति नास्ति ग, धारुरिव क. ड. 4. खलर्थ नास्ति फ. 5. शरुः फ, शेरुः ह. 6. धातुभ्यः नास्ति फ. 7. तच्छीलादिषु कर्तृषु नास्ति अ. क. ह. 8. तच्छीलादिषु कर्तृषु नास्ति अ. क. ह. 9. घित्वात् नास्ति ब. फ. 10. भञ्जः ह. 11. लाभार्थस्य अ. ब. क. फ. 12. धातुभ्यः नास्ति फ. 13. तच्छीलादिषु नास्ति अ. क. 14. वाक्यमिदं नास्ति ह. 15. प्रत्ययः अ. ब. क. ड. फ. 16. व्यधेः – विधुरः नास्ति अ. ब. क. ड. ह. 17. धातुभ्यः नास्ति फ, तच्छीलादिषु नास्ति ह. 18. पकारः नास्ति अ. ब. क. 19. नश्वरी जित्वरी नास्ति अ. क. 20. वाक्यमिदं नास्ति ब. क. फ. ह.

## गत्वरश्च । (१६४/३१४४)

गत्वरः इति निपात्यते[1] । । गमेरनुनासिकलोपः क्वरप् प्रत्ययश्च[2] । गत्वरः । [3]गत्वरी ॥

## जागुरूकः । (१६५/३१४५)

जागर्तेः [4]ऊकः प्रत्ययो भवति [5]तच्छीलादिषु कर्तृषु । जागरूकः ॥

## यजजपदशां यङः । (१६६/३१४६)

[6]यजादीनां यङन्तानाम् ऊकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु । यायजूकः । जञ्जपूकः । दन्दशूकः ॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः । (१६७/३१४७)

[7]नम्यादिभ्यः धातुभ्यः तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति । नम्रं काष्ठम् । कम्प्रा शाखा । स्मेरं मुखम् । [8]अजस्रं जुहोति । हिंस्रं रक्षः । दीप्रं [9]काष्ठम् । अजस्रम् इति 'जसु[10] मोक्षणे' (धा. पा. १२१२) नञ्पूर्वो रप्रत्ययान्तः क्रियासातत्ये वर्तते ॥

## सनाशंसभिक्ष उः । (१६८/३१४८)

[11]सन् इति सन्प्रत्ययान्तो गृह्यते न [12]सनिर्धातुः, [13]अनभिधानात् व्याप्तिन्यायाद् वा । [14]सन्नन्तेभ्यो धातुभ्यः [15]आशंसेर्भिक्षेश्च तच्छीलादिषु [16]कर्तृषु उः प्रत्ययो भवति । चिकीर्षुः । जिहीर्षुः । आशंसुः । भिक्षुः । '[17]आङः शसि इच्छायाम्' (धा. पा. ६२९) इत्यस्य[18] ग्रहणं, न शंसेः स्तुत्यर्थस्य (धा. पा. ७२८) ॥

## विन्दुरिच्छुः । (१६९/३१४९)

विदेर्नुमागमः, इषेः छत्वमुकारश्च [19]प्रत्ययो निपात्यते [20]तच्छीलादिषु कर्तृषु । वेदनशीलो विन्दुः । एषणशील [21]इच्छुः ॥

## क्याच्छन्दसि । (१७०/३१५०)

क्य इति [22]क्यच्क्यङक्यषां सामान्येन ग्रहणम् । [23]क्यप्रत्ययान्ताद् धातोः छन्दसि विषये तच्छीलादिषु [24]कर्तृषु उकारप्रत्ययो भवति । मित्रयुः (मै. सं. २.६.१२) । '[25]न छन्दस्यपुत्रस्य' (७.४.३५/३५८८) इति प्रतिषेधाद् न दीर्घः । [26]सुम्नयुः (ऋ. १.७९.१०) । संस्वेदयुः (मै. सं. ४.१२.२.४४) छन्दसि इति किम्? [27]मित्रीयिता ॥

---

1. तच्छीलादिषु कर्तृषु इत्यधिकम् ब. 2. च नास्ति ह, भवति इत्यधिकम् ब. क. 3. गत्वरी नास्ति ब. अ. क. ड. फ. 4. धातोः इत्यधिकम् फ. ह. 5. तच्छीलादिषु कर्तृषु नास्ति अ. क. ह. 6. यज जप दश इत्येतेषां यङन्तानां धातूनाम् ह. 7. नम्यादिभ्यः नास्ति फ. 8. उदाहरणमिदं नास्ति फ, जुहोति नास्ति अ. ब. क. ड. ह. 9. रूपम् ह. 10. धातुः इत्यधिकम् फ, जस अ. क. ड. 11. सन् इति नास्ति अ, सन्प्रत्ययो गृह्यते अ. ब. क. 12. सनतिः ह. 13. अनभिधानात् नास्ति अ. ब. फ. 14. तेन इत्यधिकम् अ. ब. क, सनन्तेभ्यः क. 15. आशंसतेः ब. 16. कर्तृषु नास्ति अ. 17. शासि क. ह, आङः शासु ब. 18. इदं इत्यधिकम् ब. 19. प्रत्ययः नास्ति ब. 20. तच्छीलादिषु कर्तृषु नास्ति अ. 21. इषुः ब. 22. क्यच् क्यङ क्यष् इत्येतेषां अ. ह. 23. क्यन्तात् अ. ब. क. ह. 24. कर्तृषु नास्ति फ, उप्रत्ययः अ. ब. 25. न छन्दसि – दीर्घः नास्ति अ. ब. क. ह. 26. देवान् जिगाति सुम्नयुः अ. 27. पुत्रीयिता अ. ह.

## आदृगमहनजनः किकिनौ लिट् च। (१७१/३१६१)

आकारान्तेभ्यः[1] ऋवर्णान्तेभ्यः गम हन जन इत्येतेभ्यश्च[2]छन्दसि [3]विषये तच्छीलादिषु[4] किकिनौ प्रत्ययौ भवतः। लिड्वच्च[5] तौ भवतः। आत् इति तकारो [6]मुखसुखार्थः, न त्वयं तपरः, [7]मा भूत्तादपि परः तपरः इति ऋकारे तत्कालग्रहणम्। 'पपिः सोमं ददिर्गाः' (ऋ. ६.२३.४)। ददथुः मित्रावरुणा ततुरिम् (ऋ.४.३९.२) [8]मित्रावरुणौ ततुरिः।'दूरे ह्यध्वा जगुरिः' (ऋ. १०.१०८.१)। [9]'जग्मिर्युवा' (ऋ. ७.२०.१)। [10]'जघ्निर्वृत्रम्' (ऋ. ९.६१.२०)। [11]'जज्ञि बीजम्' (तै. सं. ७.५.२०.१)। अथ किमर्थं कित्त्वम्, यावता 'असंयोगाल्लिट् कित्' (१.२.५/२२४२) इति कित्त्वं सिद्धमेव ? 'ऋच्छत्यृताम्' (७.४.११/२३८३) इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्यापि बाधनार्थं[12] [13]कित्त्वम्।

[२८३] [14]किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्। (म. भा. २.१३५)

'सेदिः' (तै. आ. ४.२२.१)। [15]'नेमिः' (ऋ. २.५.३)।

[२८४] भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः [16]किकिनौ वक्तव्यौ। (म. भा. २.१३५)

[17]दधिः। चक्रिः। सस्रिः। जज्ञिः। [18]जग्मिः। नेमिः।

[२८५] सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ।

'दीर्घोऽकितः' (७.४.८३/२६३२) सासहिः। वावहिः। चाचलिः। पापतिः॥

## स्वपितृषोर्नजिङ्। (१७२/३१६२)

छन्दसि इति निवृत्तम्। स्वपेः तृषेश्च[19] [20]तच्छीलादिषु कर्तृषु नजिङ् प्रत्ययो भवति। [21]स्वप्नक्। [22]तृष्णक्।

[२८६] धृषेश्चेति वक्तव्यम्।
[23]धृष्णक्॥

## शॄवन्द्योरारुः। (१७३/३१६३)

'शॄ हिंसायाम्' (धा. पा. १४८९), 'वदि अभिवादनस्तुत्योः (धा. पा. ११), [24]एताभ्यां [25]धातुभ्यां तच्छीलादिषु कर्तृषु आरुः प्रत्ययो भवति। शरारुः। वन्दारुः॥

---

1. धातुभ्यः इत्यधिकम् ग. फ. ह, ऋकारान्तेभ्यश्च ब. 2. धातुभ्यः इत्यधिकम् ब. 3. विषये नास्ति फ. 4. कर्तृषु इत्यधिकम् ब. 5. च नास्ति ब. 6. सुखमुखार्थः फ. 7. तेन इत्यधिकम् ह. 8. ऋकारान्तेभ्यः इत्यधिकम् क, ऋवर्णात् इत्यधिकम् फ. 9. गमहनजन इत्यधिकम् अ. 10. जिजघ्निः ह. 11. जज्ञिर्बीजम् ह. मुद्रितः पाठः, वर्ष्टा पर्जन्यः इत्यधिकम् फ. ह, वर्षासु पर्जन्यः इत्यधिकम् अ. क. ब. 12. पुनः इत्यधिकम् अ. 13. कित्त्वम् नास्ति फ. 14. किकिनौ नास्ति फ. ह, किकिनौ उत्सर्गौ अ. 15. नेमिश्चक्रमिवाभवन् अ. 16. किकिनौ नास्ति ह. 17. दधि ह. 18. जग्मिः नास्ति ह. 19. धात्वोः इत्यधिकम् ब. क. फ. 20. तच्छीलादिषु नास्ति क. 21. स्वप्नक् स्वप्नजौ स्वप्नजः ब. ह. 22. तृष्णक् तृष्णजौ तृष्णजः अ. ब. क. ड. 23. धृष्णुक् धृष्णुजौ धृष्णुजः अ. ह. 24. इत्याभ्याम् क. 25. धातुभ्यां नास्ति फ.

## भियः क्रुक्लुकनौ । (१७४/३१५४)

'ञिभी भये' (धा.पा. १०८५), [1]अस्माद् धातोः [2]तच्छीलादिषु कर्तृषु [3]क्रुक्लुकनौ प्रत्ययौ भवतः । भीरुः, भीलुकः ।

[२८७] [4]क्रुकन्नपि वक्तव्यः । (म. भा. २. १३५)

भीरुकः ॥

## स्थेशभासपिसकसो वरच् । (१७५/३१५५)

'ष्ठा गतिनिवृत्तौ' (धा.पा. ९२९), 'ईश ऐश्वर्ये' (धा.पा. १०२१), 'भासृ दीप्तौ' (धा. पा. ६२४), 'पिसृ पेसृ गतौ' (धा. पा. ७१९, ७२०), 'कस [5]गतौ' (धा. पा. ८६१), [6]एतेभ्यस्तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । [7]विकस्वरः ॥

## यश्च यङः । (१७६/३१५६)

'या प्रापणे' (धा.पा. १०५०), अस्माद् [8]यङन्तात् [9]तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति । यायावरः ॥

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् । (१७७/३१५७)

भ्राजादिभ्यः धातुभ्यस्तच्छीलादिषु [10]कर्तृषु क्विप् प्रत्ययो भवति । विभ्राट्, विभ्राजौ, विभ्राजः । भाः, भासौ, भासः । धूः, धुरौ, धुरः । विद्युत्, विद्युतौ, विद्युतः । ऊर्क्, ऊर्जौ, ऊर्जः । पूः, पुरौ, पुरः । जवते[11]र्दीर्घश्च निपात्यते । जूः, जुवौ, जुवः । ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः । किमर्थमिदमुच्यते, यावता 'अन्येभ्योऽपि [12]दृश्यन्ते' (३.२.७५/२९८०), 'क्विप् च' (३.२.७६/२९८३) इति क्विप् सिद्ध एव ? ताच्छीलिकैर्बाध्यते । [13]वाऽसरूपविधिर्नास्ति इत्युक्तम् । अथ तु प्रायिकमेतत्[14] । ततस्तस्यैवायं[15] प्रपञ्चः ॥

## अन्येभ्योऽपि दृश्यते । (१७८/३१५८)

अन्येभ्योऽपि धातुभ्यः [16]ताच्छीलिकेषु क्विप् प्रत्ययो [17]दृश्यते । [18]युक् । छित् । भित् । [19]दृशिग्रहणं विध्यन्तरोप[20]सङ्ग्रहार्थम् । क्वचिद् दीर्घः, क्वचिद् द्विर्वचनम्, क्वचित् सम्प्रसारणम् । तथा चाह —

[२८८] क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च[21] । (म. भा. २. १३६)

वाक् । शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । जुग्रहणेनात्र[22] नार्थः, भ्राजादि[23]सूत्र एव गृहीतत्वात् ।

[२८९] द्युतिगमिजुहोतीनां द्वे च । (म.भा. २.१३६)

दिद्युत् । जगत् ।

[२९०] जुहोतेर्दीर्घश्च । (म. भा. २.१३६)

जुहूः ।

---

1. इत्यस्मात् अ. 2. तच्छीलादिषु नास्ति फ, कर्तृषु नास्ति ह. 3. क्रुक्लुकन् इत्येतौ फ. 4. भियः इत्यधिकम् अ.ब.क. 5. गतिशासनयोः ह. 6. एभ्यः वरच् प्रत्ययः फ, इत्येतेभ्यः धातुभ्यः अ.ब.क.ह. 7. कस्वरः अ.ब.क.ड. 8. धातोः इत्यधिकम् ब.क.फ.ह. 9. तच्छीलादिषु कर्तृषु नास्ति अ.क.फ.ह. 10. कर्तृषु नास्ति क. फ.ह. 11. दीर्घत्वं च ह. 12. दृश्यते ड. 13. वासरूपविधिश्च ब. क. 14. वावचनम् इत्यधिकम् क, वचनं इत्यधिकम् फ.ह, बाधनं इत्यधिकम् ड. 15. अयं नास्ति फ. 16. ताच्छील्यादिषु ह, कर्तृषु इत्यधिकम् ग. 17. भवति ग.फ. 18. वाक् फ, भिषक् ड. 19. विधिग्रहणं ह. 20. संग्रहणार्थम् फ. 21. च इति ब, भवति इत्यधिकम् क. 22. अत्र नास्ति अ.ब, जुग्रहणमनर्थकम् ह. 23. °सूत्रेण एव फ.

[२९१] '[1]दॄ भये' (धा.पा. ८०९) इत्यस्य ह्रस्वश्च द्वे च। (म. भा. २.१३६)

ददृत्।

[२९२] ध्यायतेः सम्प्रसारणं च[2]। (म.भा. २.१३६)

धीः ॥

## भुवः सञ्ज्ञान्तरयोः। (१७९/३१५९)

[3]भवतेर्धातोः सञ्ज्ञायामन्तरे च [4]गम्यमाने क्विप् प्रत्ययो भवति। [5]विभूर्नाम कश्चित्। अन्तरे–प्रतिभूः। धनिकाधमर्णयोरन्तरे यस्तिष्ठति स प्रतिभू[6]रुच्यते ॥

## विप्रसम्भ्यो ड्वसञ्ज्ञायाम्। (१८०/३१६०)

भुवः [7]इति वर्तते। वि प्र सम् इत्येवंपूर्वाद् भवतेर्धातोः डुप्रत्ययो भवति, न चेत् सञ्ज्ञा गम्यते। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुः जनिता। असञ्ज्ञायाम् इति किम्? विभूर्नाम कश्चित्।

[२९३] डुप्रकरणे [8]मितद्र्वादिभ्य उपसङ्ख्यानम्। (म. भा. २. १३६)

मितं द्रवति मितद्रुः। शम्भुः[9] ॥

## धः कर्मणि ष्ट्रन्। (१८१/३१६१)

धयतेर्दधातेश्च[10] कर्मणि कारके ष्ट्रन् प्रत्ययः भवति। षकारो ङीषर्थः। धयन्ति तां दधति वा भैषज्यार्थम् इति धात्री। स्तनदायिनी आमलकी च उच्यते ॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे। (१८२/३१६२)

'दाप् लवने' (धा. पा. १०६०), 'णीञ् प्रापणे' (धा. पा. ९०२), 'शसु हिंसायाम्'[11] (धा. पा. ७२७), 'यु मिश्रणे' (धा. पा. १०३४), 'युजिर् योगे' (धा. पा. १४४५), 'ष्टुञ् स्तुतौ' (धा. पा. १०४४), 'तुद व्यथने' (धा. पा. १२८२), 'षिञ् बन्धने' (धा. पा. १२४९), 'षिचिर् क्षरणे' (धा. पा. १४३५), 'मिह सेचने (धा. पा. ९९३), 'पत्लृ गतौ' (धा. पा. ८४६), 'दंश दशने' (धा. पा. ९९०), 'णह बन्धने' (धा. पा. ११६७), [12]एतेभ्यो धातुभ्यः करणे कारके [13]ष्ट्रन् प्रत्ययो भवति। [14]दाति अनेन इति दात्रम्। [15]नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। अजादित्वात् टाप्, न ङीप्। दंशेरनुनासिक[16]लोपेन निर्देशो ज्ञापनार्थः, क्ङितोऽन्यस्मिन्नपि प्रत्यये नलोपः [17]क्वचिद् भवति इति। तेन ल्युटचपि भवति। [18]दशनम्। [19]नद्ध्री ॥

---

1. दृणातेर्ह्रस्वत्वं द्वे च फ. 2. च नास्ति ब. 3. तच्छीलादिषु कर्तृषु इति निवृत्तम् इत्यधिकम् ब. 4. वर्तमाने फ. 5. मित्रभूः अ. ब. ड. 6. इति इत्यधिकम् फ. ह. 7. इति किम् ह. 8. मितद्र्वादीनाम् ह. 9. पांसुः इत्यधिकम् ब, आकृतिगणः इत्यधिकम् ड. 10. धातोः सञ्ज्ञायां विषये इत्यधिकम् फ. 11. शंसु स्तुतौ च द्वयोरपि ग्रहणम् इत्यधिकम् ब. 12. एभ्यो ह. 13. ष्टुन् ह. 14. दीयते अ. 15. नयन्ति तेन नेत्रम् ब. 16. लोपनिर्देशः ब, निर्देशः नास्ति फ. 17. क्वचित् नास्ति ब. 18. ष्ट्रन्नर्थं तु निपातनम् न भवति। शुनो दन्तः दंष्ट्रा इति निर्देशात् इत्यधिकम् ड. 19. नद्ध्री नास्ति ब. ह.

## हलसूकरयोः पुवः। (१८३/३१६४)

[1]पू इति पूङ्पूञोः [2]सामान्येन ग्रहणम्। [3]अस्माद् धातोः करणे कारके ष्ट्रन् प्रत्ययो भवति, [4]तच्चेत् करणं हलसूकरयोरवयवो भवति। हलस्य पोत्रम्। सूकरस्य पोत्रम्। मुखम् उच्यते[5]॥

## अर्तिलूधूसूखनसहचर इत्रः। (१८४/३१६७)

'[6]ऋ गतौ' (धा. पा. १०९९), 'लूञ् छेदने' (धा. पा. १४८४), 'धू विधूनने' (धा. पा. १३९९), 'षू प्रेरणे' (धा. पा. १४०९), 'खनु अवदारणे' (धा. पा. ८७९), 'षह मर्षणे' (धा. पा. ८५३), 'चर [7]गतिभक्षणयोः' (धा. पा. ५५९), [8]एतेभ्यो धातुभ्यः करणे [9]कारके इत्रः प्रत्ययो भवति। अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥

## पुवः सञ्ज्ञायाम्। (१८५/३१६६)

पूङ्पूञोः (धा. पा. ९६७, १४८३) सामान्येन ग्रहणम्। पवतेर्धातोः[10] करणे कारके इत्रप्रत्ययो भवति, समुदायेन चेत् सञ्ज्ञा गम्यते। [11]दर्भः पवित्रम्। [12]बर्हिष्पवित्रम्॥

## कर्तरि चर्षिदेवतयोः। (१८६/३१६७)

पुवः इति वर्तते। [13]पुवः करणे कर्तरि च[14] इत्रप्रत्ययो भवति। ऋषिदेवतयोः [15]यथासङ्ख्यं सम्बन्धः। ऋषौ करणे, देवतायां कर्तरि। पूयते अनेन इति पवित्रोऽयमृषिः। देवतायाम् – 'अग्निः पवित्रं स मा पुनातु। वायुः सोमः सूर्य इन्द्रः [16]पवित्रं ते मा पुनन्तु' (नि. ५. ५)॥

## ञीतः क्तः। (१८७/३०८८)

[17]ञि इद् यस्यासौ ञीत्। [18]ञीतो धातोः वर्तमाने[19]ऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता, वर्तमाने न प्राप्नोति [20]इति विधीयते। 'ञिमिदा [21]स्नेहने' (धा. पा. १२४४) – मिन्नः। [22]ञिक्ष्विदा – क्ष्विण्णः। ञिधृषा – धृष्टः॥

---

1. पू इति नास्ति ह. 2. अविशेषेण ब. क. ह. 3. पुवः अ. क. फ, पवतेः ब. 4. चेत् नास्ति फ. 5. इत्यर्थः इत्यधिकम् ब. क. 6. अर्त्यादिभ्यः धातुभ्यः फ. 7. गत्यर्थः अ. ब. क. ड, चरत्यर्थः ह. 8. इत्येतेभ्यः ब. 9. कारके नास्ति ह. 10. संज्ञायां विषये इत्यधिकम् फ. 11. दर्भपवित्रम् फ. ह. 12. बर्हिपवित्रम् ड. 13. पुवः धातोः अ. ब. क. 14. कारके इत्यधिकम् ड. 15. यथायोगं ह. 16. पवित्रः ह. 17. ञिशब्दः क. ड. ह. 18. तस्मात् इत्यधिकम् क. 19. अर्थे नास्ति अ. ब. 20. इत्यनेन फ. ह. ड. 21. स्नेहने नास्ति अ. ह. 22. उदाहरणमिदं नास्ति ग.

मतिबुद्धिपूजार्थेभ्यश्च । (१८८/३०८९)

मतिः इच्छा । बुद्धिः ज्ञानम् । पूजा सत्कारः । [1]एतदर्थेभ्यश्च धातुभ्यो [2]वर्तमानार्थे क्तप्रत्ययो भवति । राज्ञां [3]मतः । राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । राज्ञां पूजितः । राज्ञामर्चितः । अनुक्तसमुच्चयार्थश्चकारः ।

[4]शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥१॥

हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः ॥२॥ (म. भा. २. १३७)

[5]कष्टः इति भविष्यति काले । [6]अमृतः इति पूर्ववत् । वर्तमाने इत्यर्थः (म. भा. २. १३७) । तथा [7]सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः इत्येवमादयोऽपि वर्तमाने[8] द्रष्टव्याः ॥

इति [9]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
[10]तृतीयाध्यायस्य द्वितीयः पादः[11] ॥

----( ० )----

1. एवमर्थेभ्यः ब. फ. ह. 2. वर्तमाने अ. 3. मतम् फ. 4. शीलितः – द्रष्टव्याः नास्ति ग. 5. कष्टशब्दः अ. ब. क, नास्ति फ, कष्टेन ह. 6. अमृतशब्दः अ. ब. क. ह. 7. सुप्तश्च शयितश्चोभावासितो लुप्त इत्यपि । वर्तमाने स्मृताः काले शब्दा ह्येते विनिश्चताः ॥ ह. 8. काले इत्यधिकम् ह. 9. वामनकाशिकायां क, श्री नास्ति ग. फ. ह. 10. तृतीयस्य अध्यायस्य ह. 11. समाप्तः इत्यधिकम् ड.

## तृतीयाध्यायस्य तृतीयः पादः

### उणादयो बहुलम्। (१/३१६९)

[1]वर्तमान इत्येव, सञ्ज्ञायाम् इति च। उणादयः प्रत्ययाः वर्तमाने[2]ऽर्थे सञ्ज्ञायां विषये बहुलं भवन्ति। यतो विहितास्ततोऽन्यत्रापि भवन्ति। [3]केचिदविहिता [4]एव प्रयोगत उन्नीयन्ते। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उ. सू. १)। कारुः। वायुः। पायुः। जायुः। मायुः। स्वादुः। साधुः। आशुः।

बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥१॥

नाम च धातुजमाह निरुक्ते व्याकरणे [5]शकटस्य च तोकम्।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥२॥

सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद् विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥३॥ (म. भा. २.१३८)

### भूतेऽपि दृश्यन्ते। (२/३१७०)

पूर्वत्र वर्तमानाधिकाराद् [6]भूतार्थमिदं [7]वचनम्। भूते[8] काले उणादयः प्रत्यया दृश्यन्ते। वृत्तमिदं[9] वर्त्म। चरितं तदिति चर्म। भसितं तद् इति भस्म। दृशिग्रहणं [10]प्रयोगानुसारार्थम्[11] ॥

### भविष्यति गम्यादयः। (३/३१७१)

भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति। प्रत्ययस्यैव भविष्यत्कालता विधीयते न प्रकृतेः। [12]गमी ग्रामम्। [13]आगामी। प्रस्थायी। प्रतिरोधी। [14]प्रतिबोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। [15]आयावी। भावी।

[२९४] अनद्यतन उपसङ्ख्यानम्। (म. भा. २.१३९)
श्वो गमी ग्रामम् (म. भा. २.१३९) ॥

### यावत्पुरानिपातयोर्लट्। (४/२७८३)

भविष्यतीत्येव। [16]यावत्पुराशब्दयोर्निपातयोरुपपदयोः भविष्यति काले [17]धातोर्लट् प्रत्ययो भवति। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातयोः इति किम्? यावद् दास्यति तावद् भोक्ष्यते। करणभूतया पुरा व्रजिष्यति ॥

---

1. वर्तमाने नास्ति अ. 2. धात्वर्थे अ. ब. क. ड. फ. ह. 3. क्वचित् अ. ब. 4. अपि फ. 5. शठस्य ब. 6. भूतार्थं नास्ति ब. फ. 7. उक्तम् अ. क. 8. च इत्यधिकम् फ, अपि इत्यधिकम् अ. ब. ड. ह. 9. तत् ब. क. 10. प्रयोगानुसरणार्थम् ब. ह. 11. वृतिचरिभसिभ्यो अमुः इत्यधिकम् क. 12. ग्रामगमी ग.. 13. आगमी अ. 14. प्रतिबोधी नास्ति ब, प्रतिबोधी – भावी नास्ति ह. 15. आयायी अ, नास्ति ग. 16. यावत् पुरा इत्येतयोः अ. ब. क. 17. धातोः नास्ति ग.

## विभाषा कदाकर्ह्योः । (५/२७८४)

[1]कदा कर्हि इत्येतयोः उपपदयो[2]र्विभाषा भविष्यति काले[3] धातोः लट् प्रत्ययो भवति । कदा भुङ्क्ते, कदा भोक्ष्यते, [4]कदा भोक्ता । कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता ॥

## किंवृत्ते लिप्सायाम् । (६/२७८५)

[5]विभाषा इति वर्तते । किमो वृत्तं किंवृत्तम् । वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । डतरतमौ च इति परिसङ्ख्यानं स्मर्यते । किंवृत्ते उपपदे लिप्सायां[6] भविष्यति काले धातोः विभाषा लट् प्रत्ययो भवति । लिप्सा लब्धुमिच्छा, प्रार्थनाभिलाषः । कं भवन्तो भोजयन्ति, कं भवन्तो [7]भोजयितारः । लब्धुकामः पृच्छति [8]कतरो भिक्षां दास्यति, ददाति, दाता वा । [9]कतमो भिक्षां दास्यति, ददाति, दाता वा । लिप्सायाम् इति किम् ? कः पाटलिपुत्रं गमिष्यति ॥

## लिप्स्यमानसिद्धौ च । (७/२७८६)

[10]विभाषा इत्येव । लिप्स्यमानात् सिद्धिः लिप्स्यमानसिद्धिः । [11]लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले [12]धातोः विभाषा लट् प्रत्ययो भवति । अकिंवृत्तार्थोऽयमारम्भः । यो भक्तं ददाति स स्वर्गं गच्छति, यो भक्तं दास्यति स स्वर्गं गमिष्यति, यो भक्तं दाता स स्वर्गं गन्ता (म. भा. २.१४०) । लिप्स्यमानाद् भक्तात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ॥

## लोडर्थलक्षणे च । (८/२७८७)

[13]लोडर्थः प्रैषादिर्लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः । [14]तत्र वर्तमानाद् धातोः भविष्यति काले विभाषा लट् प्रत्ययो भवति । उपाध्यायश्चेद् आगच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व । उपाध्यायागमनमध्ययनप्रैषस्य [15] लक्षणम् ॥

## लिङ् चोर्ध्वमौहूर्तिके । (९/२७८८)

[16]भविष्यति, विभाषा, लोडर्थलक्षणे इति [17]सर्वमनुवर्तते । ऊर्ध्वमौहूर्तिके भविष्यति काले [18]लोडर्थलक्षणार्थे वर्तमानात् धातोर्विभाषा लिङ्प्रत्ययो भवति, चकाराल् लट् [19]च । ऊर्ध्वं मुहूर्ताद् भवः ऊर्ध्वमौहूर्तिकः । निपातनात समासः, उत्तरपदवृद्धिश्च । भविष्यतश्चैतद्विशेषणम् । ऊर्ध्वं मुहूर्तात् उपरि [20]मुहूर्तस्य उपाध्यायश्चेदागच्छेत्, उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दोऽधीष्व, अथ त्वं व्याकरणमधीष्व[21] ॥

---

1. भविष्यतीत्येव इत्यधिकम् ब. 2. विभाषया ग. 3. विषये इत्यधिकम् क, धातोः नास्ति ग. ह. 4. कदा नास्ति फ. 5. भविष्यति इत्येव इत्यधिकम् ब. 6. गम्यमानायाम् इत्यधिकम् ब. फ. ह. 7. भोजयिष्यन्ति अ. क. 8. कतरो भवतोः ड. 9. कतमो भवतां ब. 10. भविष्यति इत्येव इत्यधिकम् ब. 11. लिप्सायां ब, तस्यां अ. ब. क. ग. फ. ह. 12. धातोः नास्ति अ. क. 13. भविष्यति इत्येव । विभाषा इति च इत्यधिकम् ब. 14. तस्मिन् ब. ड. फ. ह. 15. च इत्यधिकम् ह. 16. वाक्यमिदं नास्ति ह. 17. सर्वं नास्ति ब. 18. लोडर्थलक्षणे धात्वर्थे अ. ब. क, वर्तमाने धात्वर्थे फ. 19. विभाषा अ. ब. क. 20. मुहूर्ताद्वा फ. 21. निरुक्तमधीष्व इत्यधिकम् फ.

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । (१०/३१७९)

भविष्यति इत्येव । क्रियार्थायां [1]क्रियायामुपपदे [2]धातोर्भविष्यति काले तुमुन्ण्वुलौ प्रत्ययौ भवतः । भोक्तुं व्रजति । भोजको व्रजति । भुजिक्रियार्थः व्रजिरत्रोपपदम् । क्रियायाम् इति किम् ? भिक्षिष्य इत्यस्य जटाः । क्रियार्थायाम् इति किम् ? धावतस्ते पतिष्यति दण्डः ।

अथ [3]किमर्थं ण्वुल् विधीयते यावता 'ण्वुल्तृचौ' (३.१.१३३/२८९५) इति सामान्येन विहित एव सोऽस्मिन्नपि[4] विषये भविष्यति ? [5]लृटा क्रियार्थोपपदेन बाध्येत । वाऽसरूपविधिना सोऽपि भविष्यति ? एवं तर्हि एतद् [6]ज्ञाप्यते, क्रियायामुपपदे क्रियार्थायां वाऽसरूपेण तृजादयो न भवन्ति इति । तेन कर्ता व्रजति, विक्षिपो व्रजति इत्येवमादि[7] निवर्त्यते ॥

## भाववचनाश्च । (११/३१८०)

[8]भविष्यति इत्येव । 'भावे' (३.३.१८/३१८४) इति[9] प्रकृत्य ये घञादयो [10]विहितास्ते च भाववचनाः भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति । किमर्थमिदं [11]यावता विहिता एव ते ? [12]क्रियार्थोपपदे विहितेन अस्मिन् विषये तुमुना [13]बाध्येरन् । वाऽसरूपविधिश्चात्र नास्ति इत्युक्तम् । अथ [14]वचनग्रहणं किमर्थम् ? वाचका यथा स्युः । कथं [15]च वाचका [16]भवन्ति ? याभ्यः प्रकृतिभ्यो येन [17]विशेषणेन विहिता यदि [18]ताभ्यस्तथैव भवन्ति, [19]नासामञ्जस्येन इति । पाकाय व्रजति । [20]भूतये व्रजति । [21]पुष्टये व्रजति ॥

## अण् कर्मणि च । (१२/३१८१)

भविष्यति इत्येव । [22]चकारः सन्नियोगार्थः । [23]धातोः अण् प्रत्ययो भवति [24]भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायाम् । 'कर्मण्यण्' (३.२.१/२९१३) इति सामान्येन [25]विहितो वाऽसरूपविधेरभावाद् ण्वुला बाधितः पुनरण्[26] विधीयते, [27]सोऽपवादत्वाद् ण्वुलं बाधते, परत्वात्[28] कादीन् । तेन अपवादविषयेऽपि भवत्येव । काण्डलावो व्रजति[29] । अश्वदायो [30]व्रजति । [31]गोदायो व्रजति । कम्बलदायो व्रजति ॥

## लृट् शेषे च । (१३/३१८३)

भविष्यति [32]इत्येव । शेषः क्रियार्थोपपदादन्यः । शेषे शुद्धे भविष्यति काले, चकारात् क्रियायां च उपपदे क्रियार्थायां [33]धातोः लृट् प्रत्ययो भवति । करिष्यामि इति व्रजति । हरिष्यामि इति व्रजति । [34]शेषे खल्वपि — करिष्यति । हरिष्यति ॥

---

1. क्रियायां नास्ति फ. 2. धातौ ह. 3. ण्वुल्ग्रहणं किमर्थम् फ. 4. अपि नास्ति फ. 5. विहितेन इत्यधिकम् फ. 6. अनेन इत्यधिकम् ब. 7. आदीनि निर्वर्त्यन्ते ह, निवर्तते ब. 8. वाक्यमिदं नास्ति फ. 9. वक्तव्ये इत्यधिकम् फ. 10. प्रत्ययाः इत्यधिकम् ह, विधीयन्ते फ. 11. उच्यते इत्यधिकम् ब. क. 12. क्रियार्थोपपदेन क, क्रियार्थोपपदविहितेन ब, विहितेन नास्ति ड. 13. बाध्यते ह, वाच्येरन् क, बाध्यन्ते ड. 14. वचनं फ. 15. ते क. ड. ह. 16. भवन्ति नास्ति फ. 17. विशेषणेनैव फ, ते ब. ह. 18. ताभ्याम् ह. फ. 19. नासमञ्जस्येन इति ड, इति नास्ति क. फ. 20. त्यागाय अ. ब. क. फ. ह, संपत्तये ड. 21. प्लुष्टये ह, मुष्टये व्रजति क. 22. चकारः नास्ति फ. 23. धातोः नास्ति फ. ह. 24. भविष्यति काले नास्ति ह. फ. 25. विहितोऽप्यण् अ. ब. क. 26. प्रत्ययः इत्यधिकम् फ. 27. सोपधत्वात् अ. ब. क. 28. च इत्यधिकम् अ. ब. क. ह. 29. शरलावो व्रजति इत्यधिकम् ब. क. ड. फ. ह. 30. भवति फ. 31. उदाहरणमिदं नास्ति फ. 32. इत्यनुवर्तते अ. 33. वर्तमानात् इत्यधिकम् ब. 34. शेषः फ, शुद्धे क.

## लृटः सद्वा । (१४/३१०७)

लृटः स्थाने [1]सत्सञ्ज्ञौ शतृशानचौ वा [2]भवतः । व्यवस्थितविभाषा [3]इयम् । तेन यथा लटः शतृशानचौ तथा अस्यापि भवतः । अप्रथमा[4]समानाधिकरणादिषु नित्यम्, अन्यत्र विकल्पः । करिष्यन्तं देवदत्तं पश्य । करिष्यमाणं देवदत्तं पश्य । हे करिष्यन् । हे करिष्यमाण । [5]अर्जयिष्यमाणो वसति । प्रथमासमानाधिकरणे विकल्पः – करिष्यन् देवदत्तः । करिष्यमाणो [6]देवदत्तः । करिष्यति । करिष्यते[7] ॥

## अनद्यतने लुट् । (१५/३१८५)

भविष्यति इत्येव । भविष्यदनद्यतने[8]ऽर्थे वर्तमानाद् धातोः लुट् प्रत्ययो भवति । लृटोऽपवादः । श्वः कर्ता । श्वो भोक्ता । अनद्यतने इति बहुव्रीहिनिर्देशः । तेन व्यामिश्रे न भवति । अद्य श्वो वा [9]भविष्यति ॥

[२९५] परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या । (म. भा. २.१४३)

इयं नु कदा गन्ता, या एवं पादौ निदधाति (म. भा. २.१४३) । अयं नु कदाऽध्येता, य एवमनभियुक्तः ॥

## पदरुजविशस्पृशो घञ् । (१६/३१८२)

भविष्यति इति निवृत्तम् । इत उत्तरं त्रिष्वपि[10] कालेषु प्रत्ययाः । पदादिभ्यो धातुभ्यो[11]घञ् प्रत्ययो भवति । पद्यतेऽसौ पादः । रुजत्यसौ रोगः । विशत्यसौ वेशः ।

[२९६] स्पृश उपताप इति वक्तव्यम् । (म. भा. २.१४४)

स्पृशति इति स्पर्शः उपतापः । ततोऽन्यत्र पचाद्यच् भवति । [12]स्पर्शो देवदत्तः । स्वरे विशेषः ॥

## सृ स्थिरे । (१७/३१८३)

सर्तेः धातोः स्थिरे कर्तरि घञ् प्रत्ययो भवति । स्थिरः इति कालान्तरस्थायी पदार्थ उच्यते । स चिरं तिष्ठन् कालान्तरं सरति इति धात्वर्थस्य कर्ता युज्यते । चन्दनसारः । [13]खदिरसारः । स्थिरे इति किम् ? सर्ता । सारकः ।

[२९७] व्याधिमत्स्यबलेष्विति वक्तव्यम् । (म. भा. २.१४४)

अतीसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ॥

---

1. सत्सञ्ज्ञकौ ह. 2. भविष्यति काले आदेशौ इत्यधिकम् अ. 3. चेयम् ग. 4. समानाधिकरणे फ. 5. अर्जयिष्यन् अ. फ, अर्जिष्यन् वसति । अध्येयमाणो वसति अ. ब. क. ड. 6. देवदत्तः नास्ति अ. 7. करिष्यमाणः इत्यधिकम् ह. 8. अर्थे नास्ति फ. ह. 9. आगमिष्यति ह, गमिष्यति ड. 10. अपि नास्ति अ. ह, वाक्यमिदं नास्ति ब. 11. कर्तरि इत्यधिकम् ह. 12. स्पशोऽयं देवदत्तस्य ब. क, स्पर्शोऽयं फ, स्पशो देवदत्तस्य अ. 13. वज्रसारः फ, नास्ति क.

## भावे। (१८/३१८४)

[1]भावे वाच्ये धातोः घञ् प्रत्ययो भवति। पाकः। त्यागः। [2]रागः। क्रियासामान्यवाची भवतिः। तेन अर्थनिर्देशः क्रियमाणः [3]सर्वधातुविषयः कृतो भवति। धात्वर्थश्च [4]धातुनैवोच्यते। यस्तस्य सिद्धता नाम धर्मः तत्र घञादयः प्रत्ययाः विधीयन्ते। पुंलिङ्गैकवचनं चात्र न तन्त्रं, लिङ्गान्तरे वचनान्तरेऽपि[5] चात्र प्रत्यया भवन्त्येव। पक्तिः, पचनम्, पाकौ, पाकाः [6]इति॥

## अकर्तरि च कारके सञ्ज्ञायाम्। (१९/३१८८)

कर्तृवर्जिते[7] कारके सञ्ज्ञायां विषये [8]धातोः घञ् भवति। प्रास्यन्ति तं प्रासः। प्रसीव्यन्ति [9]तं प्रसेवः। आहरन्ति तस्माद् रसम् इति आहारः। मधुराहारः। [10]तक्षशिलाहारः। [11]अकर्तरि इति किम्? मिषत्यसौ मेषः[12]। सञ्ज्ञायाम् इति किम्? कर्तव्यः कटः। [13]सञ्ज्ञाव्यभिचारार्थश्चकारः। को भवता दायो [14]दत्तः। को भवता लाभो लब्धः। कारकग्रहणं [15]पर्युदासे न कर्तव्यम्। तत् क्रियते प्रसज्यप्रतिषेधेऽपि समासोऽस्ति इति ज्ञापनार्थम्, 'आदेच उपदेशेऽशिति' (६.१.४५/२३७०) इति। इत उत्तरं भावे, अकर्तरि च कारके इति [16]द्वयमनुवर्तते॥

## परिमाणाख्यायां सर्वेभ्यः। (२०/३१९०)

परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यः घञ् प्रत्ययो भवति। एकस्तण्डुल[17]निश्चायः। द्वौ शूर्पनिष्पावौ (म.भा. २.१४६)। '[18]कॄ विक्षेपे' (धा. पा. १४१०)--द्वौ कारौ। त्रयः काराः। सर्वग्रहणमपोऽपि बाधनार्थम्। पुरस्ताद[19]पवादन्यायेन (व्या.प. ९) ह्यचमेव[20] बाधेत, [21]नापम्। परिमाणाख्यायाम् इति किम्? निश्चयः। आख्याग्रहणं रूढिनिरासार्थम्। तेन सङ्ख्याऽपि गृह्यते, [22]न प्रस्थाद्येव। घञनुक्रमणमजपोर्विषये, स्त्रीप्रत्ययास्तु न बाध्यन्ते। एका [23]तिलोच्छित्तिः। द्वे [24]प्रसृती (म.भा. २.१४५)।

[२९८] दारजारौ कर्तरि णिलुक् च। (म. भा. २.१४७)

दारयन्ति इति दाराः। [25]जरयन्ति इति जाराः॥

## इङश्च। (२१/३१९१)

इङो धातोः घञ् प्रत्ययो भवति। अचोऽपवादः। [26]अध्यायः। [27]उपेत्यास्मादधीते[28] उपाध्यायः।

---

1. भावे वचनान्तरे च क. 2. रोगः ब. ग. 3. सर्वधात्वर्थविषयः क. 4. धातुना उच्यते क. 5. अपि च नास्ति अ. फ, अपि नास्ति ब. ह. 6. इति नास्ति क. 7. अन्यस्मिन् इत्यधिकम् अ. ह. 8. धातोः नास्ति फ, घञ् प्रत्ययः अ. फ. 9. तमिति अ. फ. ह. 10. नास्ति ह. 11. कर्तरि फ. 12. बिभर्त्यसौ भर्ता इत्यधिकम् क. 13. संज्ञायां फ. 14. दत्तः नास्ति फ. 15. पर्युदासपक्षे अ. 16. द्वयमपि अ. क. फ. ह. 17. निचायः अ. ब. क. 18. कॄ विक्षेपे नास्ति ह. 19. अपवादविधिन्यायेन ब. 20. एव नास्ति फ, बाधते ड. 21. नापम् नास्ति ब. ह. 22. न प्रस्थाद्येव नास्ति ब. ड. 23. तिलोच्छ्रितिः ब. ड, तिलोच्छित्ती क. फ. 24. प्रश्रुती ड. 25. जरयति इति जारः ब. 26. प्रोध्यायः ह. 27. वाक्यमिदं नास्ति ह. 28. अधीते नास्ति अ. ब. क. ड.

[२९९] अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा [1]ङीष्। (म. भा. २.१४७)

उपाध्याया, उपाध्यायी।

[३००] [2]शॄ वायुवर्णनिवृतेषु[3]। (म. भा. २.१४७)

शारो वायुः। शारो वर्णः। शारो निवृतम्।

गौरिवाकृतनीशारः[4] प्रायेण शिशिरे कृशः (म. भा. २.१४७)॥

## उपसर्गे रुवः। (२२/३१९२)

उपसर्गे उपपदे रौतेर्धातोर्घञ् प्रत्ययो भवति। अपोऽपवादः। संरावः। उपरावः। उपसर्गे इति किम्? [5]रवः॥

## समि युद्रुदुवः। (२३/३१९४)

समि उपपदे यु द्रु दु इत्येतेभ्यः धातुभ्यः घञ् प्रत्ययो भवति। संयावः। संद्रावः। संदावः। समि इति किम्? [6]प्रयवः॥

## श्रिणीभुवोऽनुपसर्गे। (२४/३१९५)

श्रि णी भू इत्येतेभ्यो धातुभ्योऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। श्रायः। नायः। भावः। अनुपसर्गे इति किम्? प्रश्रयः। प्रणयः। [7]प्रभवः। कथं प्रभावो राज्ञः[8]? प्रकृष्टो भावः [9]इति प्रादिसमासो भविष्यति। कथं च नयो राज्ञः? 'कृत्यल्युटो बहुलम्' (३.३.११३/२८४१) इति [10]अच् [11]भविष्यति॥

## वौ क्षुश्रुवः। (२५/३१९६)

[12]वावुपपदे क्षु श्रु इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति। अपोऽपवादः। विक्षावः। विश्रावः। वौ इति किम्? क्षवः। श्रवः॥

## अवोदोर्नियः। (२६/३१९७)

अव उत् इत्येतयोरुपपदयोः नयतेर्धातोः घञ् प्रत्ययो भवति[13]। अवनायः। उन्नायः। [14]कथम् उन्नयः पदार्थानाम्[15]? 'कृत्यल्युटो बहुलम्' (३.३.११३/२८४१) इति [16]अच् भविष्यति॥

---

1. ङीष् प्रत्ययो भवति ह. 2. शृणातेर्वायुवर्णनिवृतेष्वपोऽपवादः ह. 3. उपसंख्यानम् इत्यधिकम् ब. 4. अकृतप्रावरणः इत्यर्थः इत्यधिकम् अ. 5. रवः नास्ति ह. 6. यवः द्रवः दवः अ.फ.ह, यवः ब. 7. प्रभवः नास्ति फ. 8. इति इत्यधिकम् फ. 9. तत् फ. 10. अच् नास्ति अ. 11. भवति क. 12. विशब्दे फ.ह. 13. अचि प्राप्ते इत्यधिकम् ह. 14. कथम् नास्ति ह. 15. इति इत्यधिकम् ह. 16. अच् नास्ति फ. ह, अङ् ब.

## प्रे द्रुस्तुस्रुवः। (२७/३१९८)

प्रशब्दे उपपदे द्रु स्तु स्रु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति[1]। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्र इति किम्? द्रवः। स्तवः। स्रवः॥

## निरभ्योः पूल्वोः। (२८/३१९९)

पू इति पूङ्पूञोः [2]सामान्येन ग्रहणम्। 'लूञ् छेदने' (धा.पा.१४८४)। यथासङ्ख्यमुपसर्गसम्बन्धः। निरभिपूर्वयोः पूल्वोर्धात्वोः घञ् प्रत्ययो भवति। निष्पावः। अभिलावः। निरभ्योः इति किम्? पवः। लवः॥

## उन्न्योर्ग्रः। (२९/३२००)

'गॄ शब्दे' (धा.पा.१४९९), 'गॄ निगरणे' (धा.पा.१४११), द्वयोरपि ग्रहणम्। उन्न्योरुपपदयोः गॄ इत्येतस्माद् धातोः घञ् प्रत्ययो भवति। उद्गारः समुद्रस्य। निगारो देवदत्तस्य। उन्न्योः इति किम्? गरः॥

## कॄ धान्ये। (३०/३२०१)

उन्न्योः इति वर्तते। कॄ इत्येतस्माद् धातोरुन्न्योः उपपदयोः घञ् प्रत्ययो भवति, धान्यविषयश्चेद् धात्वर्थो भवति। विक्षेपार्थस्य किरतेर्ग्रहणं, [3]न हिंसार्थस्य, अनभिधानात्। उत्कारो धान्यस्य। निकारो धान्यस्य[4]। धान्ये इति किम्? [5]भैक्ष्योत्करः। [6]पुष्पनिकरः॥

## यज्ञे समि स्तुवः। (३१/३२०२)

यज्ञविषये प्रयोगे सम्पूर्वात् स्तौतेर्घञ् प्रत्ययो भवति। संस्तावः छन्दोगानाम्। [7]समेत्य स्तुवन्ति यस्मिन देशे छन्दोगाः स देशः संस्तावः इत्युच्यते। यज्ञे इति किम्? संस्तवः छात्रयोः[8]॥

## प्रे स्त्रोऽयज्ञे। (३२/३२०३)

स्तॄञ् [9]आच्छादने (धा.पा. १२५३), अस्माद् धातोः प्रशब्दे उपपदे घञ् प्रत्ययो भवति [10]न चेद् यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः[11]। [12]अयज्ञे इति किम्? बर्हिष्प्रस्तरः॥

---

1. अपोऽपवादः इत्यधिकम् ड. 2. सामान्यग्रहणं ब, नास्ति फ. 3. अहिंसार्थस्य ह. 4. धान्यक्षेप इत्यर्थः, धान्यराशिः इत्यधिकम् ग. 5. भिक्षोत्करः अ, भैक्षोत्करः ब. क. ड, भैक्षोत्कारः क. 6. पुष्पोत्करः क. 7. वाक्यमिदं नास्ति फ. 8. संस्तवः परिचयः इत्यधिकम् अ. 9. आच्छादने नास्ति ब. 10. अयज्ञविषयः प्रयोगो भवति चेत् फ. 11. मणिप्रस्तारः इत्यधिकम् अ. ब. क. 12. यज्ञे तु दर्भप्रस्तरः अ.

## प्रथने वावशब्दे । (३३/३२०४)

[1]स्तृञ् आच्छादने (धा.पा.१२५३), [2]अस्माद् धातोः विशब्दे उपपदे घञ् प्रत्ययो भवति प्रथने गम्यमाने, तच्चेत् प्रथनं शब्दविषयं न भवति। प्रथनं विस्तीर्णता। पटस्य विस्तारः[3]। प्रथने इति किम्? तृणविस्तरः। अशब्दे इति किम्? विस्तरो वचसाम्॥

## छन्दोनाम्नि च। (३४/३२०५)

वौ स्त्रः इति वर्तते। विपूर्वात् स्तृणातेः[4] छन्दोनाम्नि घञ् प्रत्ययो भवति। [5]वृत्तमत्र छन्दो गृह्यते यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्राह्मणम्[6], नामग्रहणात्[7]। [8]विष्टारपङ्क्तिः छन्दः। विष्टारबृहती छन्दः। विष्टारपङ्क्तिशब्दोऽत्र [9]छन्दोनाम, न घञन्तं शब्दरूपम्। तत्र त्ववयवत्वेन [10]तद् वर्तते। छन्दोनाम्नि इत्यधिकरणसप्तम्येषा॥

## उदि ग्रहः। (३५/३२०७)

उदि उपपदे ग्रहेर्धातोः घञ् प्रत्ययो भवति। अतोऽपवादः। उद्ग्राहः।

[३०१] [11]छन्दसि निपूर्वादपीष्यते स्रुगुद्यमननिपातनयोः[12]। (म.भा.२.१४८)

[13]हकारस्य भकारः। '[14]उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्'। (वा. सं. १७.६४)॥

## समि मुष्टौ। (३६/३२०८)

ग्रहः [15]इत्येव। समि उपपदे ग्रहेर्धातोः [16]घञ् भवति, मुष्टिविषयश्चेद् धात्वर्थो भवति। मुष्टिः अङ्गुलिसन्निवेशः। अहो मल्लस्य सङ्ग्राहः। अहो मुष्टिकस्य सङ्ग्राहः। दृढमुष्टिता आख्यायते। मुष्टौ इति किम्? सङ्ग्रहो धान्यस्य॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः। (३७/३२०९)

परिशब्दे निशब्दे च [17]उपपदे यथासङ्ख्यं [18]नियः इणश्च धातोः घञ् प्रत्ययो भवति। अचोऽपवादः। द्यूताभ्रेषयोः, अत्रापि यथासङ्ख्यमेव[19] सम्बन्धः। द्यूतविषयः [20]चेन्नयतेरर्थः, अभ्रेषविषयश्चेद् इणर्थः[21]। पदार्थानामनपचारो [22]यथाप्राप्तकरणम् अभ्रेषः। द्यूते तावत्—परिणायेन [23]शारान् हन्ति। समन्तान्नयनेन। [24]अभ्रेषे—एषोऽत्र न्यायः। द्यूताभ्रेषयोः इति किम्? [25]परिणयः। न्ययं गतः पापः॥

---

1. स्तृ इति वर्तते अ. ब. क. ड. फ. 2. प्रथने गम्यमाने विपूर्वात् स्तृणोतेः घञ् प्रत्ययो भवति ग, विपूर्वात् स्तृणातेर्धातोः फ, °स्तृणातेरपि ह. 3. कम्बलस्य विस्तारः इत्यधिकम् अ. ब. क. ड. फ. 4. अपि प्राप्ते इत्यधिकम् ह, धातोः इत्यधिकम् ब. 5. वृत्तमिह ब. फ, वृत्तमिह छन्दसो गृह्यते क. 6. कृतः इत्यधिकम् ब. क. 7. लिङ्गात् इत्यधिकम् अ. ड. फ. 8. विष्टारः पंक्तिः छन्दः क. 9. छन्दसो नाम ब. 10. तद् नास्ति अ.फ.ह. 11. छन्दसि तु उन्न्योः उपपदयोः ग्रहेः निपातमनयोः ड. 12. इति वक्तव्यम् इत्यधिकम् अ. 13. हृग्रहोर्भश्छन्दसि अ, हृग्रहोर्भश्छन्दसि इति भत्वम् ह. 14. उद्ग्राहं च निग्राहं च फ. 15. इति वर्तते ब. 16. घञ् प्रत्ययो ब.ड. फ. ह. 17. यथासंख्यमुपपदे ह. 18. नयतेः फ. 19. एव सम्बन्धः नास्ति ह. 20. नयत्यर्थो भवति फ. ह. 21. भवति इत्यधिकम् फ. 22. यथाप्राप्तस्य करणम् अ. ड. 23. सारीन् अ. 24. अभ्रेषिः ब. 25. परिणयो वध्वाः ब. ड.

## परावनुपात्यय इणः । (३८/३२१०)

परिशब्दे उपपदे इणो धातोः घञ् प्रत्ययो भवति, [1]अनुपात्यये गम्यमाने । क्रमप्राप्तस्यानतिपातोऽनुपात्ययः, [2]परिपाटी । [3]तव पर्यायः । मम पर्यायः । [4]अनुपात्यये इति किम् ? [5]कालस्य पर्ययः । अतिपातः इत्यर्थः ॥

## व्युपयोः शेतेः पर्याये । (३९/३२११)

वि उप इत्येतयोः उपपदयोः शेतेर्धातोः घञ्[6] भवति पर्याये गम्यमाने । तव विशायः । [7]मम विशायः । तव राजोपशायः[8] । तव राजानमुपशयितुं पर्यायः इत्यर्थः । पर्याये इति किम् ? विशयः । उपशयः ॥

## हस्तादाने चेरस्तेये । (४०/३२१२)

हस्तादाने गम्यमाने चिनोतेर्धातोः घञ् प्रत्ययो भवति, न चेत् [9]स्तेयं चौर्यं भवति । हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । [10]फलप्रचायः । हस्तादाने इति किम्? वृक्षशिखरे फलप्रचयं करोति । अस्तेये इति किम् ? [11]फलप्रचयश्चौर्येण ।

[३०२] [12]उच्चयस्य प्रतिषेधो वक्तव्यः ॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः । (४१/३२१३)

चेः इत्येव । निवसन्ति अस्मिन् इति निवासः । चीयतेऽसौ चितिः । [13]पाण्यादिसमुदायः शरीरम् । राशीकरणम् उपसमाधानम् । एतेष्वर्थेषु चिनोतेः घञ् प्रत्ययः भवति, [14]धातोरादेश्च ककार आदेशः । निवासे तावत् – [15]चिखल्लिनिकायः । [16]चितौ – आकायमग्निं चिन्वीत । [17]शरीरे – अनित्यकायः । उपसमाधाने – महान् गोमयनिकायः । एतेषु इति किम् ? चयः । इह कस्मान्न भवति महान् काष्ठनिचयः ? बहुत्वमत्र विवक्षितं नोपसमाधानम् ॥

## सङ्घे चानौत्तराधर्ये । (४२/३२१४)

चेः इत्येव । प्राणिनां [18]समुदायः सङ्घः । स च द्वाभ्यां प्रकाराभ्यां भवति । [19]एकधर्मसमावेशेन, [20]औत्तराधर्येण वा । तत्र औत्तराधर्यपर्युदासाद् इतरो गृह्यते । सङ्घे वाच्ये चिनोतेर्धातोः घञ् प्रत्ययो भवति आदेश्च कः । [21]भिक्षुकनिकायः । ब्राह्मणनिकायः । वैयाकरणनिकायः । अनौत्तराधर्ये इति किम् ? सूकरनिचयः । प्राणिविषयत्वात् सङ्घस्येह न भवति । कृताकृतसमुच्चयः । [22]प्रमाणसमुच्चयः ॥

---

1. अनुपात्ये फ. 2. परिपाटिः क. ड, क्रमप्राप्तस्य लंघनम् उपात्ययः इत्यधिकम् अ. 3. तव नास्ति अ. 4. अनुपात्ये फ. 5. अहो इत्यधिकम् फ. 6. प्रत्ययो इत्यधिकम् ब. फ. ड. 7. मम नास्ति फ. 8. मम राजोपशायः इत्यधिकम् अ. ब. क. ड. फ. ह. 9. स्तेयः ह. 10. पुष्पप्रचयं क. 11. फलप्रचयं चौर्येण करोति ब. 12. वार्तिकमिदं नास्ति फ. ह. 13. पाण्यादि – चितौ नास्ति ब. 14. धातोः नास्ति अ. क. फ. 15. चित्खिल्लिनिकायः फ, चिखिल्लिनिकायः अ. क, चिन्युल्लिनिकायः ह, चेखल्लिनिकायः ड. 16. चिति फ. 17. शरीरं फ. 18. समूहः अ. ड. 19. एकधर्मनिवेशेन अ. ड. 20. उत्तराधर्येण ह. 21. भिक्षुकनिकायः– प्रमाणसमुच्चयः नास्ति अ, भिक्षुकनिकायः नास्ति फ. 22. प्रमाणाप्रमाणसमुच्चयः क. फ. ह.

## कर्मव्यतिहारे णच् स्त्रियाम्। (४३/३२१७)

[1]कर्म क्रिया। व्यतिहारः [2]परस्परकरणम्। [3]कर्मव्यतिहारे गम्यमाने धातोः णच् प्रत्ययो भवति स्त्रीलिङ्गे [4]वाच्ये। [5]तच्च भावे। चकारो विशेषणार्थः 'णचः स्त्रियामञ्' (५.४.१४/३२१६) इति। व्यावक्रोशी। व्यावलेखी। [6]व्यावहासी वर्तते। स्त्रियाम् इति किम्? व्यतिपाको [7]वर्तते। बाधकविषयेऽपि क्वचिद् इष्यते, व्यावचोरी, व्यावचर्ची[8]। इह न भवति। व्यतीक्षा, व्यतीहा [9]वर्तते। व्यात्युक्षी [10]भवति। तदेतद् वैचित्र्यं कथं लभ्यते? 'कृत्यलुटो बहुलम्' (३.३.११३/२८४१) इति[11] भवति ॥

## अभिविधौ भावे इनुण्। (४४/३२१८)

अभिविधिरभिव्याप्तिः, क्रियागुणाभ्यां कात्स्न्र्येन सम्बन्धः। अभिविधौ [12]गम्यमाने धातोः भावे इनुण्[13] भवति। [14]साङ्कूटिनम्। [15]सांराविणम्। सान्द्राविणं [16]वर्तते। अभिविधौ इति किम्? [17]सङ्कोटः। सन्द्रावः। संरावः। भावे इति वर्तमाने पुनर्भावग्रहणं [18]वासरूपनिरासार्थम्, तेन [19]घञ् न भवति। ल्युटा तु समावेश इष्यते। सङ्कूटनं वर्तते[20]। तत् कथम्? कृत्यलुटो बहुलम्' (३.३.११३/२८४१) इति[21] ॥

## आक्रोशेऽवन्योर्ग्रहः। (४५/३२२०)

दृष्टानुवृत्तिसामर्थ्याद्[22] घञ् अनुवर्तते, नानन्तर इनुण्। अव नि इत्येतयोः उपपदयोः ग्रहेर्धातोः घञ् प्रत्ययो भवति [23]आक्रोशे गम्यमाने। आक्रोशः [24]शपनम्। अवग्राहो हन्त ते वृषल भूयात्। [25]निग्राहो हन्त ते वृषल भूयात्। आक्रोशे इति किम्? अवग्रहः पदस्य। निग्रहश्चोरस्य ॥

## प्रे लिप्सायाम्। (४६/३२२१)

ग्रहः [26]इत्येव। प्रशब्दे उपपदे ग्रहेर्धातो घञ् प्रत्ययो भवति [27]लिप्सायां गम्यमानायाम्। पात्रप्रग्राहेण चरति भिक्षुः [28]पिण्डार्थी। स्रुवप्रग्राहेण चरति [29]द्विजो दक्षिणार्थी। लिप्सायाम् इति किम्? प्रग्रहो देवदत्तस्य ॥

## परौ यज्ञे। (४७/३२२२)

[30]परिशब्दे उपपदे ग्रहेः घञ् प्रत्ययो भवति, [31]यज्ञविषयश्चेत् [32]प्रत्ययान्ताभिधेयः स्यात्। उत्तरपरिग्राहः। [33]अधरपरिग्राहः। यज्ञे इति किम्? परिग्रहो देवदत्तस्य ॥

---

1. कर्म नास्ति अ. ह. 2. परस्परानुकरणम् ग. 3. कर्मव्यतिहारेण ह, कर्मव्यतिहारः क्रियाव्यतिहारः फ, नास्ति ग. 4. भावे फ. ह, नास्ति ड. 5. तच्च-विशेषणार्थः [नास्ति क. ड. 6. व्यावभाषी ड. 7. दर्शने क. 8. वर्तते इति इत्यधिकम् अ. ड. फ. ह. 9. वर्तते नास्ति फ. 10. वर्तते इति च फ. ह. 11. लभ्यते अ. ब. क, नास्ति फ, बहुलवचनात् ह. 12. गम्यमाने धातोः नास्ति क. फ. ह. 13. प्रत्ययः इत्यधिकम् क.फ.ह. 14. संचाटिवम् वर्तते क, सांकुटिनम् ह, सांकोटिनं वर्तते ड. 15. सांराविणः ह. 16. वर्तते नास्ति ब. 17. संकोटः नास्ति अ. ब. क. ड. फ. ह. 18. वासरूपविधिनिरासार्थम् ब. क. ड. 19. घञन्तनपुंसके भावे क्तः न भवति फ. 20. इति इत्यधिकम् फ. 21. लभ्यते इत्यधिकम् अ. 22. अत्र इत्यधिकम् ब, अत्रापि इत्यधिकम् अ. क. ड. 23. आक्रोशे नास्ति फ. ह. 24. पतनम् ड. 25. उदाहरणमिदं नास्ति फ. ह. 26. इति वर्तते ब. 27. लिप्सायां नास्ति ह. 28. पिण्डपातार्थी ब, पिण्डपातार्थम् ड. 29. विप्रो अ. ब. क. 30. ग्रह इत्येव इत्यधिकम् अ. ब. क. ड. ह. 31. यज्ञविषये अपि प्राप्ते ह, यज्ञविषयं चेत् प्रत्ययाभिधेयं भवाते ड. 32. प्रत्ययान्तरस्य अभिधेयं भवति ब. ह. 33. अधरपरिग्राहः नास्ति फ.

## नौ वृ धान्ये । (४८/३२२३)

वृ इति वृङ्वृञोः सामान्येन ग्रहणम् । निशब्दे उपपदे वृ इत्येतस्माद् धातोः धान्यविशेषेऽभिधेये घञ् प्रत्ययो भवति । अपोऽपवादः । नीवारा नाम व्रीहयो [1]भवन्ति । धान्ये इति किम् ? निवरा कन्या ॥

## उदि श्रयतियौतिपूद्रुवः । (४९/३२२४)

उच्छब्दे उपपदे श्रयत्यादिभ्यो[2] घञ् प्रत्ययो भवति । अजपोरपवादः । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं पतनान्ताः समुच्छ्रयाः ? वक्ष्यमाणं विभाषाग्रहणमिह[3] [4]सिंहावलोकितन्यायेन सम्बध्यते ॥

## विभाषाऽऽङि रुप्लुवोः । (५०/३२२५)

[5]आङि उपपदे रौतेः प्लवतेश्च[6] विभाषा घञ् प्रत्ययो भवति । आरावः, आरवः । आप्लावः, आप्लवः ॥

## अवे ग्रहो वर्षप्रतिबन्धे । (५१/३२२६)

विभाषा इति वर्तते । [7]अवे उपपदे ग्रहेः धातोः घञ् प्रत्ययो भवति विभाषा वर्षप्रतिबन्धेऽभिधेये[8] । प्राप्तकालस्य वर्षस्य कुतश्चिन् निमित्तादभावो वर्षप्रतिबन्धः । अवग्राहो [9]देवस्य, अवग्रहो देवस्य । वर्षप्रतिबन्धे इति किम् ? अवग्रहः पदस्य ॥

## प्रे वणिजाम् । (५२/३२२७)

ग्रहः इति वर्तते । विभाषा इत्येव । प्रशब्दे उपपदे ग्रहेर्धातोः विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तवाच्यश्चेद् वणिजां [10]सम्बन्धी भवति । वणिक्सम्बन्धेन च तुलासूत्रं [11]लक्ष्यते, न तु वणिजस्तन्त्रम् । तुला [12]प्रगृह्यते येन सूत्रेण स शब्दार्थः । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा । वणिजाम् इति किम् ? प्रग्रहो देवदत्तस्य ॥

## रश्मौ च । (५३/३२२८)

ग्रहः विभाषा प्रे इति वर्तते । प्रशब्दे उपपदे [13]ग्रहेर्धातोः विभाषा घञ् प्रत्ययो भवति, [14]रश्मिश्चेत् प्रत्ययान्तेनाभिधीयते । रथादियुक्तानामश्वादीनां [15]संयमनार्था रज्जू रश्मिरिह गृह्यते । प्रग्राहः, प्रग्रहः ॥

---

1. भवन्ति नास्ति क. इ. 2. धातुभ्यः इत्यधिकम् ब. ड. फ. 3. इह नास्ति फ. 4. सिंहावलोकनन्यायेन ब. 5. आङउपपदे फ. 6. धात्वोः इत्यधिकम् ब. फ. 7. अवशब्दे फ. 8. अपोऽपवादः इत्यधिकम् अ. ब. इ. क. ड. 9. देवदत्तस्य अ. फ. 10. सम्बन्धि ह, सम्बन्धो ग. फ. इ. 11. गृह्यते फ. 12. प्रगृह्यते नास्ति इ. 13. धातोः नास्ति फ. 14. रश्मौ फ. 15. या रज्जुः सा फ. ह.

## वृणोतेराच्छादने। (५४/३२२९)

विभाषा प्र इति वर्तते। प्रशब्दे उपपदे वृणोतेः धातोः विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते। प्रावारः, प्रवरः। आच्छादने इति किम्? [1]प्रवरा गौः॥

## परौ भुवोऽवज्ञाने। (५५/३२३०)

विभाषा इत्येव। परिशब्दे उपपदे भवतेः [2]धातोः विभाषा घञ् प्रत्ययो भवति अवज्ञाने गम्यमाने। अवज्ञानम् असत्कारः। परिभावः, परिभवः। अवज्ञाने इति किम्? सर्वतः भवनं परिभवः॥

## एरच्। (५६/३२३१)

भावे, अकर्तरि च कारके इति [3]प्रकृतमनुवर्तते यावत् 'कृत्यल्युटो बहुलम्' (३.३.११३/२८४१) इति। इवर्णान्ताद् धातोः भावे (३.३.१८/३१८४), अकर्तरि च कारके सञ्ज्ञायाम् (३.३.१९/३१८८) [4]अच् प्रत्ययो भवति। घञोऽपवादः। चकारो विशेषणार्थः, [5]'अन्तः' (६.२.१४३/३८७७) 'थाऽथघञ्क्ताजबित्रकाणाम्' (६.२.१४४/३८७८) इति। चयः। [6]अयः। जयः। क्षयः।

[३०३] अज्विधौ [7]भयादीनामुपसङ्ख्यानम्। (म. भा. २.१४९)

नपुंसके क्तादिनिवृत्त्यर्थम्। भयम्। वर्षम्।

[३०४] जवसवौ छन्दसि वक्तव्यौ। (म. भा. २.१५०)

'ऊर्वोरस्तु मे जवः' (पै. २०.३६.७)। '(अयं) पञ्चौदनः [8]सवः' (पै. ८.१९.३)॥

## ऋदोरप्। (५७/३२३२)

ॠकारान्तेभ्यः उवर्णान्तेभ्यः च [9]अप् प्रत्ययो भवति। घञोऽपवादः। पित्करणं स्वरार्थम्। [10]करः गरः। शरः। उवर्णान्तेभ्यः – [11]यवः। लवः। [12]पवः। दकारो मुखसुखार्थः। मा भूत्तादपि परः तपरः[13]॥

---

1. प्रवरो अ. ब. 2. धातोः नास्ति फ. 3. प्रकृतम् नास्ति 4. विषये इत्यधिकम् ह. 5. अन्तः नास्ति ब. ड. 6. अयः नास्ति अ. ड. फ. 7. भायादीनाम् फ. 8. देवस्य सवितुः सवे अ. 9. धातुभ्यः इत्यधिकम् ग. ड. फ. ह. 10. ॠवर्णान्तिभ्यः इत्यधिकम् ग, कॄ, गॄ, शॄ इत्यधिकम् ब. 11. युङ् युञ् वा यवः ब. 12. षूञ् सवः ब, पवः नास्ति ड, स्तवः इत्यधिकम् फ. 13. इति इत्यधिकम् क.

## ग्रहवृदृनिश्चिगमश्च । (५८/३२३४)

ग्रहादिभ्यः धातुभ्यः [1]अप् प्रत्ययो भवति । घञोऽपवादः । निश्चिनोतेः तु अचोऽपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । निश्चिग्रहणं स्वरार्थम् (६.२.१३९/३८७३) ।

[३०५] वशिरण्योरुपसङ्ख्यानम् । (म. भा. २. १५०)

वशः । रणः ।

[३०६] घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् । (म. भा. २. १५०)

[2]प्रतिष्ठन्तेऽस्मिन् इति प्रस्थः पर्वतस्य । [3]प्रस्नाति अस्मिन् प्रस्नः । प्रपिबन्ति [4]अस्याम् इति प्रपा । आविध्यन्ति तेन इति [5]आविधः । विहन्यन्तेऽस्मिन् इति विघ्नः । आयुध्यते अनेन इति आयुधम् ॥

## उपसर्गेऽदः । (५९/३२३६)

[6]अप् इत्येव । उपसर्गे उपपदे अदेर्धातोः अप् प्रत्ययो भवति । प्रघसः । विघसः[7] । उपसर्गे इति किम् ? घासः ॥

## नौ ण च । (६०/३२३७)

निशब्दे उपपदे अदेः धातोः णप्रत्ययो भवति, चकाराद् अप् च । न्यादः, निघसः ॥

## व्यधजपोरनुपसर्गे । (६१/३२३८)

व्यध जप इत्येतयोः अनुपसर्गयोः[8] अप् प्रत्ययो भवति । घञोऽपवादः । व्यधः । जपः । अनुपसर्गे इति किम् ? [9]आव्याधा । उपजापः ॥

---

1. अच् ह. 2. प्रतिष्ठते फ, प्रतिष्ठन्ति तस्मिन् इति प्रस्थः अ. 3. उदाहरणमिदं नास्ति अ. 4. तस्याम् ह. 5. अविधम् ड. ह. 6. अण् ह. 7. संघसः इत्यधिकम् ब. 8. धात्वोः इत्यधिकम् अ. 9. उपव्याधा फ, अव्याधः उपजावः ह.

## स्वनहसोर्वा । (६२/३२३९)

अनुपसर्गे इत्येव । स्वनहसोः अनुपसर्गयो[1]र्वा [2]अप् प्रत्ययो भवति । स्वनः, स्वानः । हसः, हासः । अनुपसर्गे [3]इति किम् ? प्रस्वानः । प्रहासः ।।

## यमः समुपनिविषु च । (६३/३२४०)

अनुपसर्गे वा इति[4] वर्तते । [5]सम् उप नि वि इत्येतेषु उपपदेषु [6]अनुपसर्गेऽपि यमे[7]र्वा अप् प्रत्ययो भवति । [8]घञोऽपवादः । संयमः, संयामः । उपयमः, उपयामः । नियमः, नियामः । वियमः, वियामः । अनुपसर्गात् खल्वपि--यमः, यामः ।

## नौ गदनदपठस्वनः । (६४/३२४१)

[9]अप् इत्येव । निशब्दे उपपदे [10]गद नद पठ स्वन इत्येतेभ्यः धातुभ्यः वा अप् प्रत्ययो भवति । घञोऽपवादः । निगदः, निगादः । निनदः, निनादः । निपठः, निपाठः । [11]निस्वनः, निस्वानः[12] ।।

## क्वणो वीणायां च । (६५/३२४२)

नौ वा अनुपसर्गे इति [13]वर्तते । क्वणतेः धातोः निपूर्वादनुपसर्गाच्च[14] [15]वीणायां वा अप् प्रत्ययो भवति । घञोऽपवादः । सोपसर्गार्थं [16]वीणाया ग्रहणम् । निक्वणः, निक्वाणः । अनुपसर्गात्--क्वणः, क्वाणः । [17]वीणायां खल्वपि--[18]कल्याणप्रक्वणा वीणा । एतेषु इति किम् ? [19]अतिक्वाणो वर्तते ।।

## नित्यं पणः परिमाणे । (६६/३२४३)

'पण व्यवहारे [20]स्तुतौ च' (धा.पा. ४३९), [21]अस्माद् [22]धातोर्नित्यमप् प्रत्ययो भवति परिमाणे गम्यमाने । नित्यग्रहणं [23]विकल्पनिवृत्त्यर्थम् । मूलकपणः । शाकपणः । संव्यवहाराय मूलकादीनां [24]यः परिमितो मुष्टिर्बध्यते, तस्येदम[25]भिधानम् । परिमाणे इति किम्? पाणः ।।

## मदोऽनुपसर्गे । (६७/३२४४)

मदेः धातोः अनुपसर्गात् अप् प्रत्ययो भवति । घञोऽपवादः । विद्यामदः । धनमदः । [26]कुलमदः । अनुपसर्गे इति किम् ? उन्मादः । प्रमादः ।।

---

1. धात्वोः इत्यधिकम् अ.ब.क.फ.ह. 2. अप्रत्ययो ब. 3. इत्येव ब.क. 4. च इत्यधिकम् ब.फ. 5. समादिषु उपपदेषु फ. 6. अनुपसर्गादपि फ. 7. धातोः इत्यधिकम् ब. 8. घञोऽपवादः नास्ति फ. 9. अप् वा इत्येव ह. 10. गदादिभ्यः फ. 11. निःस्वनः, निःस्वानः ब. 12. नौ इति किम् ? गादः इत्यधिकम् फ. 13. अनुवर्तते ब. 14. च नास्ति फ. 15. वीणाविषयात् ह.ड. 16. इदम् इत्यधिकम् ब, वीणाग्रहणम् अ. 17. वीणाविषयात् अ.फ, खल्वपि नास्ति फ. 18. कल्याणप्रक्वः किणः ह, कल्याणाः प्रक्वाणा वीणाः ब. 19. प्रक्वाणो वर्तते अ. 20. स्तुतौ च नास्ति अ. ड. फ. 21. घञि प्राप्ते इत्यधिकम् ह. 22. धातोः नास्ति फ. 23. विकल्पनिरासार्थम् फ. 24. यः नास्ति फ. 25. विज्ञानम् अ.क. 26. कुलमदः नास्ति ब.क.ह.

## प्रमदसम्मदौ हर्षे । (६८/३२४५)

प्रमद सम्मद [1]इत्येतौ शब्दौ निपात्येते हर्षेऽभिधेये । कन्यानां प्रमदः । कोकिलानां सम्मदः । हर्षे इति किम् ? प्रमादः । सम्मादः । प्रसंभ्याम् इति [2]नोक्तम् । निपातनं रूढ्यर्थम् ॥

## समुदोरजः पशुषु । (६९/३२४६)

समुदोरुपपदयोः [3]अजतेर्धातोः पशुविषये[4] धात्वर्थे अप् प्रत्ययो भवति । [5]घञोऽपवादः । 'अज गतिक्षेपणयोः' (धा.पा.२३०) इति पठ्यते । स सम्पूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे । समजः [6]पशूनाम् । समुदायः इत्यर्थः । उदजः पशूनाम् । प्रेरणम् इत्यर्थः । पशुषु इति किम् ? समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ॥

## अक्षेषु ग्लहः । (७०/३२४७)

ग्लहः इति निपात्यते, [7]अक्षविषयश्चेद् धात्वर्थो [8]भवति । ग्रहेरप् सिद्ध एव, [9]लत्वार्थं निपातनम् । अक्षस्य ग्लहः । अक्षेषु इति किम् ? ग्रहः पादस्य । अन्ये [10]ग्लहिं [11]प्रकृत्यन्तरमाहुः । ते घञं प्रत्युदाहरन्ति । ग्लाहः[12] ॥

## प्रजने सर्तेः । (७१/३२४८)

सर्तेः धातोः प्रजने विषये अप् प्रत्ययो भवति । घञोऽपवादः । [13]प्रजनं प्रथमं गर्भग्रहणम् । गवामुपसरः । पशूनामुपसरः । स्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथम[14]मुपसरणमुच्यते[15] ॥

## ह्वः सम्प्रसारणं च न्यभ्युपविषु । (७२/३२४९)

[16]नि अभि उप वि इत्येतेषु उपपदेषु ह्वयतेः धातोः सम्प्रसारणम्[17] अप् प्रत्ययः च । घञोऽपवादः । निहवः । अभिहवः । उपहवः । विहवः । एतेषु इति किम् ? [18]प्रह्वायः ॥

## आङि युद्धे । (७३/३२५०)

[19]आङि उपपदे ह्वयते[20]र्धातोः सम्प्रसारणम् अप् प्रत्ययश्च भवति युद्धेऽभिधेये । आहूयन्तेऽस्मिन् इत्याहवः[21] । युद्धे इति किम् ? आह्वायः ॥

---

1. इत्येतौ नास्ति ब. फ. 2. किम् अ. 3. अजेर्धातोः ब. 4. प्रत्यये इत्यधिकम् क. 5. घञोऽपवादः नास्ति अ. 6. शकुनीनाम् अ. 7. अक्षे चेत् ह. 8. भवति नास्ति फ. 9. लकारार्थं फ. 10. ग्रहिः ह. 11. प्रकृत्यन्तम् ब. 12. इति इत्यधिकम् फ. 13. प्रजनः ड. 14. उपसरः अ. क. फ, उपसरः इति उच्यते ह. 15. प्रजने इति किम् इत्यधिकम् अ. ह, उपसारो भृत्यो राज्ञः इत्यधिकम् अ, उपसारः इत्यधिकम् ह. 16. न्यादिषु उपपदेषु फ. 17. च इत्यधिकम् फ. 18. संह्वायः फ. ह, संप्रह्वायः क. 19. ह्वे इत्येव इत्यधिकम् ब. 20. धातोः नास्ति फ. 21. संग्रामः इत्यधिकम् ब.

## निपानमाहावः । (७४/३२५१)

[1]आङ पूर्वस्य ह्वयतेर्धातोः सम्प्रसारणम्, अप्प्रत्ययो, वृद्धिश्च निपात्यते निपानं चेदभिधेयं भवति । निपिबन्त्यस्मिन्निति निपानमुदकाधार उच्यते । आहावः पशूनाम् । [2]कूपोपसरेषु य उदकाधारस्तत्र हि [3]पानाय पशव आहूयन्ते । निपानम् इति किम् ? आह्वायः ॥

## भावेऽनुपसर्गस्य । (७५/३२५२)

अनुपसर्गस्य ह्वयतेः [4]सम्प्रसारणम् अप् प्रत्ययश्च भवति भावे अभिधेये । हवः । 'हवे हवे सुहवं शूरमिन्द्रम्' (ऋ॰ ६.७.११) । अनुपसर्गस्य इति किम् ? आह्वायः । भावग्रहणम् 'अकर्तरि च कारके सञ्ज्ञायाम्' (३.३.१९/३१८८) [5] इत्यस्य निरासार्थम् ॥

## हनश्च वधः । (७६/३२५३)

भावेऽनुपसर्गस्य इति वर्तते । हन्तेर्धातोः [6]अनुपसर्गे भावे अप् प्रत्ययो भवति, तत्संनियोगेन च [7]वधादेशः, स चान्तोदात्तः । तत्रोदात्तनिवृत्तिस्वरेण [8]अप उदात्तत्वं [9]भवति । वधश्चोराणाम् । वधो दस्यूनाम् । भावे इत्येव, घातः । अनुपसर्गस्य इत्येव, [10]प्रघातः, विघातः । चकारो भिन्नक्रमत्वान् नादेशेन सम्बध्यते । किं तर्हि ? प्रकृतेन प्रत्ययेन । [11]अप् च, यश्चापरः प्राप्नोति । तेन घञपि भवति । घातो वर्तते ॥

## मूर्तौ घनः । (७७/३२५४)

[12]हनः इत्येव । मूर्तिः काठिन्यम् । मूर्तौ [13]अभिधेयायां हन्तेः अप् प्रत्ययो भवति, [14]घनश्चादेशः । [15]अभ्रघनः । दधिघनः । [16]कथं घनं दधि इति ? धर्मशब्देन धर्मी भण्यते ॥

## अन्तर्घनो देशे । (७८/३२५५)

अन्तः[17]पूर्वात् हन्तेः अप् प्रत्ययो [18]भवति, घनादेशश्च [19]भवति देशेऽभिधेये । अन्तर्घनः[20] । सञ्ज्ञीभूतो [21]वाहीकेषु देशविशेष उच्यते । अन्ये [22]णकारं पठन्ति अन्तर्घणो [23]देशः इति । तदपि ग्राह्यमेव । देशे इति किम् ? अन्तर्घातोऽन्यः[24] ॥

---

1. ह्वयतेः इत्येव इत्यधिकम् ब. 2. कूपोपसमीपे फ. 3. निपानाय ब. ह. 4. धातोः इत्यधिकम् ब. 5. इत्यस्य नास्ति फ. 6. अनुपसर्गात् क. ह. 7. वध इत्यादेशः भवति ह. 8. यः प्रत्ययः तस्यावृतत्वं ब. 9. भवति नास्ति क. ह. 10. आघातः ब. क. ड. फ. 11. अप् प्रत्ययः क. 12. हनः इत्येव नास्ति अ. ग. फ. 13. अभिधेये ह. 14. घनशब्दः आदेशः ब. क. फ. 15. अभिघनः ह. 16. कथं नास्ति फ. 17. पूर्वपदात् ह. 18–19. भवति नास्ति ह. 20. इति इत्यधिकम् ग. 21. बाह्लीकेषु ग. 22. णकारान्तम् फ. 23. देशः नास्ति फ. 24. इति इत्यधिकम् ह.

## अगारैकदेशे प्रघणः प्रघाणश्च । (७९/३२५६)

[1]प्रपूर्वस्य हन्तेः[2] प्रघणः प्रघाणः [3]इत्येतौ शब्दौ निपात्येते अगारैकदेशे वाच्ये । प्रघणः, प्रघाणः । [4]द्वारप्रकोष्ठो बाह्य [5]उच्यते । अगारैकदेशे इति किम् ? प्रघातः [6]अन्यः ॥

## उद्घनोऽत्याधानम् । (८०/३२५७)

उत्पूर्वात् हन्तेः[7] उद्घनः इति निपात्यतेऽत्याधानं चेद् भवति । उद्घनः । यस्मिन् काष्ठे स्थापयित्वा अन्यानि [8]काष्ठानि तक्ष्यन्ते तदभिधीयते । [9]उद्घातोऽन्यः ॥

## अपघनोऽङ्गम् । (८१/३२५८)

[10]अपपूर्वस्य हन्तेः[11] [12]अपघनः इति निपात्यते, अङ्गं चेत् तद् भवति । अपघनः [13]अङ्गम् । अवयवः एकदेशः, न सर्वः । किं तर्हि ? पाणिः पादश्च अभिधीयते । [14]अपघातः अन्यः ॥

## करणेऽयोविद्रुषु (८२/३२५९)

हनः इति वर्तते । अयस् वि द्रु इत्येतेषु उपपदेषु हन्तेः धातोः करणे कारके अप् प्रत्ययो भवति, घनादेशश्च । अयो हन्यते अनेन इति अयोघनः । विघनः । द्रुघनः । द्रुघणः इति केचिदुदाहरन्ति । कथं णत्वम् ? अरीहणादिषु [15]पाठात् । 'पूर्वपदात् सञ्ज्ञायामगः' (८.४.३/८५७) इति वा ॥

## स्तम्बे क च । (८३/३२६०)

करणे हनः इति वर्तते । स्तम्बशब्दे उपपदे करणे कारके हन्तेः[16] कः प्रत्ययो भवति । चकारात् अप् च, तत्र[17] घनादेशः । स्तम्बघ्नः, स्तम्बघनः । [18]स्त्रियां स्तम्बघ्ना, स्तम्बघना इति इष्यते । करणे इत्येव, स्तम्बघातः ॥

## परौ घः । (८४/३२६१)

[19]करणे हनः इत्येव । परिशब्दे उपपदे हन्तेर्धातोः अप् प्रत्ययो भवति करणे [20]कारके, घशब्दश्चा[21]देशः । परिहन्यते अनेन इति परिघः । [22]पलिघः (८.२.२२/३२६२) ॥

## उपघ्न आश्रये । (८५/३२६३)

[23]उपपूर्वात् हन्तेः[24]अप् प्रत्ययः [25]उपधालोपश्च निपात्यते [26]आश्रयेऽभिधेये । आश्रयशब्दः सामीप्यं प्रत्यासत्तिं लक्षयति । पर्वतोपघ्नः । ग्रामोपघ्नः । आश्रये इति किम् ? [27]पर्वतोपघात [28]एवान्यः ॥

---

1. हन इत्येव इत्यधिकम् ब. 2. धातोः इत्यधिकम् ब. 3. च इत्यधिकम् फ, इत्येतौ द्वौ ब, इति च निपात्यते अ. 4. द्वारप्रकोष्ठकः ब, द्वारकोष्ठकः क, द्वारकोष्ठतके बाह्ये ड. 5. उच्यते नास्ति फ. 6. अन्यः नास्ति फ. 7. धातोः इत्यधिकम् ब. 8. काष्ठानि नास्ति फ. 9. अत्याधानम् इति किम् इत्यधिकम् ग. ह. 10. अपपूर्वात् हन्तेः ह. 11. धातोः इत्यधिकम् अ. ब. फ. 12. अपघनादेशः फ. 13. शरीरावयवः फ. 14. अङ्गमिति किम् इत्यधिकम् अ. क. फ. ह. 15. प्रक्षेपात् अ. ब. ड. 16. धातोः इत्यधिकम् फ. 17. च इत्यधिकम् ब. 18. वाक्यमिदं नास्ति ड. 19. हन इति वर्तते, करणे इति च ब, करणे हनः च इत्यनुवर्तते क. 20. कारके नास्ति. 21. अन्तादेशः ह. 22. पलिघः नास्ति फ. 23. हन इति वर्तते इत्यधिकम् ह. 24. धातोः इत्यधिकम् ब. क. 25. च इत्यधिकम् फ. 26. आश्रयेऽभिधेये नास्ति इ. फ. ग. 27. उपघातः ब. फ. 28. एव नास्ति ह.

## सङ्घोद्घौ गणप्रशंसयोः। (८६/३२६४)

[1]समुदोः उपपदयोः हन्तेः [2]धातोः अप् प्रत्ययो भवति, टिलोपः घत्वं च निपात्यते, यथासङ्ख्यं गणे[3]ऽभिधेये, प्रशंसायां[4] गम्यमानायाम्। सङ्घः पशूनाम्। उद्घो [5]मनुष्यः। [6]गणप्रशंसयोः इति किम्? सङ्घातः[7]॥

## निघो निमितम्। (८७/३२६५)

[8]निघः इति निपूर्वाद् [9]हन्तेः अप् प्रत्ययः, टिलोपो घत्वं च निपात्यते, निमितं चेदभिधेयं भवति। समन्तात् मितं निमितम्, [10]समारोहपरिणाहम्। निघाः वृक्षाः। निघाः शालयः। निमितम् इति किम्? निघातः॥

## ड्वितः क्त्रिः। (८८/३२६६)

भावेऽकर्तरि च कारके इति वर्तते। डु इत् यस्य[11] तस्माद् ड्वितो [12]धातोः क्त्रिः प्रत्ययो भवति। 'त्रेर्मम् नित्यम्' (४.४.२०/१५७०) इति [13]वचनात् केवलो न प्रयुज्यते। 'डुपचष् पाके' (धा.पा.९९७) – [14]पक्त्रिमम्। 'डुवप् [15]बीजसन्ताने' (धा.पा.१००४) – उप्त्रिमम्। डुकृञ् – कृत्रिमम्॥

## ट्वितोऽथुच्। (८९/३२६७)

[16]टु इत् यस्य, तस्मात् [17]ट्वितो धातोः अथुच् प्रत्ययो भवति भावादौ। 'टुवेपृ कम्पने' (धा. पा. ३६७) – वेपथुः। 'टुओश्वि गतिवृद्ध्योः' (धा. पा. १०११) – श्वयथुः। 'टुक्षु शब्दे' (धा.पा.१०३७) – क्षवथुः[18]॥

## यजयाचयतविच्छप्रच्छरक्षो नङ्। (९०/३२६८)

[19]भावे अकर्तरि च कारके इति वर्तते। यजादिभ्यो धातुभ्यो नङ् प्रत्ययो भवति। ङकारो गुण[20]-प्रतिषेधार्थः। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः। प्रच्छेः असम्प्रसारणं ज्ञापकात् 'प्रश्ने चासन्नकाले' (३.२.११७/२७७७) इति॥

## स्वपो नन्। (९१/३२६९)

[21]स्वपेर्धातोः नन् प्रत्ययो भवति। [22]नकारः स्वरार्थः (६.१.१९७/३६८६)। [23]स्वप्नः॥

---

1. हन इति वर्तते इत्यधिकम् ब. 2. धातोः नास्ति फ. 3. अभिधेये नास्ति फ. 4. च इत्यधिकम् फ. 5. मनुष्याणाम् अ. ब. क. फ. 6. °प्रशंसायाम् ह. 7. उद्घातः इत्यधिकम् अ. क. फ. 8. हन इति वर्तते इत्यधिकम् ब. ग. 9. हन्तेरपि टिलोपः ह, हनेरपि ब. 10. समारोहः परिणाहः ड. 11. सोऽयं ड्वित् इत्यधिकम् ह. 12. धातोः नास्ति फ. 13. वचनात् नास्ति ब. 14. तेन निर्वृत्तं इत्यधिकम् अ. फ. ह, पाकेन निर्वृत्तं इत्यधिकम् ब. ड. 15. बीजतन्तुसन्ताने ब. 16. भावेऽकर्तरि च कारके इति वर्तते इत्यधिकम् ब. 17. ट्वितो नास्ति ब. 18. टुदु उपतापे दवथुः इत्यधिकम् अ. ब. ड. 19. वाक्यमिदं नास्ति फ. 20. वृद्धि इत्यधिकम् अ. ब. क. ड. 21. भावेऽकर्तरि च कारके इति वर्तते इत्यधिकम् ब. ह. 22. नः स्वरार्थः अ. 23. स्वप्नः नास्ति ह.

## उपसर्गे घोः किः । (९२/३२७०)

भावे अकर्तरि [1]च कारके इति वर्तते । उपसर्गे उपपदे घुसञ्ज्ञकेभ्यः धातुभ्यः [2]किः प्रत्ययो भवति । कित्करणम् [3]आतो लोपार्थम् (६.४.६४/२३७२) । प्रदिः । प्रधिः । अन्तर्धिः[4] ॥

## कर्मण्यधिकरणे च । (९३/३२७१)

घोः इत्येव[5] । कर्मण्युपपदे घुसञ्ज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति अधिकरणे कारके । [6]जलं धीयते अस्मिन् इति जलधिः । शरधिः[7] । अधिकरणग्रहणमर्थान्तरनिरासार्थम् । चकारः [8]प्रत्ययानुकर्षणार्थः ॥

## स्त्रियां क्तिन् । (९४/३२७२)

भावे अकर्तरि च कारके इति वर्तते । स्त्रीलिङ्गे भावादौ[9] धातोः क्तिन् प्रत्ययो भवति । घञजपामपवादः । कृतिः । [10]चितिः । [11]मतिः ।

[३०७] क्तिन्नाबादिभ्यश्च वक्तव्यः । (म. भा. २. १५१)

आबादयः प्रयोगतोऽनुसर्तव्याः । आप्तिः । [12]राद्धिः । दीप्तिः । [13]स्रस्तिः । ध्वस्तिः । लब्धिः ।

[३०८] श्रुयजिस्तुभ्यः करणे । (म. भा. २. १५१)

श्रूयते अनया [14]इति श्रुतिः । इष्टिः । स्तुतिः ।

[३०९] ग्लाम्लाज्याहाभ्यो निः । (म. भा. २. १५२)

ग्लानिः । [15]म्लानिः । ज्यानिः । हानिः ।

[३१०] ॠकारल्वादिभ्यः क्तिन् निष्ठावद् भवतीति वक्तव्यम् । (म. भा. २. १५२)

कीर्णिः । गीर्णिः । [16]जीर्णिः । [17]शीर्णिः । लूनिः । [18]यूनिः ।

[३११] सम्पदादिभ्यः क्विप्[19] । (म. भा. २. १५२)

सम्पद् । विपद् । प्रतिपद् ।

[३१२] क्तिन्नपीष्यते ।

सम्पत्तिः । विपत्तिः[20] ॥

---

1. च नास्ति फ. 2. किन् प्रत्ययः ह. 3. आतो लोप इटि च इत्यर्थम् इ.फ.ग.ह. 4. विधिः सन्धिः इत्यधिकम् अ. क. फ. ह, अन्तर्धिः नास्ति फ. ह, विधिः निधिः ड. 5. अनुवर्तते इत्यधिकम् फ, घोः किः इत्येव ब. 6. जलानि धीयन्ते फ. 7. उदधिः इषुधिः इत्यधिकम् फ, वालधिः इत्यधिकम् ब. क. ड. ह. 8. कि-प्रत्यया° अ, प्रत्ययान्तरानुकर्षणार्थः ह. 9. अकर्तरि च कारके इत्यधिकम् फ. 10. भृतिः फ, पूतिः क, वृतिः सृतिः नीतिः ह. 11. स्तुतिः अ. 12. राद्धिः नास्ति अ. 13. स्वस्तिः अ. ब. ग. 14. इति नास्ति फ. 15. म्लानिः नास्ति ड. 16. नास्ति अ. ड. फ. 17. नास्ति अ. ड. फ. 18. पूनिः ब. फ. ह, पूतिः ड. 19. वक्तव्यः इत्यधिकम् ह. 20. प्रतिपत्तिः इत्यधिकम् अ. ड. ग. फ, आपत्तिः इत्यधिकम् ह.

## स्थागापापचो भावे। (९५/३२७३)

स्त्रियाम् इति वर्तते। स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति। [1]अङोऽपवादस्य (३.३.१०६/३२८३) (३.३.१०४/३२८१) बाधकः। [2]प्रस्थितिः। उद्गीतिः। [3]सङ्गीतिः। [4]प्रपीतिः। संपीतिः। पक्तिः। भावग्रहणमर्थान्तरनिरासार्थम्। कथमवस्था संस्था इति? व्यवस्थायामसञ्ज्ञायाम् (१.१.३४/२१८) इति ज्ञापकात् नात्यन्ताय बाधा भवति [5]इति॥

## मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः। (९६/३४२०)

भावे [6]स्त्रियाम् इति वर्तते। [7]मन्त्रे विषये वृषादिभ्यः धातुभ्यः क्तिन् प्रत्ययो भवति [8]उदात्तः। [9]प्रकृति-प्रत्यययोः विभक्तिविपरिणामेन सम्बन्धः। कस्मादेवं कृतम्? वैचित्र्यार्थम्। वृष्टिः (ऋ. १.३८.८)। इष्टिः (ऋ. ४.४.७)। पक्तिः (ऋ. ४.२४.५)। मतिः (ऋ.१.१४१.१)। वित्तिः (वा. सं. १८.१४)। भूतिः (वा. सं. १८.१४)। वीतिः (अ. वे. २०.६९.३)। रातिः (ऋ. १.३४.१)। [10]सर्वत्र सर्वधातुभ्यः सामान्येन [11]विहित एव क्तिन्। [12]उदात्तार्थं वचनम्। इषेस्तु 'इच्छा' (३.३.१०१/३२७८) इति निपातनं वक्ष्यति, ततः क्तिन्नपि[13] विधीयते। मन्त्रादन्यत्र [14]आदिरुदात्तः॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च। (९७/३२७४)

मन्त्रे इति नानुवर्तते। ऊत्यादयः शब्दा निपात्यन्ते। उदात्तः [15]इति वर्तते। अवतेः 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६.४.२०/२६५४) इति ऊठ्। ऊतिः। स्वरार्थं वचनम्। यौतेर्जवतेश्च यूतिः, जूतिः। दीर्घत्वं च निपात्यते। [16]सातिः। स्यतेः इत्वाभावो निपात्यते, सनोतेर्वा 'जनसनखनां सञ्झलोः' (६.४.४२/२५०४) इत्यात्वे कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्तयतेः कीर्तिः॥

## व्रजयजोर्भावे क्यप्। (९८/३२७५)

उदात्तः [17]इत्येव। [18]व्रजयजोः धात्वोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवति उदात्तः[19]। क्तिनोऽपवादः। [20]व्रज्या। इज्या। पित्करणमुत्तरत्र तुगर्थम्॥

## सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः। (९९/३२७६)

भावे इति न [21]स्वर्यते। पूर्व एवात्रार्थाधिकारः। समजादिभ्यो धातुभ्यः स्त्रियां[22] क्यप् प्रत्ययो भवति

---

1. उपस्थितिः संगीतिः उपसंगीतिः उद्गीतिः प्रगीतिः ड. 2. उपस्थितिः ब. क. फ. ह. 3. उपसंगीतिः क. 4. प्रपीतिः नास्ति क. 5. इति नास्ति ह. 6. स्त्रियाम् नास्ति फ, वाक्यमिदं नास्ति ह. 7. मन्त्रविषये फ. 8. स च इत्यधिकम् फ. 9. प्रथमान्तयोः इत्यधिकम् अ.ब.फ, इह प्रथमान्तयोः इत्यधिकम् ह. 10. सर्वत्र नास्ति ड, सर्वधातुभ्यः नास्ति अ. फ. 11. क्तिन् विधीयते एव ह. 12. उदात्तार्थमिदं वचनम् अ. क. फ, उदात्तार्थमिदं ह. 13. अपि नास्ति फ. 14. आद्युदात्तः ह. 15. भावे स्त्रियाम् इत्यधिकम् ब. 16. स्यतेः इत्यधिकम् अ. ब. क. ह. 17. स्त्रियाम् इत्यधिकम् ब. 18. व्रजयज इत्येतयोः फ. 19. च इत्यधिकम् फ. 20. प्रव्रज्या ह. 21. स्मर्यते क. 22. विषये इत्यधिकम् फ.

[1]उदात्तः सञ्ज्ञायां विषये। समजन्ति [2]अस्यामिति समज्या। [3]निषद्या। निपत्या। मन्या। विद्या। सुत्या। शय्या। भृत्या। इत्या। कथं तदुक्तम् 'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' इति? भावाधिकारो भावव्यापारः वाच्यत्वेन विवक्षितः, न तु शास्त्रीयोऽधिकारः॥

## कृञः श च। (१००/३२७७)

करोतेर्धातोः स्त्रियां शः प्रत्ययो भवति। चकारात् क्यप् च। योगविभागोऽत्र कर्तव्यः, क्तिन्नपि यथा स्यात्। क्रिया, कृत्या, कृतिः॥

## इच्छा। (१०१/३२७८)

इषेः धातोः [4]शः प्रत्ययो[5] यगभावश्च निपात्यते। [6]इच्छा[7]।

[३१३] परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्। (म. भा. २.१५३)

परिचर्या। परिसर्या। मृगया। अटाट्या।

[३१४] जागर्तेरकारो वा। (म. भा. २.१५३)

जागरा, जागर्या[8]॥

## अ प्रत्ययात्। (१०२/३२७९)

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियाम् [9]अकारः प्रत्ययो भवति। [10]क्तिनोऽपवादः। चिकीर्षा। जिहीर्षा। पुत्रीया। पुत्रकाम्या। लोलूया[11]। कण्डूया॥

## गुरोश्च हलः। (१०३/३२८०)

हलन्तो यो धातुः गुरुमान्, [12]ततः स्त्रियाम् अकारः प्रत्ययो भवति। क्तिनोऽपवादः। कुण्डा। हुण्डा। ईहा। ऊहा। गुरोः इति किम्? भक्तिः। हलः इति किम्? नीतिः॥

## षिद्भिदादिभ्योऽङ्। (१०४/३२८१)

षिद्भ्यः भिदादिभ्यश्च[13] स्त्रियाम् अङ प्रत्ययो भवति। गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो [14]गृह्यन्ते। जॄष्–जरा। त्रपूष्–त्रपा। भिदादिभ्यः खल्वपि–भिदा। छिदा। [15]विदा। क्षिपा। गुहा गिर्योषध्योः। श्रद्धा। मेधा। [16]गोधा। [17]आरा। हारा। [18]कारा। क्षिया। [19]तारा। धारा। लेखा। रेखा[20]। चूडा[21]। पीडा। वपा। वसा। [22]सृजा। क्रपेः सम्प्रसारणं च (ग. सू. ३६)–कृपा। भिदा [23]विदारणे (ग. सू. २९)। भित्तिः अन्या। छिदा द्वैधीकरणे (ग. सू. ३०)। छित्तिः अन्या। आरा शस्त्र्याम् (ग. सू. ३२)। आर्तिः अन्या। धारा [24]प्रपाते (ग. सू. ३५)। धृतिः अन्या॥

---

1. स च इत्यधिकम् ब. फ. 2. तस्याम् अ. 3. निषीदन्ति अस्याम् इति निषद्या आपणः। निपतन्ति तस्यां निपद्या पिच्छिला भूमिः। मन्यतेऽनया इति मन्या गलपार्श्वशिरा। विदन्ति तया इति विद्या। सूयते अभिषूयते सोमः अस्यां सुत्या अभिषवदिवसः। शेरते तस्यां इति शय्या खट्वादि। भृत्या भरणम्। ईयते गम्यतेऽनया इति इत्या शिबिका क. फ. 4. भावे इत्यधिकम् अ. ब. क. 5. भवति इत्यधिकम् ग. 6. एषणम् इत्यधिकम् ब. 7. क्तिनोऽपवादः इत्यधिकम् ह. 8. इति इत्यधिकम् फ. 9. विषये इत्यधिकम् क. फ, भावे इत्यधिकम् ब. ह. 10. वाक्यमिदं नास्ति ग. 11. पोपूया इत्यधिकम् ह. 12. तस्मात् अ. ब. 13. धातुभ्यः इत्यधिकम् अ. ब. 14. निर्दिश्यन्ते अ. क. फ. ह. 15. विदा नास्ति फ. 16. गुधा ड. 17. आरा नास्ति ब. फ. 18. कारा बन्धने ड. फ. 19. तारा ज्योतिषि अ. ब. फ. ह, तूर्णिः अन्या इत्यधिकम् ड. 20. उखा इत्यधिकम् ह. 21. गवया इत्यधिकम् अ. 22. मृजा ब. ड. फ. ह. 23. विदारणा ह. 24. प्रपातने ड. ह.

## चिन्तिपूजिकथिकुम्बिचर्चश्च । (१०५/३२८२)

'चिति स्मृत्याम्' (धा.पा. १५३६), 'पूज पूजायाम्' (धा.पा. १६४३), 'कथ [1]वाक्यप्रबन्धे' (धा.पा. १८५२), 'कुबि आच्छादने' (धा. पा. १६५६), 'चर्च अध्ययने' (धा. पा. १७१३) [2]चुरादिः, एभ्यो [3]धातुभ्यः युचि प्राप्ते स्त्रियाम् अङ् प्रत्ययो [4]भवति । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । [5]चकारात् युच् अपि भवति । [6]चिन्तना ॥

## आतश्चोपसर्गे । (१०६/३२८३)

[7]आकारान्तेभ्यः[8] उपसर्गे उपपदे स्त्रियाम् अङ् प्रत्ययो भवति । [9]क्तिनोऽपवादः । प्रदा[10] । उपदा । प्रधा । उपधा । श्रदन्तरोरुपसर्गवद् वृत्तिः । श्रद्धा । अन्तर्धा ॥

## ण्यासश्रन्थो युच् । (१०७/३२८४)

[11]ण्यन्तेभ्यो धातुभ्यः, आस श्रन्थ इत्येताभ्यां च [12]स्त्रियां युच् प्रत्ययो भवति । [13]अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना । कथम् आस्या ? 'ऋहलोर्ण्यत्' (३. १. १२४/२८७२) [14]भविष्यति । वासरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्यै[15]वोत्सर्गापवादस्य । श्रन्थिः क्र्यादिर्गृह्यते 'श्रन्थ विमोचनप्रतिहर्षयोः' (धा.पा. १५११) इति, [16]न चुरादिः 'श्रन्थ ग्रन्थ सन्दर्भे' (धा.पा.१८३९–४०) इति । [17]ण्यन्तत्वेनैव सिद्धत्वात् ।

[३१५] [18]घट्टिवन्दिविदिभ्य उपसङ्ख्यानम् । (म.भा.२.१५४)

घट्टना । वन्दना । वेदना ।

घट्टेः भौवादिकस्य ग्रहणं 'घट्ट चलने' (धा.पा. २५९) इति, न [19]चौरादिकस्य (धा.पा. १६३१), तस्य णेः इत्येव सिद्धत्वात् ।

[३१६] इषेरनिच्छार्थस्य युज् वक्तव्यः । (म. भा.२.१५४)

[20]अध्येषणा । अन्वेषणा ।

[३१७] परेर्वा । (म.भा. २.१५४)

पर्येषणा, परीष्टिः ॥

---

1. वाक्यप्रतिबन्धे ड, वाक्यप्रबन्धने ग. 2. चुरादिगणः फ. 3. धातुभ्यः नास्ति फ. 4. विधीयते फ. 5. चकारात् नास्ति अ. ब. ड. 6. चर्चना क, पूजना कुम्बना चर्चना फ, कथना इत्यधिकम् ग. ह. 7. स्त्रियामिति वर्तते इत्यधिकम् ब. 8. धातुभ्यः इत्यधिकम् ड. फ. ह. 9. वाक्यमिदं नास्ति फ. 10. इष्यते इत्यधिकम् ह. 11. स्त्रियामित्येव इत्यधिकम् ब. 12. स्त्रियां नास्ति फ. 13. अकारप्रत्ययस्य अ. क. 14. इति ण्यन्ताद् भविष्यति ड. 15. उत्सर्गस्य ह. 16. न तु ह. 17. ण्यन्तत्वादेव ह. 18. घटि ड. 19. घट्ट संवरणे इत्यस्य इत्यधिकम् मुद्रितपुस्तकेषु. 20. अध्येषणा नास्ति अ. फ.

## रोगाख्यायां ण्वुल् बहुलम् । (१०८/३२८७)

[1]रोगाख्यायां गम्यमानायां धातोः ण्वुल् प्रत्ययो बहुलं भवति । क्तिन्नादीनामपवादः । आख्याग्रहणं रोगस्य चेत् [2]प्रत्ययान्तेन सञ्ज्ञा भवति । बहुलग्रहणं व्यभिचारार्थम् । प्रच्छर्दिका । प्रवाहिका । [3]विर्चर्चिका । न [4]च भवति । शिरोर्तिः ।

[३१८] धात्वर्थनिर्देशे ण्वुल् वक्तव्यः । (म.भा. २.१५४)

[5]आशिका । [6]शायिका वर्तते ।

[३१९] इक्श्तिपौ धातुनिर्देशे[7] । (म. भा. २.१५४)

[8]भिदिः । छिदिः । पचतिः । पठतिः ।

[३२०] वर्णात् कारः । (म. भा. २.१५४)

निर्देश इति प्रकृतम् । अकारः । इकारः[9] ।

[३२१] रादिफः । (म. भा. २. १५४)

रेफः ।

[३२२] मत्वर्थाच्छः । (म.भा. २.१५५)

अकारलोपः[10] । मत्वर्थीयः ।

[३२३] इणजादिभ्यः । (म. भा. २.१५५)

आजिः । [11]आतिः । आदिः ।

[३२४] इक् कृष्यादिभ्यः । (म. भा. २.१५५)

कृषिः । किरिः[12] ॥

## सञ्ज्ञायाम् । (१०९/३२८८)

सञ्ज्ञायां विषये धातोः ण्वुल् प्रत्ययो भवति । [13]उद्दालकपुष्पभञ्जिका । [14]वरणपुष्पप्रचायिका । [15]अभ्यूषखादिका । आचोषखादिका । [16]शालभञ्जिका । तालभञ्जिका ॥

---

1. स्त्रियामिति वर्तते इत्यधिकम् ब. 2. प्रत्ययान्तसञ्ज्ञा अ. ब. क. फ. ह. 3. विर्चर्चिका नास्ति फ, विर्चविका ड. 4. च नास्ति ह. 5. आसिका अ. ब. क. ड. 6. शायिका नास्ति अ. 7. वक्तव्यौ इत्यधिकम् क. 8. भिदिः नास्ति फ, विधिः क. 9. उकारः इत्यधिकम् ह. फ, ककारः ड. 10. भवति इत्यधिकम् फ, अकारलोपः नास्ति ड. 11. आतिः नास्ति ब, आदिः नास्ति ब. ड, आर्दिः क. 12. ऋषिः इत्यधिकम् ह, गिरिः इत्यधिकम् अ. ब. क. ड. 13. सालपुष्पभञ्जिका फ. 14. वक्षणपुष्प° अ, वारणपुष्प°क, वीणपुष्पभञ्जिका ब, बाणपुष्पप्रवाहिका ड. 15. अभ्योषभञ्जिका ह. 16. मालरञ्जिका अ, नालभञ्जिका ह, मालभञ्जिका अ.

## विभाषाख्यानपरिप्रश्नयोरिञ् च । (११०/३२८७)

[1]पूर्वं परिप्रश्नः, पश्चादाख्यानम् । सूत्रेऽल्पाच्तरस्य पूर्वनिपातः । परिप्रश्ने आख्याने च गम्यमाने धातोः इञ् प्रत्ययो भवति, चकारात् ण्वुल् [2]अपि । विभाषाग्रहणात् [3]परोऽपि यः प्राप्नोति, सोऽपि भवति । कां त्वं कारिमकार्षीः, कां कारिकाम् अकार्षीः, कां क्रियामकार्षीः, कां कृत्यामकार्षीः, कां कृतिमकार्षीः ? [4]सर्वां कारिमकार्षम्, सर्वां कारिकाम् अकार्षम्, सर्वां क्रियामकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षम् । कां गणिमजीगणः, कां गणिकामजीगणः, कां गणनामजीगणः ? [5]सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनाम् । [6]एवं कां याजिम्, कां याजिकाम्, कां याचिम्, कां याचिकाम्, कां पाचिम्, कां पाचिकाम् कां पचाम्, कां पक्तिम्, कां पाठिम्, कां पाठिकाम्, कां पठितिम् इति द्रष्टव्यम् । आख्यानपरिप्रश्नयोः इति किम् ? [7]कृतिः । हृतिः[8] ॥

## पर्यायार्हर्णोत्पत्तिषु ण्वुच् । (१११/३२८८)

[9]पर्यायः परिपाटीक्रमः । अर्हणमर्हः, तद्योग्यता । ऋणं [10]तत् यत् [11]परस्य धार्यते । उत्पत्तिः जन्म । एतेष्वर्थेषु[12] धातोः ण्वुच् प्रत्ययो [13]भवति । [14]क्तिन्नादीनामपवादः । पर्याये तावत् – भवतः शायिका । भवतोऽ[15]-ग्रग्रासिका । अर्हे – अर्हति भवान् [16]इक्षुभक्षिकाम् । ऋणे – इक्षुभक्षिकां [17]मे धारयसि । ओदनभोजिकाम्[18] । पयःपायिकाम्[19] । उत्पत्तौ – इक्षुभक्षिका मे उदपादि । ओदनभोजिका[20] । [21]पयःपायिका । विभाषा इत्येव, [22]चिकीर्षा उत्पद्यते । ण्वुलि प्रकृते प्रत्ययान्तरकरणं स्वरार्थम् ॥

## आक्रोशे नञ्यनिः । (११२/३२८९)

[23]विभाषा इति निवृत्तम् । आक्रोशः शपनम् । [24]आक्रोशे गम्यमाने नञि उपपदे धातोः अनिः प्रत्ययो भवति । क्तिन्नादीनामपवादः । [25]अकरणिस्ते वृषल भूयात् । आक्रोशे इति किम् ? अकृतिस्तस्य [26]कटस्य । नञि इति किम् ? मृतिस्ते वृषल भूयात् ॥

## कृत्यल्युटो बहुलम् । (११३/२८४१)

भावे, अकर्तरि च कारके इति निवृत्तम्[27] । कृत्यसञ्ज्ञकाः प्रत्ययाः ल्युट् च बहुलमर्थेषु भवन्ति । यत्र [28]विहितास्ततोऽन्यत्रापि भवन्ति । भावकर्मणोः कृत्या विहिताः कारकान्तरेऽपि भवन्ति । [29]स्नानीयं चूर्णम् । दानीयो ब्राह्मणः । करणाधिकरणयोः भावे [30]च ल्युट् । अन्यत्रापि भवति । [31]अपसेचनम् । अवस्रावणम् । राजभोजनाः शालयः । राजाच्छादनानि वासांसि । [32]प्रस्कन्दनम् । प्रपतनम् । बहुलग्रहणादन्येऽपि कृतः यथाप्राप्तमभिधेयं व्यभिचरन्ति । पादाभ्यां ह्रियते पादहारकः । गले [33]चोप्यते गलेचोपकः[34] ॥

---

1. ण्वुल् इत्येव इत्यधिकम् क. फ. ह. 2. च फ. 3. अपरो ब. ड. 4. सर्वत्र बहुवचनं दृश्यते ड. 5. सर्वा गणीरजीगणम् ड. 6. इत्यादि द्रष्टव्यम् फ, एवं – हृतिः नास्ति फ, एवं कं पाचिम्, कं याजिम् इति द्रष्टव्याः अ. ड. 7. कृतिः नास्ति ह. 8. भृतिः इत्यधिकम् फ, शृतिः इत्यधिकम् क. 9. स्त्रियामित्येव इत्यधिकम् ब. 10. तत् नास्ति क. 11. परस्मै फ. 12. गम्यमानेषु इत्यधिकम् ह. फ. 13. भवति नास्ति फ, विधीयते अ. 14. विभाषा इत्यधिकम् अ. क. ड. 15. अग्रग्रामिका अ. क. फ. ह, ग्रामगामिका ब, भवत आसिका ब. क. ड. 16. पयःपायिकाम् ब. 17. मे नास्ति क. 18. मे धारयसि इत्यधिकम् फ. 19. इत्यादि भवति ऋणे इत्यधिकम् फ. 20. उदपादि इत्यधिकम् फ. 21. पयःपायिका नास्ति ब. 22. जिहीर्षा फ. 23. स्त्रियामित्येव इत्यधिकम् ब. 24. तस्मिन् फ. 25. अप्रापणिः क, अप्रयाणिः ड. 26. पटस्य ब, घटस्य क. 27. स्त्रियामिति च इत्यधिकम् ब. 28. उक्ताः फ. 29. करणे इत्यधिकम्, दानीयं ह. 30. च नास्ति ह. 31. कर्मणि इत्यधिकम् ह. 32. प्रस्तननम् ह. 33. चोप्यते नास्ति फ, चुप्यते ब. ड. 34. अमूर्धमस्तकादित्यलुक् इत्यधिकम् क.

## नपुंसके भावे क्तः । (११४/३०९०)

नपुंसकलिङ्गे भावे [1]धातोः क्तः प्रत्ययो भवति । [2]हसितम् । सहितम् । जल्पितम् ॥

## ल्युट् च । (११५/३२९०)

नपुंसकलिङ्गे भावे धातोः ल्युट् प्रत्ययो भवति । हसनं छात्रस्य । [3]शोभनम् । जल्पनम् । शयनम् । आसनम् । योगविभाग उत्तरार्थः ॥

## कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् । (११६/३२९१)

येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते, तस्मिन् कर्मणि उपपदे धातोः नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति । पूर्वेणैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम् । उपपदसमासो हि नित्यः समासः । पयःपानं सुखम् । ओदनभोजनं सुखम् । कर्मणि इति किम् ? तूलिकाया उत्थानं सुखम् । संस्पर्शात् इति किम् ? अग्निकुण्डस्य उपासनं सुखम् । कर्तुः इति किम् ? गुरोः स्नापनं सुखम् । स्नापयतेः न गुरुः कर्ता, किं तर्हि, कर्म । शरीरग्रहणं किम् ? [4]पुत्रस्य परिष्वजनं सुखम् । सुखं मानसी प्रीतिः । सुखमिति किम् ? कण्टकानां [5]मर्दनं दुःखम् । सर्वत्रासमासः प्रत्युदाह्रियते ॥

## करणाधिकरणयोश्च । (११७/३२९३)

करणेऽधिकरणे च कारके [6]धातोः ल्युट् प्रत्ययो भवति । [7]इध्मप्रव्रश्चनः । पलाशशातनः । अधिकरणे – गोदोहनी । सक्तुधानी ॥

## पुंसि सञ्ज्ञायां घः प्रायेण । (११८/३२९६)

करणाधिकरणयोः [8]इत्येव । पुंलिङ्गयोः [9]करणाधिकरणयोरभिधेययोः धातोः घः [10]प्रत्ययो भवति समुदायेन चेत् [11]सञ्ज्ञा गम्यते । प्रायग्रहणमकार्त्स्न्यार्थम् । दन्तच्छदः[12] । उरश्छदः [13]पटः । अधिकरणे खल्वपि – एत्य तस्मिन् कुर्वन्ति इति आकरः । आलयः । पुंसि इति किम् ? प्रसाधनम्[14] । सञ्ज्ञायाम् इति किम् ? प्रहरणो दण्डः । घकारः 'छादेर्घेऽद्व्युपसर्गस्य' (६.४.९६/३२९७) इति विशेषणार्थः ॥

---

1. धातोः नास्ति ब. फ. 2. छात्रस्य शोभनम् अ. ब. क. ड. ह, शयितम् भुक्तम् आसितम् ब. ड. फ. ह. 3. शोभनम् नास्ति फ, भोजनम् ड, भुक्तम् क. 4. प्रपुत्रस्य ह. 5. संमर्दनम् ह. 6. अभिधेये इत्यधिकम् ब. क. ड. फ. 7. इध्मव्रश्चनः ड. 8. एव फ. 9. करणाधिकरणयोः नास्ति फ. 10. प्रत्ययः नास्ति फ. 11. सञ्ज्ञा या ह. 12. अधरः इत्याधिकम् फ, दन्तच्छदौ ओष्ठौ इत्यधिकम् ह. 13. प्लवः क, घटः अ. 14. व्याकरणम् इत्यधिकम् ग. फ.

## गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च । (११९/३२९८)

गोचरादयः शब्दाः [1]घप्रत्ययान्ता निपात्यन्ते पूर्वस्मिन्नेवार्थे । 'हलश्च' (३.३.१२१/३३००) इति घञं वक्ष्यति, तस्यायमपवादः । गावश्चरन्ति अस्मिन् इति गोचरः[2] । सञ्चरन्ते अनेन इति सञ्चरः[3] । वहन्ति [4]तेन वहः । व्रजन्ति तेन व्रजः । व्यजन्ति तेन व्यजः[5] । निपातनात् 'अजेर्व्यघञपोः' (२.४.५६/२२९२) इति वीभावो न भवति । एत्य [6]तस्मिन्नापणन्ते इत्यापणः । निगच्छन्ति तस्मिन् इति निगमः[7] । चकारोऽनुक्तसमुच्चयार्थः । कषः । [8]निकषः ॥

## अवे तृस्त्रोर्घञ् । (१२०/३२९९)

अवे उपपदे तरतेः [9]स्तृणातेश्च धातोः करणाधिकरणयोः[10] सञ्ज्ञायां घञ् प्रत्ययो भवति । [11]घस्यापवादः । ञकारो [12]वृद्ध्यर्थः स्वरार्थश्च । घकारः उत्तरत्र कुत्वार्थः । अवतारः । अवस्तारः[13] । कथम् [14]अवतारो नद्याः, न ह्ययं सञ्ज्ञा ? [15]प्रायानुवृत्तेः असञ्ज्ञायामपि भवति ॥

## हलश्च । (१२१/३३००)

पुंसि सञ्ज्ञायाम्, करणाधिकरणयोश्च[16] इति सर्वमनुवर्तते । हलन्ताद् धातोः [17]करणाधिकरणयोः घञ् प्रत्ययो भवति । [18]घस्यापवादः । लेखः । वेदः । वेष्टः । बन्धः । मार्गः । [19]अपामार्गः । वीमार्गः ॥

## अध्यायन्यायोद्यावसंहाराधारावायाश्च । (१२२/३३०१)

अध्यायादयः शब्दाः [20]घञन्ता निपात्यन्ते । पुंसि सञ्ज्ञायां घे (३.३.११८/३२९६) प्राप्ते घञ् विधीयते । अहलन्तार्थ आरम्भः । [21]अधीयते अस्मिन् इति अध्यायः । [22]नीयत अनेन इति न्यायः । उद्युवन्ति अस्मिन् इति उद्यावः । संह्रियन्तेऽनेन [23]इति संहारः । आध्रियन्ते अस्मिन् इति आधारः । आवयन्ति [24]अस्मिन्निति आवायः । चकारोऽनुक्तसमुच्चयार्थः । अवहारः ॥

---

1. घप्रत्ययान्ता नास्ति ब. 2. देशः इत्यधिकम् अ. ब. क. ड. फ. ह. 3. अध्वा इत्यधिकम् फ, मार्गः इत्यधिकम् अ. 4. अनेन इति क. 5. तालवृन्तम् इत्यधिकम् फ. 6. अस्मिन् फ, नास्ति ब, आपणन्ति ह. 7. छन्दः वेदः इत्यधिकम् अ. 8. निकषन्ति अनेन इति निकषः ह. 9. स्तृणतेः ह. 10. पुंलिङ्गयोश्च इत्यधिकम् ह, सञ्ज्ञायां नास्ति फ. 11. घस्यापवादः नास्ति ब. 12. वृद्धिस्वरार्थः अ. ब. 13. अवतरः अपि इत्यधिकम् अ. 14. अवतरः ह. 15. प्रायेणग्रहणानुवृत्तेः ब, प्रायेण इत्यनुवृत्तेः ड. 16. च नास्ति फ. 17. करणाधिकरणयोः नास्ति फ. 18. प्रायेण इत्यधिकम् क. 19. अपमार्गः ह. 20. घञन्ता नास्ति फ. 21. अधीयन्ते ह. 22. न्येति निश्चिनोति अनेन इति शास्त्रयुक्त्यादिरत्र न्यायः इति अ. 23. इति नास्ति फ. 24. तस्मिन् ह.

## उदङ्कोऽनुदके । (१२३/३३०२)

उदङ्क इति निपात्यते अनुदकविषयश्चेद् धात्वर्थो [1]भवति । उत्पूर्वादञ्चतेः घञ् [2]निपात्यते । ननु च 'हलश्च' (३.३.१२१/३३००) इति [3]सिद्ध एव घञ् ? [4]उदके प्रतिषेधार्थमिदं वचनम् । तैलोदङ्कः[5] । अनुदके इति किम् ? उदकोदञ्चनः । घः कस्मान्न प्रत्युदाह्रियते ? विशेषाभावात् । घञ्यपि थाथादिस्वरेण अन्तोदात्त एव ॥

## जालमानायः । (१२४/३३०३)

आनायः इति निपात्यते जालं चेत् तद् भवति । आङ्पूर्वात् नयतेः करणे घञ् निपात्यते । आनायो मत्स्यानाम् । आनायो मृगाणाम्[6] ॥

## खनो घ च । (१२५/३३०४)

खनतेः धातोः [7]करणाधिकरणयोः घः प्रत्ययो भवति । [8]चकारात् घञ् च । आखनः, आखानः ।

[३२५] [9]डो वक्तव्यः । (म. भा. २.१५६)
आखः ।

[३२६] डरो वक्तव्यः । (म. भा. २. १५६)
आखरः ।

[३२७] इको वक्तव्यः । (म. भा. २. १५६)
आखनिकः ।

[३२८] इकवको वक्तव्यः । (म. भा. २. १५६)
आखनिकवकः[10] ॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । (१२६/३३०५)

करणाधिकरणयोः [11]इति निवृत्तम् । ईषत् दुस् सु इत्येतेषु उपपदेषु कृच्छ्राकृच्छ्रार्थेषु धातोः खल् प्रत्ययो भवति । कृच्छ्रं दुःखम्, तद् दुरो विशेषणम् । अकृच्छ्रं सुखम्, तदितरयोः विशेषणम्, सम्भवात् । ईषत्करो भवता कटः । दुष्करः । सुकरः । ईषद्भोजः[12] । [13]दुर्भोजः । सुभोजः । ईषदादिषु इति किम् ? कृच्छ्रेण [14]कार्यः कटः । कृच्छ्राकृच्छ्रार्थेषु इति किम् ? [15]ईषत्कार्यः । लकारः स्वरार्थः । खित्करणमुत्तरत्र मुमर्थम् ॥

---

1. भवति नास्ति फ. 2. निपात्यते नास्ति फ. 3. सिद्धमेव ग. 4. उदकप्रतिषेधार्थम् अ. 5. घृतोदङ्कः इत्यधिकम् क. ड. फ. ह. 6. जालमिति किम् ? आनयः इत्यधिकम् अ. क. ड. 7. करणाधिकरणयोः नास्ति फ. 8. चकारात् नास्ति ब. 9. खनेर्डडरेकेकवका वाच्याः इति वार्तिकमत्र छिन्नम् इत्यधिकम् अ. ह. 10. खलः भगः पदं च इति वक्तव्यम् इत्यधिकम् ड. 11. च ब. 12. ओदनो भवता इत्यधिकम् अ. ब. क. फ. ड. ह. 13. दुर्भोजनः सुभोजनः फ. 14. कार्यम् क. फ. ह, कटः नास्ति अ. फ. 15. ईषत्कार्यम् फ.

## कर्तृकर्मणोश्च भूकृञोः । (१२७/३३०८)

भवतेः करोतेश्च धातोः यथासङ्ख्यं कर्तरि कर्मणि चोपपदे, चकाराद् ईषदादिषु च खल् प्रत्ययो भवति । ईषदाढ्यम्भवं भवता । दुराढ्यम्भवम्[1] । ईषदाढ्यङ्करः[2] । स्वाढ्यङ्करो देवदत्तो भवता ।

[३२९] कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम् । (म. भा. २.१५७)

इह मा भूत्, स्वाढ्येन भूयते ॥

## आतो युच् । (१२८/३३०९)

ईषदादयोऽनुवर्तन्ते । कर्तृकर्मणोः इति[3] न [4]स्वर्यते । [5]कृच्छ्राकृच्छ्रार्थेषु ईषदादिषु उपपदेषु आकारान्तेभ्यो धातुभ्यः युच् प्रत्ययो भवति । खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । ईषद्दानो [6]गौर्भवता । [7]दुर्दानः । सुदानः ॥

## छन्दसि गत्यर्थेभ्यः । (१२९/३४२१)

ईषदादिषु [8]कृच्छ्राकृच्छ्रार्थेषु उपपदेषु गत्यर्थेभ्यो धातुभ्यः छन्दसि विषये युच् [9]प्रत्ययो भवति । खलोऽपवादः । 'सूपसदनोऽग्निः' (तै. सं. ७. ५. २०. १) । सूपसदनमन्तरिक्षम् ॥

## अन्येभ्योऽपि दृश्यते । (१३०/३४२२)

अन्येभ्योऽपि धातुभ्यः गत्यर्थेभ्यः छन्दसि विषये युच् प्रत्ययो दृश्यते । '[10]सुदोहनामकृणोद् ब्रह्मणे गाम्' (नि. ११.४३) । '[11]सुवेदनामकृणोर्ब्रह्मणे गाम्' (ऋ. १०. ११२. ८)[12] ।

[३३०] भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः । (म. भा. २. १५७)
दुःशासनः । दुर्योधनः[13] । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः ॥

## वर्तमानसामीप्ये वर्तमानवद् वा । (१३१/२७८९)

समीपमेव सामीप्यम् । ष्यञः स्वार्थिकत्वं [14]ज्ञाप्यते चातुर्वर्ण्यादिसिद्ध्यर्थम् । [15]वर्तमानसमीपे भूते भविष्यति[16] च वर्तमानाद् धातोः [17]वर्तमानवत् प्रत्यया [18]वा भवन्ति । 'वर्तमाने लट्' (३. २. १२३/२१५१)

---

1. भवता इत्यधिकम् क. फ, स्वाढ्यंभवं भवता इत्यधिकम् क. 2. दुराढ्यंकरो देवदत्तो भवता इत्यधिकम् अ. क. 3. तु इत्यधिकम् अ. ब. ड. 4. स्मर्यते क. 5. कृच्छ्राकृच्छ्रार्थेषु नास्ति फ. 6. गौः नास्ति फ. 7. दुर्दानः सुदानः नास्ति फ. 8. कृच्छ्राकृच्छ्रार्थेषु नास्ति क. 9. प्रत्ययः नास्ति ग. 10. उदाहरणमिदं नास्ति अ. 11. उदाहरणमिदं नास्ति फ. 12. सूपसदनोऽग्निः सूपसदनमन्तरिक्षम् संदृश्यते सुदाहेः इत्यधिकम् ह, अपिशब्दः सर्वोपाधिव्यभिचारार्थः इत्यधिकम् क. 13. अन्तर्भूतण्यर्थोऽत्र युधिः इत्यधिकम् क. 14. धात्वर्थे ब. क. ड. 15. वर्तमानसामीप्ये ह. 16. चार्थे क, धात्वर्थे ह. 17. विभाषा इत्यधिकम् ह. 18. वा नास्ति ग. ह.

इत्यारभ्य यावद् 'उणादयो बहुलम्' (३. ३. १/३१६९) इति वर्तमाने [1]प्रत्यया उक्ताः, ते भूतभविष्यतोर्विधीयन्ते। कदा देवदत्त आगतोऽसि ? अयमागच्छामि। आगच्छन्तमेव मां विद्धि। [2]अयमागमम्। [3]एषोऽस्मि आगतः। कदा देवदत्त गमिष्यसि ? एष गच्छामि। गच्छन्तमेव मां विद्धि। [4]एष गमिष्यामि। [5]गन्तास्मि। वत्करणं सर्वसादृश्यार्थम्। येन विशेषणेन [6]वर्तमाने प्रत्ययाः विहिताः [7]प्रकृत्योपपदोपाधिना तथैवात्र[8] भवन्ति। पवमानः। यजमानः। अलङ्करिष्णुः। सामीप्यग्रहणं किम् ? विप्रकर्षविवक्षायां मा भूत्, परुदगच्छत् पाटलिपुत्रम्। वर्षेण[9] गमिष्यति।

[10]यो मन्यते गच्छामीति पदं [11]वर्तमाने काले एव वर्तते, [12]कालान्तरगतिस्तु वाक्याद् भवति, न च वाक्यगम्यः कालः [13]पदसंस्कारवेलायामुपयुज्यते इति [14]तादृशं [15]वाक्यार्थप्रतिपत्तारं प्रति प्रकरणमिदं नारभ्यते। तथा च श्वः करिष्यति, वर्षेण [16]गमिष्यति इति सर्वमुपपद्यते॥

## आशंसायां भूतवच्च। (१३२/२७९०)

वा इत्येव। वर्तमानसामीप्ये इति[17] नानुवर्तते। आशंसनमाशंसा, अप्राप्तस्य [18]प्रियार्थस्य [19]प्राप्तुमिच्छा। तस्याश्च [20]भविष्यत्कालो विषयः। तत्र भविष्यति काले आशंसायां गम्यमानायां [21]धातोः वा भूतवत् प्रत्यया भवन्ति, [22]चकाराद् वर्तमानवच्च। उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, [23]एते व्याकरणमध्यगीष्महि, एते व्याकरणमधीतवन्तः, [24]अधीमहे, [25]अध्येष्यामहे। सामान्यातिदेशे[26] [27]विशेषानतिदेशाल् [28]लङ्लिटौ न भवतः। आशंसायाम् इति किम् ? [29]आगमिष्यति॥

## क्षिप्रवचने लृट्। (१३३/२७९१)

[30]आशंसायाम् इत्येव। क्षिप्रवचने उपपदे आशंसायां गम्यमानायां धातोः लृट् प्रत्ययो भवति। भूतवच्च [31]इत्यस्यायमपवादः। उपाध्यायश्चेत् क्षिप्रमागमिष्यति, क्षिप्रं[32] व्याकरणमध्येष्यामहे। वचनग्रहणं पर्यायार्थम्। [33]क्षिप्रम्, शीघ्रम्, आशु, त्वरितम्, अध्येष्यामहे। न इति वक्तव्यं [34]लृड्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः क्षिप्रमध्येष्यामहे॥

## आशंसावचने लिङ्। (१३४/२७९२)

आशंसा येनोच्यते तदाशंसावचनम्। [35]तस्मिन्नुपपदे [36]धातोर्लिङ् प्रत्ययो भवति। भूतवच्च इत्यस्या[37]-यमपवादः। उपाध्यायश्चेदागच्छेत्, [38]आशंसे युक्तोऽधीयीय। आशंसे [39]अवकल्पये युक्तोऽधीयीय। आशंसे क्षिप्रमधीयीय॥

---

1. ये इत्यधिकम् क. 2. अयमागतः ह. 3. अयमस्मि आगतः ह. 4. एष नास्ति फ. ह. 5. श्वः इत्यधिकम् ड. फ. 6. चं इत्यधिकम् ब. 7. प्रकृत्युपपदादिना क. फ. 8. अत्रापि ह. 9. अभिगमिष्यति ग्रामं फ, गमिष्यति ग्रामम् ग. ह. 10. यो हि ह. 11. वर्तमानकाले ग. 12. कालान्तरावगतिस्तु ड. 13. पदसंस्कारायोपयुज्यते क, पदसंस्कारे अ. 14. तं ब. क, तत्तादृशं ह. 15. वाक्यार्थाभिज्ञं फ. ह. 16. करिष्ये क. 17. तु इत्यधिकम् अ. 18. अर्थस्य ग. 19. प्राप्तीच्छा अ. ब. 20. °काले क 21. धातोः नास्ति क. फ, विभाषा अ. 22. चकारात् नास्ति क. फ. 23. एते नास्ति फ. 24. एते इत्यधिकम् अ. 25. एते इत्यधिकम् ह. 26. हि इत्यधिकम् अ. ब. ड. 27. विशेषानतिदेशः तेन अ. ड. 28. लङ्लिङौ क. 29. उपाध्यायः इत्यधिकम् ड. 30. वाक्यमिदं नास्ति क. ह. फ. 31. अयं नास्ति अ. 32. एते इत्यधिकम् फ. 33. क्षिप्रं नास्ति ह. 34. लृङ्वचनं क. 35. आशंसायां गम्यमानायाम् फ. ह. 36. धातोः नास्ति क. फ. ह. 37. अयं नास्ति क. फ. ह. 38. नियुक्तोऽसावाशंसे अ. ड. 39. अवकल्पये नास्ति फ.

## नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः । (१३५/२७९३)

भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ, [1]तयोरयं प्रतिषेधः । अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये [2]च गम्यमाने । [3]क्रियाणां प्रबन्धः सातत्येनानुष्ठानम् । कालानां सामीप्यं तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भृशमन्नमदात् । [4]भृशमन्नं दास्यति । [5]यावज्जीवं पुत्रानध्यापिपत् । यावज्जीवमध्यापयिष्यति । सामीप्ये खल्वपि – येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट, गामदित । येयममावास्या आगामिनी, एतस्यामुपाध्यायोऽग्नीनाधास्यते, [6]सोमेन यक्ष्यते, स गां दास्यते । द्वौ प्रतिषेधौ यथाप्राप्तस्याभ्यनुज्ञापनाय ॥

## भविष्यति मर्यादावचनेऽवरस्मिन् । (१३६/२७९४)

नानद्यतनवत् इति वर्तते । अक्रियाप्रबन्धार्थम्, असामीप्यार्थं च वचनम् । भविष्यति काले मर्यादावचने सत्यवरस्मिन् प्रविभागे[7]ऽनद्यतनवत् प्रत्ययविधिर्न भवति । [8]योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून् पास्यामः । भविष्यति इति किम् ? योऽयमध्वा गतः आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र युक्ता अध्यैमहि, तत्र द्विरोदनम् अभुञ्ज्महि, तत्र[9] सक्तूनपिबाम । मर्यादावचने इति किम् ? योऽयमध्वा निरवधिको गन्तव्यः, [10]तस्य यदवरं कौशाम्ब्याः, तत्र [11]द्विरोदनं भोक्तास्महे, सक्तून् पातास्मः । [12]अवरस्मिन् इति किम् ? योऽयमध्वा गन्तव्यः आपाटलिपुत्रात्, तस्य [13]यत्परं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, तत्र [14]सक्तून् पातास्मः । इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता । तत्र च विशेषं वक्ष्यति ।

## कालविभागे चानहोरात्राणाम् । (१३७/२७९५)

भविष्यति मर्यादावचने[15]ऽवरस्मिन् इति [16]वर्तते । कालमर्यादाविभागे सत्यवरस्मिन् प्रविभागे भविष्यति कालेऽनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः । पूर्वेणैव सिद्धे वचन[17]मिदमहोरात्रनिषेधार्थम्[18] । योगविभाग उत्तरार्थः । योऽयं संवत्सर आगामी, तत्र यदवरमाग्रहायण्याः, तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे । भविष्यति इत्येव । योऽयं वत्सरोऽतीतः, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि । मर्यादावचने [19]इत्येव । योऽयं निरवधिकः काल आगामी, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे । अवरस्मिन् इत्येव । परस्मिन् विभाषा (३.३.१३८/२७९६) वक्ष्यति । अहोरात्राणाम् इति किम् ? त्रिविधमुदाहरणम् – योऽयं मास आगामी, तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी, तस्य योऽवरोऽर्धमासः, योऽयं त्रिंशदहोरात्र आगामी, तस्य योऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः । सर्वथा [20]अहोरात्रस्पर्शे प्रतिषेधः ॥

---

1. अयं नास्ति फ, तयोः प्रतिषेधः क्रियते ह. 2. च नास्ति ह. 3. क्रियमाणानां फ. 4. यावज्जीवम् इत्यधिकम् ब, उदाहरणमिदं नास्ति ह. 5. यावज्जीवम् नास्ति फ, यावज्जीवं युक्तोऽध्यापिपत् ह. 6. सोमेन – दास्यते नास्ति फ. 7. गन्तव्ये इत्यधिकम् ब. 8. योऽयम् – पास्यामः नास्ति फ. 9. द्विः इत्यधिकम् ह. 10. तत्र फ. 11. द्विः नास्ति फ. 12. अपरस्मिन् फ. ह. 13. यत्परं नास्ति फ. 14. द्विः इत्यधिकम् ह. 15. अपरस्मिन् सर्वम् अ. ब. फ. 16. अनुवर्तते फ. ह. 17. इदं नास्ति फ. 18. एव इत्यधिकम् फ. 19. इति किम् फ. 20. अहोरात्रसंस्पर्शे ह.

## परस्मिन् विभाषा । (१३८/२७९६)

भविष्यति मर्यादावचने कालविभागे चानहोरात्राणाम् इति [1]सर्वमनुवर्तते । कालमर्यादाविभागे सति भविष्यति काले परस्मिन् प्रविभागे विभाषा अनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्बन्धी प्रविभागः । [2]अवरस्मिन्वर्ज पूर्वमनुवर्तते । अवरस्मिन् पूर्वेण प्रतिषेध उक्तः, सम्प्रति परस्मिन्नप्राप्त एव विकल्प उच्यते । योऽयं संवत्सर आगामी, तस्य यत् परमाग्रहायण्याः तत्र युक्ता अध्येष्यामहे, [3]अध्येतास्महे, तत्र सक्तून् पास्यामः, तत्र सक्तून् पातास्मः । अनहोरात्राणाम् [4]इत्येव । योऽयं त्रिंशद्रात्र आगामी, तस्य यः परः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः । भविष्यति इत्येव । योऽयं संवत्सरोऽतीतः, तस्य यत् परमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि । मर्यादावचने इत्येव । योऽयं [5]संवत्सरो निरवधिकः काल आगामी, तस्य यत् परमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः[6] । कालविभागे इत्येव । योऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यत् परं कौशाम्ब्याः, [7]तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे । इति सर्वत्र अनद्यतनवत् प्रत्यया [8]उदाहार्याः ॥

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ । (१३९/२२२९)

भविष्यति [9]इत्यनुवर्तते । 'हेतुहेतुमतोर्लिङ' (३.३. १५६/२८१३) इत्येवमादिकं लिङो निमित्तम् । तत्र [10]लिङनिमित्ते भविष्यति काले लृङ प्रत्ययो भवति क्रियातिपत्तौ सत्याम् । कुतश्चिद्वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः । दक्षिणेन चेदायास्यन्न शकटं पर्याभविष्यत् । यदि कमलकमाह्वास्यन् न शकटं पर्याभविष्यत् । अभोक्ष्यत भवान् घृतेन यदि मत्समीपमा[11]गमिष्यत् । भविष्यत्कालविषयमेतद्वचनम् । भविष्यदपर्याभवनं [12]च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानम् । [13]लिङ्गिलिङ्गे बुद्ध्वा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङक्ते, यदि कमलकमाह्वास्यन्न शकटं पर्याभविष्यत् इति । हेतुहेतुमतोराह्वानापर्याभवनयोः भविष्य[14]त्कालविषययोः अतिपत्तिः इतो वाक्यादवगम्यते ॥

## भूते च । (१४०/२७०७)

लिङनिमित्ते लृङ क्रियातिपत्तौ इति सर्वमनुवर्तते । पूर्वेण भविष्यति विहितः सम्प्रति भूते विधीयते । भूते [15]च काले लिङनिमित्ते क्रियातिपत्तौ सत्यां लृङ प्रत्ययो भवति । 'उताप्योः समर्थयोर्लिङ' (३.३.१५२/२८०९) [16]इत्यारभ्य लिङनिमित्तेषु विधानमेतत् । प्राक् ततो विकल्पं वक्ष्यति । दृष्टो मया भवत्पुत्रोऽन्नार्थी चङक्रम्यमाणः, अपरश्च [17]द्विजो ब्राह्मणार्थी, यदि स तेन [18]दृष्टोऽभविष्यत्, [19]तदा अभोक्ष्यत । न तु भुक्तवान्, अन्येन पथा स गतः ॥

---

1. सर्वं नास्ति ह. 2. वाक्यमिदं नास्ति फ. ह. 3. तत्र युक्ता इत्यधिकम् फ. 4. इति किम् फ. 5. संवत्सरः नास्ति फ. 6. ओदनं भोक्तास्महे इत्यधिकम् ब. 7. तत्र नास्ति ह. 8. एव उदाहर्तव्याः फ. 9. इत्येव ब. ह. 10. लिङो निमित्ते फ. 11. आसिष्यत ब. फ. 12. च नास्ति अ. क. फ. ह. 13. लिङ्गेन ह. 14. कालयोः फ. 15. च नास्ति ह. 16. इत्यत आरभ्य ह. 17. द्विजो नास्ति फ. 18. दृश्येत चेत् 19. उताहो फ, अपि ह.

## वोताप्योः । (१४१/२७९८)

भूते लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति सर्वमनुवर्तते । वा आ उताप्योः वोताप्योः । मर्यादायाम् [1]अयमाङ्, नाभिविधौ । 'उताप्योः समर्थयोर्लिङ्' (३.३.१५२/२८०९) इति वक्ष्यति । प्रागेतस्मात् [2]सूत्रावधेः यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवति इत्येतदधिकृतं वेदितव्यम् । वक्ष्यति, 'विभाषा कथमि लिङ् च' (३. ३. १४३/२८००) – कथं नाम तत्रभवान् वृषल[3]मयाजयिष्यत् । यथाप्राप्तं च – [4]याजयेत् ॥

## गर्हायां लडपिजात्वोः । (१४२/२७९९)

गर्हा[5] कुत्सा इत्यनर्थान्तरम् । गर्हायां गम्यमानायाम् [6]अपिजात्वोः उपपदयोः धातोः लट् प्रत्ययो भवति । वर्तमाने लट् (३. २. १२३/२१५१) उक्तः कालसामान्ये न प्राप्नोति इति विधीयते । कालविशेष[7]विहितांश्चापि [8]प्रत्ययानयं परत्वाद् [9]अस्मिन् विषये बाधते । अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान् वृषलं याजयति, गर्हामहे, [10]अहो अन्याय्यमेतद् । लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति ॥

## विभाषा कथमि लिङ् च । (१४३/२८००)

गर्हायाम् इति वर्तते । कथमि उपपदे गर्हायां गम्यमानायां धातोः लिङ् प्रत्ययो भवति, चकाराल् [11]लट् च । विभाषाग्रहणं [12]यथास्वं कालविषये विहितानाम्[13] अबाधनार्थम् । कथं नाम तत्रभवान् वृषलं याजयेत्, कथं नाम तत्रभवान् वृषलं याजयति । कथं नाम तत्रभवान् वृषलं याजयिष्यति । कथं नाम तत्रभवान् वृषलं याजयिता । [14]कथं नाम तत्रभवान् वृषलं याजयेत् । कथं नाम तत्रभवान् वृषलमयाजयत् । कथं नाम तत्रभवान् वृषलं याजयांचकार । अत्र लिङ्निमित्तमस्ति इति भूतविवक्षायां क्रियातिपत्तौ वा लृङ्[15] । भविष्यद्विवक्षायां [16]सर्वत्र नित्येनैव [17]लृङा भवितव्यम् ॥

## किंवृत्ते लिङ्लृटौ । (१४४/२८०१)

गर्हायाम् इत्येव । विभाषा न स्वर्यते । किंवृत्ते उपपदे गर्हायां गम्यमानायां धातोः लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । लिङ्ग्रहणं लटो[18]ऽपरिग्रहार्थम् । को नाम[19] वृषलो यं तत्रभवान् याजयेत्, यं तत्रभवान् वृषलं याजयिष्यति । कतरो नाम, कतमो नाम यं तत्रभवान् वृषलं याजयेत्, याजयिष्यति । भूते क्रियातिपत्तौ वा लृङ्[20] । भविष्यति [21]तु नित्यम् । को नाम वृषलो यं तत्रभवान् अयाजयिष्यत् ॥

---

1. अयम् नास्ति फ. ह. 2. सूत्रादवधेः ब. 3. अयाजयत् फ. 4. याजयेत् नास्ति अ. ब, भवति फ. 5. निन्दा कुत्सनेत्य° फ. 6. अपि जातु इत्येतयोः अ. ह. 7. विहिताः प्रत्ययादयः ह, अपि नास्ति क. फ. 8. प्रत्यान्तरम् फ. 9. तस्मिन् फ. 10. अहो नास्ति क. 11. लिट् ह. 12. यथाकालविहितानाम् फ. ह. 13. प्रत्ययानाम् इत्यधिकम् फ. 14. वाक्यमिदं नास्ति फ. 15. भवति इत्यधिकम् फ. ह. 16. तु इत्यधिकम् फ. ह. 17. लृटा ह. 18. परिहारार्थम् ब, निवृत्त्यर्थम् क. ह. 19. अत्र इत्यधिकम् ह. 20. भवति इत्यधिकम् .फ 21. तु नास्ति फ.

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । (१४५/२८०२)

गर्हायाम् इति निवृत्तम् । अनवक्लृप्तिः असम्भावना । अमर्षः अक्षमा । किंवृत्ते[1]ऽकिंवृत्ते चोपपदे अनवक्लृप्त्यमर्षयोः[2] धातोः लिङ्लृटौ [3]प्रत्ययौ भवतः । सर्वलकाराणाम[4]पवादः । बह्वचः पूर्वनिपातो लक्षण-व्यभिचारचिह्नम् । तेन यथासङ्ख्यं न भवति । [5]अनवक्लृप्तौ तावत्—नावकल्पयामि, [6]न सम्भावयामि, न श्रद्दधे तत्रभवान् नाम वृषलं याजयेत्, तत्रभवान् नाम वृषलं याजयिष्यति । को नाम वृषलो यं [7]तत्रभवान् वृषलं याजयेत्, को नाम तत्रभवान् वृषलं याजयिष्यति । अमर्षे – न मर्षयामि तत्रभवान्[8] वृषलं याजयेत्, याजयिष्यति । [9]को नाम वृषलो यं तत्रभवान् याजयेत्, याजयिष्यति । भूतविवक्षायां [10]तु क्रियातिपत्तौ वा [11]लृङ् भवति । भविष्यति [12]नित्यम् । [13]नावकल्पयामि तत्रभवान्नाम [14]वृषलमयाजयिष्यत् ॥

## किंकिलास्त्यर्थेषु लृट् । (१४६/२८०३)

अनवक्लृप्त्यमर्षयोः इति वर्तते । किंकिल[15]शब्दः समुदाय एव उपपदम् । अस्त्यर्थाः अस्तिभवति-विद्यतयः । किंकिलास्त्यर्थेषु उपपदेषु अनवक्लृप्त्यमर्षयोः[16] धातोः लृट् प्रत्ययो भवति[17] । [18]लिङोऽपवादः । [19]किं-किल नाम तत्रभवान् वृषलं याजयिष्यति । अस्ति नाम तत्रभवान् वृषलं याजयिष्यति । भवति नाम तत्रभवान् वृषलं याजयिष्यति । विद्यते नाम तत्रभवान् वृषलं याजयिष्यति । न श्रद्दधे, न मर्षयामि । लिङ्निमित्तमिह नास्ति तेन लृङ् न भवति ॥

## जातुयदोर्लिङ् । (१४७/२८०४)

[20]अनवक्लृप्त्यमर्षयोः इत्येव । जातु यदा इत्येतयोः उपपदयोः अनवक्लृप्त्यमर्षयोः गम्यमानयोः धातोः लिङ् प्रत्ययो भवति । लृटोऽपवादः । जातु तत्रभवान् वृषलं याजयेत्, [21]यन्नाम तत्रभवान् वृषलं याजयेत्, [22]न श्रद्दधे, न मर्षयामि ।

[३३१] जातु[23]यदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानम् । (म. भा. २.१६४)

यदा भवद्विधः क्षत्रियं याजयेत्, यदि भवद्विधः क्षत्रियं याजयेत्, [24]न श्रद्दधे, न मर्षयामि । क्रियातिपत्तौ भूते वा लृङ् । भविष्यति[25] नित्यम् ॥

## यच्चयत्रयोः । (१४८/२८०५)

[26]अनवक्लृप्त्यमर्षयोः[27] इत्येव । यच्च यत्र इत्येतयोः उपपदयोरनवक्लृप्त्यमर्षयोः [28]गम्यमानयोः धातोः लिङ् प्रत्ययो भवति । [29]लृटोऽपवादः । योगविभाग उत्तरार्थः । यथासङ्ख्यं[30] नेष्यते । यच्च तत्रभवान् वृषलं याजयेत् । यत्र तत्रभवान् वृषलं याजयेत्[31] । [32]क्रियातिपत्तौ यथायथं लृङ् भवति ॥

---

1. च इत्यधिकम् फ. ह. 2. गम्यमानयोः इत्यधिकम् फ. ह. 3. प्रत्ययौ नास्ति फ. 4. अपवादौ फ. 5. अनवक्लृप्तौ नास्ति ह. 6. न सम्भावयामि नास्ति ह. 7. तत्रभवान् नास्ति फ. 8. नाम इत्यधिकम् फ. ह. 9. वाक्यमिदं नास्ति फ. 10. तु नास्ति क. 11. लृट् ह. 12. तु इत्यधिकम् क. 13. न मर्षयामि क. 14. वृषलम् नास्ति फ. 15. शब्दे ह, निपातसमुदायः क, शब्दसमुदायः अ. 16. गम्यमानयोः इत्यधिकम् क. फ. 17. त्रिषु कालेषु सर्वेषु साधनेषु इत्यधिकम् ह. 18. लिङोऽपवादः नास्ति फ. 19. किंकिल नास्ति फ. 20. वाक्यमिदं नास्ति फ. 21. नाम नास्ति फ. ह. 22. नावकल्पयामि फ. 23. यदोः नास्ति फ. 24. न श्रद्दधे नास्ति फ. 25. तु इत्यधिकम् ह. 26. वाक्यमिदं नास्ति फ. 27. उपपदयोः इत्यधिकम् ब. 28. एव इत्यधिकम ब. 29. लृटः एव ह. 30. अत्र इत्यधिकम् फ. 31. नावकल्पयामि नावमर्षयामि इत्यधिकम् फ. 32. क्रियातिपत्तौ नास्ति फ.

## गर्हायां च। (१४९/२८०६)

अनवक्लृप्त्यमर्षयोः इति निवृत्तम्। गर्हा, निन्दा, कुत्सा इत्यनर्थान्तरम्। यच्च यत्र [1]इत्येतयोः [2]उपपदयोर्धातोः लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम्। सर्वलकाराणामपवादः। यच्च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेद् ऋद्धो [3]वृद्धः सन् ब्राह्मणः, गर्हामहे, [4]अहो अन्याय्यमेतत्। क्रियातिपत्तौ यथायथं लृङ् भवति॥

## चित्रीकरणे च। (१५०/२८०७)

[5]यच्चयत्रयोः इत्येव। चित्रीकरणम् आश्चर्यम्, अद्‌भुतम्, [6]विस्मयनीयम्। यच्चयत्रयोः उपपदयोः चित्रीकरणे गम्यमाने धातोः लिङ् [7]प्रत्ययो भवति। सर्वलकाराणामपवादः। यच्च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेत्, आश्चर्यमेतत्। क्रियातिपत्तौ यथायथं लृङ् भवति॥

## शेषे लृडयदौ। (१५१/२८०८)

यच्चयत्राभ्यामन्यत्र [8]चित्रीकरणं शेषः। शेषे उपपदे चित्रीकरणे गम्यमाने धातोः लृट् प्रत्ययो भवति, यदिशब्दश्चेन्न प्रयुज्यते। सर्वलकाराणामपवादः। आश्चर्यम्, [9]चित्रम् अद्‌भुतम्, अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरणमध्येष्यते। अयदौ इति किम्? आश्चर्यं यदि स भुञ्जीत, [10]यदि सोऽधीयीत। लिङ्-निमित्ताभावात् इह लृङ् न भवति॥

## उताप्योः समर्थयोर्लिङ्। (१५२/२८०९)

उत अपि इत्येतयोः [11]समर्थयोः धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। बाढम् इत्यस्मिन्नर्थे समानार्थत्वमनयोः। उत कुर्यात्। अपि कुर्यात्। उताधीयीत। अप्यधीयीत। बाढमध्येष्यते इत्यर्थः। समर्थयोः इति किम्? उत दण्डः पतिष्यति? अपि द्वारं धास्यति। प्रश्नः प्रच्छादनं च [12]गम्यते[13]। 'वोताप्योः (३.३.१४१/२७९८) इति विकल्पो निवृत्तः। इतः प्रभृति भूते[14]ऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं लृङ्। भविष्यति तु सर्वत्रैव [15]नित्यः॥

## कामप्रवेदनेऽकच्चिति। (१५३/२८१०)

स्वाभिप्रायाविष्करणम् कामप्रवेदनम्। कामः, इच्छा, अभिलाषः [16]इत्यनर्थान्तरम्। तस्य प्रवेदनम् प्रकाशनम्। तस्मिन् गम्यमाने अकच्चिति उपपदे धातोर्लिङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। कामो मे भुञ्जीत भवान्। अभिलाषो मे भुञ्जीत भवान्[17]। अकच्चिति इति किम्?

कच्चिज्जीवति [18]ते माता कच्चिज्जीवति [19]ते पिता।
[20]माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती॥

---

1. इति गर्हायां गम्यमानायां लिङ् प्रत्ययो भवति फ.ह. 2. उपपदयोः नास्ति फ. 3. विद्वान् फ. 4. अहो नास्ति फ. 5. वाक्यमिदं नास्ति फ. 6. विस्मयः क.ह. 7. प्रत्ययः नास्ति ब.फ. 8. चित्रीकरणं नास्ति फ.ह. 9. विचित्रम् अ. 10. चित्रम् इत्यधिकम् क.फ.ह. 11. समानार्थयोः उपपदयोः फ. 12. यथा सङ्ख्यम् फ. 13. यथासङ्ख्येन इत्यधिकम् ह. 14. अपि नास्ति फ. 15. नित्यम् क. 16. इत्यर्थान्तरम् अ. 17. श्रद्धा मे भुञ्जीत भवान् इत्यधिकम् ह. 18, 19. मे अ.फ. 20. मातापितरौ पृच्छामि ह.

## सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे। (१५४/२८११)

लिङ इत्येव। सम्भावनम् क्रियासु [1]योग्यताध्यवसानम्, [2]शक्तिश्रद्धानम्। तदिदानीम् [3]अलमर्थेन विशेष्यते। [4]तच्चेत् सम्भावनं पर्याप्तमवितथं भवति। सिद्धाप्रयोगे इत्यलमो विशेषणम्। सिद्धश्चेदलमोऽप्रयोगः। क्व चासौ सिद्धः[5]? यत्र गम्यते [6]चार्थो न चासौ[7] प्रयुज्यते। [8]तदीदृशे सम्भावनोपाधिकेऽर्थे वर्तमानाद् धातोः लिङ प्रत्ययो भवति। सर्वलकाराणामपवादः। अपि पर्वतं शिरसा भिन्द्यात्। अपि द्रोणपाकं भुञ्जीत। अलम् इति किम्? [9]विदेशस्थायी देवदत्तः प्रायेण गमिष्यति ग्रामम्। सिद्धाप्रयोगे इति किम्? अलं देवदत्तो हस्तिनं हनिष्यति। क्रियातिपत्तौ भूते [10]भविष्यति च नित्यं लृङ भवति॥

## विभाषा धातौ सम्भावनवचनेऽयदि। (१५५/२८१२)

[11]सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे (३.३.१५४/२८११) इति सर्वमनुवर्तते। सम्भावनमुच्यते येन [12]स सम्भावनवचनः। [13]सम्भावनवचने धातावुपपदे यच्छब्दवर्जिते[14] धातोर्विभाषा लिङ भवति। पूर्वेण [15]नित्यप्राप्तौ विकल्पार्थं वचनम्। सम्भावयामि भुञ्जीत भवान्, सम्भावयामि भोक्ष्यते भवान्। अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान्। श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान्। अयदि इति किम्? सम्भावयामि [16]यद् भुञ्जीत भवान्॥

## हेतुहेतुमतोर्लिङ। (१५६/२८१३)

हेतुः कारणम्। हेतुमत् फलम्। हेतुभूते [17]हेतुमति चार्थे वर्तमानाद् धातोः लिङ प्रत्ययो भवति। [18]सर्वलकाराणामपवादः। दक्षिणेन चेद् यायान्न शकटं पर्याभवेत्। यदि कमलकमाह्वयेन्न शकटं पर्याभवेत्[19]। दक्षिणेन यानं हेतुः, अपर्याभवनं हेतुमत्। विभाषा चायमिष्यते भविष्यति [20]च काले, तेन लृडपि [21]भवति। दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति। तत्र विभाषाग्रहणं तावदनन्तरमेवानुवर्तते। लिङ इति वर्तमाने पुनर्लिङग्रहणं कालविशेषप्रतिपत्त्यर्थम्। तेनेह न भवति, हन्तीति पलायते, वर्षतीति धावति। क्रियातिपत्तौ लृङ भवति॥

## इच्छार्थेषु लिङ्लोटौ। (१५७/२८१४)

इच्छार्थेषु धातुषूपपदेषु धातोः लिङलोटौ प्रत्ययौ भवतः। सर्वलकाराणामपवादः। इच्छामि भुञ्जीत भवान्। इच्छामि भुङक्ताम् भवान्। [22]कामये। प्रार्थये[23]।

[३३२] कामप्रवेदन इति वक्तव्यम्। (म.भा. २.१६५)

इह मा भूत्, इच्छन् [24]करोति॥

---

1. योग्याध्यवसानम् ह. 2. शक्तौ श्रद्धानम् फ. 3. अलमर्थेन नास्ति ह. 4. पर्याप्त्या तच्चेत् संश्रद्धानम् ह, पर्याप्त्या फ. 5. अप्रयोगः इत्यधिकम् फ. 6. च शब्दः फ. 7. असौ नास्ति फ, प्रयुज्यते शब्दः ह. 8. तदीदृशसम्भावनार्थोपाधिकेऽर्थे ह. 9. निदेशस्थायी ह. 10. भविष्यति नास्ति फ. 11. वाक्यमिदं नास्ति फ.ह. 12. तत् सम्भावनवचनम् ह. फ. 13. सम्भावनावचने ह, तत्र इत्यधिकम् फ. 14. उपपदे इत्यधिकम् ह, धातोः नास्ति फ. 15. नित्ये प्राप्ते अनित्यार्थेन फ, नित्ये प्राप्ते वचनम् ह. 16. यदि ह. 17. हेतुमत्फलभूते फ, तत्फलभूते ह. 18. वाक्यमिदं नास्ति फ. 19. न भिन्द्यात् इत्यर्थः इत्यधिकम् अ. 20. च नास्ति फ. 21. भवति नास्ति फ. 22. एवम् इत्यधिकम् फ. 23. भुञ्जीत भवान् इत्यधिकम् फ, भुङक्ताम् भवान् इत्यधिकम् ह. 24. कटं इत्यधिकम् फ.

## समानकर्तृकेषु तुमुन्। (१५८/३१७६)

इच्छार्थेषु [1]धातुषु समानकर्तृकेषु उपपदेषु धातोः तुमुन् प्रत्ययो भवति। तुमुन्प्रकृत्यपेक्षमेव [2]समानकर्तृत्वम्। इच्छति भोक्तुम्। कामयते भोक्तुम्। वष्टि भोक्तुम्। [3]वाञ्छति भोक्तुम्। समानकर्तृकेषु इति किम्? देवदत्तं भुञ्जानमिच्छति यज्ञदत्तः। इह कस्मान्न भवति, इच्छन् करोति[4]? अनभिधानात्॥

## लिङ् च। (१५९/२८१५)

[5]इच्छार्थेषु समानकर्तृकेषु धातुषूपपदेषु धातोः लिङ [6]प्रत्ययो भवति। भुञ्जीय इति इच्छति। [7]अधीयीयेति इच्छति। क्रियातिपत्तौ लृङ भवति। योगविभाग उत्तरार्थः॥

## इच्छार्थेभ्यो विभाषा वर्तमाने। (१६०/२८१६)

इच्छार्थेभ्यो धातुभ्यो [8]वर्तमाने काले विभाषा लिङ प्रत्ययो भवति। [9]लटि प्राप्ते वचनम्। इच्छति, इच्छेत्। वष्टि, उश्यात्। कामयते, कामयेत॥

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्। (१६१/२२०८)

विधिः [10]प्रेरणम्। निमन्त्रणम् नियोगकरणम्। आमन्त्रणम् कामचारकरणम्। अधीष्टः सत्कारपूर्वको व्यापारः। सम्प्रश्नः सम्प्रधारणम्। प्रार्थनम् याच्ञा। विध्यादिष्वर्थेषु[11] धातोः लिङ प्रत्ययो भवति। [12]सर्वलकाराणामपवादः। विध्यादयश्च [13]प्रत्ययार्थविशेषणम्। विध्यादिविशिष्टेषु कर्त्रादिषु लिङ [14]प्रत्ययो भवति। विधौ तावत्–कटं कुर्यात्[15]। ग्रामं [16]भवानागच्छेत्। निमन्त्रणे–इह भवान् भुञ्जीत। इह भवानासीत। आमन्त्रणे–इह भवानासीत। इह भवान् भुञ्जीत। अधीष्टे–[17]अधीच्छामो भवन्तं माणवकं [18]भवानुपनयेत्। [19]सम्प्रश्ने–किं नु खलु भो व्याकरणमधीयीय। प्रार्थने–[20]भवति मे प्रार्थना व्याकरणमधीयीय[21]॥

## लोट् च। (१६२/२२०४)

लोट् प्रत्ययो भवति [22]धातोः विध्यादिषु अर्थेषु। योगविभाग उत्तरार्थः। [23]विधौ तावत्–कटं [24]तावत् भवान् करोतु। ग्रामं [25]भवानागच्छतु। निमन्त्रणे–अमुत्र भवानास्ताम्। [26]अमुत्र भवान् भुङ्क्ताम्। आमन्त्रणे–इह भवान् भुङ्क्ताम्। अधीष्टे–[27]अधीच्छामो भवन्तं माणवकं भवानध्यापयतु, माणवकं भवानुपनयताम्। सम्प्रश्ने–किं नु खलु भो व्याकरणमध्ययै। प्रार्थने–[28]भवति मे प्रार्थना व्याकरणमध्ययै, छन्दोऽध्ययै॥

---

1. धातुषु नास्ति फ. ह. 2. समानकर्तृकत्वात् द्रष्टव्यम् ब. 3. उदाहरणमिदं नास्ति फ. 4. इति इत्यधिकम् फ. 5. इच्छार्थेषु नास्ति ह. 6. प्रत्ययो नास्ति फ. 7. उदाहरणमिदं नास्ति फ. 8. वर्तमानकाले ह. 9. वाक्यमिदं नास्ति ह. 10. प्रेषणा फ, प्रेषणम ह. 11. गम्यमानेषु इत्यधिकम् ह. 12. वाक्यमिदं नास्ति क. 13. एते इत्यधिकम् फ, वाक्यमिदं नास्ति ह. 14. प्रत्ययो नास्ति ह. 15. भवान् इत्यधिकम् ह. फ. 16. भवान् गच्छेत् फ. 17. अध्येष्यामहे ह. 18. भवानध्यापयेत् ह. 19. उपसंप्रश्ने ह. 20. भवन्तं प्रार्थये फ. 21. छन्दोऽधीयीय इत्यधिकम् फ. ह. 22. धातोः नास्ति ह. 23. विधिः फ. 24. तावत् नास्ति फ. ह. 25. भवान् नास्ति फ. ह. 26. उदाहरणमिदं नास्ति फ. 27. अध्येष्यामहे ह. 28. भवन्तं प्रार्थये फ.

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । (१६३/२८१७)

प्रेषणं प्रैषः । कामचाराभ्यनुज्ञानम् अतिसर्गः । [1]निमित्तभूतस्य कालस्यावसरः प्राप्तकालता । एतेष्व-र्थेषु [2]धातोः कृत्यसञ्ज्ञकाः प्रत्ययाः भवन्ति, चकाराल् लोट् च[3] । भवता [4]कटः करणीयः, कर्तव्यः, कृत्यः, कार्यः । लोट् खल्वपि – करोतु कटं भवानिह प्रेषितः, [5]भवानतिसृष्टः, भवतः प्राप्तकालः कटकरणे[6] । किमर्थं प्रैषादिषु कृत्या विधीयन्ते [7]न सामान्येन, भावकर्मणोर्विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति ? विशेषविहितेनानेन लोटा [8]बाध्यन्ते । वासरूपविधिना भविष्यन्ति ? एवं तर्हि[9] ज्ञापयति, स्त्र्यधिकारात् परेण वासरूपविधिर्नावश्यं [10]भवति इति । विधिप्रैषयोः को विशेष ? केचिदाहुः, अज्ञातज्ञापनं विधिः, प्रेषणं प्रैषः इति ॥

## लिङ् चोर्ध्वमौहूर्तिके । (१६४/२८१८)

प्रैषादयो वर्तन्ते । प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिके[11]ऽर्थे वर्तमानाद् धातोः लिङ [12]प्रत्ययो भवति[13], चकाराद् यथाप्राप्तं च । ऊर्ध्वं मुहूर्तात्, उपरि मुहूर्तस्य भवता खलु कटः कर्तव्यः, करणीयः, [14]कार्यः । भवान् खलु कटं कुर्यात्, भवान् खलु[15] करोतु । भवानिह प्रेषितः । भवानतिसृष्टः । भवान् प्राप्तकालः[16] ॥

## स्मे लोट् । (१६५/२८१९)

प्रैषादिषु ऊर्ध्वमौहूर्तिके [17]इति वर्तते । स्मशब्दे उपपदे प्रैषादिषु गम्यमानेषूर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद् धातोः लोट् प्रत्ययो भवति । लिङकृत्यानामपवादः । ऊर्ध्वं मुहूर्ताद् भवान् कटं करोतु स्म, ग्रामं गच्छतु स्म, माणवक-मध्यापयतु स्म ॥

## अधीष्टे च । (१६६/२८२०)

स्मे इति [18]वर्तते । अधीष्टं व्याख्यातम् । स्मशब्दे उपपदेऽधीष्टे गम्यमाने [19]धातोः लोट् प्रत्ययो भवति । [20]लिङोऽपवादः । अङ्ग स्म राजन् माणवकमध्यापय । अङ्ग स्म राजन्नग्निहोत्रं [21]जुहुधि ॥

## कालसमयवेलासु तुमुन् । (१६७/३१७९)

कालादिषु उपपदेषु धातोः तुमुन् प्रत्ययो भवति । [22]कालो भोक्तुम् । वेला भोक्तुम् । इह कस्मान्न भवति, 'कालः पचति भूतानि'[23] (मै. उ. ६.१५) इति ? प्रैषादिग्रहणमिहा[24]भिसम्बध्यते । इह

---

1. निमित्तकस्य फ. 2. गम्यमानेषु इत्यधिकम् अ. क. ह, धातोः नास्ति फ. ह. 3. भवति इत्यधिकम् फ. 4. खलु इत्यधिकम् फ. 5. भवानिहातिसृष्टः ह. 6. इति इत्यधिकम् फ. 7. न नास्ति फ. 8. न बाध्येरन् फ. 9. एतत् इत्यधिकम् क. फ. ह. 10. भावि अ.फ.ह. 11. अर्थे नास्ति ह. 12. प्रत्ययो नास्ति फ. 13. लोट् कृत्यानामपवादः इत्यधिकम् ह. 14. कृत्यः इत्यधिकम् फ. 15. कटं इत्यधिकम् फ. 16. कटकरणे इति इत्यधिकम् फ. 17. इति नास्ति फ, च सर्वमनुवर्तते ह. फ. 18. अनुवर्तते ग. 19. धातोः नास्ति फ. 20. अधीष्टलिङो फ. ह. 21. जुहुयात् ह. 22. समयो भोक्तुम् इत्यधिकम् फ. ह. 23. कालः संहरति प्रजाः इत्यधिकम् फ. 24. अनुवर्तते ह.

कस्मान् न भवति, कालो भोजनस्य ? [1]वासरूपेण ल्युडपि [2]भवति । उक्तमिदम्, स्त्र्यधिकारात् [3]परत्र वासरूपविधिरनित्यः [4]इति ॥

## लिङ् यदि । (१६८/२८२१)

[5]कालादयोऽनुवर्तन्ते । [6]यच्छब्दे उपपदे कालादिषु धातोः लिङ [7]प्रत्ययो भवति । तुमुनोऽपवादः । कालो यद् भुञ्जीत भवान् । समयो यद् भुञ्जीत भवान् । [8]वेला यद् भुञ्जीत भवान् ॥

## अर्हे कृत्यतृचश्च । (१६९/२८२२)

अर्हति इति अर्हः, तद्योग्यः । अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति, चकाराल् लिङ च । भवता खलु कन्या वोढव्या, वाह्या, वहनीया । भवान् खलु कन्याया वोढा । भवान् खलु कन्यां वहेत् । भवान् [9]एतदर्हेत् इति । अथ कस्मादर्हे[10] कृत्यतृचो विधीयन्ते, यावता सामान्येन विहितत्वादर्हेऽपि भविष्यन्ति ? योऽयमिह लिङ [11]विधीयते, तेन बाधा मा भूत् इति । [12]वासरूपविधिश्चानित्यः ॥

## आवश्यकाधमर्ण्ययोर्णिनिः । (१७०/३३११)

अवश्यंभावः आवश्यकम् । उपाधिरयं, नोपपदम् । अवश्यंभावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि [13]वाच्ये धातोः णिनिः प्रत्ययो भवति । अवश्यंकारी[14] । मयूरव्यंसकादित्वात् समासः । आधमर्ण्ये खल्वपि – शतं दायी सहस्रं दायी । [15]निष्कं दायी ॥

## कृत्याश्च । (१७१/३३१२)

आवश्यकाधमर्ण्ययोः[16] इति वर्तते । कृत्यसञ्ज्ञकाश्च प्रत्यया आवश्यकाधमर्ण्ययोरुपाधिभूतयोः धातोर्भवन्ति । भवता खलु अवश्यं कटः कर्तव्यः, [17]अवश्यं करणीयः, [18]अवश्यं कार्यः, [19]अवश्यं कृत्यः । आधमर्ण्ये–भवता[20]शतं दातव्यम् । सहस्रं [21]देयम् । किमर्थमिदम्, यावता सामान्येन विहिता [22]अस्मिन्नपि विषये भविष्यन्ति ? विशेषविहितेन णिनिना बाध्येरन् । कर्तरि णिनिः, भावकर्मणोः कृत्याः,[23] तत्र कुतो [24]बाधप्रसङ्गः? तत्र केचिदाहुः, भव्यगेयादयः [25]कर्तृवाचिनः कृत्याः, त इहोदाहरणम् इति ॥

---

1. वासरूपयोगेन फ, वासरूपविधिना ह. 2. भविष्यति फ. ह. 3. परेण फ. ह. 4. इति नास्ति ह. 5. वाक्यमिदं नास्ति फ. 6. यच्छब्दसहितेषु कालादिषु उपपदेषु फ. ह. 7. प्रत्ययो नास्ति फ. 8. उदाहरणमिदं नास्ति अ. 9. एव तदर्हति फ. ह. 10. अर्हे नास्ति ब. 11. विहितः फ. 12. वाक्यमिदं नास्ति ब. 13. वाच्ये नास्ति फ. ह. 14. अवश्यंहारी इत्यधिकम् फ. ह. 15. उदाहरणमिदं नास्ति ह. 16. उपाधिभूतयोः इत्यधिकम् फ, इत्येव ह. 17–19. अवश्यं नास्ति फ. ह. 20. निष्कं ब, भवता खलु निष्कः दातव्यः अ. क, शतं दानीयं फ. ह. 21. दातव्यम् फ. ह. 22. कृत्याः ते इत्यधिकम् क. फ. ह. 23. उक्ताः इत्यधिकम् अ. 24. बाधाप्रसङ्गः क. फ. ह. 25. कर्तृवाचकाः अ. क. फ, कर्मवाचकाः ब.

## शकि लिङ् च। (१७२/२८२३)

शकि इति प्रकृत्यर्थविशेषणम्। शक्नोत्यर्थोपाधिके [1]धात्वर्थे लिङ् प्रत्ययो भवति, चकारात् कृत्याश्च[2]। भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः। भवान् खलु भारं वहेत्। भवान् [3]इह शक्तः। सामान्यविहितानां[4] पुनर्वचनं लिङा बाधा मा भूत् इति॥

## आशिषि लिङ्लोटौ। (१७३/२१९५)

आशंसनम् आशीः, [5]अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा। प्रकृत्यर्थविशेषणं चैतत्। आशीर्विशिष्टेऽर्थे वर्तमानाद् धातोः लिङ्लोटौ प्रत्ययौ भवतः। चिरं जीव्याद् [6]भवान्। चिरं जीवतु भवान्। आशिषि इति किम्? चिरं जीवति देवदत्तः॥

## क्तिच्क्तौ च सञ्ज्ञायाम्। (१७४/३३१३)

आशिषि [7]इत्येव। आशिषि विषये धातोः [8]क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत् सञ्ज्ञा गम्यते। तनुतात् तन्तिः। [9]सनुतात् सातिः। भवतात् भूतिः। [10]मनुतात् मन्तिः। क्तः खल्वपि – देवा एनं देयासुः [11]देवदत्तः। [12]सामान्येन विहितः क्तः पुनरुच्यते, क्तिचा बाधा मा भूत् इति। चकारो [13]विशेषणार्थः, 'न क्तिचि दीर्घश्च' (६.४. ३९/३३१४) इति[14]॥

## माङि लुङ्। (१७५/२२१९)

माङि उपपदे धातोः लुङ् प्रत्ययो भवति। सर्वलकाराणामपवादः। मा कार्षीत्। मा हार्षीत्। कथं मा भवतु तस्य पापम्,[15] मा भविष्यति इति? असाधुरेवायम्। केचिदाहुः, अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः[16]॥

## स्मोत्तरे लङ् च। (१७६/२२२०)

[17]स्मशब्दोत्तरे माङि उपपदे धातोः [18]लङ् प्रत्ययो भवति, चकारात् लुङ् च। मा स्म करोत्। मा स्म कार्षीत्। मा स्म हरत्। मा स्म हार्षीत्॥

इति [19]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

तृतीयाध्यायस्य तृतीयः पादः॥

---

1. अर्थे वर्तमानात् धातोः फ. ह. 2. भवन्ति इत्यधिकम् फ. 3. हि फ. ह. 4. कृत्यानां इत्यधिकम् फ. ह. 5. अप्राप्तस्य नास्ति ब. फ. 6. भवान् नास्ति ब. 7. वाक्यमिदं नास्ति फ, इति वर्तते ह. 8. क्तिच् क्तश्च फ, क्तिच् प्रत्ययो भवति क्तश्च ह. 9. उदाहरणमिदं नास्ति ह. 10. उदाहरणमिदं नास्ति फ. 11. यज्ञदत्तः ब. ह. 12. सामान्यविहितः ह. 13. विशेषणार्थः नास्ति फ. 14. विशेषणार्थः इत्यधिकम् फ. 15. इति इत्यधिकम् फ. 16. इति इत्यधिकम् फ. ह. 17. स्मशब्दसहिते फ. ह. 18. लिङ् ह. 19. श्रीजयादित्यविरचितायां नास्ति ग. ह.

# तृतीयाध्यायस्य चतुर्थः पादः

## धातुसम्बन्धे प्रत्ययाः । (१/२८२४)

धात्वर्थे धातुशब्दः[1] । धात्वर्थानां सम्बन्धो धातुसम्बन्धः [2]विशेषणविशेष्यभावः । तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति । अग्निष्टोमयाज्यस्य पुत्रो जनिता । कृतः कटः श्वो भविता । भावि कृत्यमासीत् । अग्निष्टोमयाजी इति भूतकालः, जनिता इति [3]भविष्यत्कालः । तत्र [4]भूतः कालः भविष्यत्कालेन अभिसम्बध्यमानः साधुर्भवति । विशेषणं [5]गुणत्वाद् विशेष्यकालमनुरुध्यते, तेन विपर्ययो न भवति ।

प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम् अधात्वधिकारविहिता अपि प्रत्ययाः तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युः इति । गोमानासीत् । गोमान् भविता । [6]गावो विद्यन्ते[7]ऽस्य इति वर्तमानविहितो मतुप्, आसीत् भविता इति सम्बन्धादतीते भविष्यति च साधुर्भवति ॥

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः । (२/२८२५)

धातुसम्बधे इति वर्तते । पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । प्रकृत्यर्थविशेषणं [8]चैतत् । समभिहारविशिष्टक्रियावचनाद् धातोः लोट् प्रत्ययो भवति सर्वेषु कालेषु । सर्वलकाराणामपवादः । तस्य [9]च लोटो हि स्व इत्येतावादेशौ भवतः । तध्वंभाविनस्तु वा भवतः । योगविभागो[10]ऽत्र कर्तव्यः । क्रियासमभिहारे लोड् भवति, ततो लोटो हिस्वौ । लोट् इत्येव, लोड्धर्माणौ हिस्वौ भवतः इत्यर्थः । तेन [11]आत्मनेपदपरस्मैपदत्वं भेदेनावतिष्ठते, तिङत्वं च द्वयोरपि भवति । लुनीहि लुनीहीत्येवायं लुनाति, इमौ लुनीतः, इमे लुनन्ति । लुनीहि लुनीहीत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ । अथ वा, लुनीत लुनीतेत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येवाहं लुनामि, आवां लुनीवः, वयं लुनीमः । भूते – लुनीहि लुनीहीत्येवायमलावीत्, [12]अलाविष्टाम्, [13]अलाविषुः । एवं मध्यमोत्तमयोरुदाहार्यम् । भविष्यति – लुनीहि लुनीहीत्येवायं लविष्यति, [14]लविष्यतः, [15]लविष्यन्ति । एवं मध्यमोत्तमयो[16]रुदाहार्यम् । अधीष्वाधीष्वेत्येवायमधीते, इमावधीयाते, इमेऽधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । अथ वा, अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये, आवामधीवहे, [17]वयमधीमहे । एवं सर्वेष्वेव[18] लकारेषूदाहार्यम् । [19]क्रियासमभिहाराभिव्यक्तौ द्विर्वचनमयं लोडपेक्षते, क्रिया– समभिहारे द्वे भवतः इति । यङ्प्रत्ययः पुनरस्मिन्नेवा[20]र्थे विधीयमानः स्वयमेव शक्तत्वान्नापेक्षते द्विर्वचनम् ॥

---

1. वर्तते इत्यधिकम् अ. क. 2. विशेषणे विशेष्यभावः ब. 3. भविष्यकालः ब. 4. भूतकालः ह. ब. 5. कालेन अभिसम्बध्यते फ, विशेषणगुणत्वात् ग, विशेषणे गुणत्वात् ब. 6. गावो – भवति नास्ति ह. 7. यस्य ब. 8. तत् फ. 9. च नास्ति ब. 10. अत्र नास्ति फ, च इत्यधिकम् ब. 11. परस्मैपदात्मनेपदत्वं फ. 12. इमौ इत्यधिकम् फ. 13. इमे इत्यधिकम् फ. 14. इमौ इत्यधिकम् फ. 15. इमे इत्यधिकम् फ. 16. अपि इत्यधिकम् फ, उदाहार्यः ब. 17. वयं नास्ति फ. 18. एव नास्ति फ. 19. क्रियाभिव्यक्तौ फ. 20. अर्थे नास्ति फ.

## समुच्चयेऽन्यतरस्याम् । (३/२८२६)

अनेकक्रियाध्याहारः समुच्चयः । समुच्चीयमानक्रियावचनाद् धातोरन्यतरस्यां लोट् प्रत्ययो भवति, तस्य लोटो हिस्वौ आदेशौ भवतः । तध्वंभाविनस्तु वा भवतः । भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमट इत्येवायमटति, इमावटतः, इमेऽटन्ति । भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमटेत्येव त्वमटसि, युवामटथः, यूयमटथ । अथ वा, भ्राष्ट्रमटत, मठमटत, खदूरमटत, स्थाल्यपिधानमटत इत्येव यूयमटथ। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमट इत्येवाहमटामि, आवामटावः, वयमटामः । अथ वा, भ्राष्ट्रमटति, मठमटति, खदूरमटति, स्थाल्यपिधानमटति इत्येवायमटति, इमावटतः, इमेऽटन्ति । भ्राष्ट्रमटसि, मठमटसि, खदूरमटसि, स्थाल्यपिधानमटसि, इत्येव त्वमटसि, युवामटथः, यूयमटथ । भ्राष्ट्रमटामि, मठमटामि, खदूरमटामि, स्थाल्यपिधानमटामि इत्येवाहमटामि, आवामटावः, वयमटामः । [1]छन्दोऽधीष्व, व्याकरणमधीष्व, [2]निरुक्तमधीष्व इत्येवायमधीते, इमावधीयाते, इमेऽधीयते । छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्व, इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । अथ वा, छन्दोऽधीध्वं, व्याकरणमधीध्वं, निरुक्तमधीध्वम् इत्येव यूयमधीध्वे । छन्दोऽधीष्व, व्याकरणमधीष्व, निरुक्तमधीष्व इत्येवाहमधीये, आवामधीवहे, वयमधीमहे । अथ वा, छन्दोऽधीते, [3]व्याकरणमधीते, निरुक्तमधीते, इत्येवायमधीते, इमावधीयाते, इमेऽधीयते । छन्दोऽधीषे, व्याकरणमधीषे, निरुक्तमधीषे इत्येव त्वमधीषे, युवामधीयाथे, यूयमधीध्वे । [4]छन्दोऽधीये, व्याकरणमधीये, निरुक्तमधीये इत्येवाहमधीये, आवामधीवहे, वयमधीमहे ॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् । (४/२८२७)

पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति । यस्माद् धातोः लोड् विहितः स एव [5]धातुरनुप्रयोक्तव्यः । धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यर्थं तु वचनम् । तथा चैवोदाहृतम् लुनीहि लुनीहीत्येवायं लुनाति इति । छिनत्ति इति नानुप्रयुज्यते । अधीष्वाधीष्वेत्येवायमधीते । पठति इति नानुप्रयुज्यते ॥

## समुच्चये सामान्यवचनस्य । (५/२८२८)

द्वितीये लोड्विधाने समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्यः । ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येवायमभ्यवहरति । सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम् । लाघवं च [6]लौकिके [7]शब्दव्यवहारे नाद्रियते । भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानमट इत्येवायमटति इत्यत्रापि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव ॥

## छन्दसि लुङ्लङ्लिटः । (६/३४२३)

धातुसम्बन्धे इत्येव[8] । छन्दसि विषये [9]धातुसम्बन्धे सर्वेषु लुङ्लङ्लिटः प्रत्यया भवन्ति । अन्यतरस्याम् इति वर्तते । तेनान्येऽपि लकारा यथायथं भवन्ति[10] । [11]लुङ् – शकलाङ्गुष्ठकोऽकरत् । 'अहं तेभ्योऽकरं नमः' (वा. सं. १६.८) । लङ् – 'अग्निमद्य होतारमवृणीतायं यजमानः' (शां. श्रौ. ५.२०.५) । लिट् – 'अद्या ममार' (ऋ. १०.५५.५) । अद्य म्रियते ॥

---

1. छन्द आदिकं अ. 2. निरुक्तमधीष्व नास्ति फ. 3. पुनः इत्यधिकम् क. 4. छन्द आदिकं फ. 5. धातुः नास्ति ब. 6. लौकिकव्यवहारे ह. 7. व्यवहारे फ. 8. वर्तते इत्यधिकम् फ. 9. धातुसम्बन्धे नास्ति फ. 10. एव इत्यधिकम् फ. ह. 11. लुङ्–अद्य म्रियते नास्ति ग.

## लिङर्थे लेट्। (७/३४२४)

छन्दसि अन्यतरस्याम् इति वर्तते। लिङर्थे, यत्र लिङ[1]विधीयते विध्यादिः, 'हेतुहेतुमतोर्लिङ' (३.३.१५६/२८१३) इत्येवमादिः,[2] तत्र छन्दसि विषयेऽन्यतरस्यां लेट् प्रत्ययो भवति। 'जोषिषत्' (ऋ. २.३५.१) 'तारिषत्' (ऋ. १.२५.१२)। मन्दिषत्। 'नेता इन्द्रो नेषत्' (शां. श्रौ. ७.९.१)। [3]तक्षिषत्। 'पताति [4]दिद्युत्' (ऋ. ७.२५.१)। '[5]प्रजापतिरुदधिं च्यावयाति' (तै. ३.५.५.२)॥

## उपसंवादाशङ्कयोश्च। (८/३४३१)

उपसंवादः परिभाषणम्, कर्तव्ये पणबन्धः, यदि मे भवान् इदं कुर्याद् [6]अहमपि [7]भवते इदं दास्यामि इति। कारणतः कार्यानुसरणं [8]तर्कः, उत्प्रेक्षा, आशङ्का। उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति। उपसंवादे – 'अहमेव पशूनामीशै' (काठक. सं. २५.१)। '[9]मदग्रा एव [10]वो ग्रहा [11]गृह्यान्तै' (मै. ४.५.८) इति। 'मद्देवत्यान्येव वः पात्राण्युच्यान्तै' (तै.सं. ६.४.७.१)। आशङ्कायाम् च –'[12]नेज्जिह्मायन्त्यो नरकं पताम' (ऋ. खि. १०.१०६.१)। जिह्माचरणेन नरकपातः आशङ्क्यते। लिङर्थ एवायम्, नित्यार्थं तु वचनम्। पूर्वसूत्रे [13]अन्यतरस्याम् इति वर्तते॥

## तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः। (९/३४३६)

छन्दसि इत्येव। तुमुनोऽर्थस्तुमर्थः। तत्र छन्दसि विषये धातोः [14]सयादयः प्रत्यया भवन्ति। तुमर्थो भावः। कथं ज्ञायते ? वचनसामर्थ्यात् तावदयं कर्तुरपकृष्यते। न चायमन्यस्मिन्नर्थे तुमुन्[15]आदिश्यते। अनिर्दिष्टार्थाश्च प्रत्ययाः [16]स्वार्थे भवन्ति (प. १२२)। स्वार्थश्च धातूनां भाव एव। से – [17]वक्षे रायः। सेन् – 'ता वामेषे रथानाम्' (ऋ. ५. ५६. ३)। असे, असेन् – 'क्रत्वे दक्षाय जीवसे' (अ. ६. १९. २)। स्वरे विशेषः। क्से – 'प्रेषे भगाय' (तै.सं. १.२.११.१) कसेन् – 'श्रियसे' (ऋ. ५.५९.३)। अध्यै, अध्यैन् – '[18]काममुपाचरध्यै' (तै. सं. १.२.११.१)। स्वरे विशेषः। कध्यै – 'इन्द्राग्नी आहुवध्यै' (वा.सं.३.१३)। कध्यैन् – श्रियध्यै। शध्यै, शध्यैन् – 'वायवे पिबध्यै' (ऋ. ७.९२.२)। 'राधसः सह मादयध्यै' (वा. सं. ३.१३)। तवै – 'सोममिन्द्राय पातवै' (ऋ. ८. ६९. १०)। तवेङ् – 'दशमे मासि सूतवे' (ऋ. १०. १८४. ३)। तवेन् – [19]स्वर्देवेषु गन्तवे (अ. ९.५.१७)। '[20]कर्तवे' (ऋ. ९.८६.२०)। हर्तवे॥

## प्रयै रोहिष्यै अव्यथिष्यै। (१०/३४३७)

तुमर्थे छन्दसि इत्येव। प्रयै रोहिष्यै अव्यथिष्यै इत्येते [21]शब्दा निपात्यन्ते छन्दसि विषये। प्रपूर्वस्य यातेः कैप्रत्ययः – 'प्रयै देवेभ्यः[22]' (ऋ. १.१४२.६)। प्रयातुम्। रुहेः इष्यैप्रत्ययः – '[23]अपामोषधीनां रोहिष्यै' (तै. सं. १.३.१०.२)। रोहणाय। व्यथेर्नञ्पूर्वस्य इष्यैप्रत्ययः – 'अव्यथिष्यै' (काठ. सं. ३.७)। अव्यथनाय॥

---

1. विधीयते नास्ति फ. 2. च इत्यधिकम् अ. क. 3. नास्ति फ. 4. विद्युत् मुद्रितः पाठः. क. 5. च्यावयाति फ. 6. ततो इत्यधिकम् फ. 7. भवते नास्ति फ. 8. तद् ह. 9. मदघ्ना ब. 10. यो फ. 11. गृह्यन्ते क. 12. याने ह. 13. हि इत्यधिकम् ह. 14. से आदयः फ. 15. निर्दिश्यते फ. 16 स्वार्थे नास्ति फ. 17. वक्रे रायः ह, पक्षे रायः बालमनोरमा. 18. कर्मण्युपाचरध्यै मुद्रितः पाठ. 19. वसु देवेषु अ. ब. क. फ, सुवर्देवेषु गन्तवे ह. 20. कर्तवे हर्तवे नास्ति फ. 21. शब्दाः नास्ति फ. 22. हविः इत्यधिकम् ब. 23. अहमेधीनां अ.

## दृशे विख्ये च। (११/३४३८)

तुमर्थे छन्दसि इत्येव। दृशे विख्ये इत्येतौ छन्दसि विषये निपात्येते। [1]दृशेः केप्रत्ययः–'दृशे विश्वाय सूर्यम्' (ऋ. १. ५०. १)। द्रष्टुम्[2]। विख्ये त्वा [3]हरामि। विख्यातुम्[4]॥

## शकि णमुल्कमुलौ। (१२/३४३९)

[5]छन्दसि इत्येव। [6]शक्नोतौ धातावुपपदे छन्दसि विषये [7]तुमर्थे णमुल् कमुल् [8]इत्येतौ प्रत्ययौ भवतः। णकारो वृद्ध्यर्थः। ककारो गुणवृद्धिप्रतिषेधार्थः। लकारः स्वरार्थः। '[9]अग्निं वै देवा विभाजं नाशक्नुवन्' (मै. सं. १. ६. ४)। विभक्तुमित्यर्थः। [10]'अपलुम्पं नाशक्नोत्' (मै. सं. १. ६. ५)। अपलोप्तुम् इत्यर्थः॥

## ईश्वरे तोसुन्कसुनौ। (१३/३४४०)

तुमर्थे छन्दसि इत्येव। ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धातोः तोसुन्कसुन्[11]प्रत्ययौ भवतः। ईश्वरोऽभिचरितोः। अभिचरितुमित्यर्थः। ईश्वरो विलिखः। [12]विलिखितुमित्यर्थः। [13]ईश्वरो वितृदः। वितर्दितुमित्यर्थः[14]॥

## कृत्यार्थे तवैकेन्केन्यत्वनः। (१४/३४४१)

[15]छन्दसि इत्येव। कृत्यानामर्थो भावकर्मणी। तस्मिन् कृत्यार्थे छन्दसि विषये तवै केन् केन्य त्वन् इत्येते प्रत्यया भवन्ति। तवै–'अन्वेतवै' (ऋ. ७. ४४. ५)। अन्वेतव्यम्[16]। 'परिधातवै' (अ. २. १३. २)। परिधातव्यम्। 'परिस्तरितवै' (काठ.सं. ३२. ७)। परिस्तरितव्यम्। केन्–नावगाहे। नावगाहितव्यम्। केन्य–'दिदृक्षेण्यः' (ऋ. १. १. ४६. ५)। 'शुश्रूषेण्यः' (तै. आ. ४. १. १)। दिदृक्षितव्यम्। शुश्रूषितव्यम्। त्वन्–'कर्त्वं [17]हविः' (अ. वे. १.४. ३)। कर्तव्यम्। तुमर्थे [18]छन्दसि (३. ४. ९/३४३६) इति सयादिसूत्रेऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर्द्रष्टव्यः॥

## अवचक्षे च। (१५/३४४२)

कृत्यार्थे छन्दसि इत्येव[19]। अवपूर्वात् चक्षिङः एश् प्रत्ययो निपात्यते। 'रिपुणा नावचक्षे' (वा. सं. १७. ९३)। नावख्यातव्यम् इत्यर्थः॥

---

1. दृशेः नास्ति ब. 2. इत्यर्थः इत्यधिकम् फ. 3. भरामि ह. 4. चकारात् विख्यै इत्यपि भवति–चक्षुर्विख्यै तनूभ्यः इत्यधिकम् अ. 5. तुमर्थे इत्यधिकम् ब. फ. ह. 6. शकौ धातूपपदे ह. 7. तुमर्थे नास्ति फ. 8. इति प्रत्ययौ फ. 9. अग्निर्वै देवानां विभाजं नाशक्नुवन् ह, तौ विभाजं नाशक्नोत् अ. 10. अवलुपं ह, अपलुपं नाशक्नुवन् मुद्रितः पाठः 11. इत्येतौ इत्यधिकम् फ. ह. 12 विलेखितुम् अ. फ. 13. ईश्वरो नास्ति ह. 14. इत्यर्थः नास्ति फ. 15. छन्दसि इत्येव नास्ति ह. 16. इत्यर्थः इत्यधिकम् फ. 17. रुचिः ब. 18. छन्दसि नास्ति फ. 19. वर्तते इत्यधिकम् ग. फ. ह.

## भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्। (१६/३४४३)

कृत्यार्थे इति निवृत्तम्। तुमर्थे [1]इति वर्तते। प्रकृत्यर्थविशेषणं [2]भावलक्षणग्रहणम्। भावो लक्ष्यते येन[3] तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यः छन्दसि विषये तुमर्थे तोसुन् प्रत्ययो भवति। 'आसंस्थातोर्वेद्यां[4] शेरते' (काठ. सं. ११.६)। [5]आ समाप्तेः सीदन्ति इत्यर्थः। इण् – पुरा सूर्यस्योदेतोराधेयः' (काठ. सं. ८.३)। कृञ् – 'पुरा वत्सानामपाकर्तोः'[6] (काठ. सं. ३१. १५)। [वदि – [7]पुरा प्रवदितोरग्नौ प्रहोतव्यम्। चरि – 'पुरा प्रचरितोराग्नीध्रीये[8] होतव्यम्' (गो. ब्रा. २. २. १०)। हु– 'आहोतोरप्रमत्तस्तिष्ठति' (तै. ब्रा. १.४.९.५)। तमि – 'आ तमितोरा[8]सीत' (तै. ब्रा. १.६.९.५)। जनि – 'काममा विजनितोः सम्भवामेति' (तै. सं. २.५.१.५) इति॥

## सृपितृदोः कसुन्। (१७/३४४४)

भावलक्षणे छन्दसि इति वर्तते। सृपितृदोर्धात्वोः भावलक्षणे[9]ऽर्थे वर्तमानयोः छन्दसि विषये तुमर्थे कसुन् प्रत्ययो भवति। 'पुरा क्रूरस्य विसृपो विरप्शिन्' (तै. सं. १. १. ९. ३)। 'पुरा जत्रुभ्य [10]आतृदः' (ऋ. ८. १. १२)॥

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। (१८/३३१६)

छन्दसि भावलक्षणे इति [11]सर्वं निवृत्तम्। अलम् खलु इत्येतयोः [12]प्रतिषेधवाचिनोरुपपदयोः [13]धातोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणां मतेन। अलं कृत्वा। खलु कृत्वा। अलं बाले रुदित्वा। अलंखल्वोः इति किम्? मा कार्षीः। प्रतिषेधयोः इति किम्? अलङ्कारः। प्राचांग्रहणं [14]विकल्पार्थम्। अलं रोदनेन। [15]वासरूपविधिश्चेत् पूजार्थम्॥

## उदीचां माङो व्यतीहारे। (१९/३३१७)

क्त्वा [16]तु वर्तते। माङो धातोः व्यतीहारे[17] वर्तमानादुदीचामाचार्याणां मतेन क्त्वा प्रत्ययो भवति। [18]अपमित्य याचते। अपमित्य हरति। [19]अपूर्वकालत्वाद[20]प्राप्तः क्त्वा विधीयते। उदीचांग्रहणात्तु[21] यथा–प्राप्तमपि भवति। याचित्वाऽपमयते। [22]हृत्वाऽपमयते। मेङः कृतात्वस्यायं निर्देशः [23]कृतो ज्ञापनार्थः, 'नानु–बन्धकृतमनेजन्तत्वम्' (शा. प. १५) [24]इति। तेन 'दाधा घ्वदाप्' (१.१.२०/२३७३) इति दैपोऽपि प्रतिषेधो भवति॥

---

1. छन्दसि च इत्यधिकं फ. ह. 2. एतत् फ. 3. तद्भावलक्षणं इत्यधिकम् फ. 4. विद्यां फ, सीदन्ति इति मुद्रितम्. 5. आसंस्थानात् फ. ह. 6. आस्ते इत्यधिकम् अ. 7. पुरा वाचः प्रवदितोः (मै. 4.5.3) 8. उपतिष्ठते अ, तिष्ठते क. फ, तिष्ठति ह. 9. अर्थे नास्ति ह. 10. आदृतः ह. 11. सर्वं नास्ति फ. ह, इति च निवृत्तम् ब. 12. प्रतिषेधार्थयोः क. 13. धातोः नास्ति ब. 14. विवक्षार्थम् ब. 15. वासरूपः इति ह. 16. अनुवर्तते फ. ह. 17. अर्थे इत्यधिकम् ह. 18. अपमाय याचते क. 19. अपूर्वकालत्वाद्–अपमयते नास्ति अ. 20. न प्राप्तः ह. 21. च ब. 22. हृत्वा नास्ति फ. 23. कृतः नास्ति फ. 24. भवति अ. फ. ह.

## परावरयोगे च । (२०/३३१९)

परावराभ्यां योगः परावरयोगः । परेण पूर्वस्य योगे गम्यमाने अवरेण [1]च परस्य धातोः क्त्वा प्रत्ययो भवति । परेण तावत् – अप्राप्य नदीं पर्वतः [2]स्थितः । परनदीयोगेन पर्वतो विशिष्यते । अवरयोगे – अतिक्रम्य तु पर्वतं नदी [3]स्थिता । अवरपर्वतयोगेन नदी [4]विशिष्यते ॥

## समानकर्तृकयोः पूर्वकाले । (२१/३३२०)

समानः कर्ता ययोः धात्वर्थयोस्तत्र [5]पूर्वकाले धात्वर्थे वर्तमानाद् धातोः क्त्वा प्रत्ययो भवति । शक्ति-शक्तिमतोः भेदस्याविवक्षितत्वात् [6]समानकर्तृकता । भुक्त्वा व्रजति । पीत्वा व्रजति[7] । द्विवचनमतन्त्रम्[8] । स्नात्वा पीत्वा भुक्त्वा दत्त्वा व्रजति । समानकर्तृकयोः इति किम् ? भुक्तवति ब्राह्मणे [9]गच्छति देवदत्तः । पूर्वकाले इति किम् ? व्रजति च जल्पति [10]च ।

[३३३] [11]आस्यं व्यादाय स्वपिति [12]चक्षुः संमील्य हसतीत्युपसंख्यानमपूर्वकालत्वात् (म. भा. २.१७३) ॥

## आभीक्ष्ण्ये णमुल् च । (२२/३३४३)

समानकर्तृकयोः पूर्वकाले इत्येव । आभीक्ष्ण्यम् पौनःपुन्यम्[13] । प्रकृत्यर्थविशेषणं [14]चैतत् । आभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद् धातोः णमुल् प्रत्ययो भवति, चकारात् क्त्वा च । द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ । 'आभीक्ष्ण्ये द्वे भवतः' (८.१.१२/२४४७ वा.) [15]इत्युपसङ्ख्यानाद् [16]द्विर्वचनम् । भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति । पायं पायं व्रजति, पीत्वा पीत्वा व्रजति ॥

## न यद्यनाकाङ्क्षे । (२३/३३४४)

यच्छब्दे उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतोऽनाकाङ्क्षे वाच्ये । यत्र [17]पूर्वोत्तरे क्रिये [18]स्तः, तच्चेद् वाक्यं [19]न परं किञ्चिदा[20]काङ्क्षते इति । णमुलनन्तरः, क्त्वा तु पूर्वसूत्रविहितोऽपि [21]प्रतिषिध्यते । यदयं भुङ्क्ते ततः [22]पचति । यदयमधीते ततः शेते । अनाकाङ्क्षे इति किम् ? यदयं भुक्त्वा व्रजति अधीते एव ततः परम् ॥

---

1. परस्य च योगे गम्यमाने ह. 2. स्थितः नास्ति ब. क. फ. 3. स्थिता नास्ति ब. 4. विशेष्यते अ. ग. फ. 5. पूर्वकालिके तु. फ, पूर्वकालिके धात्वर्थे ब. 6. समानः कर्ता अ. ब. क. फ, समानकर्ता ह. 7. देवदत्तः इत्यधिकम् ब. 8. बहुष्वपि भवति इत्यधिकम् अ. ब. फ. ह. 9. व्रजति ब. 10. च नास्ति फ. 11. आस्यं नास्ति फ. 12. अक्षिणी ब. फ, नेत्रे क. 13. भृशार्थो वा इत्यधिकम् फ. ह. 14. एतत् नास्ति अ. ब. फ. 15. इत्युपसङ्ख्यानम् फ. 16. द्विर्वचनम् नास्ति फ. 17. ते इत्यधिकम् अ. 18. भवतः तच्चेह फ. 19. नापरं ह. 20. आकाङ्क्षति फ. 21. विप्रतिषिध्यते ह. 22. पठति फ. ह.

## विभाषाऽग्रेप्रथमपूर्वेषु । (२४/३३४५)

अप्राप्तविभाषेयम् । आभीक्ष्ण्ये इति नानुवर्तते । अग्रे प्रथम पूर्व इत्येतेषूपपदेषु समानकर्तृकयोः पूर्वकाले [1]धातोः क्त्वाणमुलौ प्रत्ययौ विभाषा भवतः। अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति। विभाषाग्रहणम् एताभ्यां मुक्ते लडादयोऽपि यथा स्युः[2]। अग्रे भुङ्क्ते ततो व्रजति। ननु च वासरूप इति भविष्यति ? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूप–विधिर्नास्ति इत्येतदनेन ज्ञाप्यते, तेन आभीक्ष्ण्ये लडादयो न भवन्ति। उपपदसमासः कस्मान् न [3]क्रियते ? उक्तं तत्रैवकारस्य प्रयोजनम्, अमैव यत्तुल्यविधानमुपपदं तत् समस्यते, नान्यत् (२. २. २०/७८३) इति ॥

## कर्मण्याक्रोशे कृञः खमुञ् । (२५/३३४६)

कर्मण्युपपदे [4]कृञो धातोः खमुञ् प्रत्ययो भवति आक्रोशे गम्यमाने। चोरंकारमाक्रोशति[5]। चोरोऽसि, दस्युरसि [6]इत्याक्रोशति। [7]चोरकरणमाक्रोशसम्पादनार्थमेव, न त्वसौ चोरः क्रियते ॥

## स्वादुमि णमुल् । (२६/३३४७)

समानकर्तृकयोः पूर्वकाले कृञः इति चानुवर्तते। स्वादुमि इत्यर्थग्रहणम्। स्वाद्वर्थेषूपपदेषु [8]कृञो णमुल् प्रत्ययो भवति। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारं भुङ्क्ते। लवणङ्कारम्। स्वादुमि इति [9]मकारान्तनिपातनम् [10]ईकाराभावार्थम्, [11]च्व्यन्तस्यापि[12] मकारार्थं [13]दीर्घाभावार्थं च (म.भा. २.३४७)। अस्वाद्वीं स्वाद्वीं कृत्वा[14] भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। वासरूपेण क्त्वा अपि भवति, स्वादुं कृत्वा भुङ्क्ते। तुमर्थाधिकाराच्च सर्व एते भावे प्रत्ययाः। यद्येवम्, स्वादुङ्कारं भुङ्क्ते देवदत्तः (म.भा. २. ३४८) इति णमुला कर्तुरनभिहितत्वात् कर्तरि कस्मात् तृतीया न भवति ? भुजिप्रत्ययेनाभिहितः कर्ता[15], न चास्मिन् प्रकरणे [16]शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृकत्वं [17]हि विरुध्यते। प्रधानशक्त्यभिधाने वा [18]गुणशक्तिरभिहितवत् प्रकाशते ॥

## अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् । (२७/३३४८)

कृञः इत्येव[19]। अन्यथादिषूपपदेषु [20]कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत् [21]करोतेर्भवति। कथं पुनरसौ सिद्धाप्रयोगः? निरर्थकत्वान्न प्रयोगमर्हति [22]इति एवमेव प्रयुज्यते। अन्यथा भुङ्क्ते इति यावानर्थस्तावानेव अन्यथाकारं भुङ्क्ते इति[23] गम्यते। [24]अन्यथाकारं भुङ्क्ते। एवङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। इत्थंकारं भुङ्क्ते। सिद्धाप्रयोगः इति किम् ? अन्यथा कृत्वा शिरो भुङ्क्ते[25] ॥

---

1. धातोः नास्ति ब. 2. इति इत्यधिकम् ह. 3. भवति ब, क्रियेत ह. 4. करोतेः ब. फ. ह. 5. दस्युङ्कारमाक्रोशति इत्यधिकम् ब. फ. ह. 6. इत्येवम् ब. फ. ह. 7. चोरकरणमिह ब. फ. ह. 8. करोतेः ह. 9. मान्त फ. 10. ईत्वाभावार्थम् ब. 11. द्व्यन्तस्य च ब. 12. च इत्यधिकम् ब. 13. दीर्घाभावार्थं नास्ति ब, द्व्यन्तस्य चमत्कारार्थं च फ. 14. यवागुं तु इत्यधिकम् अ. ब. फ. ह. 15. इति इत्यधिकम् फ. ह. 16. शक्ति नास्ति फ, शक्तिमतोः नास्ति क. 17. हि नास्ति फ, विरुध्येत ह. 18. गुणक्रियाशक्तिः ह. 19. वर्तते इत्यधिकम् फ. 20. करोतेः फ, करोतेः धातोः ह. 21. करोतिः ह. 22. इति नास्ति फ. 23. एवकारे इत्यधिकम् फ. 24. उदाहरणमिदं नास्ति फ. 25. वासरूपेण क्त्वा अपि भवति। अन्यथा कृत्वा चोदितः, अन्यथा कृत्वा परिहृत इत्येवमादिः इत्यधिकम् ह.

## यथातथयोरसूयाप्रतिवचने। (२८/३३४९)

कृञः सिद्धाप्रयोगे [1]इति वर्तते। यथातथाशब्दयोरुपपदयोः [2]कृञो णमुल् प्रत्ययो भवति असूयाप्रतिवचने गम्यमाने[3]। यद्यसूयन् पृच्छति प्रतिवक्ति तत्र प्रतिवचनम्[4], यथाकारमहं भोक्ष्ये, तथाकारमहं, किं तवानेन? असूयाप्रतिवचने इति किम्? यथा कृत्वाऽहं भोक्ष्ये, तथा त्वं द्रक्ष्यसि। सिद्धाप्रयोगे इत्येव, [5]यथा कृत्वाऽहं शिरो भोक्ष्ये, किं तवानेन॥

## कर्मणि दृशिविदोः साकल्ये। (२९/३३५०)

कर्मण्युपपदे साकल्यविशिष्टे[6]ऽर्थे [7]दृशिविदोः धात्वोः णमुल् प्रत्ययो भवति। कन्यादर्शं वरयति। याः याः कन्याः पश्यति [8]तास्ताः वरयति इत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा [9]तान् सर्वान् भोजयति इत्यर्थः। साकल्ये इति किम्? ब्राह्मणं दृष्ट्वा भोजयति॥

## यावति विन्दजीवोः। (३०/३३५१)

यावच्छब्द उपपदे [10]विन्दतेर्जीवतेश्च[11]णमुल् प्रत्ययो भवति। यावद्वेदं भुङ्क्ते। यावल्लभते तावद् भुङ्क्ते इत्यर्थः। यावज्जीवमधीते[12]। [13]यावज्जीवति तावदधीते इत्यर्थः[14]॥

## चर्मोदरयोः पूरेः। (३१/३३५२)

कर्मणि इत्येव। चर्मोदरयोः [15]कर्मणोरुपपदयोः पूरयतेः[16] णमुल् प्रत्ययो भवति। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते[17]॥

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्। (३२/३३५३)

[18]कर्मणि इत्येव। पूरयतेः [19]धातोः णमुल् प्रत्ययो भवति, [20]ऊलोपश्चास्य पूरयतेरन्यतरस्यां भवति, समुदायेन चेद् वर्षस्य प्रमाणम् इयत्ता गम्यते। गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः। [21]सीतापूरं वृष्टो देवः, सीताप्रं वृष्टो देवः। अस्यग्रहणं किमर्थम्। उपपदस्य मा भूत्। मूषिकाबिलपूरं वृष्टो [22]देवः, मूषिकाबिलप्रम्॥

## चेले क्नोपेः। (३३/३३५४)

कर्मणि इत्येव। 'क्नूयी [23]शब्दे उन्दने च' (धा.पा.४८५), [24]अस्माण्ण्यन्ताद् धातोः चेलार्थेषु कर्मसु उपपदेषु णमुल् प्रत्ययो भवति, वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्[25]। वसनक्नोपम्[26]॥

---

1. इत्येव क. ह. 2. करोतेः फ. 3. अक्षमा असूया इत्यधिकम् ब. 4. असूयाप्रतिवचनं इत्यधिकम् ब.ह. 5. तथा ब. ह. 6. अर्थे नास्ति ब. 7. वर्तमानयोः इत्यधिकम् फ. 8. ताः सर्वाः ब. फ. ह. 9. तं तं सर्वं ब. क. फ. 10. विन्देः ब. क. फ. 11. धातोः इत्यधिकम् क. फ, धात्वोः इत्यधिकम् ब. 12. अर्चति ब. 13. वाक्यमिदं नास्ति ह. 14. सूत्रमिदं नास्ति ह. 15. कर्मवाचिनोरुपपदयोः अ. ब. 16. धातोः इत्यधिकम् अ. ब. क. ह. 17. उदरं पूरयन् भुङ्क्ते इत्यर्थः इत्यधिकम् क. 18. कर्मणि उपपदे ब. ह. 19. धातोः नास्ति ब. 20. ऊकारलोपः ब. फ. 21. उदाहरणमिदं नास्ति फ. ह. 22. देवः नास्ति फ. ह. 23. शब्दे नास्ति फ. 24. इत्यस्माद् धातोः ब. 25. वृष्टो देवः इत्यधिकम् फ. 26. वृष्टो देवः इत्यधिकम् ह.

## निमूलसमूलयोः कषः । (३४/३३६८)

कर्मणि इत्येव । निमूलसमूल[1]शब्दयोः कर्मवाचिनोरुपपदयोः कषेः[2]धातोः णमुल् प्रत्ययो भवति । निमूल-काषं कषति । समूलकाषं कषति । निमूलं समूलं कषति इत्यर्थः । इतः प्रभृति [3]कषादीन् यान् वक्ष्यति [4]तत्र 'कषादिषु यथाविध्यनुप्रयोगः' (३.४.४६/३३६७) इति ।।

## शुष्कचूर्णरूक्षेषु पिषः । (३५/३३६६)

[5]कर्मणि इत्येव । शुष्कादिषु कर्मवाचिषु उपपदेषु पिषेर्धातोः णमुल् [6]प्रत्ययो भवति । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टि इत्यर्थः । चूर्णपेषं पिनष्टि । चूर्णं [7]पिनष्टि इत्यर्थः । रूक्षपेषं [8]पिनष्टि । रूक्षं [9]पिनष्टि इत्यर्थः ।।

## समूलाकृतजीवेषु हनकृञ्ग्रहः । (३६/३३७१)

कर्मणि [10]इत्येव । [11]समूल अकृत जीव [12]इत्येतेषु शब्देषु [13]कर्मसु उपपदेषु यथासङ्ख्यं [14]हन् कृञ् ग्रह इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति । समूलघातं हन्ति । समूलं हन्ति इत्यर्थः । अकृतकारं करोति । जीवग्राहं गृह्णाति[15] ।।

## करणे हनः । (३७/३३७८)

करणे उपपदे हन्तेर्धातोः णमुल् प्रत्ययो भवति । पाणिघातं वेदिं हन्ति । पादघातं भूमिं हन्ति[16] । 'हिंसार्थानां च समानकर्मकाणाम्' (३.४.४८/३३६९) इति [17]णमुलं वक्ष्यति । अहिंसार्थोऽयमारम्भः । नित्य-समासार्थो वा यथाविध्यनुप्रयोगार्थश्च[18] । पूर्वविप्रतिषेधेन हन्तेः हिंसार्थस्यापि[19] प्रत्ययोऽनेनैवेष्यते । असिघातं हन्ति । शरघातं हन्ति[20] ।।

## स्नेहने पिषः । (३८/३३७९)

करणे इत्येव[21] । स्निह्यते [22]येन तत् स्नेहनम् । स्नेहनवाचिनि करणे उपपदे पिषेर्धातोः णमुल् [23]प्रत्ययो भवति । उदपेषं पिनष्टि[24] । तैलपेषं पिनष्टि । तैलेन पिनष्टि इत्यर्थः ।।

---

1. इत्येतयोः इत्यधिकम् फ. ह. 2. धातोः नास्ति फ. 3. कषादयः यावत् वक्ष्यन्ते ब. ह. फ. 4. तत्र नास्ति फ. 5. वाक्यमिदं नास्ति फ. 6. प्रत्ययो नास्ति फ. 7. पिनष्टि नास्ति ब. ह. फ. 8. पिनष्टि नास्ति फ. 9. पिनष्टि नास्ति ब. फ. 10. इत्येव नास्ति फ. 11. समूलादिषु फ, समूलाकृतजीवेषु ह. 12. एतेषु नास्ति ब. 13. कर्मवाचिषु ब. 14. हन्कृञ्ग्रहिभ्यः ब. ह. 15. जीवन्तं गृह्णाति इति अर्थ इत्यधिकम् फ. 16. पादेन हन्ति इत्यर्थः फ. ह. 17. णमुलं नास्ति फ. 18. भवति इत्यधिकम् फ. 19. अपि नास्ति फ. 20. इति इत्यधिकम् फ. ह. 21. वर्तते इत्यधिकम् फ. ह. 22. अनेन इति ब. ह. 23. प्रत्ययो नास्ति फ. 24. उद-केन पिनष्टि इत्यर्थः इत्यधिकम् अ.

## हस्ते वर्तिग्रहोः । (३९/३३६०)

[1]करणे इत्येव । हस्ते इत्यर्थग्रहणम् । वर्तिः ण्यन्तः । हस्तवाचिनि करणे उपपदे वर्तयतेः[2] गृह्णातेश्च णमुल् प्रत्ययो भवति । हस्तेन वर्तयति, हस्तवर्तं वर्तयति । करवर्तम्[3] । [4]पाणिवर्तम् । ग्रहेः खल्वपि – हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति । [5]करग्राहम् । पाणिग्राहम्[6] ॥

## स्वे पुषः । (४०/३३६१)

[7]करणे इत्येव । स्वे इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषेर्धातोः णमुल् प्रत्ययो भवति । [8]आत्मीयज्ञातिधन[9]वचनः स्वशब्दः । स्वपोषं पुष्णाति । [10]आत्मपोषम् । गोपोषम्[11] । पितृपोषम् । मातृ–पोषम्[12] । धनपोषम् । रैपोषम् ॥

## अधिकरणे बन्धः । (४१/३३६२)

अधिकरणवाचिनि उपपदे बध्नातेः धातोः णमुल् [13]प्रत्ययो भवति । चक्रबन्धं बध्नाति । कूटबन्धं बध्नाति[14] । मुष्टिबन्धं बध्नाति । चोरकबन्धं बध्नाति[15] । [16]चोरके बध्नाति इत्यर्थः ॥

## सञ्ज्ञायाम् । (४२/३३६३)

सञ्ज्ञायां विषये बध्नातेः धातोः णमुल् [17]प्रत्ययो भवति । क्रौञ्चबन्धं बध्नाति । मयूरिकाबन्धं बध्नाति । मयूरिकाबन्धं[18]बद्धः । अट्टालिकाबन्धं [19]बद्धः । बन्धविशेषाणां नामधेयानि एतानि ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः । (४३/३३६४)

[20]जीवपुरुषयोः कर्तृवाचिनोरुपपदयोः यथासङ्ख्यं नशिवहोः धात्वोः णमुल् प्रत्ययो भवति । जीवनाशं नश्यति । जीवो नश्यति इत्यर्थः । पुरुषवाहं वहति । पुरुषः प्रेष्यो भूत्वा वहति इत्यर्थः । कर्तरि इति किम् ? जीवेन नष्टः । पुरुषेणोढः ॥

## ऊर्ध्वे शुषिपूरोः । (४४/३३६५)

कर्तृग्रहणमनुवर्तते । ऊर्ध्वशब्दे कर्तृवाचिनि उपपदे [21]शुषिपुरोः धात्वोः णमुल् [22]प्रत्ययो भवति । ऊर्ध्व–शोषं शुष्यति । [23]ऊर्ध्वं शुष्यति इत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यते इत्यर्थः ॥

---

1. वाक्यमिदं नास्ति फ. 2. ग्रहेश्च धातोः फ. ब. 3. वर्तयति इत्यधिकम् फ. 4. पाणिवर्तम् नास्ति ब, वर्तयति इत्यधिकम् फ. 5. करग्राहं नास्ति फ, करग्राहः पाणिग्राहः ह. 6. गृह्णाति इत्यधिकम् फ. 7. वाक्य-मिदं नास्ति फ. 8. आत्मा° अ. ब. ह. 9. °वाची ह. फ. 10. आत्मपोषम् नास्ति ब. फ. ह. 11. महिषी-पोषं पुष्णाति इत्यधिकम् फ. ह. ब, महिषीपोषम् इत्यधिकम् अ. 12. पुष्णाति इत्यधिकम् अ. ब. 13. प्रत्ययो नास्ति फ. 14. चरकबन्धम् । चरके बध्नाति इत्यर्थः इत्यधिकम् ब, गुप्तिबन्धम् इत्यधिकम् फ. 15. इत्ये-वमादयः इत्यधिकम् फ. 16. वाक्यमिदं नास्ति फ. 17. प्रत्ययो नास्ति फ. 18. बद्धः नास्ति ह. 19. चण्डा-लिकाबन्धम् इत्यधिकम् फ, बद्धः नास्ति ब. 20. जीवपुरुषशब्दयोः अ. फ. ह. 21. शुषिपूरोः नास्ति फ. 22. प्रत्ययो नास्ति फ. 23. ऊर्ध्वः ब.

## उपमाने कर्मणि च । (४५/३३६६)

उपमीयते[1]ऽनेन इत्युपमानम् । [2]उपमाने कर्मणि उपपदे, चकारात् कर्तरि, धातोः णमुल् [3]प्रत्ययो भवति । घृतनिधायं निहितः । घृतमिव निहितः इत्यर्थः । सुवर्णनिधायं [4]निहितः । [5]सुवर्णमिव निहितः इत्यर्थः । कर्तरि खल्वपि – अजकनाशं नष्टः । अजक इव नष्टः । [6]चूडकनाशम् । [7]दन्तनाशम् ॥

## कषादिषु यथाविध्यनुप्रयोगः । (४६/३३६७)

निमूलसमूलयोः (३.४.३४/३३५५) इत्येतदारभ्य कषादयः । [8]एतेषु यथाविध्यनुप्रयोगो भवति । यस्माद् धातोः णमुल् प्रत्ययो [9]भवति स एव [10]अनुप्रयोक्तव्यः । ननु[11] [12]धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव ? यथाविधि इति नियमार्थं वचनम्, तथा चैवोदाहृतम् ॥

## उपदंशस्तृतीयायाम् । (४७/३३६८)

'दंश दशने' (धा.पा. ९९०), अस्माद् [13]धातोरुपपूर्वात् तृतीयान्ते उपपदे णमुल् [14]प्रत्ययो भवति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम्[15] । [16]आर्द्रकोपदंशम्, आर्द्रकेणोपदंशम् । अत्र विकल्पेनोपपदसमासः 'तृतीयाप्रभृतीन्यन्तरस्याम्' (२.२.२१/७८४) इति । [17]मूलकादि चोपदंशेः कर्म । भुजेः करणम् । [18]सर्वस्मिन्नेवात्र णमुल्प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि[19] भवति । मूलकेनोपदश्य भुङ्क्ते ॥

## हिंसार्थानां च समानकर्मकाणाम् । (४८/३३६९)

तृतीयायाम् इत्येव । हिंसा प्राण्युपघातः । तदर्थानां धातूनामनुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे णमुल् [20]प्रत्ययो भवति । दण्डोपघातं गाः [21]कालयति, दण्डेनोपघातम्[22] । दण्डताडम्, दण्डेन ताडम् । समानकर्मकाणाम् इति किम् ? चोरं दण्डेनोपहत्य गोपालको गाः [23]कालयति ॥

## सप्तम्यां चोपपीडरुधकर्षः । (४९/३३७०)

उपशब्दः प्रत्येकमभिसम्बध्यते । उपपूर्वेभ्यः [24]पीडरुधकर्षेभ्यः सप्तम्यन्ते उपपदे, चकारात् तृतीयान्ते उपपदे, णमुल् प्रत्ययो भवति । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्[25], पार्श्वाभ्यामुपपीडम्[26] । व्रजोपरोधं गाः स्थापयति, व्रजे उपरोधम्, व्रजेनोपरोधम् । पाण्युपकर्षं धानाः [27]संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम् । कर्षतेरिदं ग्रहणं न कृषतेः ॥

---

1. येन तद् ब.फ.ह. 2. उपमानवाचिकर्मणि ह. 3. प्रत्ययो नास्ति फ. 4. रजतनिधायम् इत्यधिकम् अ.क, रत्ननिधायम् इत्यधिकम् ब. 5. वाक्यमिदं नास्ति ब, निहितः नास्ति फ. 6. चरकनाशम् ब, चरकनाशं नष्टः फ, शुद्धकनाशं नष्टः क.ह. 7. दन्तनाशम् नास्ति फ, दन्तनाशं नष्टः अ. 8. तेषु कषादिषु ब. ह, एतेषु कषादिषु फ. 9. विहितः ब. फ, प्रविहितः ह. 10. धातुः इत्यधिकम् फ. ह. 11. च इत्यधिकम् फ. ह. 12. धातोः सम्बन्धे क. 13. धातोः नास्ति फ.ह. 14. प्रत्ययो नास्ति फ. 15. भुङ्क्ते इत्यधिकम् फ. 16. उदाहरणमिदं नास्ति क. 17. मूलकादिकं ब. 18. सर्वत्र अ. 19. प्रत्ययः इत्यधिकम् अ. ब. क. फ. 20. प्रत्ययो नास्ति फ. 21. चालयति अ. 22. दण्डेन ताडयति इत्यधिकम् क, इत्यादयः इत्यधिकम् फ. 23. पालयति ह, चारयति अ. 24. पीडादिभ्यः अ, पीडादिभ्यो धातुभ्यः फ, पीड रुध कर्ष इत्येतेभ्यो धातुभ्यः क. 25. शेते इत्यधिकम् ह. 26. इत्यादयो भवन्ति इत्यधिकम् फ. 27. गृह्णाति ह.

## समासत्तौ । (५०/३३७१)

[1]सप्तम्याम् तृतीयायाम् इति वर्तते । समासत्तिः सन्निकर्षः । समासत्तौ गम्यमानायां तृतीयासप्तम्योः उपपदयोः धातोः णमुल् प्रत्ययो भवति । केशग्राहं युध्यन्ते, केशेषु ग्राहम्, केशैर्ग्राहम् । हस्तग्राहम्,[2] हस्तेषु ग्राहम्, [3]हस्तैर्ग्राहम् । युद्धसंरम्भादत्यन्तं [4]सन्निकृष्यन्ते इत्यर्थः ॥

## प्रमाणे च । (५१/३३७२)

[5]तृतीयासप्तम्योः इत्येव । प्रमाणम् आयामः, दैर्घ्यम् । प्रमाणे गम्यमाने तृतीयासप्तम्योः उपपदयोः धातोर्णमुल् प्रत्ययो भवति । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति,[6] द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम् । [7]त्र्यङ्गुलोत्कर्षम्[8] ॥

## अपादाने परीप्सायाम् । (५२/३३७३)

परीप्सा त्वरा । [9]परीप्सायां गम्यमानायाम् अपादाने उपपदे धातोः णमुल् [10]प्रत्ययो भवति । शय्योत्थायं धावति, शय्याया उत्थाय । एवं नाम त्वरते यदवश्यंकर्तव्यमपि नापेक्षते । [11]शय्योत्थानमात्रमाद्रियते । [12]रन्ध्रापकर्षं पयः पिबति । [13]भ्राष्ट्रापकर्षमपूपान् भक्षयति । परीप्सायाम् इति किम् ? आसनादुत्थाय गच्छति ॥

## द्वितीयायां च । (५३/३३७४)

[14]परीप्सायाम् इत्येव । [15]द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोः णमुल् [16]प्रत्ययो भवति । यष्टिग्राहं युध्यन्ते, यष्टिं ग्राहम्[17] । लोष्टग्राहम्,[18] लोष्टं ग्राहम् । एवं नाम त्वरते [19]यदायुधग्रहणमपि नाद्रियते । लोष्टादिकं यत् किंचिदासन्नं तद् [20]गृह्णाति ॥

## स्वाङ्गेऽध्रुवे । (५४/३३७६)

[21]द्वितीयायाम् इत्येव । [22]अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोः णमुल् [23]प्रत्ययो भवति । अक्षिनिकाणं जल्पति[24] । भ्रूविक्षेपं [25]कथयति । अध्रुवे इति किम् ? उत्क्षिप्य शिरः कथयति । यस्मिन्नङ्गे छिन्ने[26]ऽपि प्राणी न म्रियते तदध्रुवम् । '[27]अद्रवं मूर्तिमत् स्वाङ्गम्' (काशिका ४.१.५४) ॥

---

1. सप्तमीतृतीया इति क.ह. 2. युध्यन्ते इत्यधिकम् फ. ह. 3. हस्तैर्ग्राहम् नास्ति ह. 4. संनिकृष्य युध्यन्ते ब.क. 5. तृतीया सप्तमी च अनुवर्तते ह. 6. ह्रस्वः खण्डः खण्डिका इत्यधिकम् अ. 7. एवं त्र्यङ्गुलोत्कर्षः त्र्यङ्गुले उत्कर्षः त्र्यङ्गुलेनोत्कर्षः इत्यधिकम् अ.ब. 8. चतुरङ्गुलोत्कर्षम् चतुरङ्गुलेनोत्कर्षम् चतुरङ्गुल उत्कर्षम् इत्यधिकम् क.फ. 9. तस्यां फ. 10. प्रत्ययो नास्ति फ. 11. शय्योत्थानमाद्रीयते ह. 12. रन्ध्रादपकर्षं ब.क.अ.ह. 13. भ्राष्ट्रादपकर्षं ब.क.ह, उदाहरणमिदं नास्ति अ. 14. वाक्यमिदं नास्ति फ. 15. द्वितीयायां च ब. 16. प्रत्ययो नास्ति फ. 17. युध्यन्ते इत्यधिकम् फ. 18. युध्यन्ते इत्यधिकम् ह. 19. योद्धुम् इत्यधिकम् ब.फ.ह. 20. गृह्णन्ति ब. 21. वाक्यमिदं नास्ति फ. 22. अध्रुवस्वाङ्गवाचिनि ह. 23. प्रत्ययो नास्ति फ. 24. कण निमीलने चुरादि इत्यधिकम् क. 25. जल्पति फ, भ्रुवं विक्षेपं कथयति अ.ब. 26. भिन्ने ब, अपि नास्ति अ.ह. 27. अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं चेत् तेन चेत् तत्तथायुतम् ॥ क.

## परिक्लिश्यमाने च । (५५/३३७७)

[1]स्वाङ्गे, द्वितीयायाम् इत्येव । परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्ते उपपदे धातोः णमुल् [2]प्रत्ययो भवति । परिक्लेशः सर्वतो[3] विबाधनम्, [4]दुःखनम् । उरःपेषं युध्यन्ते, [5]उरःप्रतिपेषं युध्यन्ते[6] । [7]शिरःपेषम्, शिरःप्रतिपेषम् । कृत्स्नमुरः पीडयन्तो युध्यन्ते । [8]ध्रुवार्थोऽयमारम्भः ॥

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः । (५६/३३७८)

[9]द्वितीयायाम् इत्येव । द्वितीयान्ते उपपदे विश्यादिभ्यो धातुभ्यो णमुल् [10]प्रत्ययो भवति, व्याप्यमाने आसेव्यमाने चार्थे गम्यमाने । [11]विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां सम्बन्धो व्याप्तिः । तात्पर्यम् आसेवा । द्रव्ये व्याप्तिः, क्रियायामासेवा । गेहानुप्रवेशमास्ते । समासेन व्याप्त्यासेवयोरुक्तत्वात् 'नित्यवीप्सयोः' (८.१.४/२१४०) इति द्विर्वचनं न भवति । [12]असमासपक्षे तु व्याप्यमानतायां [13]द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रियावचनस्य । तथा च वक्ष्यति – 'सुप्सु वीप्सा, तिङक्षु नित्यता' इति । [14]गेहं गेहमनुप्रवेशमास्ते । आसेवायाम् – गेहमनुप्रवेशमनुप्रवेशमास्ते । पति – गेहानुप्रपातमास्ते, गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते । पदि – गेहानुप्रपादमास्ते, गेहं गेहमनुप्रपादम्,[15] गेहमनुप्रपादमनुप्रपादम्[16] । स्कन्दि – गेहावस्कन्दमास्ते, गेहं गेहमवस्कन्दम्,[17] गेहमवस्कन्दमवस्कन्दम्[18] । व्याप्यमानासेव्यमानयोः इति किम् ? गेहमनुप्रविश्य भुङ्क्ते । ननु आभीक्ष्ण्ये णमुल् विहित [19]एव, आसेवा आभीक्ष्ण्यमेव, [20]किमर्थं [21]पुनरासेवायां णमुल् उच्यते ? क्त्वानिवृत्त्यर्थम् इति चेत्, न, [22]इष्टत्वात् तस्य । द्वितीयोपपदार्थं [23]तर्हि वचनम्, उपपदसमासः पक्षे यथा स्यात् । तेन हि सति [24]उपपदाभावः ॥

## अस्यतितृषोः क्रियान्तरे कालेषु । (५७/३३७९)

[25]द्वितीयायाम् इत्येव । क्रियामन्तरयति क्रियान्तरः, क्रियाव्यवधायकः । क्रियान्तरे धात्वर्थे वर्तमानाभ्याम्[26]अस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषु उपपदेषु णमुल् प्रत्ययो भवति ।[27] द्व्यहात्यासं गाः पाययति,[28] [29]द्व्यहमत्यासं गाः पाययति । [30]त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं गाः पाययति । द्व्यहतर्षं गाः पाययति, द्व्यहंतर्षं गाः पाययति । अत्यसनेन तर्षणेन च गवां पानक्रिया [32]व्यवधीयते [33]विच्छिद्यते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययति इत्यर्थः । अस्यतितृषोः इति किम् ? द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तरे इति

---

1. वाक्यमिदं नास्ति ब. फ. 2. प्रत्ययो नास्ति फ. 3. अपि इत्यधिकम् फ. ह. 4. दुःखम् फ, क्लेशः सर्वतोऽपि बाधनः दुःखम् ह. 5. उरःप्रतिपीडम् फ, नास्ति ब. 6. कृत्स्नमुरः पीडयन्तो युध्यन्ते इत्यर्थः इत्यधिकम् ब. फ. 7. शिरःपेषम् नास्ति ब. ह. 8. पूर्वेणैव सिद्धे इत्यधिकम् क, वाक्यमिदं नास्ति ह. 9. वाक्यमिदं नास्ति फ. 10. प्रत्ययो नास्ति फ. 11. विश्यादिभिः नास्ति फ. 12. असमासे तु ब. 13. द्रव्यस्य ब. 14. विशि – गेहानुप्रवेशमास्ते फ. 15.–18. आस्ते इत्यधिकम् फ. 19. एव नास्ति अ. फ. 20. तत्र इत्यधिकम् फ. 21. पुनर् नास्ति फ. 22. ततो दृष्टत्वात् फ. 23. हि इदं फ. 24. उपपदभावः ह. 25. वाक्यमिदं नास्ति फ. 26. अस्यतितृषोः धात्वोः फ, वर्तमानात् अस्यतेः तृष्यतेश्च धातोः ब. ह. 27. अस्यति– इत्यधिकम् ब. ह. 28. पयः इत्यधिकम् फ. 29. द्व्यहमत्यासं नास्ति ब. 30. वाक्यमिदं नास्ति फ, त्र्यह–मत्यासं नास्ति ह. 31. तृषिभ्यः इत्यधिकम ह, उदाहरणमिदं नास्ति ब. 32. व्यवसीयते ह. 33. व्यव–च्छिद्यते इत्यधिकम् फ. ह.

किम् ? अहरत्यस्य इषून् गतः । न गतिर्व्यवधीयते । कालेषु इति किम् ? योजनमत्यस्य गाः पाययति[1] । अध्वकर्मकमत्यसनं व्यवधायकम्, न [2]कालकर्मकम् ॥

## नाम्न्यादिशिग्रहोः । (५८/३३८०)

[3]द्वितीयायाम् इत्येव । नामशब्दे द्वितीयान्ते उपपदे आदिशेर्ग्रहेश्च धातोः णमुल् प्रत्ययो भवति । नामादेशमाचष्टे । नामग्राहम् [4]आचष्टे ॥

## अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । (५९/३३८१)

[5]अव्यये उपपदे अयथाभिप्रेताख्याने गम्यमाने करोतेः[6] क्त्वाणमुलौ[7] भवतः । ब्राह्मण, पुत्रस्ते जातः । किं तर्हि वृषल, [8]नीचैःकृत्याचक्षे, नीचैः कृत्वा, नीचैःकारम्[9] । उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण, कन्या ते गर्भिणी[10] । किं तर्हि [11]वृषल, [12]उच्चैःकृत्याचक्षे, उच्चैः कृत्वा, उच्चैःकारम्[13] । नीचैर्नामाप्रियमाख्येयम् । अयथाभिप्रेताख्याने इति किम् ? उच्चैः कृत्वाचष्टे पुत्रस्ते जातः इति । क्त्वाग्रहणं किम्, यावता सर्वस्मिन्नेवात्र प्रकरणे वासरूपेण क्त्वा[14] भवति इत्युक्तम् ? समासार्थं वचनम् । तथा [15]च 'क्त्वा च' (२.२.२२/७८५) इत्यस्मिन् सूत्रे 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (२.२.२१/७८४) इति [16]वर्तते । णमुलधिकारे पुनर्णमुल्ग्रहणं[17] तुल्य[18]कक्षत्वज्ञापनार्थम्, तेनोत्तरत्र द्वयोरप्यनुवृत्ति[19]र्भविष्यति ॥

## तिर्यच्यपवर्गे । (६०/३३८२)

तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतः, अपवर्गे गम्यमाने । अपवर्गः समाप्तिः । तिर्यक्कृत्य गतः, [20]तिर्यक्कृत्वा गतः, तिर्यक्कारं गतः । [21]समाप्य गतः इत्यर्थः । अपवर्गे इति किम् ? तिर्यक्कृत्वा काष्ठं गतः । तिर्यचि इति [22]शब्दानुकरणम् । न च प्रकृतिवदनुकरणेन भवितव्यम्, अनुक्रियमाणरूपविनाशप्रसङ्गात्, एतदोऽश् (२.४.३३/१९६२) ,'अदसो मात्' (१.१.१२/१०१) इति[23] ॥

---

1. क्वचित् स्रुघ्नादौ पाययित्वा ततो योजनमतिक्रम्य पाययति इत्यर्थः इत्यधिकम् क, अध्वानमत्यस्य गाः पाययति इत्यधिकम् फ. 2. कालकर्म ह. 3. वाक्यमिदं नास्ति फ. 4. आह्वयति ब. फ, आह्वयते ह. 5. द्वितीयायामित्येव इत्यधिकम् ब. 6. धातोः इत्यधिकम् ब. 7. प्रत्ययौ इत्यधिकम् ब. 8. नीचैः कृत्वा ब. ह. 9. आचक्षे इत्यधिकम् फ. 10. जाता इत्यधिकम् अ. 11. वृषल नास्ति फ. 12. उच्चैः कृत्वा ब. फ. ह. 13. आचक्षे इत्यधिकम् फ. 14. अपि इत्यधिकम् क. फ. 15. हि अ. 16. अनुवर्तते फ, इत्येवानुवर्तते ब. 17. णमुलः इत्यधिकम् फ. 18. °कक्ष्यत्व° ह. 19. भवति ब. 20. उदाहरणमिदं नास्ति फ. 21. परिसमाप्य क. 22. शब्दरूपात् अनुकरणम् फ, शब्दरूपानुकरणम् ब. 23. यथा इत्यधिकम् अ. फ.ह.

## स्वाङ्गे तस्प्रत्यये कृभ्वोः । (६१/३३८३)

तस्प्रत्ययो यतः स्वाङ्गात् तदेवमुच्यते । [1]तस्प्रत्यये स्वाङ्गवाचिनि उपपदे करोतेः भवतेश्च धात्वोः क्त्वाणमुलौ [2]प्रत्ययौ भवतः । यथासङ्ख्यमत्र नेष्यते, [3]अस्वरितत्वात् । मुखतःकृत्य गतः, [4]मुखतः कृत्वा गतः, मुखतःकारं गतः । मुखतोभूय तिष्ठति, मुखतो भूत्वा तिष्ठति, मुखतोभावं तिष्ठति । पृष्ठतःकृत्य गतः, पृष्ठतः कृत्वा गतः, पृष्ठतःकारं गतः । [5]पृष्ठतोभूय गतः, पृष्ठतो भूत्वा, [6]पृष्ठतोभावम्[7] । स्वाङ्गे इति किम् ? सर्वतः कृत्वा गतः । [8]तस्ग्रहणं किम् ? मुखीकृत्य गतः[9] । मुखीभूय गतः । [10]प्रत्ययग्रहणं किम् ? मुखे तस्यति इति मुखतः, मुखतः कृत्वा गतः ॥

## नाधार्थप्रत्यये च्व्यर्थे । (६२/३३८४)

नार्थो धार्थश्च प्रत्ययो यस्मात् [11]स एवमुच्यते । [12]नाधार्थप्रत्यये शब्दे च्व्यर्थे उपपदे कृभ्वोः धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः । अनाना नाना [13]कृत्वा गतः नानाकृत्य गतः, नाना कृत्वा गतः, नानाकारं गतः । विनाकृत्य गतः, विना कृत्वा गतः, विनाकारं गतः । नानाभूय गतः, नाना भूत्वा गतः, नानाभावं गतः । विनाभूय गतः, विना भूत्वा गतः, विनाभावं गतः । [14]द्विधाकृत्य [15]गतः, द्विधा कृत्वा गतः, द्विधाकारं गतः । द्विधाभूय गतः, द्विधा भूत्वा गतः, द्विधाभावं गतः । द्वैधंकृत्य गतः, द्वैधं कृत्वा गतः, द्वैधंकारं गतः । द्वैधंभूय गतः, द्वैधं भूत्वा गतः, द्वैधंभावं गतः[16] । प्रत्ययग्रहणं किम् ? हिरुक् कृत्वा । पृथक् कृत्वा । च्व्यर्थे इति किम् ? नाना कृत्वा काष्ठानि गतः । धार्थमर्थग्रहणम्, [17]ना पुनरेक एव, विनञ्भ्यां नानाञौ (५.२.२७/१८२८) इति ॥

## तूष्णीमि भुवः । (६३/३३८५)

[18]तूष्णींशब्दे उपपदे [19]भवतेः धातोः क्त्वाणमुलौ [20]प्रत्ययौ भवतः । तूष्णींभूय [21]गतः, तूष्णीं भूत्वा, तूष्णींभावम् । भूग्रहणं कृञो निवृत्त्यर्थम् ॥

## अन्वच्यानुलोम्ये । (६४/३३८६)

अन्वक्शब्दे उपपदे [22]भवतेर्धातोः आनुलोम्ये[23] क्त्वाणमुलौ[24] भवतः । आनुलोम्यम् अनुलोमता, अनुकूलत्वम्[25], परचित्तानुविधानम् । अन्वग्भूय आस्ते, अन्वग् भूत्वा [26]आस्ते, अन्वग्भावम् [27]आस्ते । आनुलोम्ये इति किम् ? अन्वग् भूत्वा तिष्ठति ॥

---

1. तस्प्रत्ययान्ते स्वाङ्गे उपपदे फ. ह. 2. प्रत्ययौ नास्ति फ. 3. अस्वरितत्वात् नास्ति फ. 4. उदाहरणमिदं नास्ति फ. 5. पृष्ठतोभूय गतः नास्ति फ. 6. पृष्ठतोभावम् नास्ति फ. 7. एवं पार्श्वतः प्रभृतिषु उदाहर्तव्यम् इत्यधिकम् फ. 8. तस्प्रत्ययान्ते ह. 9. अमुखं मुखं कृत्वा गतः इत्यधिकम् क, मुखतः कृत्वा गतः इत्यधिकम् फ. 10. प्रत्ययं इति किम् ब. 11. तत् अ. 12. नाधार्थप्रत्ययान्तशब्दे फ. 13. कृत्य फ. 14. धार्थे इत्यधिकम् ब. फ. 15. गतः नास्ति ब. 16. द्वेधाकृत्वा द्वेधाकारं द्वेधाभूय द्वेधाभूत्वा इत्यधिकम् फ. 17. न क, नार्थः ब. 18. तूष्णीमि ब. 19. भू इत्येतस्मात् ब.क.फ. 20. प्रत्ययौ नास्ति फ. 21. तिष्ठति ब. ह. 22. भू इत्येतस्मात् ब. 23. गम्यमाने इत्यधिकम् फ. 24. प्रत्ययौ इत्यधिकम् ब. 25. आनुकूल्यम् इत्यधिकम् फ. 26–27. आस्ते नास्ति फ.

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्। (६५/३१७७)

शकादिषूपपदेषु अस्त्यर्थेषु [1]वा धातुमात्रात् तुमुन् प्रत्ययो भवति। अक्रियार्थोपपदार्थोऽयमारम्भः। शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। [2]घटते भोक्तुम्। आरभते भोक्तुम्। [3]लभते भोक्तुम्। प्रक्रमते भोक्तुम्। [4]सहते भोक्तुम्। अर्हति भोक्तुम्। अस्त्यर्थेषु खल्वपि – अस्ति भोक्तुम्। [5]भवति भोक्तुम्॥

## पर्याप्तिवचनेष्वलमर्थेषु। (६६/३१७८)

पर्याप्तिः अन्यूनता। पर्याप्तिवचनेषु [6]अलमर्थेषु उपपदेषु धातोस्तुमुन् प्रत्ययो भवति। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। [7]भोक्तुं पारयति। पर्याप्तिवचनेषु इति किम्? अलं [8]कृत्वा। अलमर्थेषु इति किम्? पर्याप्तं भुङ्क्ते। पूर्वसूत्रे शकिग्रहणमनलमर्थम्, शक्यमेवं कर्तुम् इति॥

## कर्तरि कृत्। (६७/२८३२)

कृत्सञ्ज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति। कृदुत्पत्तिवाक्यानामयं शेषः। तत्र येषु [9]अर्थनिर्देशो नास्ति तत्रेदमुपतिष्ठते, अर्थाकाङ्क्षत्वात्। न ल्युन्नादिवाक्येषु, साक्षादर्थनिर्देशे सति तेषां निराकाङ्क्षत्वात्। कारकः। कर्ता। नन्दनः। ग्राही। पचः॥

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा। (६८/२८९४)

[10]भव्यादयः शब्दाः कर्तरि[11] वा निपात्यन्ते। 'तयोरेव कृत्यक्तखलर्थाः' (३. ४. ७०/२८३३) इति भावकर्मणोः प्राप्तयोः कर्ता [12]च वाच्यः पक्षे [13]उच्यते। [14]भवत्यसौ भव्यः, भव्यमनेन इति वा। गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानि इति वा। प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा। उपस्थानीयो[15]ऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः। जायतेऽसौ जन्यः, जन्यमनेन इति [16]वा। आप्लवतेऽसावाप्लाव्यः, आप्लाव्यमनेन इति वा। आपतति असावापात्यः,[17] आपात्यमनेन इति वा॥

## लः कर्मणि च भावे चाकर्मकेभ्यः। (६९/२१५२)

लः इत्युत्सृष्टानुबन्धं सामान्यं [18]गृह्यते, प्रथमाबहुवचनान्तं चैतत्। लकाराः[19] कर्मणि कारके भवन्ति, चकारात् कर्तरि च। अकर्मकेभ्यो[20] धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्तरि च। गम्यते[21] ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। अकर्मकेभ्यः – आस्यते देवदत्तेन। आस्ते देवदत्तः। सकर्मकेभ्यो भावे न भवन्ति॥

---

1. धातुषु इत्यधिकम् फ, अस्त्यर्थेषु च धातुषु ब.ह. 2. उदाहरणमिदं नास्ति फ. 3. आलभते ब. 4. उत्सहते ब. 5. उदाहरणमिदं नास्ति फ. 6. अलमर्थे विशिष्टेषु ब.फ.ह. 7. उदाहरणमिदं नास्ति ब. 8. उक्त्वा फ. 9. अर्थादेशः अ. 10. भव्यगेयादयः क. 11. कारके इत्यधिकम् ब. 12. च नास्ति फ. 13. कथ्यन्ते फ. 14. भवत्यसौ – स्वाध्यायः इति नास्ति क. 15. शिष्यः ब. ह. फ. 16. वा नास्ति फ. 17. ऋहलोर्ण्यत् इति आवश्यके ण्यत् इत्यधिकम् ब.क.फ.ह. 18. एकम् इत्यधिकम् अ, एकमेव इत्यधिकम् क. 19. सकर्मकेभ्यो धातुभ्यः इत्यधिकम् फ. 20. तु इत्यधिकम् ह, धातुभ्यः नास्ति फ. 21. असौ इत्यधिकम् फ.

## तयोरेव कृत्यक्तखलर्थाः। (७०/२८३३)

तयोरेव [1]भावकर्मणोः कृत्यसञ्ज्ञकाः [2]क्तखलर्थाश्च प्रत्यया भवन्ति। एवकारः कर्तुरपकर्षणार्थः। कृत्याः कर्मणि – कर्तव्यः कटो भवता। [3]भोक्तव्य ओदनो भवता। भावे – आशितव्यं भवता। शयितव्यं भवता। क्तः कर्मणि – कृतः कटो भवता। भुक्त ओदनो भवता। भावे – आसितं भवता। शयितं भवता। खलर्थाः कर्मणि – ईषत्करः कटो भवता। सुकरः। दुष्करः। भावे – ईषदाढ्यंभवं भवता। [4]स्वाढ्यंभवं भवता। भावे चाकर्मकेभ्यः (३. ४. ६९/२१५१) [5]इत्यनुवृत्तेः सकर्मकेभ्यो भावे न भवन्ति॥

## आदिकर्मणि क्तः कर्तरि च। (७१/३०५३)

आदिकर्मणि यः क्तो [6]विहितः स कर्तरि भवति। चकाराद् यथाप्राप्तं भावकर्मणोः[7]। आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितः, तस्यायमर्थनिर्देशः। प्रकृतः कटं देवदत्तः, प्रकृतः कटो देवदत्तेन, प्रकृतं देवदत्तेन। प्रभुक्त ओदनं देवदत्तः, [8]प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन॥

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च। (७२/३०८६)

गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः, [9]स कर्तरि भवति। चकाराद् यथाप्राप्तं च भावकर्मणोः। [10]गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन। अकर्मकेभ्यः – ग्लानो भवान्, ग्लानं भवता। आसितो भवान्, आसितं भवता। [11]श्लिष – उपश्लिष्टो गुरुं भवान्, [12]उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता। शीङ् – उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता। स्था – [13]उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता। आस — उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं भवता। वस – अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता। जन – अनुजातो माणवको माणविकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन। रुह – आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, [14]आरूढं भवता। जीर्यति – अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन, अनुजीर्णं देवदत्तेन[15]। श्लिषादयः सोपसर्गाः सकर्मका भवन्ति,[16] तदर्थमेषामुपादानम्[17]॥

## दाशगोघ्नौ सम्प्रदाने। (७३/३१७२)

दाशगोघ्नौ शब्दौ संप्रदाने कारके निपात्येते। 'दाशृ दाने' (धा. पा. ८८३), ततः पचाद्यच्। स [18]कृत्सञ्ज्ञकत्वात् कर्तरि प्राप्तः, [19]सम्प्रदाने निपात्यते। दाशन्ति तस्मै इति दाशः। आगताय तस्मै दातुं गां [20]हन्ति इति गोघ्नः, अर्घार्होऽतिथिः। [21]टगत्र निपात्यते। निपातनसामर्थ्यादिव [22]गोघ्नः [23]ऋत्विगादिरुच्यते, न तु[24] चण्डालादिः। असत्यपि च गोहनने [25]तस्य योग्यतया गोघ्नः इत्यभिधीयते॥

---

1. कर्मणोः ब. 2. क्तश्च खलर्थाश्च ब. 3. उदाहरणमिदं नास्ति ब. फ. 4. दुराढ्यं भवता ब. क. 5. इत्यनुवर्तते तेन ब. क. ग. 6. विहितः नास्ति अ. फ. ब. 7. च इत्यधिकम् ग. 8. एते उदाहरणे न स्तः फ. 9. सः नास्ति ह. 10. गत्यर्थेभ्यः इत्यधिकम् अ. 11. श्लिष नास्ति फ. 12. अनुश्लिष्टो फ. 13. उपस्थितो– उपासितं भवता नास्ति फ. 14. आरूढं नास्ति फ. ह. 15. इत्यादि च भवति इत्यधिकम् फ. 16. इति इत्यधिकम् क. 17. अकर्मकविवक्षायां सर्वेषां भावे क्तः भवति इत्यधिकम् क. 18. कृत्त्वात् अ. ब. ह. 19. संप्रदानकारके फ. 20. घ्नन्ति अ.ब. 21. टगत्र नास्ति क. फ. ह. 22. च अर्घार्हः अ. ब. ह. 23. ऋत्विगादयः उच्यन्ते ब. 24. तु नास्ति फ, चण्डालादयः ब. 25. तस्य तद्योग्यतया ब. ह.

## भीमादयोऽपादाने । (७४/३१७३)

भीमादयः शब्दा अपादाने निपात्यन्ते । [1]उणादिप्रत्ययान्ता एते, 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ. १.१४४), 'भियष्षुक् ह्रस्वश्च' (उ. १४७) इत्येवमादयः । 'ताभ्यामन्यत्रोणादयः' (३.४.७५/३१७४) इति पर्यदासे प्राप्ते निपातनमारभ्यते ।

भीमः । भीष्मः । [2]भयानकः । [3]वरुः । [4]भूमिः । रजः । संस्कारः । [5]संक्रन्दनः । [6]प्रपतनः । समुद्रः । स्रुचः । [7]स्रुक् । खलतिः[8] ॥

## ताभ्यामन्यत्रोणादयः । (७५/३१७४)

उणादयः [9]शब्दाः ताभ्यामपादानसम्प्रदानाभ्यामन्यत्र [10]कारके भवन्ति । कृत्त्वात् कर्तर्येव प्राप्ताः कर्मादिषु [11]कथ्यन्ते । ताभ्याम् इति सम्प्रदानार्थः प्रत्यवमर्शः, अन्यथा ह्यपादानमेव पर्युदस्येत, अनन्तरत्वात् । कृषितोऽसौ कृषिः[12] । [13]तनित इति तन्तुः । वृत्तम् इति [14]वर्त्म । चरितं चर्म ॥

## क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । (७६/३०८०)

ध्रौव्यार्थाः अकर्मकाः,[15] प्रत्यवसानार्थाः [16]अभ्यवहारार्थाः इति स्वनिकायप्रसिद्धिः । [17]ध्रौव्यगतिप्रत्यवसानार्थेभ्यः[18] यः क्तो विहितः सोऽधिकरणे[19] भवति । चकाराद् यथाप्राप्तं [20]च । ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु, प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु । ध्रौव्यार्थेभ्यः तावत् – आसितो देवदत्तः, आसितं [21]तेन, इदमेषामासितम् । गत्यर्थेभ्यः – यातो देवदत्तो ग्रामम्, यातो देवदत्तेन ग्रामः, यातं देवदत्तेन, इदमेषां यातम् । प्रत्यवसानार्थेभ्यः – [22]भुक्तः ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदमेषां भुक्तम् । कथं भुक्ता ब्राह्मणाः, पीता गावः इति । अकारो मत्वर्थीयः, भुक्तमेषामस्ति, पीतमेषामस्ति इति ॥

## लस्य । (७७/२१५३)

लस्य इत्ययमधिकारः[23] । अकार उच्चारणार्थः । लकारमात्रं स्थानित्वेनाधिक्रियते । यद् इत ऊर्ध्वमनुक्रमिष्यामः लस्य इत्येवं तद् वेदितव्यम् । किं [24]चेदं लस्य इति ? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च । तेषां विशेषकराननुबन्धानुत्सृज्य यत् सामान्यं तद् [25]गृह्यते । [26]षट् टितः, चत्वारः ङितः । अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते । लट् । लिट् । लुट् । लृट् । लेट् । लोट्[27] । लङ् । लिङ् । लुङ् । लृङ् । इति[28] । अथ लकारमात्रस्य ग्रहणं कस्मान् न भवति, लुनाति, चूडालः इति ? धात्वधिकारोऽनुवर्तते, कर्त्रादयश्च [29]विशेषकाः ॥

---

1. उणाद्यन्ताः फ. 2. अचेतनः फ. 3. बहुः फ.ब.ह. 4. भूमिः रजः संस्कारः नास्ति ब. 5. प्रस्थन्दनः ह, प्रस्कन्दनः ब. 6. प्रतपनः फ. 7. स्रुवः ब. 8. दृष्टिः रक्षः शकुः सुकः इत्यधिकम् ब, मूर्खः इत्यधिकम् क.फ, गृष्टिः संकुः मूलः खलः इत्यधिकम् ह. 9. प्रत्ययाः फ, प्रत्ययान्ताः ह. 10. कारके नास्ति फ. 11. अपि दृश्यन्ते ब.फ.ह. 12. भवति इत्यधिकम् ब. 13. तनितोऽसौ फ.ह.ब. 14. तत् इत्यधिकम् ह. 15. गत्यर्थाः इत्यधिकम् ह. 16. अभ्यवहरणार्थाः फ. 17. वाक्यमिदं नास्ति फ. 18. धातुभ्यः इत्यधिकम् फ. 19. अपि इत्यधिकम् फ. 20. तत्र अ. ब. फ, च नास्ति ह. 21. देवदत्तेन ग. फ. 22. भुक्तः ओदनं देवदत्तः अ. 23. वेदितव्यः इत्यधिकम् फ. 24. चैष ह. 25. परिगृह्यते फ.ह. 26. तेषाम् इत्यधिकम् ह. 27. एते षट् इत्यधिकम् ब. 28. एते चत्वारः इत्यधिकम् ब. 29. विशेषकराः ह.

## तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । (७८/२१६४)

लस्य तिबादय आदेशा भवन्ति । तिप्सिप्मिपां पकारः स्वरार्थः । इटष्टकारः 'इटोऽत्' (३.४.१०६/२२५७) इति विशेषणार्थः, तिबादिभिरादेशैस्तुल्यत्वान्न देशविध्यर्थः । महिङो ङकारः तिङ इति [1]प्रत्याहारग्रहणार्थः। पचति, पचतः, पचन्ति । पचसि, पचथः, पचथ । पचामि, पचावः, पचामः । पचते, पचेते, पचन्ते । पचसे, पचेथे, पचध्वे । पचे, पचावहे, पचामहे । एवमन्येष्वपि लकारेषूदाहार्यम् ॥

## टित आत्मनेपदानां टेरे । (७९/२२३३)

टितो लकारस्य स्थाने यान्यात्मनेपदानि[2] तेषां टेः [3]एकारादेशो भवति । तथा [4]चैवोदाहृतम् । इह कस्मान्न भवति पचमानः,[5] यजमानः ? प्रकृतैस्तिबादिभिः आत्मनेपदानि विशेष्यन्ते ॥

## थासः से । (८०/२२३६)

टितः इत्येव[6] । टितो लकारस्य यः थास् तस्य सेशब्द आदेशो भवति । पचसे । पेचिषे । पक्तासे । पक्ष्यसे[7] ॥

## लिटस्तझयोरेशिरेच् । (८१/२२४१)

लिडादेशयोः तझयोः यथासङ्ख्यम् एश् इरेच् इत्येतावादेशौ भवतः । शकारः सर्वादेशार्थः । चकारः स्वरार्थः । पेचे, [8]पेचाते, [9]पेचिरे । लेभे, लेभाते, लेभिरे ॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । (८२/२१७३)

लिटः इत्येव । लिडादेशानां परस्मैपदसञ्ज्ञकानां यथासङ्ख्यं तिबादीनां णलादयो नव आदेशा भवन्ति । लकारः स्वरार्थः । णकारो वृद्ध्यर्थः । पपाच, पेचतुः, पेचुः । पेचिथ, पपक्थ, पेचथुः, पेच । पपाच, पपच, पेचिव, पेचिम ॥

## विदो लटो वा । (८३/२४६४)

परस्मैपदानाम् इत्येव । 'विद ज्ञाने' (धा. पा. १०६५),[10] अस्माद् धातोः परेषां लडादेशानां [11]परस्मैपदानां णलादयो नव [12]विकल्पेनादेशा भवन्ति । वेद, विदतुः, विदुः । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म । न च भवति । वेत्ति, वित्तः, विदन्ति । वेत्सि, वित्थः, वित्थ । वेद्मि, विद्वः, विद्मः[13] ॥

---

1. प्रत्याहारार्थः फ, प्रत्याहारग्रहणार्थम् ह. 2. विहितानि इत्यधिकम् फ. 3. एकादेशः ह. 4. चोदाहृतम् फ, चोदाहृतः ह. 5. स इति इत्यधिकम् फ, इति इत्यधिकम् ह. 6. वर्तते इत्यधिकम् फ. 7. थासः से इति वक्तव्ये सेवचनं ज्ञापनार्थम् आदेशान्तानां एत्वं न भवति । ततः लुटः डारौरस्सु कृतेषु पक्ता इत्येवमादिषु एत्वं न भवति इत्यधिकम् अ. क. 8. पेचाते नास्ति अ. फ. ह. 9. पेचिरे नास्ति फ. ह. 10. इति इत्यधिकम् क. 11. परस्मैपदसञ्ज्ञकानाम् क, यथासंख्यं लटः आदेशानां परस्मैपदसञ्ज्ञकानां तिबादीनाम् ब. 12. विकल्पेन नास्ति ब. फ, वा ह. 13. प्राप्तविभाषा इयम् इत्यधिकम् क.

## ब्रुवः पञ्चानामादित आहो ब्रुवः । (८४/२४५०)

परस्मैपदानाम् इत्येव, [1]लटो वा इति च । ब्रुवः परस्य लटः [2]परस्मैपदानां पञ्चानामादिभूतानां पञ्चैव णलादय आदेशा भवन्ति[3], तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति । आह, आहतुः, आहुः । आत्थ, आहथुः । न च भवति । ब्रवीति, [4]ब्रूतः, ब्रुवन्ति । ब्रवीषि, ब्रूथः । पञ्चानाम् इति किम् ? ब्रूथ । ब्रवीमि, ब्रूवः, ब्रूमः । आदितः इति किम् ? परेषां मा भूत् । ब्रुवः इति पुनर्वचनं स्थान्यर्थम्, परस्मैपदानामेव [5]हि स्यात् ॥

## लोटो लङ्वत् । (८५/२१९८)

अतिदेशोऽयम् । लोटो [6]लङ्वत् कार्यं भवति । तामादयः, सलोपश्च । पचताम् । पचतम् । पचत । पचाव । पचाम । अडाटौ कस्मान्न भवतः, तथा झेर्जुसादेशः (३.४.१०८/२२१३) 'लङः शाकटायनस्यैव' (३.४.१११/२४६३) इति वान्तु, यान्तु ? 'विदो लटो वा' (३.४.८३/२४६४) इत्यतो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा भविष्यति ॥

## एरुः । (८६/२१९६)

लोटः इत्येव । लोडादेशानामिकारस्य उकारादेशो भवति । पचतु । पचन्तु ।

[३३४] हिन्योरुत्वप्रतिषेधो वक्तव्यः । (म.भा.२.१८५)

[7]न वा उच्चारणसामर्थ्यात् । अथ वा वा इति वर्तते, सा च व्यवस्थितविभाषा[8] ॥

## सेर्ह्यपिच्च । (८७/२२०१)

[9]लोटः इत्येव । लोडादेशस्य सेः [10]हि इत्ययमादेशो भवति, [11]अपिच्च भवति । स्थानिवद्भावात् पित्त्वं प्राप्तं प्रतिषिध्यते । लुनीहि । [12]पुनीहि । राध्नुहि । तक्ष्णुहि ॥

## वा छन्दसि । (८८/३५५२)

अपित्त्वं विकल्प्यते । लादेशः छन्दसि विषये [13]हिशब्दो वा अपिद् भवति । 'युयोध्यस्मज्जुहुराणमेनः' (ऋ. १.१८९.१) । [14]प्रीणाहि । [15]प्रीणीहि (काठ.सं. ४०.१२) ॥

## मेर्निः । (८९/२२०३)

[16]लोटः इत्येव । लोडादेशस्य मेः [17]निः आदेशो भवति । उत्वलोपयोरपवादः । [18]पचानि । पठानि ॥

---

1. लट इति च ह. 2. आदेशानाम् परस्मैपदसञ्ज्ञकानाम् फ. 3. स्थानिसम्बन्धादादेशेऽपि पञ्चत्वमादित्वं च विज्ञायते इत्यधिकम् अ. ब. क. फ. 4. ब्रूतः नास्ति फ. 5. हि नास्ति फ. 6. लङ इव फ. 7. लुनीहि पचानि इत्यधिकम् ह. 8. भविष्यति इत्यधिकम् क. 9. वाक्यमिदं नास्ति फ. 10. हिशब्दः अ. 11. अपित् सः फ. 12. पुनीहि नास्ति फ. 13. हिशब्दादेशः फ. 14. न च भवति इत्यधिकम् फ. 15. हव्यं इत्यधिकम् फ. 16. वाक्यमिदं नास्ति फ. 17. निशब्दः ब. ह. 18. पचानि नास्ति फ.

## आमेतः । (९०/२२८१)

[1]लोटः इत्येव । लोट्सम्बधिनः एकारस्य आम् इत्ययमादेशो भवति । पचताम्, पचेताम्, पचन्ताम् ।।

## सवाभ्यां वामौ । (९१/२२८२)

लोटः [2]इत्येव । सकारवकाराभ्यामुत्तरस्य लोट्सम्बन्धिन एकारस्य यथासङ्ख्यं व अम् इत्येतावादेशौ भवतः । आमोऽपवादः । पचस्व । पचध्वम् ।।

## आडुत्तमस्य पिच्च । (९२/२२०४)

[3]लोटः इत्येव । लोट्सम्बन्धिनः उत्तमपुरुषस्य आडागमो भवति, स [4]चोत्तमपुरुषः पिद् भवति । करवाणि, करवाव, करवाम । करवै, [5]करवावहै, करवामहै ।।

## एत ऐ । (९३/२२८३)

लोट [6]उत्तमस्य इति वर्तते । लोडुत्तमसम्बन्धिनः एकारस्य ऐकारादेशो भवति । आमोऽपवादः । करवै, करवावहै, करवामहै । इह कस्मान्न भवति, पचावेदम्, यजावेदम् ? बहिरङ्गलक्षणत्वाद् गुणस्य ।।

## लेटोऽडाटौ । (९४/३४२७)

लेटोऽडाटावागमौ भवतः पर्यायेण[7] । 'जोषिषत्' (ऋ. २.३५.१) । 'तारिषत्' (वा.सं. २३.३२) । मन्दिषत् । 'पताति दिद्युत्' (ऋ. ४.१६.१७) । 'प्रजापतिरुदधिं च्यावयाति' (तै.सं. ३.५.५.२) ।।

## आत ऐ । (९५/३४२९)

[8]लेटः इत्येव । लेट्सम्बन्धिनः आकारस्य ऐकारादेशो [9]भवति । [10]प्रथमपुरुषमध्यमपुरुषात्मनेपदद्विवचनयोः । मन्त्रयैते । [11]मन्त्रयैथे । करवैते । करवैथे । आटः कस्मान्न भवति ? विधानसामर्थ्यात् ।।

## वैतोऽन्यत्र । (९६/३४३०)

[12]लेटः इत्येव । लेट्सम्बन्धिनः एकारस्य वा ऐकारादेशो भवति । अन्यत्र इत्यनन्तरो [13]विधिरपेक्ष्यते । 'आत ऐ' (३.४.९५/३४२९) इत्येतद्विषयं वर्जयित्वा एत ऐ भवति । सप्ताहानि शासै । 'अहमेव पशूनामीशै' (काठ.सं. २५.१) । 'मदग्रा एव वो ग्रहा गृह्यान्तै' (तै.सं. ६.४.७.१) । 'मद्देवत्यान्येव [14]वः पात्राण्युच्यान्तै' (तै.६.४.७.२) । न [15]च भवति । 'यत्र क्व च ते मनो दक्षं दधस उत्तरम्' (ऋ. ६.१६.१७) । अन्यत्र इति किम्? [16]मन्त्रयैते । मन्त्रयैथे ।।

---

1. वाक्यमिदं नास्ति फ. 2. एत इति वर्तते फ. 3. वाक्यमिदं नास्ति फ. 4. चोत्तमः पिच्च ब.फ. 5. करवावहै नास्ति फ. 6. उत्तमस्य नास्ति फ. 7. अपिच्च इत्यधिकम् क. 8. वाक्यमिदं नास्ति फ. 9. भवति नास्ति ह. 10. प्रथममध्यमपुरुषात्मनेपद° अ. 11. मन्त्रयैथे नास्ति ह. 12. वाक्यमिदं नास्ति फ. 13. विधिर्लक्ष्यते ब. 14. च ब. 15. च नास्ति ब. 16. मन्त्रयैते नास्ति फ.ह, मन्त्रयेते मन्त्रयेथे ब.

## इतश्च लोपः परस्मैपदेषु । (९७/३४२६)

[1]लेटः इत्येव । लेट्सम्बन्धिनः इकारस्य परस्मैपदविषयस्य लोपो भवति । [2]वानुवृत्तेः पक्षे श्रवणमपि भवति । 'जोषिषत्' (ऋ. २.३.५.१) 'तारिषत्' (वा.सं. २३.३२) । मन्दिषत् । न च भवति । 'पताति दिद्युत्' (ऋ. ४. १६. १७) । 'प्रजापतिरुर्दधिं च्यावयाति' (तै. सं. ३. ५. ५. २) परस्मैपदग्रहणम्, इड्वहिमहिङां मा भूत् ॥

## स उत्तमस्य । (९८/३४२८)

लेटः इति वा इतिं च वर्तते । लेट्सम्बन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति । करवाव, करवाम । न च भवति । करवावः, करवामः । उत्तमग्रहणम्, पुरुषान्तरे मा भूत् ॥

## नित्यं ङितः । (९९/२२००)

[3]लेटः इतिं निवृत्तम् । ङितो लकारस्य य [4]उत्तमः, तस्य नित्यं सकारस्य लोपो भवति । अपचाव, अपचाम । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ॥

## इतश्च । (१००/२२०७)

ङितः इत्येव । ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति । अपचत् । अपाक्षीत् । परस्मैपदेषु इत्येव, अपचावहि, अपचामहि ॥

## तस्थस्थमिपां तांतंतामः । (१०१/२१९९)

[5]ङितः इत्येव । [6]ङिल्लकारसम्बन्धिनां [7]चतुर्णां यथासङ्ख्यं तामादयः आदेशा भवन्ति । अपचताम् । अपचतम् । अपचत । अपचम् । अपाक्ताम् । अपाक्तम् । अपाक्त । अपाक्षम् ॥

## लिङः सीयुट् । (१०२/२२५८)

लिङादेशानां सीयुडागमो भवति । टकारो देशविध्यर्थः । उकार उच्चारणार्थः । पचेत, पचेयाताम्, पचेरन् । पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च । (१०३/२२०९)

लिङः इत्येव । परस्मैपदविषयस्य लिङो यासुडागमो भवति, स चोदात्तो [8]भवति ङिच्च । सीयुटोऽपवादः । आगमानुदात्तत्वे प्राप्ते, ङित्त्वं तु लिङ एव विधीयते, तत्र तत्कार्याणां सम्भवाद्, नागमस्य । कुर्यात्, कुर्याताम्, कुर्युः । स्थानिवद्भावादेव लिङादेशस्य ङित्त्वे [9]सिद्धे यासुटो ङिद्वचनं [10]ज्ञापनार्थम्, लकाराश्रयङित्त्वमादेशानां न भवति इति । अचिनवम्[11] । अकरवम् ॥

---

1. वाक्यमिदं नास्ति फ. 2. वेत्यनुवृत्तेः ब. फ. ह. 3. वाक्यमिदं नास्ति ब. 4. उत्तमपुरुषः ब. फ. ह. 5. वाक्यमिदं नास्ति फ. 6. णिल्लकारस्य ह. 7. तस्थस्थमिपां फ, तस्थादीनाम् ह, तसादीनाम् ब. 8. भवति नास्ति फ. ह, ङिच्च नास्ति ब. 9. लब्धे ब. 10. ज्ञापकम् अ. 11. असुनवम् इत्यधिकम् अ. ब. फ.

## किदाशिषि । (१०४/२२१६)

आशिषि[1] यो लिङ्, तस्य यासुडागमो [2]भवति, स चोदात्तः किद्वद् भवति । प्रत्ययस्यैवेदं कित्त्वम्, नागमस्य, प्रयोजनाभावात् । [3]ङित्त्वे प्राप्ते कित्त्वं विधीयते । गुणवृद्धिप्रतिषेधः तुल्यः, सम्प्रसारणम्, [4]जागर्तेर्गुणे च विशेषः । [5]इष्यात्, इष्यास्ताम्, इष्यासुः । जागर्यात्, जागर्यास्ताम्, जागर्यासुः । आशिषि इति किम् ? [6]वच्यात् । जागृयात् ॥

## झस्य रन् । (१०५/२२६६)

[7]लिङः इत्येव । झस्य लिङादेशस्य रन् इत्ययमादेशो भवति । झोऽन्तापवादः[8] । पचेरन्[9] । यजेरन् । [10]कृषीरन् ॥

## इटोऽत् । (१०६/२२६७)

[11]लिङादेशस्य इटः अत इत्ययमादेशो भवति । पचेय । यजेय । कृषीय । हृषीय । तकारस्य इत्सञ्ज्ञाप्रतिषेधः प्राप्नोति, 'न विभक्तौ तुस्माः' (१.३.४/१९०) इति ? नैवायमादेशावयवस्तकारः, किं तर्हि, मुखसुखार्थं उच्चार्यते । आगमस्येटो ग्रहणं न भवति, 'अर्थवद्ग्रहणे नानार्थकस्य ग्रहणम्' (व्या.प.१) इति ॥

## सुट् तिथोः । (१०७/२२१०)

लिङः इत्येव । लिङ्सम्बन्धिनोः तकारथकारयोः सुडागमो भवति । तकारथकारावागमिनौ, लिङ् [12]तद्विशेषणम् । [13]सीयुटस्तु लिङेवागमी । [14]तेन भिन्नविषयत्वात् सुटा [15]बाधनं न भवति । तकारे इकार उच्चारणार्थः । कृषीष्ट । कृषीयास्ताम् । कृषीष्ठाः । कृषीयास्थाम् ॥

## झेर्जुस् । (१०८/२२१३)

[16]लिङः इत्येव । लिङादेशस्य झेर्जुस् [17]आदेशो भवति । झोऽन्तापवादः । पचेयुः । यजेयुः ॥

## सिजभ्यस्तविदिभ्यश्च । (१०९/२२२६)

अलिङर्थः आरम्भः । सिचः परस्य, अभ्यस्तसञ्ज्ञकेभ्यो, वेत्तेश्चोत्तरस्य[18] झेर्जुस् आदेशो भवति[19] । अभ्यस्त[20]विदिग्रहणम् असिजर्थम् । ङित इति चानुवर्तते । सिचस्तावत् – अकार्षुः । अहार्षुः । अभ्यस्तात् – अबिभयुः । अजिह्रयुः । अजागरुः । विदेः – अविदुः ॥

---

1. विषये इत्यधिकम् फ. 2. भवति नास्ति फ, यासुट् किद् भवति ब. 3. पूर्वेण इत्यधिकम् क. 4. जाग्रोऽविचिण्णल्ङित्सु इति गुणे क, जागर्ति गुणे च ब. 5. इज्यात् अ. ब. क, इज्यास्ताम् अ. फ, इज्यासुः फ. 6. वध्यात् ब. 7. वाक्यमिदं नास्ति फ. 8. स च उदात्तो भवति इत्यधिकम् ब. 9. पक्षीरन् इत्यधिकम् फ. ह., यजेरन् नास्ति फ. 10. भृषीरन् फ, हृषीरन् अ. ह. 11. लिङः इत्येव इत्यधिकम् ह. 12. तस्य विशेषणम् फ तु विशेषणम् ब. 13. यासुटः ब. 14. तेन नास्ति फ. 15. बाधा ब. 16. वाक्यमिदं नास्ति फ. 17. इत्ययमादेशः ब. 18. ङिल्लकारसम्बन्धिनः इत्यधिकम् फ. 19. अन्तादेशे प्राप्ते इत्यधिकम् फ. 20. विदि नास्ति फ.

## आतः । (११०/२२२७)

सिज्ग्रहणमनुवर्तते । सिच आकारान्ताच्च [1]परस्य झेः जुसादेशो भवति । [2]कथमाभ्यामानन्तर्यम् ? सिचो लुकि कृते प्रत्ययलक्षणेन सिचोऽनन्तरः, श्रुत्या [3]चाकारान्तादिति । अदुः । अधुः । अस्थुः[4] । तकारो मुखसुखार्थः । पूर्वेणैव सिद्धे नियमार्थं वचनम्, आत एव सिज्लुगन्तात्, नान्यस्मात् इति । अभूवन्[5] । प्रत्ययलक्षणेन [6]जुस् प्राप्तः प्रतिषिध्यते, तुल्यजातीयापेक्षत्वान् नियमस्य । श्रूयमाणे हि [7]सिचि भवत्येव, [8]अकार्षुः, अहार्षुः ॥

## लङः शाकटायनस्यैव । (१११/२४६३)

[9]आतः इत्येव । आकारान्तादुत्तरस्य लङादेशस्य झेः जुस् आदेशो भवति शाकटायनस्याचार्यस्य मतेन । अयुः । [10]अवुः । अन्येषां मते – अयान्[11] ।

ननु[12] ङितः [13]इत्यनुवर्तते । [14]अत्र लङेवाकारान्तादनन्तरो ङित् सम्भवति नान्यः, तत् किं लङग्रहणेन ? एवं तर्हि लङेव यो लङ विहितः तस्य यथा स्यात्, लङवद्भावेन यस्तस्य मा भूत्, 'लोटो लङवत्' (३.४.८५/२१९८) इति । यान्तु । वान्तु । 'सिजभ्यस्तविदिभ्यश्च' (३.४.१०९/२२२६) इत्ययमपि झेर्जुस् लोटो न भवति । बिभ्यतु । जाग्रतु । विदन्तु । जुसभावमात्रं हि मुख्येन लङा विशेष्यते । एवकार उत्तरार्थः ॥

## द्विषश्च । (११२/२४३५)

[15]लङः शाकटायनस्य (३.४.१११/२४६३) [16]इत्येव । द्विषः परस्य लङादेशस्य झेर्जुसादेशो भवति, शाकटायनस्याचार्यस्य मतेन । अद्विषुः । अन्येषां [17]मते – अद्विषन् ॥

## तिङ्शित्सार्वधातुकम् । (११३/२१६६)

[18]तिङः शितश्च प्रत्ययाः सार्वधातुकसञ्ज्ञा भवन्ति । [19]भवति । नयति । स्वपिति । रोदिति । पचमानः । यजमानः । सार्वधातुकप्रदेशाः – 'सार्वधातुके यक्' (३.१.६७/२७५६) इत्येवमादयः ॥

## आर्धधातुकं शेषः । (११४/२१८७)

तिङः शितश्च वर्जयित्वा अन्यः [20]प्रत्ययः [21]शेषो धातुसंशब्दनेन विहितः आर्धधातुकसञ्ज्ञो भवति । लविता । लवितुम् । [22]लवितव्यम् । 'धातोः' (३.१.९१/२८२९) इत्येव । वृक्षत्वम्[23] । वृक्षता [24]अस्ति । [25]लूभ्याम् । लूभिः । जुगुप्सते ॥

---

1. परस्य नास्ति ब. 2. कथं द्वाभ्यामाभ्याम् फ. 3. चकारान्तरात् फ. 4. अपुः अरुः अलुः इत्यधिकम् क. 5. इति इत्यधिकम् फ. 6. जुसि च प्राप्ते ब. 7. सिच् फ. 8. अकार्षुः नास्ति ब. 9. वाक्यमिदं नास्ति फ. 10. अवुः नास्ति फ. 11. अवान् इत्यधिकम् फ, अख्यान् इत्यधिकम् फ. 12. च इत्यधिकम् ब. फ. 13. इत्येव फ. 14. तत्र फ. 15. लङः शाकटायनस्याचार्यस्य मतेन फ. 16. इत्यनुवर्तते ब. 17. तु इत्यधिकम् क, मते नास्ति ब. 18. तिङ् ब. 19. तरति इत्यधिकम् ब. फ. ह. 20. धातुविहितः इत्यधिकम् फ. 21. स इत्यधिकम् अ. 22. लवितव्यम् नास्ति फ. 23. लघुत्वम् इत्यधिकम् फ. 24. अस्ति नास्ति ब. 25. भूभ्याम् भूभिः अ. क.

## लिट् च। (११५/२१७२)

लिडादेशः तिङ आर्धधातुकसञ्ज्ञो भवति। सार्वधातुक[1]सञ्ज्ञाया अपवादः। पेचिथ। शेकिथ। जग्ले। मम्ले। ननु च एकसञ्ज्ञाधिकारादन्यत्र [2]समावेशो भवति? सत्यमेतत्। इह तु एवकारोऽनुवर्तते, [3]स नियमं करिष्यति[4]॥

## लिङाशिषि। (११६/२२१८)

आशिषि विषये यो लिङ[5] स आर्धधातुकसञ्ज्ञो भवति। सार्वधातुक[6]सञ्ज्ञाया अपवादः। समावेशश्चैव[7]कारानुवृत्तेर्न भवति। लविषीष्ट। [8]पविषीष्ट। आशिषि इति किम्? लुनीयात्। [9]पुनीयात्॥

## छन्दस्युभयथा। (११७/३४३९)

छन्दसि विषये उभयथा भवति, सार्वधातुकमार्धधातुकं च। किं [10]लिङेवानन्तरः सम्बध्यते? नैतदस्ति, सर्वमेव प्रकरणम[11]पेक्ष्यैतदुच्यते। तिङशिदादि[12] छन्दस्युभयथा [13]भवति। 'वर्धन्तु त्वा सुष्टुतयः' (ऋ. ७.९९.७)। आर्धधातुकत्वाण् [14]णिलोपः। वर्धयन्तु इति प्राप्ते। शेषं च सार्वधातुकम् – [15]'स्वस्तये नावमिवारुहेम' (ऋ. १०.१७८.२)। क्तिनः सार्वधातुकत्वादस्तेर्भूभावो [16]न भवति। लिट्[17] सार्वधातुकम् – 'ससृवांसो [18]विशृण्विरे' (ऋ. ४.८.६)। इम इन्द्राय सुन्विरे (ऋ. ७.३२.४)। [19]लिङ उभयथा भवति। 'उप स्थेयाम [20]शरणा बृहन्ता' (ऋ. ६.४७.८)। सार्वधातुकत्वात्[21] लिङः सलोपः (७.२.७९/२२११), आर्धधातुकत्वात् एत्वम्[22]। 'व्यत्ययो बहुलम्' (३.१.८५/३४३३) इत्यस्यैवायं प्रपञ्चः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
तृतीयाध्यायस्य चतुर्थः पादः॥

———(:०:)———

---

1. °सञ्ज्ञापवादः अ. 2. सञ्ज्ञा फ. 3. स नियमार्थो भविष्यति ह. 4. आर्धधातुकमेवेति इत्यधिकम् क. 5. विहितः तदादेशाः तिङः आर्धधातुकसञ्ज्ञा भवन्ति ब.ह. 6. °सञ्ज्ञापवादः फ.ह. 7. °अनुवर्तनान्न क. 8. पविषीष्ट नास्ति क. 9. पुनीयात् नास्ति क. 10. लिङ अनन्तरः ब. 11. अवेक्ष्य ह. 12. सर्वमेव इत्यधिकम् ब.फ. 13. भविष्यति फ. 14. सिलोपः ब. 15. स्वस्तये तार्क्ष्यमिहाहुवेम अ.फ.ह. 16. न नास्ति अ. 17. च इत्यधिकम् फ. 18. विकृण्विरे ह. 19. लिङि ब. 20. शरणं बृहन्तम् मुद्रितः पाठः 21. तु इत्यधिकम् क. 22. भवति इत्यधिकम् फ.

# का शि का

## चतुर्थोऽध्यायः

### प्रथमः पादः

### ङ्याप्प्रातिपदिकात् । (१/१८२)

अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामः आपञ्चमाध्यायपरिसमाप्तेः ङ्याप्प्रातिपदिकाद् इत्येवं तद् वेदितव्यम् । स्वादिषु [1]कप्पर्यन्तेषु [2]प्रकृतिरधिक्रियते । ङीब्ङीष्ङीनां सामान्येन ग्रहणं ङी इति, टाब्डाप्चापाम् आप् इति, प्रातिपदिकम् उक्तम् अर्थवत् (१.२.४५/१७८), 'कृत्तद्धितसमासाश्च' (१.२.४६/१७९) इति, तेषां समाहारनिर्देशो ङ्याप्प्रातिपदिकात् इति । यद्यपि च प्रत्ययपरत्वेन पारिशेष्याद् इयमेव प्रकृतिर्लभ्यते, तथापि [3]वृद्धावृद्धावर्णस्वरद्व्यच्[4]लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्तव्यम् (म.भा.२. १९१), इतरथा हि समर्थविशेषणमेतत् स्यात् । अथ ङ्याब्ग्रहणं किम्, [5]न 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' (व्या. प.२५) [6]इत्येव सिद्धम् ? नैतदस्ति । स्वरूपविधिविषये परिभाषेयं प्रातिपदिक[7]स्वरूपग्रहणे सति [8]लिङ्ग-विशिष्टग्रहणं भवति (व्या. प.२५) इति । तथा च 'युवा खलतिपलितवलिनजरतीभिः' (२.१.६७/७४८) इति [9]ज्ञापकमस्यास्तादृशमेव । किं च तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणम्, कालितरा, हरिणितरा, [10]खट्वातरा, मालातरा (म.भा.२.१९४) इति । विप्रतिषेधाद्धि तद्धितबलीयस्त्वं स्यात् (म. भा. २. १९४) ॥

### स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् । (२/१८३)

'ङ्याप्प्रातिपदिकात्' (४. १. १/१८२) इत्यधिकृतम् । ङ्याप्प्रातिपदिकात् स्वादयः[11] प्रत्यया भवन्ति । उकारादयोऽनुबन्धा यथायोग[12]मुच्चारणविशेषणार्थाः । [13]औटः टकारः सुट् इति प्रत्याहारग्रहणार्थः । पकारः सुप् इति प्रत्याहारार्थः । सङ्ख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहितास्तेन सह अस्यैकवाक्यता[14] ।

ङ्यन्तात् तावत् — कुमारी । गौरी । शार्ङ्गरवी । ङीब्ङीष्ङीनां क्रमेण [15]उदाहरणम् ।

कुमारी, कुमार्यौ, कुमार्यः । [16]कुमारीम्, कुमार्यौ, कुमारीः । कुमार्या, कुमारीभ्याम्, कुमारीभिः । कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः । कुमार्याः, कुमार्योः, कुमारीणाम् । कुमार्याम्, कुमार्योः, कुमारीषु । [17]एवं गौरी, शार्ङ्गरवी चोदाहार्ये ।

[18]आपः खल्वपि — खट्वा । बहुराजा । कारीषगन्ध्या । टाब्डाप्चापां क्रमेणो[19]दाहरणम् ।

---

1. कप्प्रत्यय° क. फ. 2. प्रकृतिरियमधिक्रयते फ. ह. 3. वृद्धातस्य विशेषत्वेन क. 4. °लक्षणे इ. 5. अथ ह. 6. इति सिद्धम् क, इत्येवं इ. 7. °स्वरूपस्य ग्रहणे इ. 8. लिङ्गविशिष्टस्यापि फ. ब. 9. विज्ञापकम् इ. 10. खट्वातरा मालातरा नास्ति ब. फ. 11. च इत्यधिकम् व. 12. उच्चारणार्थः फ. 13. औटः-प्रत्याहारग्रहणार्थः नास्ति अ. ब. ड. इ. ग. 14. भवति इत्यधिकम् इ. ड.फ. 15. उदाहरणानि क.फ. 16. कुमारीम् – कुमारीषु नास्ति फ. 17. एवं सर्वासु विभक्तिषु फ. 18. आबन्तात् ग.फ. 19. उदाहरणानि ग. फ.

खट्वा, खट्वे, खट्वाः । [1]खट्वाम्, खट्वे, खट्वाः । खट्वया, खट्वाभ्याम्, खट्वाभिः । खट्वायै, खट्वाभ्याम्, खट्वाभ्यः । खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः । खट्वायाः खट्वयोः, खट्वानाम् । खट्वायाम्, खट्वयोः, खट्वासु । एवं बहुराजाकारीषगन्ध्ये चोदाहार्ये । [2]एवं प्रातिपदिकात् -- दृषद्, दृषदौ, दृषदः । [3]दृषदम्, दृषदौ, दृषदः । दृषदा, दृषद्भ्याम्, दृषद्भिः । दृषदे, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषद्भ्याम्, दृषद्भ्यः । दृषदः, दृषदोः, दृषदाम् । दृषदि, दृषदोः, दृषत्सु ।।

## स्त्रियाम् । (३/४५३)

अधिकारोऽयम् । यद् इत ऊर्ध्वमनुक्रमिष्यामः स्त्रियाम् इत्येवं तद् वेदितव्यम् । 'ङ्याप्प्रातिपदिकात्' (४.१.१/१८२) इति सर्वाधिकारेऽपि प्रातिपदिक[4]मात्रमत्र प्रकरणे सम्बध्यते, ङ्यापोरनेनैव[5] विधानात् । स्त्रियाम् इत्युच्यते । केयं स्त्री नाम ? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा [6]व्यक्तयः । क्वचिदाश्रय-विशेषाभावात् [7]उपदेशव्यङ्ग्या एव भवन्ति, यथा ब्राह्मणत्वादयः । स्त्रीत्वं च प्रत्ययार्थः प्रकृत्यर्थविशेषणं [8]च इत्युभयथापि [9]प्रयुज्यते, स्त्रियामभिधेयायां स्त्रियां वा यत् प्रातिपदिकं वर्तते इति । वक्ष्यति – 'अजाद्यतष्टाप्' (४.१.४/४५४) । अजा । देवदत्ता । स्त्रियाम् इति किम्? अजः । देवदत्तः ।।

## अजाद्यतष्टाप् । (४/४५४)

अजादिभ्यः प्रातिपदिकेभ्यः [10]अकारान्ताच्च [11]प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । पकारः [12]सामान्यग्रहणार्थः । टकारः [13]सामान्यग्रहणाविघातार्थः । अजा । एडका । [14]कोकिला । चटका । अश्वा[15] । खट्वा । देवदत्ता । तपरकरणं तत्कालार्थम् । [16]शुभंयाः । कीलालपाः ब्राह्मणी । 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (६.१.६८/२५२) इति [17]सुलोपः स्यात् । अजादिग्रहणं तु क्वचिज्जातिलक्षणे ङीषि प्राप्ते (४.१.६३/५१८), क्वचित् तु पुंयोगलक्षणे (४.१.४८/५०४), क्वचित् तु पुष्पफलोत्तरलक्षणे (४.१.६४/५१९), [18]क्वचित्तु वयोलक्षणे ङीपि[19] (४.१.२०/४७८), क्वचिट् टिल्लक्षणे (४.१.१५/४७०) । हलन्तानां [20]त्वप्राप्त एव कस्मिंश्चिदाब् विधीयते । शूद्रा चामहत्पूर्वा जातिः (म.भा. २. २०१) इति पठ्यते । तस्यायमर्थः । शूद्रशब्दष्टाप-मुत्पादयति जातिश्चेद्[21] भवति । शूद्रा । पुंयोगे [22]ङीषैव भवितव्यम् । शूद्रस्य भार्या शूद्री । महत्पूर्वस्य प्रतिषेधः[23] । महाशूद्री (म.भा. २.२०१) । महाशूद्रशब्दो ह्याभीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते । 'ग्रहणवता प्रातिपदिकेन [24]तदन्तविधिर्न[25]' (व्या.प. ८९) इति कथं तदन्तविधिः ? एतदेव ज्ञापकं भवति[26] अस्मिन् प्रकरणे तदन्तविधिः इति । तेन अतिधीवरी, अतिपीवरी, [27]अतिभवती, अतिमहती इति [28]भवति ।

---

1. खट्वाम् – खट्वासु नास्ति ड. 2. एवं नास्ति फ. 3. दृषदम् – दृषत्सु नास्ति फ. 4. °मात्रमिह फ. 5. प्रकरणेन इत्यधिकम् क. 6. हि इत्यधिकम् फ. 7. उपदेशमात्रेणापि फ. 8. च एतत् इ. ह. 9. युज्यते ग. ह. 10. अदन्तात् ड. फ. 11. प्रातिपादिकात् नास्ति फ. 12. स्वरग्रहणार्थः फ, स्वर-सामान्यग्रहणार्थः अ.क.ग. 13. तद्विघातार्थः फ. 14. कोकिला चटका अश्वा नास्ति ड.ह, चटका नास्ति इ. क. फ. 15. अकारान्ता इत्यधिकम् फ. 16. शुभंयः इ.ड. 17. लोपः ह. 18. क्वचित्तु नास्ति ह. 19. प्राप्ते इत्यधिकम् इ. 20. चाप्राप्त एव ब.फ. 21. सा इत्यधिकम् फ. 22. ङीषेव भवति ब.फ.क. 23. वक्तव्य इत्यधिकम् फ. 24. तद्विधिः फ. 25. भवति इत्यधिकम् ग. 26. अत्र क.फ.ह. 27. अतिभवती नास्ति क.ड.फ. 28. सिद्धम् ब.क.ड.फ.ह.

अजा, एडका, चटका, [1]अश्वा, मूषिका इति जातिः। बाला, होढा, पाका, [2]वत्सा, मन्दा, विलाता [3]इति वयः। [4]पूर्वापहाणा, अपरापहाणा। टित्, निपातनाण् णत्वम्। [5]'संभस्त्राजिनशणपिण्डेभ्यः फलात्' (ग.सू. ३७)। सम्फला। [6]भस्त्रफला। अजिनफला। शणफला। पिण्डफला[7]। 'त्रिफला द्विगौ' (ग. सू. ३८)। बहुव्रीहौ त्रिफली संहतिः। 'सदच्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' (ग.सू. ३९)। सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। पाककर्ण (४.१.६४/५१९) [8]इति ङीषोऽपवादः। 'शूद्रा चामहत्पूर्वा [9]जातिः' (ग. सू. ४०)। क्रुञ्चा, उष्णिहा, देवविशा हलन्ताः। ज्येष्ठा, कनिष्ठा, मध्यमा [10]पुंयोगः। [11]कोकिला जातिः। 'मूलान्नञः' (ग. सू. ४१)। अमूला[12]॥

## ऋन्नेभ्यो ङीप्। (५/३०६)

ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। ङकारः सामान्यग्रहणार्थः[13]। कर्त्री। हर्त्री। दण्डिनी। छत्रिणी[14]॥

## उगितश्च। (६/४५५)

[15]उग् इत् यत्र सम्भवति यथाकथंचित् तदुगिच्छब्दरूपं, तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति। [16]भवती। अतिभवती। [17]पचन्ती। यजन्ती।

[३३५] धातोरुगितः प्रतिषेधो वक्तव्यः। (म. भा. २.२०२)

उखास्रत्। पर्णध्वत् ब्राह्मणी।

[३३६] अञ्चतेश्चोपसङ्ख्यानम्। (म. भा. २.२०२)

प्राची। प्रतीची। [18]उदीची॥

## वनो र च। (७/४५६)

वन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति, रेफश्चान्तादेशः। धीवरी। पीवरी। [19]शर्वरी। परलोकदृश्वरी[20]। 'ऋन्नेभ्यो ङीप्' (४.१.५/३८६) इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम्।

[३३७] वनो न हशः[21]। (म. भा. २.२०२)

प्राप्तौ[22] ङीब्रौ उभावपि प्रतिषिध्येते। सहयुध्वा ब्राह्मणी॥

---

1. कोकिला क. फ. ह, खट्वा इ. 2. पोटा ड. 3. इत्यत्र वयोवचना ह. 4. पूर्वापहारणा, अपरापहारणा इति ड, अपरापहरणा फ. 5. शशप्लुता शशलङ्घिता क्तान्तत्वाद् आख्यायाम् इति ङीषोऽपवादः इत्यधिकम् फ. ह. 6. शस्त्रफला ह. 7. एकफला इत्यधिकम् ह. 8. इत्यादिभ्यः च फ. 9. जातिरूपत्वात् ह. 10. पुंयोगे ब, पुंयोगेऽपि ड. 11. कोकिला जातिः नास्ति फ. 12. दंष्ट्रा इत्यधिकम् फ. 13. पकारः सामान्यग्रहणाविघातार्थः इत्यधिकम् अ.ब.ड.ग, तद्विघातार्थः इत्यधिकम् क. फ, स्वरार्थं इत्यधिकम् इ. ह. 14. हस्तिनी क्षेत्रिणी देववादिनी इत्यधिकम् क. फ, वेदवादिनी इत्यधिकम् ड.फ. 15. उगित् यस्य क, उगिद्भ्यः प्रातिपादिकेभ्यः फ. 16. भवती अतिभवती नास्ति फ, जयन्ती अतियजन्ती ड. 17. जयन्ती इ. 18. अवाची इत्यधिकम् ग, नास्ति ड. फ. ह. 19. शर्वरी फ. 20. गत्वरी इत्यधिकम् क. 21. इति वक्तव्यम् इत्यधिकम् फ. 22. ङीब्रेफौ अ.क.फ, ङीब्रौ द्वावपि ह, ङीप्रेफौ द्वावपि ड.

## पादोऽन्यतरस्याम् । (८/४५७)

[1]पादः इति कृतसमासान्तः पादशब्दो निर्दिश्यते । पादन्तात् प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति । द्विपात्, द्विपदी । त्रिपात् । त्रिपदी । [2]चतुष्पाद्, चतुष्पदी ॥

## टाबृचि । (९/४५८)

पादः [3]इत्येव । ऋचि इत्यभिधेयनिर्देशः । ऋचि वाच्यायां पादन्तात् प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति । ङीपोऽपवादः । द्विपदा ऋक् । [4]त्रिपदा ऋक् । [5]चतुष्पदा ऋक् । ऋचि इति किम् ? द्विपदी देवदत्ता ॥

## षट्स्वस्रादिभ्यः । (१०/३०८)

षट्सञ्ज्ञकेभ्यः (१.१.२४/३६९) स्वस्रादिभ्यश्च [6]प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति । यो [7]यतः प्राप्नोति स सर्वः प्रतिषिध्यते । पञ्च ब्राह्मण्यः । [8]सप्त । नव । दश । स्वस्रादिभ्यः – स्वसा । दुहिता । ननान्दा । याता । माता । तिस्रः । [9]चतस्रः[10] ।

षट्सञ्ज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्विवत्त्वे तस्मान्नोभौ (म.भा. २.२०४) ॥

## मनः । (११/४५९)

मन्नन्तात् प्रातिपदिकात् [11]ङीप् प्रत्ययो न भवति । 'ऋन्नेभ्यो ङीप्' (४.१.५/३०६) इति ङीप् प्राप्तो 'मनः' इति सूत्रेण प्रतिषिध्यते । दामा, दामानौ, दामानः । [12]पामा, पामानौ, पामानः । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (व्या.प. १२९) । [13]सीमा, सीमानौ, सीमानः । अतिमहिमा, [14]अतिमहिमानौ, अतिमहिमानः ॥

## अनो बहुव्रीहेः । (१२/४६०)

अन्नन्ताद् [15]बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति । [16]अनुपधालोपी बहुव्रीहिरिहोदाहरणम् । उपधालोपिनो हि [17]विकल्पं वक्ष्यति । [18]सुपर्वा, सुपर्वाणौ, सुपर्वाणः । [19]सुशर्मा, सुशर्माणौ, सुशर्माणः । बहुव्रीहेः इति किम् ? अतिक्रान्ता राजानम् [20]अतिराजी ॥

---

1. पाद् इति क.ड. 2. चतुष्पाद् नास्ति फ. 3. एव फ. 4. उदाहरणमिदं नास्ति फ. 5. उदाहरणमिदं नास्ति ब. 6. प्रातिपदिकेभ्यः नास्ति फ. 7. यः अ.ब.ग.इ. 8. सप्त नास्ति फ. 9. चतस्रः नास्ति ह. 10. इति स्वस्त्रादिः इत्यधिकम् फ, स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्त्रादिष्वध्यगीषत ॥ इत्यधिकम् ह. 11. स्त्रियां इत्यधिकम् क.ड.इ.फ. 12. वामा वामानः ह. 13. सुसीमानौ सुसीमानः इ. क.ड.फ.ह. 14. अतिमहिमानौ नास्ति ड. 15. प्रातिपदिकात् इत्यधिकम् ह. 16. अनुपधालोपो क. 17. विभाषां क.ह. 18. सुवर्मा सुवर्माणौ सुवर्माणः क.ड. 19. उदाहरणमिदं नास्ति ह. 20. अतिराज्ञी अ. ब. क. ड. ग. फ. ह.

## डाबुभाभ्यामन्यतरस्याम्। (१३/४६१)

[1]डाप् प्रत्ययो भवति उभाभ्यां मन्नन्तात् प्रातिपदिकात् अनन्ताच्च बहुव्रीहेरन्यतरस्याम्। पामा, पामे, पामाः। सीमा, सीमे, सीमाः। न च भवति। [2]पामानः। सीमानः। बहुव्रीहौ – बहुराजा, बहुराजे, बहुराजाः। [3]बहुतक्षा, बहुतक्षे, बहुतक्षाः। न च भवति। [4]बहुराजानः। [5]बहुतक्षाणः। अन्यतरस्यां[6]ग्रहणं किमर्थम्? बहुव्रीहौ, 'वनो र च' (४.१.७/४५६) इत्यस्यापि विकल्पो यथा यात्। बहुधीवा, बहुधीवरी, बहुपीवा, बहुपीवरी॥

## अनुपसर्जनात्। (१४/४६०)

अधिकारोऽयम्। उत्तरसूत्रेषूपसर्जने[7] प्रतिषेधं करोति। यद् इत ऊर्ध्वमनुक्रमिष्यामोऽनुपसर्जनात् इत्येवं तद् वेदितव्यम्। टिड्ढाणञ् (४.१.१५/४७०) [8]इति ङीप्। कुरुचरी। [9]मद्रचरी। अनुपसर्जनात् इति किम्? बहुकुरुचरा, [10]बहुमद्रचरा मधुरा। जातेः (४. १. ६३/५१८) [11]इति ङीष्। कुक्कुटी। शूकरी। अनुपसर्जनात् इति किम्? [12]बहुकुक्कुटा, बहुशूकरा [13]मधुरा। कथं पुनरुपसर्जनात् [14]प्रत्ययप्रसङ्गः? तदन्तविधिना। ज्ञापितं चैतदस्त्यत्र प्रकरणे तदन्तविधिः इति। तथा च प्रधानेन तदन्तविधिर्भवति। कुम्भकारी। [15]नगरकारी। न च अण् इति कृद्ग्रहणं, तद्धितोऽप्यणस्ति[16]॥

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्। (१५/४७०)

[17]अतः इति सर्वत्र [18]अनुवर्तते। तत् सति सम्भवे विशेषणं भवति। टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। [19]टापोऽपवादः। [20]टितस्तावत् – कुरुचरी। मद्रचरी (३.२.१६/२९३०)। इह कस्मान्न भवति, पचमाना, यजमाना? व्यनुबन्धकत्वाल् लटः। ल्युडादिषु कथम्? टित्करणसामर्थ्यात्। इतरत्र [21]तु टेरेत्वं फलम्। [22]पठिता विद्या इति? आगमटित्त्वमनिमित्तं, टचुटचुलौ तुट् च (४. ३. २३/१३९१) इति लिङ्गात्। ढ – सौपर्णेयी। वैनतेयी (४. १. १२०/११२३)। निरनुबन्धको ढशब्दः स्त्रियां नास्ति इति निरनुबन्धकपरिभाषा न प्रवर्तते (म. भा. २.२०८)। अण् – कुम्भकारी। [23]नगरकारी (३.२. १/२९१३)। औपगवी (४. ३. १२०/१५००)। णेऽपि क्वचिदण्कृतं कार्यं भवति। चौरी, तापसी (४.४. ६२/१६१२)। दाण्डा, मौष्टा (४. २. ५७/१२६६) इत्यत्र न भवति। अञ् – औत्सी। औदपानी (४.१. ८६/१०७८)। 'शार्ङ्गरवाद्यञो ङीन्' (४. १. ७३/५२७) इति पुनरञो[24] ग्रहणं जातिलक्षणं ङीषं बाधितुम्। द्वयसच् – ऊरुद्वयसी। जानुद्वयसी (५. २. ३७/१८३८)। दघ्नच् – ऊरुदघ्नी। जानुदघ्नी (५. २. ३७/१८३८)।

---

1. बहुव्रीहेः स्त्रियां डाप् प्रत्ययो भवति अन्यतरस्याम् क. ड. 2. पामा पामानौ पामानः। सीमा सीमानौ सीमानः क. ड. 3. उदाहरणमिदं नास्ति फ. 4. बहुराजा बहुराजानौ इत्यधिकम् क. ग. 5. उदाहरणमिदं नास्ति ह. 6. ग्रहणं नास्ति इ. क. ड. 7. उपसर्जनमतिशेषं इ, उपसर्जनप्रतिषेधं ब. 8. इत्यादिना क. 9. नास्ति फ. ह. 10. बहुमद्रचरा नास्ति ह. 11. इति नास्ति क. 12. बहुकुक्कुरा ब. 13. माधुरा ब. 14. स्त्रीप्रत्ययप्रसङ्गः फ. 15. नास्ति ब. 16. अण् नास्ति फ. 17. आतः ग. 18. सम्बध्यते ग. 19. टापोऽपवादः नास्ति फ. 20. तावत् नास्ति क. 21. तु नास्ति फ. 22. कथम् इत्यधिकम् फ. 23. नगरीकारी ब. 24. अञः नास्ति फ.

मात्रच् – ऊरुमात्री । जानुमात्री (५.२.३७/१८३८) । तयप् – पञ्चतयी । [1]दशतयी (५.२.४२/१८४३) । ठक् – आक्षिकी । शालाकिकी (४.४.२/१५५०) । ठञ् – लावणिकी (४.४.५२/१६०२) । ठक्ठञोर्भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम् । कञ् – यादृशी । तादृशी (३.२.६०/४२९) । क्वरप् – इत्वरी । [2]नश्वरी (३.२.१६३/३१४२) । ख्युन् – आढ्यङ्करणी । सुभगंकरणी (३.२.५६/२९७३) ।

[३३८] नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम् । (म. भा. २.२०९)

स्त्रैणी । पौंस्नी । शाक्तीकी । याष्टीकी । तरुणी । तलुनी[3] ॥

## यञश्च । (१६/४७१)

ङीप् इत्येव । यञन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । गार्गी । वात्सी ।

[३३९] [4]अपत्यग्रहणं कर्तव्यम् । (म. भा. २.२०९)

इह मा भूत्, 'द्वीपादनुसमुद्रं यञ्' (४.३.१०/१३८०) द्वैप्या (म. भा. २.२०९) । [5]योगविभागः उत्तरार्थः ॥

## प्राचां ष्फ तद्धितः । (१७/४७३)

यञः इत्येव । प्राचामाचार्याणां मतेन यञन्तात्[6] स्त्रियां ष्फः प्रत्ययो भवति, स च [7]तद्धितसञ्ज्ञः । षकारो ङीषर्थः । प्रत्ययद्वयेनेह स्त्रीत्वं [8]व्यज्यते । तद्धितग्रहणं[9] प्रातिपदिकसञ्ज्ञार्थम् । गार्ग्यायणी । वात्स्यायनी । अन्येषाम्[10] – गार्गी । वात्सी । सर्वत्रग्रहणमुत्तरसूत्रादिह [11]अपकृष्यते बाधकबाधनार्थम् । आवटचात् (४.१.७५/५२९) चापं वक्ष्यति, तमपि बाधित्वा प्राचां ष्फ एव [12]यथा स्यात् । आवट्यायनी ॥

## सर्वत्र लोहितादिकतन्तेभ्यः । (१८/४७६)

यञः इत्येव । पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम् । [13]सर्वत्र लोहितादिभ्यः [14]कतपर्यन्तेभ्यः (४.१.१०५/११०७) [15]यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति[16] । कतशब्दः स्वतन्त्रं यत् प्रातिपदिकं तदवधित्वेन परिगृह्यते कपिशब्दात् परः कपि कत इति, न प्रातिपदिकावयवः कुरुकतेति । [17]लौहित्यायनी । [18]शांसित्यायनी . बाभ्रव्यायणी ।

कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥ (म. भा. २.२१०)

प्रातिपदिकेष्वन्यथा पाठः, स एवं व्यवस्थापयितव्यः इति मन्यते । कतन्तेभ्यः इति बहुव्रीहितत्पुरुषयोरेकशेषः, तथा 'कण्वादिभ्यो गोत्रे' (४.२.१११/१३३२) इति । [19]तत्र तत्पुरुषवृत्त्या संगृहीतो [20]मध्यपाती शकलशब्दो यञन्तः प्रत्ययद्वयमपि प्रतिपद्यते । शाकल्यायनी । शाकल्यस्येमे छात्राः शाकलाः (म. भा. २.२१०) ॥

---

1. नास्ति क. 2. गत्वरी ड. फ. 3. तरुणतलुनशब्दौ गौरादिषु पठ्येते, तेन ओट्सिद्धे इदं वचनमनर्थकम् इत्यधिकम् इ, गौरादिपाठात् सिद्धम् इत्यधिकम् क. ड. 4. आपत्यग्रहणं ड. 5. पृथग्योगकरणमुत्तरार्थम् अ. 6. प्रातिपदिकात् इत्यधिकम् क. ड. 7. तद्धितसञ्ज्ञकः ब. क. ड, भवति इत्यधिकम् ग. 8 अभिव्यज्यते ब. 9. तु इत्यधिकम् इ. 10. मतेन इत्यधिकम् ह. 11. अनुकृष्यते ब. 12. यथा नास्ति ड. 13. सर्वत्र नास्ति ड. 14. कतन्तेभ्यः क. 15. यञन्तेभ्यः नास्ति इ. 16. सर्वेषामाचार्याणां मतेन इत्यधिकम् क. ड. फ. 17. लोहित्यायनी क. 18. सांशित्यायनी क. ड. 19. तत्र नास्ति ब, तथा फ. 20. मध्यवर्ती ब.

## कौरव्यमाण्डूकाभ्यां च । (१९/४७७)

कौरव्य माण्डूक इत्येताभ्यां [1]स्त्रियां ष्फः प्रत्ययो भवति । कुर्वादिभ्यो ण्ये (४. १. १५१/११७५) कृते, 'ढक् च मण्डूकात्' (४. १. ११९/११२२) इत्यणि च । [2]यथाक्रमं टाब्ङीपोरपवादः । कौरव्यायणी । माण्डूकायनी । कथं कौरवी सेना ? तस्येदं (४. ३. १२०/१५००) विवक्षायामणि कृते भविष्यति ।

[३४०] कौरव्यमाण्डूकयोरासुरेरुपसङ्ख्यानम् । (म. भा. २. २१०)

आसुरायणी[3] । शैषिकेष्वर्थेषु 'इञश्च' (४. २. ११२/१३३३) इत्यणि प्राप्ते छप्रत्यय इष्यते । आसुरीयः [4]कल्पः (म. भा. २. २११) ।।

## वयसि प्रथमे । (२०/४७८)

[5]कालकृतशरीरावस्था यौवनादिः वयः । प्रथमे वयसि यत् प्रातिपदिकं श्रुत्या वर्तते ततः स्त्रियां ङीप् प्रत्ययो भवति । कुमारी । किशोरी । [6]बर्करी । प्रथमे इति किम् ? स्थविरा । वृद्धा । अतः इत्येव, शिशुः ।

[३४१] वयस्यचरम इति वक्तव्यम् । (म. भा. २. २११)

वधूटी । [7]चिरण्टी । द्वितीयवयोवचनावेतौ । प्राप्तयौवना स्त्री अभिधीयते । कथं कन्या ? 'कन्यायाः कनीन च' (४. १. ११६/१११९) इति ज्ञापकात् । [8]उत्तानशया, लोहितपादिका [9]इति ? नैताः वयःश्रुतयः ।।

## द्विगोः । (२१/४७९)

[10]द्विगुसञ्ज्ञकात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति । पञ्चपूली । दशपूली । कथं त्रिफला[11] ? अजादिषु [12]दृश्यते ।।

## अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । (२२/४८०)

पूर्वेण [13]ङीप् प्राप्तः प्रतिषिध्यते । अपरिमाणान्तात् द्विगोः बिस्तआचितकम्बल्यान्ताच्च तद्धितलुकि सति ङीप् प्रत्ययो न भवति । बिस्तादीनां परिमाणार्थं ग्रहणम् । सर्वतो [14]मानं परिमाणम् । अपरिमाणान्तात् तावत् – पञ्चभिरश्वैः क्रीता पञ्चाश्वा । दशाश्वा[15] (५.१.३७/१७०२) (५. १. २८/१६९३) । कालः च सङ्ख्या [16]न परिमाणम् । [17]द्विवर्षा । त्रिवर्षा (५.२.३७/१८३८ वा.)। [18]द्वाभ्यां शताभ्यां क्रीता द्विशता । त्रिशता । (५.१.२२/१६८७) (५. १. २८/१६९३) । बिस्तादिभ्यः – द्विबिस्ता । त्रिबिस्ता (५. १. ५२/१७१८) (५. १. २८/१६९३) । द्व्याचिता । त्र्याचिता (५.१.५४/१७२०) (५. १. २८/१६९३) । द्विकम्बल्या । त्रिकम्बल्या (५. १.३७/१७०२) (५. १.२८/१६९३) । [19]अपरिमाणेति किम् ? द्व्याढकी । त्र्याढकी । तद्धितलुकि इति किम् ? समाहारे[20] – पञ्चाश्वी । दशाश्वी ।।

---

1. स्त्रियां नास्ति फ. 2. यथासंख्यम् ब. 3. कन्या इत्यधिकम् ह. 4. कल्पः नास्ति क. 5. कालकृता ब. ड. इ. 6. बर्करी नास्ति ह. 7. चिरण्डी ह. 8. कथं इत्यधिकम् क. ड. फ. 9. द्विवर्षा इत्यधिकम् क. 10. द्विगुसमासात् क. ड. फ. 11. इति इत्यधिकम् ह. 12. पठ्यते क. फ, इष्यते ब, पाठः करिष्यते ह. 13. प्राप्तः ङीप् ब. 14. माने ब. 15. तेन क्रीतमिति ढक् । अध्यर्धपूर्वाद् द्विगोर्लुक् इति लुक् इत्यधिकम् अ. ब. क. ह. 16. न नास्ति क. 17. द्विवर्षा स्त्री क. ड, त्रिवर्षा स्त्री क. 18. द्वाभ्यां शताभ्यां क्रीता नास्ति इ. ड. 19. अपरिमाणाद् इति ब. ग. ह, अपरिमाणादित्येव इ. 20. मा भूत् इत्यधिकम् क. ड. फ.

## काण्डान्तात् क्षेत्रे । (२३/४८१)

काण्डशब्दान्तात्[1] द्विगोस्तद्धितलुकि [2]सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति । द्वे काण्डे प्रमाणमस्याः [3]क्षेत्रभक्तेः, 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५.२.३७/१८३८) इति विहितस्य तद्धितस्य 'प्रमाणे लो द्विगोर्नित्यम्' (५.२.३७/१८३८ वा.) इति लुकि कृते, द्विकाण्डा [4]क्षेत्रभक्तिः । त्रिकाण्डा [5]क्षेत्रभक्तिः । काण्डशब्दस्यापरिमाणवाचित्वात् पूर्वेणैव प्रतिषेधे सिद्धे [6]क्षेत्रे नियमार्थं वचनम् । इह मा भूत्, द्विकाण्डी रज्जुः, [7]त्रिकाण्डी रज्जुः इति । [8]प्रमाणविशेषः [9]काण्डम् ॥

## पुरुषात् प्रमाणेऽन्यतरस्याम् । (२४/४८२)

द्विगोः तद्धितलुकि इत्येव । प्रमाणे यः पुरुषशब्दः, तदन्ताद् द्विगोः तद्धितलुकि सति अन्यतरस्यां न ङीप् प्रत्ययो भवति । द्वौ पुरुषौ प्रमाणमस्याः परिखायाः द्विपुरुषा, द्विपुरुषी । [10]त्रिपुरुषा, त्रिपुरुषी । [11]अपरिमाणान्तत्वान् नित्ये प्रतिषेधे [12]प्राप्ते विकल्पार्थं वचनम् । प्रमाणे इति किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । [13]त्रिपुरुषा । तद्धितलुकि इत्येव । [14]समाहारे – द्विपुरुषी । त्रिपुरुषी ॥

## बहुव्रीहेरूधसो ङीष् । (२५/४८४)

ऊधस्शब्दान्ताद् बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति । 'ऊधसोऽनङ्' (५.४.१३१/४८३) इति समासान्ते कृते 'अनो बहुव्रीहेः' (४.१.१२/४६०) इति डाप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते । घटोध्नी । कुण्डोध्नी । बहुव्रीहेः इति किम् ? प्राप्ता ऊधः प्राप्तोधाः । 'अन उपधालोपिनोऽन्यतरस्याम्' (४.१.२८/४६२) इत्यस्यापि ङीपोऽयमुत्तरत्रानुवृत्तेर्बाधक इष्यते । समासान्तश्च स्त्रियामेव । [15]इह न भवति, महोधाः पर्जन्यः इति ॥

## सङ्ख्याव्ययादेर्ङीप् । (२६/४८५)

पूर्वेण ङीषि प्राप्ते ङीब् विधीयते । सङ्ख्यादेः अव्ययादेश्च बहुव्रीहेरूधस्शब्दान्ताद्[16] ङीप् प्रत्ययो भवति । सङ्ख्यादेः तावत् – द्व्यूध्नी । त्र्यूध्नी । अव्ययादेः – [17]अत्यूध्नी । [18]निरूध्नी । आदिग्रहणं किम् ? [19]द्विविधोध्नी, त्रिविधोध्नी इत्यत्रापि यथा स्यात् ॥

## दामहायनान्ताच्च । (२७/४८६)

ऊधसः [20]इति निवृत्तम् । सङ्ख्याग्रहणमनुवर्तते, न अव्ययग्रहणम् । सङ्ख्यादेः बहुव्रीहेः दामशब्दान्तात् हायनशब्दान्तात् च स्त्रियां ङीप् प्रत्ययो भवति । दामान्तात् डाप्प्रतिषेधविकल्पेषु (४.१.१२, १३,२८/४६० – ४६२) प्राप्तेषु नित्यार्थं वचनम् । द्विदाम्नी । त्रिदाम्नी । [21]हायनान्ताट् टापि प्राप्ते (४.१.४/४५४) । द्विहायनी । [22]त्रिहायणी । चतुर्हायणी ।

[३४२] हायनो वयसि स्मृतः । (म. भा. २.२१३)

तेनेह न भवति, द्विहायना शाला । [23]त्रिहायना । [24]चतुर्हायना । णत्वमपि त्रिचतुर्भ्याम् हायनस्य इति वयस्येव स्मर्यते ॥

---

1. प्रातिपदिकात् इत्यधिकम् फ. 2. कृते ह. 3. क्षेत्रभक्त्याः ब. 4–5. भक्तिः ब. क. फ. ह. 6. क्षेत्रनियमार्थं ह. 7. उदाहरणमिदं नास्ति फ. 8. परिमाणविशेषः ग. 9. काण्डा ब. 10. त्रिपुरुषा नास्ति फ. 11. अपरिमाणात् फ, तद्धितलुकि क. ड. फ. 12. सिद्धे फ. 13. नास्ति फ. 14. समाहारे मा भूत्, पञ्चपुरुषी, दशपुरुषी क. ग. ड. फ, मा भूत्, पञ्चपूली ह. 15. तेन इत्यधिकम् क. 16. स्त्रियाम् इत्यधिकम् ह. 17. प्रत्यूध्नी क. फ, अभ्यूध्नी न्या. 18. नास्ति फ. 19. द्विविधोध्नी ब. 20. इति नास्ति फ. 21. हायनान्तादपि मुद्रितपुस्तकेषु. 22. त्रिहायनी अ. क. ड. 23–24. नास्ति फ, °शाला क. ड. ह.

## अन उपधालोपिनोऽन्यतरस्याम्। (२८/४६२)

बहुव्रीहेरित्येव । [1]अन्नन्तो यो बहुव्रीहिः उपधालोपी, तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति । ङीपा मुक्ते [2]डाप्प्रतिषेधौ भवतः । किमर्थं तर्हि इदमुच्यते, ननु[3] सिद्धा एव डाप्प्रतिषेधङीपः[4]? अनुपधालोपिनः ङीप्प्रतिषेधार्थं वचनम् । बहुराजा, बहुराज्ञी, [5]बहुराजे । बहुतक्षा, बहुतक्ष्णी, बहुतक्षे । अनः इति किम् ? बहुमत्स्या । उपधालोपिनः इति किम् ? [6]सुपर्वा, सुपर्वे, सुपर्वाः । सुपर्वाणौ, [7]सुपर्वाणः । डाप्प्रतिषेधावेवात्र [8]भवतः ॥

## नित्यं सञ्ज्ञाछन्दसोः। (२९/४८७)

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः सञ्ज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति । [9]विकल्पस्यापवादः । सुराज्ञी, अतिराज्ञी नामः ग्राम । छन्दसि – [10]गौः पञ्चदाम्नी । एकदाम्नी । [11]द्विदाम्नी । 'एकमूर्ध्नी' (अ.वे. ८.९.१५) । 'समानमूर्ध्नी' (तै.सं. ४.३.११.४)[12]॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च। (३०/४८८)

सञ्ज्ञाछन्दसोः (४. १. २९/४८७) इत्येव । केवलादिभ्यः प्रातिपदिकेभ्यः सञ्ज्ञायां, छन्दसि[13] विषये स्त्रियां ङीप् प्रत्ययो भवति । 'केवली' (पै. १६.२०.१) । [14]केवला इति भाषायाम् । 'मामकी' (पै.१.६.८) । [15]मामिका इति भाषायाम् । 'मित्रावरुणयोर्भागधेयीः स्थ' (तै. १. ३. १ २. १) । भागधेया इति भाषायाम् । 'सा पापी' (मै. ४. २. १४) । पापा इति भाषायाम् । '[16]उताऽपरीभ्यो मघवा विजिग्ये' (ऋ. १. ३२. १३) । अपरा इति भाषायाम् । '[17]समानी' (ऋ. १०.१९१.३) प्रकाणी । समाना इति भाषायाम् । 'आर्यकृती' (मै. १.८.३) । आर्यकृता इति भाषायाम् । 'सुमङ्गली' (ऋ.१०.८५.३३) । सुमङ्गला इति भाषायाम् । 'भेषजी' (तै. ४.५. १०. १) । भेषजा इति भाषायाम् ॥

## रात्रेश्चाजसौ। (३१/३४४९)

जस्विषयादन्यत्र सञ्ज्ञायां छन्दसि च रात्रिशब्दात् ङीप् प्रत्ययो भवति । [18]या च रात्री सृष्टा । 'रात्रीभिः' (ऋ. १०.१०.९) । अजसौ इति किम् ? यास्ता रात्रयः ।

[३४३] अजसादिष्विति वक्तव्यम् । (म.भा.२. २१३)

[19]रात्रिं सहोषित्वा (म.भा.२.२१३) । कथं तिमिरपटलैरवगुण्ठिताश्च रात्र्यः ? ङीषयं बह्वादिलक्षणः । तत्र हि पठ्यते 'कृदिकारादक्तिनः' (ग.सू. ५०), 'सर्वतोऽक्तिन्नर्थात् इत्येके' (ग.सू. ५१) इति ॥

---

1. अनन्तो ह. 2. ङीप् क, डाब्विधिप्रतिषेधौ ब, डाप्प्रतिषेधो भवति ह. 3. च इत्यधिकम् क. 4. पूर्वेण इत्यधिकम् ड. ह. 5. नास्ति ह. 6. सुपर्वा, सुपर्वे नास्ति ह. 7. सुपर्वाणः नास्ति ग. 8. भवतः नास्ति फ. 9. विकल्पस्य–समानमूर्ध्नी नास्ति ह. 10. गां पञ्चदाम्नी क, एकमूर्ध्नी पञ्चमूर्ध्नी समानमूर्ध्नी ह. 11. नास्ति ब. क. 12. सञ्ज्ञाछन्दसोरिति किम्? पञ्चमूर्धा एकमूर्धा समानमूर्धा क. ड, समानमूर्ध्नी नास्ति ब. 13. च इत्यधिकम् क. 14. केवला–विजिग्ये नास्ति ब. 15. मामका फ. 16. अवरीकन्या मघवा निजिग्ये ड, उतापराभ्यः फ. 17. समानी प्रतारणी ब.क.ड, समानी प्रकरणी ह. 18. या नास्ति फ, या रात्री सुसृष्टा रात्रीभिः ह. 19. रात्रिं रात्रिं सहोषित्वा इ. ड. फ.

## अन्तर्वत्पतिवतोर्नुक् । (३२/४८९)

प्रकृतिर्निपात्यते, नुगागमस्तु विधीयते । अन्तर्वत्पतिवतोर्नुक् [1]भवति ङीप् [2]च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः । [3]निपातन[4]सामर्थ्याच्च विशेषे वृत्ति[5]र्भवति । अन्तर्वत् पतिवत् इति गर्भभर्तृसंयोगे । [6]इह न भवति, अन्तरस्यां शालायां विद्यते[7] । पतिमती पृथिवी (म.भा.२. २१३) । अन्तर्वत् इति मतुब् निपात्यते, वत्वं सिद्धम्[8] । पतिवत् इति वत्वं निपात्यते, मतुप् सिद्धः[9] । अन्तर्वत्नी गर्भिणी । पतिवत्नी [10]जीवपतिः ।

अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् ।
गर्भिण्यां [11]जीवपत्यां च वा छन्दसि तु नुग्विधिः ॥ (म. भा. २. २१४)

सान्तर्वत्नी [12]देवानुपैत् (म. भा. २. २१४) । सान्तर्वती [13]देवानुपैत् (म. भा. २. २१४) । पतिवत्नी तरुणवत्सा (म. भा. २. २१४) । पतिवती तरुणवत्सा (म. भा. २. २१४) ॥

## पत्युर्नो यज्ञसंयोगे । (३३/४९०)

[14]पतिशब्दस्य नकारादेशः स्त्रियां विधीयते, ङीप् प्रत्ययस्तु नकारान्तत्वादेव सिद्धः यज्ञसंयोगे । यज्ञेन संयोगः यज्ञसंयोगः[15] । तत्साधनत्वात् फलग्रहीतृत्वात् [16]वा यजमानस्य पत्नी । पत्नि वाचं [17]यच्छ । यज्ञसंयोगे इति किम् ? ग्रामस्य पतिरियं ब्राह्मणी कथं वृषलस्य पत्नी ? [18]उपमानाद् भविष्यति ॥

## विभाषा सपूर्वस्य । (३४/४९१)

पत्युर्नः इति वर्तते । पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपसर्जनस्य स्त्रियां विभाषा नकारादेशो भवति, ङीप् [19]तु लभ्यते एव । वृद्धपत्नी, वृद्धपतिः । स्थूलपत्नी, स्थूलपतिः (म.भा. २.२१४) । अप्राप्तविभाषेयम्–यज्ञसंयोगत्वात् । सपूर्वस्य इति किम् ? पतिरियं ब्राह्मणी [20]ग्रामस्य ॥

## नित्यं सपत्न्यादिषु । (३५/४९२)

सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् [21]तु लभ्यते एव । पूर्वेण विकल्पे प्राप्ते वचनम् । नित्यग्रहणं विस्पष्टार्थम् । समानः पतिरस्याः [22]सपत्नी । [23]एकपत्नी । [24]समानादिष्विति वक्तव्ये [25]समानस्य सभावार्थं वचनम्[26] ।

समान । एक । वीर । पिण्ड[27] । भ्रातृ[28] । पुत्र ।
[३४४] दासाच्छन्दसि[29] ॥

---

1. विधीयते ड. 2. च नास्ति फ. 3. निपातनार्थात् अर्थसामर्थ्यात् ड. 4. सामर्थ्याद्धि फ. 5. भविष्यति क. 6. इह मा भूत् इ. 7. अन्तर्वती शाला इत्यधिकम् ड. ह. 8–9. एव इत्यधिकम् ड. 10. जीवत्पतिः ह. 11. जीवत्पत्न्यां क. ब. इ. ह. 12–13. उपैति ब. ह, सा अन्तर्वती देवान् पुनः परैत् (काठ. 8. 10. 1). 14. पतिशब्दो नकारान्तादेशः ब. क. इ. 15. तस्मिन् इत्यधिकम् इ. 16. च ब. फ. 17. प्रयच्छ ग. 18. उपचारात् ब. 19. च क. ड. 20. अस्य क. ड. 21. तु नास्ति फ. 22. सा इत्यधिकम् ह. 23. नास्ति फ. 24. वाक्यमिदं नास्ति इ. 25. समानस्य नास्ति ह. 26. सपत्न्यादिषु इति इत्यधिकम् क. ड. 27. श्वा इत्यधिकम् ब. 28. भद्र इत्यधिकम् क. ड. 29. दासः पतिः अस्याः दासपत्नी इत्यधिकम् इ, दासपत्नीरहिगोपा अतिष्ठन् इत्यधिकम् क.ड, छन्दसि इत्येव दासपतिः इत्यधिकम् ड, दासपत्नीरधूनुतम् (ऋ. 3.12.6) इत्यधिकम् फ.

## पूतक्रतोरै च। (३६/४९३)

पूतक्रतुशब्दस्य स्त्रियाम् ऐकारश्चान्तादेशो [1]भवति, ङीप् प्रत्ययः। पूतक्रतोः स्त्री पूतक्रतायी (म.भा.२.२१५)। त्रय एते योगाः (४.१.३६–३८) पुंयोगप्रकरणे (४.१.४८/५०४) [2]द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति (म. भा. २.२१५)॥

## वृषाकप्यग्निकुसित[3]कुसिदानामुदात्तः। (३७/४९४)

वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप् च प्रत्ययः। वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। [4]वृषाकपेः स्त्री वृषाकपायी। अग्नायी। कुसितायी। [5]कुसिदायी। पुंयोगे इत्येव, वृषाकपिः स्त्री॥

## मनोरौ वा। (३८/४९५)

ऐ[6] उदात्तः इति[7] वर्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्च उदात्तः। [8]वाग्रहणेन द्वावपि विकल्प्येते। तेन त्रैरूप्यं[9] भवति। मनोः स्त्री मनायी (काठ. ३०.१)। मनावी (मै. १.८)। मनुः (मै. १.८)। मनुशब्दः आद्युदात्तः॥

## वर्णादनुदात्तात्तोपधात्तो नः। (३९/४९६)

वा इति वर्तते। वर्णवाचिनः प्रातिपदिकात् अनुदात्तान्तात् तकारोपधाद् वा ङीप् प्रत्ययो भवति, तकारस्य[10] नकारादेशो भवति। एता, एनी (ऋ. १.१४४.६)। श्येता, श्येनी। हरिता, हरिणी। सर्वे एते आद्युदात्ताः, 'वर्णानां तणतिनितान्तानाम्' (फि. सू. २.१०) इति वचनात्। वर्णात् इति किम्? [11]प्रकृता। प्ररुता। गतिस्वरेणाद्युदात्तः (६.२.४९/३७८३)। अनुदात्तात् इति किम्? श्वेता। घृतादित्वादन्तोदात्तः (फि. सू. १.२१)। तोपधात् इति किम्? अन्यतो ङीषं वक्ष्यति। अतः इत्येव, [12]शितिर्ब्राह्मणी।

[३४५] [13]पिशङ्गादुपसङ्ख्यानम्। (म. भा. २.२१५)

[14]पिशङ्गी।

[३४६] असितपलितयोः प्रतिषेधः[15]। (म. भा. २.२१५)

असिता। पलिता।

[३४७] [16]छन्दसि [17]क्नम् इत्येके। (म. भा. २.२१६)

'असिक्नी' (शौ. अ. १.२३.१)। 'पलिक्नी'। (ऋ. ५.२.४)। भाषायामपीष्यते। गतो गणस्तूर्णमसिक्निकानाम्॥

---

1. भवति नास्ति फ. 2. द्रष्टव्याः नास्ति फ. 3. कुसीदानाम् इ. क. 4. वृषाकपेः स्त्री नास्ति ब. 5. कुसीदायी इ. क. ह, कुसीतायी ह. 6. च इत्यधिकम् क. ड. फ. 7. च इत्यधिकम् फ. 8. वाग्रहणे क. फ. 9. सिद्धम् इत्यधिकम् ग, भवति नास्ति ब. 10. च इत्यधिकम् क. फ. ह. 11. प्रहृता ब, प्रहूता अ. 12. शिशुरियं ब्राह्मणी ह. 13. पिसंगात् क. 14. पिसंगी क. 15. वक्तव्यः इत्यधिकम् क. फ. ह, वाच्यः इत्यधिकम् इ. 16. तयोः इत्यधिकम् फ. 17. क्नमिच्छन्त्येके क, क्नमेक इच्छति ड.

## अन्यतो ङीष्। (४०/४९७)

वा इति निवृत्तम्। वर्णादनुदात्तात् इति वर्तते, [1]तोपधापेक्षमन्यत्वम्। वर्णवाचिनः प्रातिपदिकाद[2]नुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति। स्वरे विशेषः। सारङ्गी। कल्माषी। शबली। वर्णात् इत्येव, खट्वा। अनुदात्तात् इत्येव, कृष्णा। कपिला॥

## षिद्गौरादिभ्यश्च। (४१/४९८)

[3]ङीष् अनुवर्तते। षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीष् प्रत्ययो भवति। 'शिल्पिनि ष्वुन्' (३.१.१४५/२९०७) – नर्तकी। खनकी। रजकी। गौरादिभ्यः – गौरी। मत्सी।

गौर। मत्स्य। मनुष्य। शृङ्ग[4]। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। [5]कण। [6]पटर। उकण। आमलक। कुवल। बदर। बिम्ब[7]। [8]तर्कार। [9]शर्कार। पुष्कर। [10]शिखण्ड। सुषम। [11]सलन्द। [12]गडुज। आनन्द। [13]सृपाट। [14]सृगेठ। आढक। शष्कुल। [15]सूर्म। सुब। सूर्य। [16]पूष। मूष। घातक। [17]सकलूक। [18]सल्लक। [19]मालक। मालत। साल्वक। वेतस। अतस। पृस। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही। अनड्वाही। 'एषणः करणे' (ग. सू. ४२)। [20]देह। काकादन। गवादन। तेजन। रजन। लवण। पान। मेघ। [21]गौतम। [22]आयस्थूण। [23]भौरि। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलिङ्गि। आपिच्छिक। आरट। टोट। नट। नाट। [24]मलाट। शातन। पातन। सवन। आस्तरण। अधिकरण। [25]एत। अधिकार। आग्रहायणी। प्रत्यवरोहिणी। [26]सेवन। 'सुमङ्गलात् सञ्ज्ञायाम्' (ग.सू. ४३)। सुन्दर। मण्डल। पिण्ड। [27]विटक। कुर्द। गूर्द[28]। पट। पाण्ट। लोफाण्ट। कन्दर। कन्दल। तरुण। तलुन। बृहत्। महत्। सौधर्म। 'रोहिणी नक्षत्रे' (ग.सू. ४४)। 'रेवती नक्षत्रे' (ग.सू. ४५)। विकल। निष्फल। पुष्कल। 'कटाच्छ्रोणिवचने' (ग.सू. ४६)। 'पिप्पल्यादयश्च' (ग.सू. ४७)। पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी। क्रोष्ट्री। मातामह। पितामह। मातामहपितामहयोः 'मातरि षिच्च' (४.२.३६/१२४२ वा.) इति षित्वादेव सिद्धे ज्ञापनार्थं वचनम्, अनित्यः षिल्लक्षणो ङीष् इति, तेन दंष्ट्रा इत्युपपन्नं भवति॥

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु। (४२/५००)

जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु[29] वृत्त्यादिष्वर्थेषु यथासङ्ख्यं ङीष् प्रत्ययो भवति।

---

1. तोपधादन्यतः प्रातिपदिकात् इ. क. ड. फ. ह. 2. अनुदात्तात् इ. ब. 3. षीङ् ह. 4. पिङ्गल इत्यधिकम् ब. क. 5. कोण क, कोकण ह, काकण ब. 6. वरट ह. 7. कर्कश शर्करा अन्धक इत्यधिकम् क. 8. तक्कर ब. 9. नास्ति ह. 10. नास्ति ह. 11. सलद क, सन्दन ह. 12. नास्ति ह. 13. धृपाट ह. 14. सृगेठ आढक नास्ति ह, सृवाट सष्ठुल क. 15. धूम सम. ब. 16. नास्ति ह. 17. नास्ति ब. 18. सालक ह. 19. नास्ति ब. 20. दोहन कर्दम क, देहन ब. 21. गौम्रत ह. 22. अयस्थूण ब. 23. भौरुकि ब. क. ह. 24. मूलाट क. 25. नास्ति ह. 26. नास्ति ह. 27. पिटक ब. 28. सूद आड फट भाण्डल भाम इत्यधिकम् क. 29. एषु इत्यधिकम् इ.

जानपदी भवति, वृत्तिश्चेत्। जानपदी अन्या। स्वरे विशेषः। [1]उत्सादिपाठादजि कृते ङीपाद्युदात्तत्वं भवति। कुण्डी भवति, अमत्रं चेत्। कुण्डाऽन्या। गोणी भवति, आवपनं चेत्। गोणा अन्या। स्थली भवति, अकृत्रिमा चेत्। स्थला अन्या। भाजी भवति, श्राणा चेत्। [2]पक्वा इत्यर्थः। भाजा अन्या। नागी भवति, स्थौल्यं चेत्। नागा अन्या। [3]नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव [4]टापम्। [5]जातिवचनात्तु जातिलक्षणो ङीष् एव भवति। नागी। काली भवति, वर्णश्चेत्। काला अन्या। नीली भवति, अनाच्छादनं चेत्। नीला अन्या। न च सर्वस्मिन्ननाच्छादन इष्यते। [6]किं तर्हि? नीलादोषधौ प्राणिनि च (म.भा.२.२१६)। नीली ओषधिः। नीली गौः। नीली वडवा (म.भा.२.२१६)। सञ्ज्ञायां वा। नीली, नीला (म.भा.२.२१६)। कुशी भवति, अयोविकारश्चेत्। कुशा अन्या। कामुकी भवति, मैथुनेच्छा चेत्। कामुका अन्या। मैथुनेच्छावती भण्यते, नेच्छामात्रम्। कबरी भवति, केशवेशश्चेत्। कबरा अन्या॥

## शोणात् प्राचाम्। (४३/५०१)

शोणशब्दात् प्राचामाचार्याणां मतेन [7]स्त्रियां ङीष् प्रत्ययो भवति। शोणी, शोणा वडवा[8]॥

## वोतो गुणवचनात्। (४४/५०२)

गुणमुक्तवान् गुणवचनः। गुणवचनात् प्रातिपदिकाद् [9]उकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पट्वी, पटुः। मृद्वी, मृदुः। उतः इति किम्? शुचिरियं ब्राह्मणी। गुणवचनात् इति किम्? आखुः।

[३४८] [10]वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम्। (म.भा.२.२१७)

वस्वी।

[३४९] [11]खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः। (म.भा.२.२१७)

खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी।

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ (म.भा.२.२१७)

## बह्वादिभ्यश्च। (४५/५०३)

बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः [12]स्त्रियां वा ङीष् प्रत्ययो भवति। बह्वी, बहुः।

बहु। [13]पद्धति। [14]अङ्कति। [15]अञ्चति। अंहति। वंहति। शकटि। 'शक्तिः शस्त्रे' (ग.सू.४८)। [16]शारि। [17]वारि। [18]गति। अहि। कपि। मुनि। यष्टि। 'इतः प्राण्यङ्गात्' (ग.सू.४९)। 'कृदिकारादक्तिनः' (ग.सू.५०)। 'सर्वतोऽक्तिन्नर्थादित्येके' (ग.सू.५१)। [19]चण्ड। [20]अराल। कमल। कृपाण। विकट। विशाल। विशङ्कट। [21]भरुज। ध्वज। 'चन्द्रभागान्नद्याम्' (ग.सू.५२)। कल्याण। उदार। पुराण। अहन्। [22]बहुशब्दो गुणवचन एव। तस्येह पाठ उत्तरार्थः॥

1. उत्सादिषु इ. 2. पक्वेत्यर्थः नास्ति फ. 3. नागीशब्दः ह. 4. टापम् नास्ति फ, प्रयोजयति इत्यधिकम् क. 5. अगुणवचनात् तु क. ड. 6. कुत्र तर्हि इ. 7. स्त्रियां नास्ति फ. ह. 8. प्राचाम् इति किम् शोणा इत्यधिकम् ड. 9. उकारान्तात् प्रातिपदिकात् क. 10. वसुशब्दात् नास्ति ड. ह. 11. खरुसंयोगोपधप्रतिषेधः ह. 12. स्त्रियां नास्ति फ. 13. पद्धतिः पद्धती क. 14. नास्ति ड. 15. अङ्कन ड. 16. सति, शाधि क. 17. तारि ब. 18. गीति ब. 19. नास्ति फ, अङ्गुलि अंङ्गुली ड. इ. 20. मराल ब, मुराल फ. 21. भरद्वाज ब, भरुग क, भाव ड. भज इ. 22. बहुशब्दस्य गुणत्वात् पूर्वेणैव सिद्धे इह क. ड.

## नित्यं छन्दसि । (४६/३४४६)

बह्वादिभ्यः छन्दसि विषये नित्यं [1]स्त्रियां ङीष् प्रत्ययो भवति । बह्वीषु हित्वा [2]प्रपिबन् । बह्वी नाम ओषधी भवति । नित्यग्रहणमुत्तरार्थम् ॥

## भुवश्च । (४७/३४४७)

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति । '[3]विभ्वी च' (ऋ. ५.३८.१) । 'प्रभ्वी च' (ऋ. १.१८८.५) । [4]संभ्वी च । इह कस्मान् न भवति, स्वयम्भूः? उतः (४.१.४४/५०२) इति [5]तपरकरण-मनुवर्तते । ह्रस्वादेवेयं पञ्चमी । भुवः[6] इति सौत्रो निर्देशः ॥

## पुंयोगादाख्यायाम् । (४८/५०४)

[7]पुंसा योगः पुंयोगः । पुंयोगाद्धेतोर्यत् प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद्[8] ङीष् प्रत्ययो भवति । गणकस्य स्त्री गणकी । [9]महामात्री । प्रष्ठी । प्रचरी । पुंसि [10]शब्दप्रवृत्तिनिमित्तस्य [11]सम्भवात् पुंशब्दा एते, तद्योगात् स्त्रियां वर्तन्ते । पुंयोगात् इति किम् ? देवदत्ता । [12]यज्ञदत्ता । आख्याग्रहणात् किम् ? परिसृष्टा । [13]प्रजाता । पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते ।

[३५०] गोपालिकादीनां प्रतिषेधः[14] । (म. भा. २.२१७)

गोपालकस्य स्त्री गोपालिका[15] ।

[३५१] सूर्याद् देवतायां चाब् वक्तव्यः । (म. भा. २.२२०)

सूर्यस्य स्त्री देवता सूर्या । देवतायाम् इति किम् ? [16]सुरी ॥

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । (४९/५०७)

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक् चागमः । येषामत्र पुंयोग एव इष्यते, तेषाम् आनुगागममात्रं [17]विधीयते । प्रत्ययस्तु पूर्वेणैव सिद्धः । अन्येषां तूभयं[18] विधीयते । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी ।

[३५२] हिमारण्ययोर्महत्त्वे[19] । (म. भा. २.२२०)

महद्धिमं हिमानी । महदरण्यम् अरण्यानी ।

---

1. स्त्रियां नास्ति फ. 2. अविदन् ड. इ, प्रापिपन् ब, वपामपादिदम् ह. 3. बह्वीश्च फ. 4. नास्ति फ. ह, शंभ्वी च ब. क. इ. ड. 5. तपरत्वम् ड. ब. 6. धातोः इत्यधिकम् ब. 7. पुंसः क. 8. स्त्रियां इत्यधिकम् फ. 9. महामात्रस्त्री इत्यधिकम् फ. 10. प्रवृत्तिनिमित्तस्य ब. इ. 11. संभवत्पुंशब्दाः ब. 12. नास्ति फ. 13. प्रमाता फ. 14. वक्तव्यः इत्यधिकम् ह. 15. पशुपालिका इत्यधिकम् क. ड. फ. 16. सौरी ब, सुरी मानुषी ड. ह. 17. विधेयम् ह, आनङ्मात्रं विधीयते ब. 18. एव इत्यधिकम् ब. 19. महतोः ह.

[३५३] यवाद् दोषे। (म. भा. २.२२०)

दुष्टो यवः यवानी।

[३५४] यवनाल्लिप्याम्। (म. भा. २.२२०)

यवनानी लिपिः।

[३५५] उपाध्यायमातुलाभ्यां वा। (म. भा. २. २२०)

उपाध्यायानी, [1]उपाध्यायी। मातुलानी, मातुली।

[३५६] आचार्यादणत्वं च। (म. भा. २. २२०)

आचार्यानी, [2]आचार्या।

[३५७] अर्यक्षत्रियाभ्यां वा। (म. भा. २. २२०)

अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया। [3]विना पुंयोगेन स्वार्थ एवायं विधिः। पुंयोगे तु ङीषा एव भवितव्यम्। अर्यी। क्षत्रियी।

[३५८] [4]मुद्गलाच्छन्दसि लिच्च। (म. भा. २. २२०)

'रथीरभून्मुद्गलानी गविष्टौ' (ऋ. १०. १०२. २)॥

## क्रीतात् करणपूर्वात्। (५०/५०६)

करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम्। क्रीतशब्दान्तात् प्रातिपदिकात् [5]करणपूर्वात् स्त्रियां ङीष् प्रत्ययो भवति। [6]वस्त्रेण क्रीयते सा वस्त्रक्रीती। वसनक्रीती। करणपूर्वात् इति किम्? सुक्रीता। दुष्क्रीता। इह कस्मान्न भवति, सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी इति? टाबन्तेन समासः। अतः इति चानुवर्तते। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति बहुलं तदुच्यते, 'कर्तृकरणे कृता बहुलम्' (२. १. ३२/६९४) इति॥

## क्तादल्पाख्यायाम्। (५१/५०७)

करणपूर्वात् इत्येव। करणपूर्वात् प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति। अल्पाख्यायाम् इति समुदायोपाधिः। [7]अभ्रविलिप्ती द्यौः। सूपविलिप्ती पात्री। [8]अल्पसूपा इत्यर्थः। अल्पाख्यायाम् इति किम्? चन्दनानुलिप्ता ब्राह्मणी॥

---

1. नास्ति ह. 2. नास्ति ब. 3. विनापि ब. 4. मुद्गरवात् ह. 5. करणपूर्वात् नास्ति फ. 6. वस्त्रेण क्रीयते सा नास्ति क. फ. ब. 7. अभ्रलिप्ती अल्पाभ्रा। सूपलिप्ती ब. 8. वाक्यमिदं नास्ति फ.

## बहुव्रीहेश्चान्तोदात्तात् । (५२/५०८)

क्तात् इत्येव । बहुव्रीहिर्योऽन्तोदात्तः,[1] तस्मात् स्त्रियां ङीष् प्रत्ययो भवति । [2]स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम् । अस्वाङ्गपूर्वपदाद् (४.१.५३/५०९) विकल्पं वक्ष्यति । शङ्खभिन्नी । ऊरुभिन्नी । [3]गलकोत्कृत्ती । [4]केशलूनी । बहुव्रीहेः इति किम् ? पादपतिता ।

[३५९] अन्तोदात्ता[5]ज्जातप्रतिषेधः । (म. भा. २.२२१)

दन्तजाता । स्तनजाता ।

[३६०] पाणिगृहीत्यादीनामर्थविशेषे । (म. भा. २.२२१)

पाणिगृहीती भार्या । यस्यास्तु कथञ्चित् पाणिर्गृह्यते पाणिगृहीता सा भवति (म. भा. २.२२१) ।

[३६१] अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् । (म. भा. २.२२२)

बहुकृता । नञ् – अकृता । सु – सुकृता । काल – मासजाता । संवत्सरजाता । [6]सुखादि – सुखजाता । दुःखजाता । 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' (६.२.१७०/३९०४) [7]इत्येवमादिना बहुव्रीहेरन्तोदात्तत्वम् ॥

## अस्वाङ्गपूर्वपदाद् वा । (५३/५०९)

अन्तोदात्तात् क्तात् इति अनुवर्तते । अस्वाङ्गपूर्वपदाद् अन्तोदात्तात् क्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति । पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । शार्ङ्गजग्धी, शार्ङ्गजग्धा । पलाण्डुभक्षिती, पलाण्डुभक्षिता । सुरापीती, सुरापीता । अस्वाङ्गपूर्वपदात् इति किम् ? शङ्खभिन्नी । ऊरुभिन्नी । अन्तोदात्तात् इत्येव, वस्त्रच्छन्ना । वसनच्छन्ना ।

[३६२] बहुलं सञ्ज्ञाछन्दसोरिति वक्तव्यम् ।

[8]प्रवृद्धविलूनी, प्रवृद्धविलूना । प्रवृद्धा चासौ विलूना च इति । नायं बहुव्रीहिः ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । (५४/५१०)

बहुव्रीहेः क्तान्तादन्तोदात्तात् इति सर्वं निवृत्तम् । वाग्रहणमनुवर्तते । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति । चन्द्रमुखी, चन्द्रमुखा । अतिक्रान्ता केशान् अतिकेशी,[9] अतिकेशा माला (म. भा. २.२२३) । स्वाङ्गात् इति किम् ? बहुयवा । उपसर्जनात् इति किम् ? [10]अशिखा । असंयोगोपधात् इति किम् ? [11]सुगुल्फा । [12]सुपार्श्वा ।

---

1. क्तान्तः इत्यधिकम् इ. क. ड. ह. 2. स्वाङ्गपूर्वः इहोदाहरणम् ह. 3. गलबालान्नी इ, गलोत्कृत्ती ब. 4. केशविलूनी क. 5. जात नास्ति फ. 6. सुखादीनाम् फ. 7. इत्यादिना फ. ब. 8. वृद्धविलूनी, वृद्धविलूना फ. 9. इति तत्पुरुषः इत्यधिकम् क. ड. 10. आशिला ब, बहुशिखा क, सुशिखा ड. 11. अगुल्फा ह. 12. नास्ति ब, सुपर्वा, अङ्गपार्श्वा ह.

[३६३] अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् । (म. भा. २. २२२)

[1]मृद्वङ्गी, मृद्वङ्गा । [2]सुगात्री, सुगात्रा । स्निग्धकण्ठी, स्निग्धकण्ठा ।

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् ।

अतत्स्थं तत्र दृष्टं चेत् तेन चेत्तत्तथायुतम् ॥ (म. भा. २. २२२)

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । (५५/५११)

स्वाङ्गाच्चोपसर्जनात् इत्येव । बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम् । सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव । नासिकाद्यन्तात् प्रातिपदिकात् स्त्रियां [3]वा ङीष् प्रत्ययो भवति । तुङ्गनासिकी, तुङ्गनासिका । [4]तिलोदरी, तिलोदरा । बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती, समदन्ता । चारुकर्णी, चारुकर्णा । तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा ।

[३६४] पुच्छाच्चेति वक्तव्यम् ।

कल्याणपुच्छी, कल्याणपुच्छा ।

[४६५] कबरमणिविषशरेभ्यो नित्यम् । (म. भा. २.२२४)

कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ।

[३६६] उपमानात् पक्षाच्च [5]पुच्छात् च । (म. भा. २. २२४)

उलूकपक्षी[6]सेना । उलूकपुच्छी [7]शाला ॥

## न क्रोडादिबह्वचः । (५६/५१२)

स्वाङ्गात् इति ङीष् प्राप्तः प्रतिषिध्यते । क्रोडाद्यन्तात् बह्वजन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । कल्याणक्रोडा । [8]कल्याणखुरा । कल्याणोखा । कल्याणबाला । कल्याणशफा । [9]कल्याणगुदा । कल्याणघोणा । कल्याणनखा । [10]कल्याणमुखा । क्रोडादिराकृतिगणः । [11]सुभगा । सुगला । बह्वचः खल्वपि – पृथुजघना । महाललाटा ॥

## सहनञ्विद्यमानपूर्वाच्च । (५७/५१३)

स्वाङ्गाच्चोपसर्जनात् (४.१.५४/५१०) इति[12], 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च' (४.१.५५/५११) इति च प्राप्तो ङीष् प्रतिषिध्यते । सह नञ् विद्यमान [13]एवंपूर्वात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति । सकेशा । अकेशा । विद्यमानकेशा । सनासिका । अनासिका । विद्यमाननासिका[14] ॥

---

उदाहरणमिदं नास्ति ब. 2. मृदुगात्री ड. ह. 3. वा नास्ति फ. 4. तलोदरी, तलोदरा ब. फ. ड. 5. पुच्छाच्च नास्ति फ. 6. शाला फ. 7. सेना क. फ. 8. कल्याणगुल्फा ब. क. ड. इ, कल्याणशिखा ड, कल्याणवाचा ह. 9. कल्याणगुहा ड, कल्याणभुजा ह. 10. नास्ति क. 11. दुर्भगा इ. क. ह. 12. प्राप्तः इत्यधिकम् क. फ. 13. इत्येवंपूर्वात् ब. 14. गोस्त्रियोपसर्जनस्य इति स्त्रीत्वे कृते इति टाप् इत्यधिकम् फ.

## नखमुखात् सञ्ज्ञायाम् । (५८/५१४)

[1]नखमुखान्तात् प्रातिपादिकात् सञ्ज्ञायाम् विषये [2]स्त्रियां ङीष् प्रत्ययो न भवति । शूर्पणखा । [3]वज्रणखा । गौरमुखा । [4]कालमुखा । सञ्ज्ञायाम् इति किम् ? [5]ताम्रनखी कन्या । [6]चन्द्रमुखी ॥

## दीर्घजिह्वी च च्छन्दसि । (५९/३४४८)

दीर्घजिह्वी इति छन्दसि विषये निपात्यते । संयोगोपधत्वादप्राप्तो ङीष् [7]विधीयते । 'दीर्घजिह्वी वै देवानां हव्यमवालेट्' (मै. सं. ३.१०.६) । चकारः सञ्ज्ञानुकर्षणार्थः । दीर्घजिह्वी इति निपातनं नित्यार्थम्[8] ॥

## दिक्पूर्वपदान् ङीप् । (६०/५१५)

स्वाङ्गाच्चोपसर्जनात् (४.१.५४/५१०) इत्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते । यत्र ङीष् विहितस्तत्र तदपवादः । दिक्पूर्वपदात् प्रातिपदिकात् [9]ङीप् प्रत्ययो[10] भवति । स्वरे विशेषः । प्राङ्मुखी, प्राङ्मुखा । प्राङ्नासिकी, प्राङ्नासिका । इह न भवति, प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघना इति ॥

## वाहः । (६१/५१६)

ङीषेव [11]स्वर्यते, न ङीप् । वहेरयं ण्विप्रत्ययान्तस्य निर्देशः । सामर्थ्यात् [12]तदन्तनिर्धेविज्ञानम् । वाहन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति । 'दित्यौही' (तै. सं. ४.७.१०.१) । प्रष्ठौही ॥

## सख्यशिश्वीति भाषायाम् । (६२/५१७)

सखी अशिश्वी इत्येतौ शब्दौ [13]ङीषन्तौ भाषायां निपात्येते । [14]सखीयं मे ब्राह्मणी । नास्याः शिशुरस्ति इति अशिश्वी । भाषायाम् इति किम् ? 'सखा [15]सप्तपदी भव' (आ.गृ. १.७.१९) । [16]अशिशुमिव मामयं शिशुरभिमन्यते ॥

## जातेरस्त्रीविषयादयोपधात् । (६३/५१८)

जातिवाचि यत् प्रातिपदिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च तस्मात् स्त्रियां ङीष् प्रत्ययो भवति ।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ (म. भा. २.२२५)

---

1. नखमुखशब्दान्तात् ग. 2. स्त्रियां नास्ति फ. 3. वज्रमुखा इ, उष्ट्रमुखा क. 4. काण्डमुखा फ. 5. ताम्रमुखी ब.इ. 6. नास्ति फ, गौरमुखी कन्या ड, चण्डमुखी इ. 7. एव इत्यधिकम् फ. 8. दीर्घजिह्वा अन्या इत्यधिकम् ब.क.ड. 9. स्त्रियाम् इत्यधिकम् क. ड. फ. 10. वा इत्यधिकम् क. ब. 11. स्मर्यते फ. 12. तदन्तविधिविज्ञानम् ड. 13. ङीष्प्रत्ययान्तौ फ, ङीषन्तौ भाषायां विषये ड. 14. सखी मे फ. ह. 14. सप्तपदा ग.फ. 15. अशिशुरिव क.इ.फ, अशिशुमिव मातरं शरारुरभिमन्यते ड.

कुक्कुटी। सूकरी[1]। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेः इति किम्? मुण्डा। अस्त्रीविषयात् इति किम्? [2]मक्षिका। अयोपधात् इति किम्? [3]क्षत्रिया।

[३६७] योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः। (म.भा.२.२२६)

हयी। गवयी। मुकयी। मत्सी। मनुषी॥

## पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च। (६४/५१९)

पाकाद्युत्तरपदात् [4]जातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली। पुष्पफल मूलोत्तरपदात्तु यतो नेष्यते तदजादिषु पठ्यते, 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्' (ग.सू.५३), 'सम्भस्त्राजिन-शणपिण्डेभ्यः फलात्' (ग.सू.५४), 'मूलान्नञः' (ग.सू.५५) इति[5]॥

## इतो मनुष्यजातेः। (६५/५२०)

इकारान्तात् प्रातिपदिकात् मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति। अवन्ती। कुन्ती। दाक्षी। प्लाक्षी। इतः इति किम्? [6]विट्। दरत्। मनुष्यग्रहणं किम्? [7]तित्तिरिः। जातेः इति वर्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात्। [8]औदमेयी (म.भा.२.२२६)।

[३६८] इञ उपसङ्ख्यानमजात्यर्थम्। (म.भा.२.२२६)

सौतङ्गमी। मौनचित्ती। सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः॥

## ऊङुतः। (६६/५२१)

मनुष्यजातेः इति वर्तते। उकारान्तात् मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियाम् ऊङ् प्रत्ययो भवति। कुरूः। ब्रह्मबन्धूः। [9]वीरबन्धूः। ङकारो 'नोङधात्वोः' (६.१.१७५/३७२१) इति विशेषणार्थः। दीर्घो-च्चारणं कपो बाधनार्थम्। अयोपधात् इत्येतदत्रापेक्ष्यते। अध्वर्युर्ब्राह्मणी।

[३६९] अप्राणिजातेश्चारज्ज्वादीनाम्[10] इति वक्तव्यम्। (म.भा.२.२२६)

अलाबूः। कर्कन्धूः। अप्राणिग्रहणं किम्? कृकवाकुः। अरज्ज्वादीनाम् इति किम्? [11]रज्जुः। हनुः॥

## बाह्वन्तात् सञ्ज्ञायाम्। (६७/५२२)

बाहुशब्दान्तात् प्रातिपदिकात् सञ्ज्ञायां विषये स्त्रियाम् ऊङ् प्रत्ययो भवति। [12]भद्रबाहूः। [13]जालबाहूः। सञ्ज्ञायाम् इति किम्? वृत्तौ बाहू[14]अस्याः वृत्तबाहुः॥

---

1. मयूरी इत्यधिकम् न्या. 2. बलाका इ. ब. क. ड, पिपीलिका ह. 3. वेश्या क, इभ्या फ. ह. 4. जातिवचनात् ह. 5. जातेरित्येव इत्यधिकम् इ.क.ड.ह. 6. इट् क. 7. तित्तिरिरियम् ह. 8. उदमेयस्य अपत्यं इत्यधिकम् ग, औदनेमी ब. 9. नास्ति फ, जीवबन्धूः ब. क. 10. उपसर्जनम् इत्यधिकम् फ. 11. तनुः क. 12. भद्र–वृत्तबाहुः नास्ति ब, मद्रबाहूः ड. ह, स्थूलबाहूः क. 13. नास्ति फ. 14. यस्याः ड, यस्याः सा क.

**पङ्गोश्च ।** (६८/५२३)

पङ्गुशब्दात् स्त्रियाम् ऊङ प्रत्ययो भवति । पङ्गूः ।

[३७०] श्वशुरस्योकाराकारलोपश्च वक्तव्यः ।

श्वश्रूः ॥

**ऊरूत्तरपदादौपम्ये ।** (६९/५२४)

ऊरूत्तरपदात् प्रातिपदिकात् औपम्ये गम्यमाने स्त्रियाम् ऊङ प्रत्ययो भवति । कदलीस्तम्भोरूः । नागनासोरूः । करभोरूः । औपम्ये इति किम्? [1]वृत्तोरुः स्त्री ॥

**संहितशफलक्षणवामादेश्च ।** (७०/५२५)

संहित शफ लक्षण [2]वाम इत्येवमादेः प्रातिपदिकाद् ऊरूत्तरपदात् स्त्रियामूङ प्रत्ययो भवति । अनौपम्यार्थ आरम्भः । संहितोरूः । [3]शफोरूः । लक्षणोरूः । वामोरूः ।

[३७१] सहितसहाभ्यां चेति वक्तव्यम् । (म. भा. २. २२७)

सहितोरूः । सहोरूः ॥

**कद्रुकमण्डल्वोश्छन्दसि ।** (७१/३४४९)

कद्रुशब्दात् कमण्डलुशब्दाच् च छन्दसि विषये [4]स्त्रियाम् ऊङ प्रत्ययो भवति । 'कद्रूश्च वै सुपर्णी च' (तै. सं. ६.१.६) । मा स्म कमण्डलूं शूद्राय दद्यात् । छन्दसि इति किम्? कद्रुः । कमण्डलुः (म. भा. २.२२७) ।

[३७२] गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् । (म. भा. २. २२७)

'गुग्गुलूः' (अ. ४. ३७. ३) । 'मधूः' (अ. ७. ५६. २) । 'जतूः' (मै. ३. १४. ६) । 'पतयालूः' (अ. ७. ११५. २) ॥

**सञ्ज्ञायाम् ।** (७२/५२६)

कद्रुकमण्डलुशब्दाभ्यां सञ्ज्ञायां विषये स्त्रियाम् ऊङ प्रत्ययो भवति । अच्छन्दोर्थं वचनम् । कद्रूः । कमण्डलूः । [5]सञ्ज्ञायाम् इति किम् ? कद्रुः । कमण्डलुः ॥

---

1. वृत्तोरूः फ. 2. वाम नास्ति फ. 3. शफोरूः नास्ति ब. 4. स्त्रियाम् नास्ति फ. 5. वाक्यमिदं नास्ति ड. फ.

## शार्ङ्गरवाद्यञो ङीन्। (७३/५२७)

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति। शार्ङ्गरवी। कापटवी। अञन्तेभ्यः – बैदी। और्वी। जातिग्रहणम्[1]त्रानुवर्तते। तेन जातिलक्षणो ङीष् अनेन बाध्यते, न पुंयोगलक्षणः, बैदस्य स्त्री बैदी।

शार्ङ्गरव। कापटव। [2]गौगुलव। ब्राह्मण। गौतम। एतेऽणन्ताः। कामण्डलेय। ब्राह्मकृतेय। [3]आनिचेय। आनिधेय। आशोकेय। एते ढगन्ता। वात्स्यायन। मौञ्जायन। एतौ फगन्तौ जातिः। [4]कैकसेयो ढगन्तः। [5]काव्यशैव्यौ यञन्तौ। एहि, पर्येहि कृदिकारान्तौ। [6]आश्मरथ्यो यञन्तः। औदपानः। [7]उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति। अराल। चण्डाल। वतण्ड[8]। जातिः। [9]भोगवद्गौरिमतोः सञ्ज्ञायाम् घादिषु नित्यं [10]ह्रस्वार्थम्' (ग. सू. ५६)। 'नृनरयो[11]र्वृद्धिश्च' (ग. सू. ५७)। अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन् विधीयते॥

## यङश्चाप्। (७४/५२८)

यङन्तात् प्रातिपदिकात् स्त्रियां चाप् प्रत्ययो भवति। ञ्यङः ष्यङश्च सामान्यग्रहणमेतत्। आम्बष्ठ्या। सौवीर्या। [12]कौसल्या। [13]ष्यङ – कारीषगन्ध्या। वाराह्या। बालाक्या।

[३७३] षाच्च यञः। (म. भा. २.२२८)

षात् परो यो यञ् तदन्ताच् चाप् वक्तव्यः। [14]शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन [15]वा भविष्यति॥

## आवट्याच्च। (७५/५२९)

अवटशब्दो [16]गर्गादिः, तस्माद् यञि कृते ङीपि प्राप्ते वचनमेतत्। आवट्याच्च स्त्रियां चाप् प्रत्ययो भवति। आवट्या। प्राचां [17]ष्फ एव, सर्वत्रग्रहणात्। आवट्यायनी॥

## तद्धिताः। (७६/५३०)

अधिकारोऽयम्। आपञ्चमाध्यायपरिसमाप्तेः यानित ऊर्ध्वमनुक्रमिष्यामः तद्धितसञ्ज्ञास्ते वेदितव्याः। वक्ष्यति, 'यूनस्तिः' (४.१.७७/५३१) – युवतिः। बहुवचनमनुक्ततद्धितपरिग्रहार्थम्। 'पृथिव्या ञाञौ' (४.१.८५/१०७७ वा.), 'अग्रादिपश्चाड् डिमच्' (४.३.२३/१३९१ वा.) इत्येवमादि लब्धं भवति। तद्धितप्रदेशाः – 'कृत्तद्धितसमासाश्च' (१.२.४६/१७९) इत्येवमादयः॥

---

1. अत्र चेहानुवर्तते ई. क. ह, चेत्यनुवर्तते इ. 2. गौग्गुलव इ. ब. क. ड. ई, शेयगव ह. 3. आतिथेय ड. 4. कैशौकसेयः क, कैकयः ड, कैसेय ह. 5. काव्यशेत्यौ क, काव्यशैब्यौ ङचन्तौ ई. ड. 6. आमरथ्य ह. 7. उदपानशब्दः नास्ति ब. ड. क. ई. ह. 8. वतण्डाजातिः ब. 9. भोजवत् ब, भोगवद् भूरिमतोः क.: 10. ह्रस्वार्थे ई. ब, ह्रस्वार्थं वचनम् ड. 11. वृद्धित्वं ह. 12. नास्ति ह, कौशल्या ड. 13. ष्यङः ब. फ. ई 14. शाकुराक्ष्या ह, शार्कराख्या क. 15. च अप् क. ड. ह. 16. गर्गादिषु पठ्यते क. ड. 17. तु इत्यधिकम् इ. ब. क. ड. ई.

## यूनस्तिः । (७७/७३१)

युवन्शब्दात् प्रातिपदिकात् स्त्रियां तिः प्रत्ययो भवति । स च तद्धितसञ्ज्ञो भवति । ङीपोऽपवादः । युवतिः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे । (७८/११०८)

गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः[1] प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङ आदेशो भवति । 'निर्दिश्यमानस्यादेशा भवन्ति' (व्या.प. १०६) इत्यणिञोरेव[2] विज्ञायते, न तु समुदायस्य । ङकारः [3]सामान्यग्रहणार्थः । षकारस्तदविघातार्थः, 'यङश्चाप्' (४.१.७४/५२८) इति । उत्तमशब्दः स्वभावात् त्रिप्रभृतीना-[4]मन्त्यमक्षरमाह । उत्तमस्य समीपम् उपोत्तमम् । गुरु उपोत्तमं यस्य तद् गुरूपोत्तमं प्रातिपदिकम् । करीषस्येव गन्धोऽस्य करीषगन्धिः । [5]कुमुदगन्धिः । 'तस्यापत्यम्' (४.१.९२/१०८८) इत्यण् । तस्य ष्यङ आदेशः । कारीषगन्ध्या । कौमुदगन्ध्या । [6]वराहस्यापत्यम् । 'अत इञ्' (४.१.९५/१०९५) । वाराहिः । तस्य ष्यङ आदेशः । वाराह्या । बालाक्या । अणिञोः इति किम्? [7]ऋतभागस्यापत्यं, बिदादित्वादञ्, [8]आर्तभागी । [9]गुरूपोत्तमादिकं सर्वमस्ति इति न त्वणिञौ । [10]टिड्ढाणञ् (४.१.१५/४७०) इति ङीबेव भवति । अनार्षयोः इति किम्? वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः इति किम्? औपगवी । कापटवी । गोत्रे इति किम्? [11]तत्र जाताः (४.३.२५/१३९३)–आहिच्छत्री । कान्यकुब्जी ॥

## गोत्रावयवात् । (७९/११९९)

अणिञोः इत्येव । गोत्रावयवाः [12]गोत्राभिमताः कुलाख्याः पुणिक[13]भुणिकमुखरप्रभृतयः । ततो गोत्रे विहितयोरणिञोः [14]स्त्रियां ष्यङ आदेशो भवति । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । [15]भौणिक्या । मौखर्या । [16]येषां त्वनन्तरापत्येऽपि [17]इष्यते दैवदत्त्या, याज्ञदत्त्या इति, ते क्रौड्यादिषु द्रष्टव्याः ॥

## क्रौड्यादिभ्यश्च । (८०/१२००)

क्रौडि इत्येवमादिभ्यश्च स्त्रियां [18]ष्यङ प्रत्ययो भवति । अगुरूपोत्तमार्थ आरम्भः । अनणिजर्थश्च । क्रौड्या । लाड्या[19] ।

क्रौडि । लाडि । व्याडि । आपिशलि । [20]आपक्षिति । [21]चौपयत । [22]चैटयत । शैकयत । बैल्वयत । वैकल्पयत । सौधातकि । 'सूत युवत्याम्' (ग.सू. ५८) । 'भोज क्षत्रिये' (ग. सू. ५९) भौरिकि । [23]भौलिकि । [24]शाल्मकि । [25]शालास्थलि । कापिष्ठलि । गौलक्ष्य । गौकक्ष्य ॥

---

1. अनृषिवाचकयोः इत्यधिकम् इ. 2. आदेशो इत्यधिकम् क.ड. 3. समानग्रहणार्थः क. 4. अन्त्यमाह ब. 5. नास्ति फ, कुमुदस्येव गन्धः यस्य इत्यधिकम् इ.क.ड, कौमुदगन्धिः क. 6. वाराहस्य क. 7. ऋतभगस्य इ. 8. आर्तभागः इ. 9. गुरूपोत्तमादिः ब. 10. 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनेव भवति न्या.पं.म. । 11. तत्र जाता नास्ति फ. 12. अप्रधान इत्यधिकम् ड. 13. हणिक ह. 14. स्त्रियां नास्ति फ. 15. भौणिक्याः द्रष्टव्याः फ, हौणिक्या क. 16. ये तु ह. 17. इष्यन्ते ह. 18. ष्यन् ह. 19. लौड्या फ. 20. अविक्षिति फ, अपिक्षति ब, अपक्षिति ह. 21. चौषयत वौषयत चैकयत क. 22. दैगयत सैकयत फ, बैटयत सैकयत वैकल्यवत ब.ड, वैकलयत इ. 23. भौलिकि नास्ति ह. 24. शालालि ड. 25. शालास्थलिका फ.

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्। (८१/१२०१)

दैवयज्ञि शौचिवृक्षि सात्यमुग्रि काण्ठेविद्धि [1]इत्येतेषामन्यतरस्यां ष्यङ प्रत्ययो भवति। इञन्ता एते, गोत्रग्रहणं [2]च नानुवर्तते। तेनोभयत्रविभाषेयम्। गोत्रे पूर्वेण[3] ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे [4]त्वनन्तरेऽपत्ये पक्षे विधीयते। तेन मुक्ते 'इतो मनुष्यजातेः' (४.१.६५/५२०) इति ङीषेव भवति। दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी[5]॥

## समर्थानां प्रथमाद्वा। (८२/१०७२)

त्रयमप्यधिक्रियते समर्थानाम् इति [6]च, प्रथमाद् इति च, वा इति च। स्वार्थिकप्रत्ययावधिश्चायमधिकारः, 'प्राग्दिशो विभक्तिः' (५.३.१/१९४७) इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति, विकल्पोऽपि तत्रानवस्थितः। केचिन्नित्यमेव भवन्ति। लक्षणवाक्यानि 'तस्यापत्यम्' (४.१.९२/१०८८), 'तेन रक्तं [7]रागात्' (४.२.१/१२०२)' 'तत्र भवः' (४.३.५३/१४२८) इत्येवमादीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवति इति वेदितव्यम्। समर्थानाम् इति निर्धारणे षष्ठी। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यते। तस्य इति सामान्य[8] विशेषलक्षणार्थम्। तदीयं प्राथम्यं विशेषाणां विज्ञायते। उपगोः अपत्यम् औपगवः[9]। समर्थानाम् इति किम्? कम्बल उपगोः, अपत्यं देवदत्तस्य। प्रथमात् इति किम्? षष्ठ्यन्ताद् यथा स्यात्, प्रथमान्तान्मा भूत्। [10]वा इति किम्? वाक्यमपि यथा स्यात् उपगोरपत्यम् इति। यद्येवं समासवृत्तिः तद्धितवृत्त्या [11]बाध्येत उपग्वपत्यम् इति। नैष दोषः। पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्तते। तेनैतदपि भविष्यति॥

## प्राग्दीव्यतोऽण्। (८३/१०७३)

तेन दीव्यति (४.४.२/१५५०) इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दो अवधित्वेन गृह्यते। प्राग्–दीव्यत्संशब्दनाद् [12]यानित ऊर्ध्वमनुक्रमिष्यामः, अण् प्रत्ययस्तत्र भवति इति वेदितव्यम्। अधिकारः, परिभाषा, विधिर्वा [13]इति त्रिष्वपि दर्शनेष्व[14]पवादविषयं परिहृत्य अण् प्रवर्तते। वक्ष्यति, 'तस्यापत्यम्' (४.१.९२/१०८८) – औपगवः। कापटवः॥

## अश्वपत्यादिभ्यश्च। (८४/१०७४)

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेषु अण् प्रत्ययो भवति। पत्युत्तरपदाद् ण्यं वक्ष्यति, [15]तस्यापवादः। आश्वपतम्। [16]शातपतम्।

अश्वपति। [17]शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। [18]धान्यपति। [19]पशुपति। धर्मपति। [20]सभापति। प्राणपति। क्षेत्रपति॥

---

1. इत्येतेभ्यः ग. फ. 2. च नास्ति ब.ह, चानुवर्तते क. इ. 3. नित्यं इत्यधिकम् ह. 4. त्वनन्तरापत्ये क. ह, अपत्ये नास्ति ब. फ. 5. पूर्णः स्त्र्यधिकारः इत्यधिकम् अ. 6. च नास्ति ई. 7. रागात् नास्ति ब.ड. 8. विशेषाणां ब. ई. ड. ह, विशेषाणां विशेषणं क. 9. कापटवः इत्यधिकम् ह. 10. वाग्रहणम् ब. फ. ह. 11. बाध्यते अ. ब. 12. यदित ब. क.ड.इ. 13. इत्ययं त्रिष्वपि विषयेषु क, इत्ययं क.इ. 14. अपवाद–विषयः अण् ह. 15. तस्यायमपवादः फ. 16. धानपतम् फ, आश्वपतः शातपतः ह, नास्ति ड. 17. स्थानपति यज्ञपति ड. 18. नास्ति फ. 19. बन्धुपति फ. ई. 20. नास्ति फ, शणपति ई.

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । (८५/१०७७)

प्राग्दीव्यतः इत्येव । दिति अदिति आदित्य इत्येतेभ्यः, पत्युत्तरपदात् च प्रातिपदिकात् प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति । दैत्यः । [1]आदित्यः । [2]आदित्यम् । पत्युत्तरपदात् – प्राजापत्यम् । सैनापत्यम् ।

[३७४] यमाच्चेति वक्तव्यम् ।

याम्यम् ।

[३७५] वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् । (म. भा. २. २३६)

'वाच्यः' (वा. सं १३. ५८) । 'मात्या' (मै.सं. २.१७.१९) । 'पैतृमत्यम्' (वा.सं. ७. ४६) ।

[३७६] पृथिव्या ञाञौ । (म. भा. २. २३६)

'[3]पार्थिवा' (ऋ. १. ६४. ३) । 'पार्थिवी' (पै. १६. ४६. ३) ।

[३७७] देवाद् यञञौ । (म. भा. २. २३६)

'दैव्यम्' (ऋ. १. ३१. १७) । 'दैवम्' (पै. १.३१.४)

[३७८] बहिषष्टिलोपश्च । (म. भा. २. २३६)

'बाह्याः' (अ. १९. ४४. ६) ।

[३७९] ईकक् च । (म. भा. २. २३६)

बाहीकः ।

[३८०] ईकञ् छन्दसि । (म. भा. २. २३६)

[4]बाहीकः । स्वरे विशेषः । टिलोपवचनमव्ययानां भमात्रे टिलोपस्य अनित्यत्वज्ञापनार्थम् । आरातीयः[5] ।

[३८१] स्थाम्नोऽकारः । (म. भा. २. २३७)

अश्वत्थामः ।

[३८२] लोम्नो[6]ऽपत्येषु बहुषु । (म. भा. २. २३७)

उडुलोमाः । [7]शरलोमाः । बहुषु इति किम् ? औडुलोमिः । शारलोमिः ।

[३८३] सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्[8] । (म. भा. २. २३७)

गव्यम् । अजादिप्रत्ययप्रसङ्गे इति किम् ? गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ।

[३८४] ण्यादयोऽर्थविशेषलक्षणादपवादात् पूर्वविप्रतिषेधेन । (म. भा. २. २३७)

दितेरपत्यं दैत्यः । वनस्पतीनां समूहः वानस्पत्यम् (म. भा. २. २३७) । कथं दैतेयः[9] ? दितिशब्दात् 'कृदिकारादक्तिनः' (ग. सू. ५०), '[10]सर्वतोऽक्तिन्नर्थाद् इत्येके' (ग. सू. ५१) इति ङीषं कृत्वा स्त्रीभ्यो ढक् (४. १. १२०/११२३) क्रियते । लिङ्गविशिष्टपरिभाषा चानित्या[11] ॥

---

1. आदित्यस्य अपत्यं इत्यधिकम् फ. ह. 2. नास्ति ड. फ. 3. नास्ति ह. 4. बाहीकम् फ. 5. शाश्वतीयः इत्यधिकम् ह. 6. अपत्ये क. ड. ई. 7. नास्ति फ. 8. वक्तव्यः इत्यधिकम् क. फ. 9. इति इत्यधिकम् फ. 10. सर्वतः नास्ति ह, क्तिन्नर्थात् नास्ति ड.फ. 11. विधानसामर्थ्यादिव टिलोपः इत्यधिकम् क.

## उत्सादिभ्योऽञ्। (८६/१०७८)

प्रागदीव्यतः इत्येव। उत्सादिभ्यः[1] प्राग्दीव्यतीयेषु अर्थेषु अञ् प्रत्ययो भवति। अणस्तदपवादानां च बाधकः। औत्सः। औदपानः।

[2]उत्स। उदपान। विकर। विनोद। महानद। महानस। महाप्राण। तरुण। तलुन। 'बष्कयाऽसे' (ग. सू. ६०)। धेनु। [3]पृथिवी। पङ्क्ति। जगती। त्रिष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। [4]'उदस्थानात् देशे' (ग.सू. ६१)। '[5]पृषदंशे' (ग.सू. ६२)। [6]भल्लकीय। रथन्तर। मध्यन्दिन। बृहत्। महत्। सत्वन्तु। सच्छब्दो मतुबन्त [7]आगतनुङ्को गृह्यते [8]सत्वन्तु इति। कुरु। पञ्चाल। [9]इन्द्रावसान। उष्णिक्। ककुभ्। सुवर्ण। देव[10]। 'ग्रीष्माच्छन्दसीति वक्तव्यम्' (ग. सू. ६३)। इह मा भूत्। 'ग्रैष्मी त्रिष्टुप्' (काठ.सं. १६.१८)। छन्दश्चेह वृत्तं गृह्यते, न वेदः[11]॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। (८७/१०७९)

'धान्यानां [12]भवने क्षेत्रे खञ्' (५.२.१/१८०२) इति वक्ष्यति। तस्य प्राग् इत्यनेनैव सम्बन्धः। प्राग्भवनसंशब्दनाद् येऽर्था[13]स्तेषु स्त्रीशब्दात् पुंस्शब्दाच्च यथाक्रमं नञ्स्नञौ [14]प्रत्ययौ भवतः। स्त्रीषु भवं स्त्रैणम्। पौंस्नम्। स्त्रीणां समूहः स्त्रैणम्। पौंस्नम्। स्त्रीभ्य आगतं [15]स्त्रैणम्। पौंस्नम्। स्त्रीभ्यो हितं स्त्रैणम्। पौंस्नम्[16]। स्त्रियाः पुंवत् (६.३.३४/८३१) इति ज्ञापकाद् वत्यर्थे न भवति। योगापेक्षं च ज्ञापकम् इति स्त्रीवद् इत्यपि सिद्धम्॥

## द्विगोर्लुगनपत्ये। (८८/१०८०)

प्राग्दीव्यतः [17]इति वर्तते, न भवनात् इति। द्विगोः इति षष्ठी। द्विगोर्यः सम्बन्धी निमित्तत्वेन[18] तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग्भवति। पञ्चसु कपालेषु संस्कृतः[19] पञ्चकपालः। दशकपालः। द्वौ वेदावधीते द्विवेदः। त्रिवेदः[20]। अनपत्ये इति किम्? द्वैदेवदत्तिः। [21]त्रैदेवदत्तिः। [22]प्राग्दीव्यतः [23]इत्येव, [24]द्वैपारायणिकः। [25]द्विगुनिमित्तविज्ञानादिह न भवति, पञ्चकपालस्येदं पाञ्चकपालम्[26]। अथ वा द्विगोरेवायं लुग् विधीयते। द्विगोः इति स्थानषष्ठी। ननु च प्रत्ययादर्शनस्यैषा सञ्ज्ञा? सत्यमेतत्। उपचारेण तु [27]लक्षणया [28]द्विगुनिमित्तभूतः प्रत्यय एव द्विगुः[29], तस्य लुग् भवति। द्विगुनिमित्तकोऽपि तर्हि गुणकल्पनया कस्मान् न द्विगुरुच्यते पाञ्चकपालम् इति? न तस्य द्विगुत्वं निमित्तम्। इतरस्तु [30]द्विगुत्वस्यैव निमित्तम् इत्यस्ति विशेषः।

---

1. शब्देभ्यः इत्यधिकम् क. ड. फ, प्रातिपदिकेभ्यः इत्यधिकम् इ. ह. 2. उत्स विकार निनद ब. 3. नास्ति फ. 4. उदस्थानात् पृषदंशे क. 5. उष्णत्वं पृषदंश ह. 6. भाल्लकीय क. 7. आगतनुट्को इ. व. क. ई, आगतनुम्को ड, आगतनुट्कः परिगृह्यते ह. 8. सत्वन्त ब. 9. इन्द्र अपिसान ह. 10. इति उत्सादिः इत्यधिकम् ड. 11. छन्दसि इति इह न भवत्ति ग्रैष्मी भक्तिः इत्यधिकम् ह. 12. भवनं क. 13. तत्र फ. 14. प्रत्ययौ नास्ति इ. फ. 15. स्त्रैणम् पौंस्नम् नास्ति फ. 16. स्त्रीषु जातं स्त्रैणम् पौंस्नम् इत्यधिकम् ड. 17. इत्येव फ, प्राग्दीव्यतः – तस्य लुग् भवति नास्ति ग. 18. विवक्षितः इत्यधिकम् क. ड. फ. ह. 19. पुरोडाशः इत्यधिकम् फ. 20. चतुर्वेदः इत्यधिकम् इ. क. फ. 21. नास्ति फ. 22. वाक्यमिदं नास्ति ह. 23. इत्यनेन क. 24. द्वैपारायणः क. 25. द्विगुनिमित्तत्व° ई. 26. दाशकपालम् इति इत्यधिकम् इ. क. ड. फ. ई. 27. उपलक्षणया ह. 28. द्विगुनिमित्तः फ. 29. इत्युक्तः इत्यधिकम् ई. ड. फ. 30. द्विगुस्तस्यैव क.

यद्येवमिह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति? नैवात्र तद्धित उत्पद्यते। वाक्यमेव [1]भवति। त्रैशब्द्यं हि[2] साध्यं, पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति[3]। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः। अपरस्मादुत्पत्तिर्भविष्यति। अथेह कस्मान् न भवति, पञ्चभ्यो गर्गेभ्य आगतं पञ्चगर्गरूप्यम्, पञ्चगर्गमयम् इति? वा [4]इत्यनुवर्तते। सा च व्यवस्थितविभाषा [5]विज्ञायते ॥

## गोत्रेऽलुगचि। (८९/१०८१)

प्राग्दीव्यतः इत्येव। 'यस्कादिभ्यो गोत्रे' (२.४.६३/११४६) [6]इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तः, तेषामजादौ प्राग्दीव्यतीये[7] विषयभूते प्रतिषिध्यते। गर्गाणां छात्राः गार्गीयाः। वात्सीयाः। [8]आत्रेयीयाः। खारपायणीयाः। गोत्रे इति किम्? [9]कौबलम्। बादरम्। अचि इति किम्? गर्गेभ्य आगतम् गर्गरूप्यम्। गर्गमयम्। प्राग्दीव्यतः इत्येव, गर्गेभ्यो हितम् गार्गीयम्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् (म.भा. २.२४१)। बिदानामपत्यं युवा, [10]युवानौ बैदः, बैदौ। बैदशब्दात् अतः इञि (४.१.९५/१०९५) कृते तस्य च इञः 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२.४.५८/१२७६) इति लुकि [11]रूपम्। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि (म.भा. २.२४१), बैदस्य बैदयोर्वा अपत्यं[12] बहवो माणवकाः बिदाः। नह्यत्राञ् बहुषूत्पन्नः ॥

## यूनि लुक्। (९०/१०८३)

प्राग् दीव्यतः [13]इति वर्तते, अचि च। प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग् भवति। तस्मिन् निवृत्ते सति यो यतः प्राप्नोति स ततो भवति। फाण्टाहृतस्यापत्यं फाण्टाहृतिः। तस्यापत्यं युवा, 'फाण्टाहृतिमिमताभ्यां णफिञौ' (४.१.१५०/११७४)[14], फाण्टाहृतः। तस्य छात्राः इति[15] विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग्भवति। तस्मिन् निवृत्ते इञन्तं प्रकृतिरूपं सम्पन्नम्[16]। तस्मात् 'इञश्च' (४.२.११२/१३३३) इत्यण् [17]भवति, फाण्टाहृताः। भागवित्तस्यापत्यं भागवित्तिः। तस्यापत्यं युवा, 'वृद्धाट् ठक् सौवीरेषु बहुलम्' (४.१.१४८/११७२) इति ठक्, भागवित्तिकः। तस्य छात्राः, पूर्ववद् युवप्रत्यये निवृत्ते, [19]'इञश्च' (४.२.११२/१३३३) इत्यण्, भागवित्ताः। तिकस्यापत्यं, 'तिकादिभ्यः फिञ्' (४.१.१५४/११७८), तैकायनिः। तस्यापत्यं युवा, 'फेश्छ च' (४.१.१४९/११७३) इति छः, तैकायनीयः। तस्य छात्राः, युवप्रत्यये निवृत्ते 'वृद्धाच्छः' (४.२.११४/१३३७), तैकायनीयाः। कपिञ्जलादस्यापत्यं कापिञ्जलादिः। तस्यापत्यं युवा, 'कुर्वादिभ्यो ण्यः' (४.१.१५१/११७५), [20]कापिञ्जलाद्यः। तस्य छात्राः, ण्ये[21] निवृत्ते 'इञश्च' (४.२.११२/१३३३) इत्यण्, कापिञ्जलादाः। [22]ग्लुचुकस्यापत्यं, 'प्राचामवृद्धात् फिन् बहुलम्' (४.१.१६०/११८४) [23]इति ग्लुचुकायनिः। तस्यापत्यं युवा, 'प्राग्दीव्यतोऽण्' (४.१.८३/१०७३), ग्लौचुकायनः। तस्य छात्राः, युवप्रत्यये निवृत्ते स एवाण्, ग्लौचुकायनाः। अचि इत्येव, फाण्टाहृतरूप्यम्। फाण्टाहृतमयम्। प्राग्दीव्यतः (४.१.८३/१०७३) इत्येव, भागवित्तिकाय हितं भागवित्तिकीयम् ॥

---

1. तु इत्यधिकम् ह. 2. इह इत्यधिकम् ड, नः इत्यधिकम् ई.ब. 3. च इत्यधिकम् ई.ब. 4. इत्येवानुवर्तते ह. 5. भविष्यति फ, विज्ञास्यते ह. 6. इति प्रकरणेन इ.क.ड.ई.ग. 7. प्रत्यये इत्यधिकम् इ.क.फ.ई. 8. नास्ति ई.फ. 9. कुबलस्येदं कौबलम् ब.क.फ.ड.ई.ह, बकुलस्य इदं बाकुलम् इ. 10. युवानौ नास्ति ब. 11. कृते इत्यधिकम् फ.ड. 12. अपत्यानि इत्यधिकम् ड.ह. 13. इत्येव क.फ. 14. इति इत्यधिकम् ड. 15. छे विवक्षिते बुद्धिस्थे ह. 16. भवति इत्यधिकम् क.फ.ह. 17. भवति नास्ति ब.ह. 18. भगवित्तस्य इ.ब.क.ड.ह. 19. स एव क, अञ् ह, इञश्च इत्यण् नास्ति इ.ह. 20. कपिञ्जलाद्यः ब. 21. एव प्रत्यये इत्यधिकम् क. 22. ग्लुचुकायनस्य ह. 23. इति नास्ति फ, इति फिन् ह.

## फक्फिञोरन्यतरस्याम्। (९१/१०८७)

यूनि इत्येव। [1]पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते। फक्फिञोर्युवप्रत्यययोः प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग् भवति। गर्गादिभ्यो यञि (४.१.१०५/११०७) कृते 'यञिञोश्च' (४.१.१०१/११०३) इति [2]फक्, गार्ग्यायणः। [3]तस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः। वात्सीयाः, वात्स्यायनीयाः। फिञः खल्वपि-यस्कस्यापत्यं, 'शिवादिभ्योऽण्' (४.१.११२/१११५), यास्कः। तस्यापत्यं युवा, 'अणो द्व्यचः' (४.१.१५६/११८०) इति फिञ्, यास्कायनिः। तस्य छात्राः यास्कीयाः, यास्कायनीयाः[3]॥

## तस्यापत्यम्। (९२/१०८८)

अर्थनिर्देशोऽयं, पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बध्यते। तस्य इति षष्ठीसमर्थात् अपत्यम् इत्येतस्मिन्नर्थे यथा-विहितं प्रत्ययो भवति। [4]प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यमात्रञ्चेह गृह्यते। लिङ्गवचनादिकमन्यत् सर्वमविवक्षितम्। उपगोरपत्यम् औपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

तस्येदमपत्येऽपि बाधनार्थं [5]कृतं भवेत्।
उत्सर्गः शेष एवासौ [6]वृद्धान्यस्य प्रयोजनम् (म.भा. २.२४५)॥

भानोरपत्यम् भानवः। [7]श्यामगवः॥

## एको गोत्रे। (९३/१०९३)

'अपत्यं पौत्रप्रभृति गोत्रम्' (४.१.१६२/१०८९)। तस्मिन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रसङ्गे नियमः क्रियते, गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते। अपतनादपत्यम्[8]। योऽपि व्यवहितेन जनितः, सोऽपि [9]प्रथमप्रकृतेरपत्यं भवत्येव। गर्गस्यापत्यं गार्गिः। गार्गेरपत्यं गार्ग्यः। तत्पुत्रोऽपि गार्ग्यः। सर्वस्मिन् व्यवहितजनितेऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवति इति प्रत्ययो नियम्यते। अथवा गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययमुत्पादयति इति [10]प्रकृतिर्नियम्यते। गार्ग्यः। नाडायनः॥

## गोत्राद्यून्यस्त्रियाम्। (९४/१०९४)

अयमपि नियमः। यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति[11], न परमप्रकृत्यनन्तरयुवभ्यः। [12]गार्ग्यस्यापत्यं युवा गार्ग्यायणः। वात्स्यायनः[13]। दाक्षायणः। प्लाक्षायणः। औपगविः। नाडायनिः। अस्त्रियाम् इति किम्? दाक्षी। प्लाक्षी[14]। किं पुनरत्र प्रतिषिध्यते? यदि नियमः, स्त्रियामनियमः प्राप्नोति। अथ[15]युवप्रत्ययः, स्त्रियां गोत्रप्रत्ययेना[16]भिधानं न प्राप्नोति, गोत्रसञ्ज्ञायाः युवसञ्ज्ञया बाधितत्वात्। तस्माद् योगविभागः कर्तव्यः। गोत्राद् यूनि प्रत्ययो भवति। ततोऽस्त्रियाम्। यूनि यदुक्तं तत् स्त्रियां न भवति[17]। युवसञ्ज्ञैव प्रतिषिध्यते, तेन स्त्री गोत्रप्रत्ययेनाभिधास्यते॥

---

1. पूर्वेण नित्ये प्राप्ते इ.ब.क.ह. 2. यूनि इत्यधिकम् इ.क.ड. 3. वा इत्यधिकम् फ. 4. षष्ठ्यर्थः प्रकृत्यर्थविशिष्टं ब. इ. 5. कथं क. 6. वृद्धाद्यस्य क. 7. नास्ति फ. 8. इति इत्यधिकम् फ. 9. परम° ब. क. ड. फ. ई. 10. प्रकृतिः नास्ति ब. 11. अस्त्रियां विषये इत्यधिकम् फ. ब. ई. 12. गार्गस्य फ. 13. नाडायनः इत्यधिकम् फ. 14. नाडायनी इत्यधिकम् फ. 15. युवप्रत्ययप्रतिषेधः क. ड. 16. प्रतिषिध्यते ब. ई. फ. इ. 17. इति इत्यधिकम् क.

## अत इञ्। (९५/१०९५)

तस्यापत्यम् इत्येव। अकारान्तात् प्रातिपदिकात् इञ् प्रत्ययो भवति। अणोऽपवादः। दक्षस्यापत्यं दाक्षिः[1]। तपरकरणं किम्? शुभंयाः, कीलालपाः [2]इत्यतो मा भूत्। कथं 'प्रदीयतां दाशरथाय मैथिली' (वा.रा. युद्ध. ९.२२)[3]? [4]शेषविवक्षया भविष्यति॥

## बाह्वादिभ्यश्च। (९६/१०९६)

बाहु इत्येवमादिभ्यः शब्देभ्यो[5]ऽपत्ये इञ् प्रत्ययो भवति। बाहविः। [6]औपबाहविः। अनकारार्थ आरम्भः। क्वचिद् बाधकबाधनार्थः[7]।

बाहु। [8]उपबाहु। [9]विवाकु। [10]शिवाकु। [11]वटाकु। उपबिन्दु[12]। [13]वृक। चूडाला। मूषिका। [14]बलाका। भगला। [15]छगला। ध्रुवका। [16]धुवका। सुमित्रा। दुर्मित्रा। पुष्करसत्। [17]अनुहरत्। देवशर्मन्। अग्निशर्मन्[18]। कुनामन्। [19]सुनामन्। पञ्चन्। सप्तन्। अष्टन्। 'अमितौजसः सलोपश्च' (ग.सू. ६४)। उदञ्चु। शिरस्। [20]शराविन्। [21]क्षेमवृद्धिन्। [22]शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त। कृष्ण। [23]सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। [24]राम। '[25]उदङ्कः सञ्ज्ञायाम्' (ग. सू. ६५)। 'सम्भूयोऽम्भसोः सलोपश्च' (ग.सू. ६६)।

[३८५] बाह्वादिप्रभृतिषु [26]येषां दर्शनं [27]गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः। (म.भा. २.२५२)

बाहुर्नाम कश्चित्, तस्यापत्यं [28]बाहवः।

[३८६] सम्बन्धिशब्दानां च तत्सदृशात् प्रतिषेधः। (म.भा. २.२५२)

[29]सञ्ज्ञा – श्वशुरस्यापत्यं श्वाशुरिः[30]। चकारोऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति। [31]जाम्बिः। ऐन्द्रशर्मिः। [32]आजधेनविः। आजबन्धविः। [33]औडुलोमिः॥

## सुधातुरकङ् च। (९७/१०९७)

सुधातृशब्दादपत्ये इञ् प्रत्ययो भवति, तत्संनियोगेन च तस्याकङ आदेशो [34]भवति। सुधातुरपत्यम् सौधातकिः।

[३८७] व्यास[35]वरुडनिषादचण्डालबिम्बानामिति [36]वक्तव्यम्। (म.भा. २.२५३)

वैयासकिः। [37]वारुडकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः॥

---

1. प्लक्षस्य अपत्यं प्लाक्षिः इत्यधिकम् ब. क. ड. 2. इत्यत्र ह. 3. इति इत्यधिकम् ब. ड. इ. ह. 4. शेषविवक्षायामण् ब.ड.इ.ह. 5. अपत्यमित्येतस्मिन्नर्थे ड. 6. औपचाकलिः ह, औपचारविः क. 7. च इत्यधिकम् ब. 8. उपचाकुः ह. 9. निबाहुः ब, निचाकु ह, नास्ति ई. 10. नास्ति ह. 11. बिन्दु ब, चटाकु ह, बाटाकु क, उवाकु ई. 12. विद्युत् इत्यधिकम् ह, वृषली इत्यधिकम् फ. 13. चूडवृकला ब. ई, कृकला ह, वृकला क. 14. नास्ति ब. 15. प्रकला ह, कुशला क. 16. हरिबका ह, धूवका ई. 17. अनडुह् ह. 18. भद्रशर्मन् सुशर्मन् इत्यधिकम् ब. ई. 19. नास्ति ह. 20. माषशराविन् ब. ह. 21. सुभिक्ष ह. 22. शृङ्खलभेदिन् ह. 23. नास्ति ह. 24. संकर्षण ह. 25. उदकात् क.ह. 26. एषां ब. 27. गोत्राभावे ब. 28. बाहविः क. 29. सञ्ज्ञायाम् क. 30. राजश्वशुरादिति यन्न भवति इत्यधिकम् ब.ई. 31. जांघ्रिः क.ह.ई. 32. आजधेनवः ह, आजधेनिविः क. 33. नास्ति ब. 34. भवति नास्ति ब.ई. 35. वरूड ड. 36. उपसंख्यानम् क.ई. 37. वारूडकि ड. म.भा.

## गोत्रे कुञ्जादिभ्यश्च्फञ्। (९८/१०९९)

तस्यापत्यम् इत्येव। गोत्रसञ्ज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यः च्फञ् प्रत्ययो भवति। इञोऽपवादः। चकारो विशेषणार्थः 'व्रातच्फञोरस्त्रियाम्' (५.३.११३/११००) इति। ञकारो वृद्धयर्थः। कौञ्जायन्यः, कौञ्जायन्यौ, [1]कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः। गोत्रे इति किम्? कुञ्जस्यापत्यम[2]नन्तरं कौञ्जिः। [3]एकवचनद्विवचनयोः सतिशिष्टत्वात् ञित्स्वरेणैव भवितव्यम्। बहुवचने तु कौञ्जायनाः इति, [4]परमपि ञित्स्वरं [5]त्यक्त्वा चित्स्वर एवेष्यते। गोत्राधिकारश्च 'शिवादिभ्योऽण्' (४.१.११२/१११५) इति यावत्।

कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। [6]लोमन्। [7]शठ। शाक। [8]शाकट। [9]शुण्डा। शुभ। [10]विपाश। [11]स्कन्द। स्तम्भ[12]॥

## नडादिभ्यः फक्। (९९/११०१)

नड इत्येवमादिभ्यः प्रातिपदिकेभ्यः गोत्रापत्ये फक् प्रत्ययो भवति। नाडायनः। चारायणः। गोत्रे इत्येव, नाडिः। 'शलङ्कु शलङ्कं च' (ग.सू. ६७) इत्यत्र पठ्यते[13]। शालङ्कायनः। पैलादिषु शालङ्किशब्दः पठ्यते। शालङ्किः पिता। शालङ्किः पुत्रः[14]। तत्कथम्? गोत्रविशेषे [15]कौशिके फकं स्मरन्ति, इञेवान्यत्र शालङ्किः इति। अथवा [16]पैलादिपाठ एव [17]ज्ञापकः इञो भावस्य।

नड। चर। बक। मुञ्ज। इतिक। इतिश। [18]उपक। [19]लमक। 'शलङ्कु शलङ्कं च' (ग.सू. ६७)। सप्तल। वाजप्य। [20]तिक। 'अग्निशर्मन् वृषगणे' (ग.सू. ६८)। [21]प्राण। नर। सायक। दास। मित्र। द्वीप। [22]पिङ्गर। पिङ्गल। किङ्कर। [23]किङ्कल। कातर। [24]कातल। [25]काश्य। काश्यप। [26]काव्य। अज। [27]अमुष्य। 'कृष्णरणौ ब्राह्मणवासिष्ठयोः' (ग. सू. ६९)[28]। [29]अमित्र। लिगु। चित्र। कुमार। 'क्रोष्टु क्रोष्टं च' (ग. सू. ७०)[30]। लोह। दुर्ग। स्तम्भ। शिंशपा। [31]अग्र। तृण। शकट। [32]सुमनस्। [33]सुमत। मिमत।[34] ऋक्। जत्। युगन्धर। [35]हंसक। दण्डिन्। हस्तिन्। [36]पञ्चाल। चमसिन्। [37]सुकृत्य। स्थिरक। ब्राह्मण। [38]चटक। [39]बदर। अश्वक। खरप। कामुक। ब्रह्मदत्त। उदुम्बर। शोण। [40]अलोह। [41]दण्ड॥

## हरितादिभ्योऽञः। (१००/११०२)

हरितादिर्बिदाद्यन्तर्गणः। हरितादिभ्योऽञन्तेभ्यो[42]ऽपत्ये फक् प्रत्ययो भवति। इञोऽपवादः। हरितस्यापत्यं हारितायनः। [43]कैन्दासायनः। ननु च गोत्रे इति वर्तते। न [44]च गोत्रादपरो गोत्रप्रत्ययो भवति

---

1. बहुषु पुनः इत्यधिकम् फ. 2. अनन्तरः क. ड. इ. 3. एकवचनद्विवचनयोः नास्ति अ. क. 4. परमपि नास्ति ब. ई. 5. बाधित्वा ड. फ. 6. गोमन् ब. ई. 7. शठ नास्ति ब. ई, शाक नास्ति इ. ई. 8. नास्ति क. 9. गुण्ड क, शिवांशु ब.इ.ड.ई. 10. निपाक ब. 11. यस्क स्कन्ध ब. 12. स्कम्भ ब, नास्ति क.फ.ई. 13. अस्यार्थः। शलङ्कुशब्दः प्रत्ययमुत्पादयति, शलङ्कं चादेशमाप्नोति इत्यधिकम् क. 14. इति इत्यधिकम् फ. 15. केचित् इत्यधिकम् फ, लौकिके ह. 16. पैलादिषु पाठः ड. 17. ज्ञापकम् ड. 18. उवक ड. 19. मलक फ. 20. याजिन्या यतिक ड. 21. प्राणक क. 22. नास्ति फ. 23. नास्ति क. ड. ई. 24. कावेल क, काकल फ, कथन कातर काश्पल ग. 25. ताव्य ब. 26. बाव्य शैब्य ड. 27. गाव्य ड. 28. कृष्णायनः ब्राह्मणः, राणायनः वासिष्ठः इत्यधिकम् ड. 29. सुमित्र फ. 30. क्रोष्टायनः इत्यधिकम् फ. 31. नास्ति फ. 32. नास्ति ड.फ. 33. नास्ति क. 34. सामन् रुकक्ष अमृत ड. 35. दंशक क, हस्तक ड. 36. पञ्चहस्तिन् ड. 37. शास्त्रकृत् ड, असुरकृत्य फ. 38. वटक ड. 39. बडर अश्वल ब. क. ड. 40. परोक्ष लोह ड. 41. दण्डप ड, अन्वजत् ब.क, इत्वरा ब.क.फ, अशक ब. 42. गोत्रापत्ये फ. 43. कैन्दायनः क. 44. च नास्ति फ.

'एको गोत्रे' (४.१.९३/१०९३) इति वचनात् ? सत्यमेतत् । इह तु गोत्राधिकारेऽपि सामर्थ्याद् यूनि प्रत्ययो विज्ञायते । गोत्राधिकारस्तूत्तरार्थः ॥

## यञिञोश्च । (१०१/११०३)

यञन्तात् इञन्ताच्च प्रातिपदिकादपत्ये फक् प्रत्ययो भवति । गार्ग्यायणः । वात्स्यायनः । इञन्तात्[1] – दाक्षायणः । [2]प्लाक्षायणः । 'द्वीपादनुसमुद्रं यञ्' (४.३.१०/१३८०), 'सुतङ्गमादिभ्य इञ्' (४.२.८०/१२९२) [3]इत्यतो न भवति । गोत्रग्रहणेन यञिञौ विशेष्येते । तदन्तात्तु यून्येवायं प्रत्ययः, गोत्राद् यूनि प्रत्ययो भवति इति वचनात्[4] ॥

## शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु । (१०२/११०४)

गोत्रे इत्येव । शरद्वत् शुनक दर्भ इत्येतेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति यथासङ्ख्यं भृगुवत्साग्रायणेषु [5]अर्थेषु अपत्यविशेषेषु । शारद्वतायनो भवति भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो भवति वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत् । दार्भिरन्यः । शरद्वच्छुनकशब्दौ बिदादी । ताभ्यामञोऽपवादः फक्[6] ॥

## द्रोणपर्वतजीवन्तादन्यतरस्याम् । (१०३/११०५)

गोत्रे इत्येव । द्रोणादिभ्यः [7]प्रातिपदिकेभ्यो गोत्रापत्येऽन्यतरस्यां फक् प्रत्ययो भवति । [8]इञोऽपवादः । [9]द्रौणायनः, द्रौणिः । [10]पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । कथमनन्तरः अश्वत्थामा द्रौणायनः इत्युच्यते । नैवात्र महाभारतद्रोणो गृह्यते । किं तर्हि ? अनादिः । [11]तत इदं गोत्रे प्रत्ययविधानम् । [12]इदानींतनात्तु श्रुतिसामान्यादध्यारोपेण तथाभिधानं [13]भवति ॥

## अनृष्यानन्तर्ये बिदादिभ्योऽञ् । (१०४/११०६)

गोत्रे इत्येव । बिदादिभ्यो गोत्रापत्ये अञ् प्रत्ययो भवति । बैदः । [14]और्वः । ये पुनरत्रानृषिशब्दाः पुत्रादयस्तेभ्योऽनन्तरापत्ये एव [15]भवति । पौत्रः । दौहित्रः । अनृष्यानन्तर्यस्यायमर्थः, अनृषिभ्योऽनन्तरे भवति इति । यद्ययमर्थः, ऋष्यपत्ये नैरन्तर्यप्रतिषेधो न कृतः स्यात् ? तत्रेदं न सिध्यति, '[16]इन्द्रभूः सप्तमः काश्यपानाम्' (वं.ब्रा. २.२४) । अनन्तरापत्यरूपेणैव ऋष्यणाभिधानं भविष्यति । अवश्यं चैतदेवं विज्ञेयम् । ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिको विश्वामित्रः इति दुष्यति । गोत्रे इत्येव, बैदिः । ननु च ऋष्यणा भवितव्यम् ? बाह्वादिः आकृतिगणः, तेन इञेव भवति ।

बिद । उर्व । [17]कश्यप । कुशिक । भरद्वाज । उपमन्यु । [18]किलालप । किदर्भ । विश्वानर । ऋष्टिषेण । ऋतभाग । हर्यश्व । प्रियक । [19]आपस्तम्ब । कूचवार । शरद्वत् । शुनक । धेनु । गोपवन । शिग्रु । बिन्दु । [20]भाजन । [21]अश्वावतान । श्यामाक । श्यमाक । श्यापर्ण । हरित । [22]किन्दास । वह्यस्क । अर्कलूष । वध्योष । विष्णुवृद्ध । प्रतिबोध । रथन्तर । रथीतर । गविष्ठिर । निषाद । मठर । मृद । पुनर्भू । पुत्र । दुहितृ । ननान्दृ । 'परस्त्री परशुं च'[23] (ग.सू. ७१) ॥

---

1. खल्वपि इत्यधिकम् ब, इञन्ताः ह. 2. नास्ति फ. 3. इत्यतः प्रत्ययः फ, ञितः ह. 4. इति इत्यधिकम् ब. 5. अर्थेषु नास्ति फ. 6. भवति इत्यधिकम् फ. 7. प्रातिपदिकेभ्यः गोत्रापत्ये नास्ति फ. 8. इञोऽपवादः नास्ति फ. 9. द्रोणायनः क. ड. 10. पर्वतायनः फ, पार्वतिः नास्ति फ. 11. तदन्तात् ब. 12. इदानीं तु तेषु क. 13. भवति नास्ति ड. 14. नास्ति फ. 15. भवति नास्ति क. 16. मित्रभूः न्या. 17. नास्ति क. 18. किलाव क. 19. अपस्तम्ब क. 20. भोजक क. 21. अश्वावितान क. 22. कुन्दास ब. 23. किलाल किलात इत्यधिकम् ब.

## गर्गादिभ्यो यञ् । (१०५/११०७)

गोत्रे इत्येव । गर्गादिभ्यो [1]गोत्रापत्ये यञ् प्रत्ययो भवति । गार्ग्यः । वात्स्यः । मनुशब्दोऽत्र पठ्यते । तत्र कथं मानवी प्रजा ? गोत्रे इत्युच्यते । अपत्यसामान्ये भविष्यति । कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्यः इति ? गोत्ररूपाध्यारोपेण भविष्यति । अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यं जामदग्नः, पाराशरः इति ।

गर्ग । वत्स । 'वाजाऽसे' (ग. सू. ७२)[2] । संकृति । अज । व्याघ्रपात् । विदभृत् । प्राचीनयोग । [3]अगस्ति । [4]पुलस्ति । रेभ । अग्निवेश । शङ्ख । शठ । [5]धूम । अवट । [6]चमस । धनञ्जय । [7]मनस । वृक्ष । विश्वावसु । जनमान । लोहित । शंसित । बभ्रु । मण्डु । मक्षु । अलिगु । शङ्कु । लिगु । गुलु । मन्तु । जिगीषु । मनु । तन्तु । मनायी । [8]भूत । [9]कथक । कष । तण्ड । [10]वतण्ड । कपि । कत । कुरुकत । अनडुह् । कण्व । शकल । गोकक्ष । अगस्त्य । [11]कुण्डिन । यज्ञवल्क । उभय । जात । विरोहित । वृषगण । रहूगण । [12]शण्डिल । वण । कचुलुक । मुद्गल । [13]मुसल । पराशर । जतूकर्ण । [14]मन्त्रित । संहित । अश्मरथ । शर्कराक्ष । पूतिमाष । स्थूण । अररक । पिङ्गल । कृष्ण । [15]गोलुन्द । उलूक । [16]तितिक्ष । भिषज् । भडित । भण्डित । [17]दल्भ । चिकित । देवहू । इन्द्रहू । एकलू । पिप्पलू । [18]वृदग्नि । जमदग्नि । सुलोभिन् । [19]उकत्थ । कुटीगु[20] ॥

## मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । (१०६/११०९)

मधुशब्दाद् बभ्रुशब्दाच् च गोत्रापत्ये यञ् प्रत्ययो भवति [21]यथासङ्ख्यम् ब्राह्मणे कौशिके वाच्ये । माधव्यो भवति ब्राह्मणः चेत् । माधव एवान्यः । बाभ्रव्यो भवति कौशिकश्चेत् । बाभ्रव एवान्यः । बभ्रुशब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके नियमार्थं वचनम् । गर्गादिषु पाठोऽप्यन्तर्गणकार्यार्थः, 'सर्वत्र लोहितादिकतन्तेभ्यः' (४.१.१८/४७६) इति । बाभ्रव्यायणी ॥

## कपिबोधादाङ्गिरसे । (१०७/१११०)

कपिबोधशब्दाभ्यामाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । काप्यः । बौध्यः । आङ्गिरसे इति किम् ? कापेयः । बौधिः । कपिशब्दो गर्गादिषु पठ्यते । तस्य नियमार्थं वचनम्, आङ्गिरसे यथा स्यात् । लोहितादिकार्यार्थं गणे पाठः । काप्यायनी[22] ॥

## वतण्डाच्च । (१०८/११११)

आङ्गिरसे इत्येव । वतण्डशब्दाद् आङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । वातण्ड्यः । [23]आङ्गिरसे इति किम् ? वातण्डः । किमर्थमिदं [24]यावता गर्गादिष्वयं पठ्यते ? शिवादिषु अपि अयं पठ्यते । तत्र आङ्गिरसे शिवाद्यणोऽपवादार्थं पुनर्वचनम् । अनाङ्गिरसे[25] तु उभयत्र पाठसामर्थ्यात् प्रत्ययद्वयमपि भवति । वातण्ड्यः, वातण्डः ॥

---

1. गोत्रे फ. 2. वाजः वाज्यः इत्यधिकम् ड. 3. नास्ति फ. 4. बलस्ति फ. 5. ध्वन मधू फ. 6. मवसे फ, अनस ब. 7. नास्ति ब. 8. सूनु ग, मंठ ब. 9. मंठकथक फ, कच्छप रूक्ष तरुक्ष तलुक्ष तण्डाव इत्यधिकम् ब. 10. तलुक्षदण्ड फ. 11. कण्डिनी फ. 12. माकिल फ, प्रचुलमुद्गल ब. 13. मुल्ल फ. 14. मन्त्रिक फ. 15. गोलंगाह ब. 16. तिलंब विषज विष्णुज ब. 17. दल ब. 18. बृहदग्नि ब. फ. 19. उक्थ ब. फ. 20. सुलोहित इत्यधिकम् फ. 21. यथाक्रमं ड. 22. इति इत्यधिकम् फ. ह. 23. वाक्यमिदं नास्ति फ. 24. यावता नास्ति फ. 25. सूत्रे इत्यधिकम् ड.

## लुक् स्त्रियाम्। (१०९/१११२)

आङ्गिरसे इत्येव। वतण्डशब्दादाङ्गिरस्यां स्त्रियां यञ्प्रत्ययस्य लुक् भवति। लुकि कृते शार्ङ्गरवादिपाठान् ङीन् भवति। वतण्डी। आङ्गिरस [1]इति किम्? वातण्डयायनी। शिवाद्यणि तु वातण्डी॥

## अश्वादिभ्यः फञ्। (११०/१११३)

आङ्गिरस इति निवृत्तम्। अश्वादिभ्यः गोत्रापत्ये फञ् प्रत्ययो भवति। [2]आश्वायनः। आश्मायनः। ये त्वत्र प्रत्ययान्ताः पठ्यन्ते तेभ्यः सामर्थ्याद् यूनि प्रत्ययो विज्ञायते।

अश्व। अश्मन्। शङ्ख। बिद। पुट। रोहिण। खर्जूर। खर्जूल। [3]पिञ्जूर। भडिल। भण्डिल। भडित। भण्डित। [4]भण्डिक। [5]प्रहृत। रामोद। क्षत्र। ग्रीवा। [6]काश। गोलाङ्क्य। अर्क। स्वन। ध्वन। पाद। चक्र। कुल। [7]पवित्र। गोमिन्। श्याम। धूम। [8]धूम्र। [9]वाग्मिन्। विश्वानर। कुट। वेश। '[10]शप आत्रेये' (ग. सू. ७३)। नत्त। तड। नड। ग्रीष्म। [11]अर्ह। विशम्य। विशाला। गिरि। चपल। [12]चुनम। दासक। वैल्य। [13]धर्म। आनडुह्य। पुंसिजात। अर्जुन। शूद्रक। सुमनस्। [14]दुर्मनस्। क्षान्त। प्राच्य। कित। काण। चुम्प। श्रविष्ठा। वीक्ष्य। पविन्दा। 'आत्रेय भारद्वाजे' (ग. सू. ७४)। कुत्स। आतव। कितव। शिव। खदिर। भारद्वाज आत्रेये (ग. सू. ७५)॥

## भर्गात् त्रैगर्ते। (१११/१११४)

भर्गशब्दादपत्ये विशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति। भार्गायणो [15]भवति त्रैगर्तः चेत्। भार्गिः अन्यः॥

## शिवादिभ्योऽण्। (११२/१११५)

गोत्रे इति निवृत्तम्। अतः प्रभृति सामान्येन प्रत्ययाः विज्ञायन्ते। शिवादिभ्योऽपत्ये अण् प्रत्ययो भवति। यथायथमिञादीनामपवादः। शैवः। प्रौष्ठः। तक्षन् शब्दोऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम्। ण्यत्-प्रत्ययस्य तु बाधो नेष्यते। ताक्षणः, ताक्षण्यः। गङ्गाशब्दः पठ्यते तिकादिफिञा शुभ्रादिढका च समावेशार्थम्। तेन त्रैरूप्यं भवति। गाङ्गः, गाङ्गायनिः, गाङ्गेयः। विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम्। वैपाशः, वैपाशायन्यः।

शिव। प्रौष्ठ। प्रौष्ठिक। चण्ड। जम्भ। मुनि। सन्धि। भूरि। कुठार। अनभिम्लान। ककुत्स्थ। कहोड। लेख। रोध। खञ्जन। कोहड। पिष्ट। हेहय। खञ्जार। खञ्जाल। सुरोहिका। पर्ण। कहूष। परिल। वतण्ड। तृण। कर्ण। क्षीरह्रद। जलह्रद। परिषिक। जटिलिक। गोफिलिक। बधिरिका। मञ्जीरक। वृष्णिक। रेख। आलेखन। विश्रवण। रवण। वर्तनाक्ष। पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्क्षिपा। रोहितिक। आर्यश्वेत। सुपिष्ट। खर्जूरकर्ण। मसूरकर्ण। तूणकर्ण। मयूरकर्ण। खडरक। तक्षन्। ऋष्टिषेण। गङ्गा। विपाश। यस्क। लह्य। द्रुघ। अयःस्थूण। भलन्दन। विरूपाक्ष। भूमि। इला। सपत्नी। 'द्व्यचो नद्याः' (ग.सू. ७६)। 'त्रिवेणी त्रिवणं च' (ग.सू. ७७)॥

---

1. इत्येव फ. ब. 2. अश्वायनः ब. 3. नास्ति ब. 4. भडिक ब. 5. प्रकृत ब. 6. काशतृण ब. 7. श्रविष्ठ पवितृ ब. 8. नास्ति ब. 9. वामन ब. 10. जम वह खड खेड ग्रीष्म ब, शय आत्रेये प मं. 11. वशंक ब. 12. चुमंद ब. 13. धाय्य ब. 14. ओजस् ब. 15. त्रैगर्तश्चेद्भवति क.

## अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः । (११३/१११६)

'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' (१.१.७३/१३३५) । अवृद्धाभ्यः इति शब्दधर्मः, नदीमानुषीभ्यः इति अर्थधर्मः, तेनाभेदात् प्रकृतयो निर्दिश्यन्ते । तन्नामिकाभ्यः इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्शः । अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि, तेभ्योऽपत्ये अण् प्रत्ययो भवति । ढकोऽपवादः । यमुनाया अपत्यं यामुनः । इरावत्याः अपत्यम् ऐरावतः । वैतस्तः । नार्मदः । मानुषीभ्यः खल्वपि – [1]शिक्षितायाः अपत्यं शैक्षितः । चिन्तितायाः अपत्यं चैन्तितः । अवृद्धाभ्यः इति किम् ? चन्द्रभागायाः अपत्यं चान्द्रभागेयः । वासवदत्तेयः । नदीमानुषीभ्यः इति किम् ? सौपर्णेयः । वैनतेयः । तन्नामिकाभ्यः इति किम् ? शोभनायाः,[2] शौभनेयः ॥

## ऋष्यन्धकवृष्णिकुरुभ्यश्च । (११४/१११७)

ऋषयः [3]प्रसिद्धा वसिष्ठादयः । अन्धकाः वृष्णयः कुरवः इति वंशाख्याः । ऋष्यादि[4]कुर्वन्तेभ्यः प्रातिपदिकेभ्योऽपत्ये अण् प्रत्ययो भवति । इञोऽपवादः । अत्र्यादिभ्यस्तु परत्वाड् ढगादिभिरेव भवितव्यम् । ऋषिभ्यस्तावत् – वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः – श्वाफल्कः । रान्धसः । वृष्णिभ्यः – वासुदेवः । आनिरुद्धः । कुरुभ्यः – नाकुलः । साहदेवः । कथं पुनर्नित्यानां शब्दानामन्धकादिवंशसमाश्रयेण अन्वाख्यानं युज्यते? केचिदाहुः कथमपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेणैव[5] नकुलसहदेवादयः [6]शब्दाः सुबहवः सङ्कलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धा इति । अथवान्धकवृष्णिकुरुवंशा अपि नित्या [7]एव, तेषु ये शब्दाः प्रयुज्यन्ते नकुलसहदेवादयः, [8]तत्रेदं प्रत्ययविधानम् इत्यदोषः ॥

## मातुरुत् सङ्ख्यासंभद्रपूर्वायाः । (११५/१११८)

मातृशब्दात् सङ्ख्यापूर्वात् संपूर्वात् भद्रपूर्वाच्चापत्ये अण् प्रत्ययो भवति, उकारश्चान्तादेशः । द्वयोर्मात्रोरपत्यं द्वैमातुरः[9] । [10]षाण्मातुरः । सांमातुरः । भाद्रमातुरः । उकारादेशार्थं वचनं, प्रत्ययः पुनरुत्सर्गेणैव सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्ग्रहणं न भवति । सङ्ख्यासंभद्रपूर्वायाः इति किम् ? सौमात्रः[11] ॥

## कन्यायाः कनीन च । (११६/१११९)

कन्याशब्दादपत्येऽण् प्रत्ययो भवति । [12]ढकोऽपवादः । तत्सन्नियोगेन कनीन[13]शब्द आदेशो भवति । कन्यायाः अपत्यं कानीनः कर्णः । कानीनो व्यासः ॥

---

1. शिक्षितायाः अपत्यं नास्ति फ. 2. अपत्यं इत्यधिकम् ब. क. फ. 3. मन्त्रद्रष्टारः इत्यधिकम् ग. 4. °कुर्वन्तवचनेभ्यः ब. क. फ. 5. एव नास्ति फ. 6. शब्दाः नास्ति फ. 7. अत एव फ. 8. तत इदं फ. 9. त्रैमातुरः इत्यधिकम् क. 10. षाण्मातुरः सांमातुरः नास्ति फ. 11. शुभ्रादिषु पाठात् तु वैमात्रेयः इत्यधिकम् अ.ब.क.ड.फ. 12. ढकोऽपवादः नास्ति फ. 13. प्रत्ययः फ, शब्दः नास्ति ब.

## विकर्णशुङ्गच्छगलाद् वत्सभरद्वाजात्रिषु (११७/११२०)

विकर्णशुङ्गच्छगलशब्देभ्यः यथासङ्ख्यं वत्सभरद्वाजात्रिषु अपत्यविशेषेषु अण् प्रत्ययो भवति। वैकर्णो भवति वात्स्यश्चेत्। वैकर्णिः अन्यः। शौङ्गो भवति भारद्वाजश्चेत्। शौङ्गिः अन्यः। छागलो भवति आत्रेयश्चेत्। छागलिः अन्यः। [1]शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति, [2]ततो ढकं प्रत्युदाहरन्ति शौङ्गेयः इति। द्वयमपि चैतत् प्रमाणम्, उभयथा सूत्रप्रणयनात्॥

## पीलाया वा। (११८/११२१)

तन्नामिकाणो बाधके द्व्यच इति ढकि प्राप्ते अण् प्रत्ययः पक्षे विधीयते। पीलायाः अपत्ये वा अण् प्रत्ययो [3]भवति। पीलायाः अपत्यं पैलः, पैलेयः॥

## ढक् च मण्डूकात्। (११९/११२२)

मण्डूकशब्दात् अपत्ये ढक् प्रत्ययो भवति। चकारात् अण् च वा। तेन त्रैरूप्यं भवति। माण्डूकेयः, माण्डूकः, माण्डूकिः॥

## स्त्रीभ्यो ढक्। (१२०/११२३)

स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते। स्त्रीभ्योऽपत्ये ढक् प्रत्ययो भवति। सौपर्णेयः। वैनतेयः। स्त्रीप्रत्यय[4]विज्ञापनादसत्यर्थग्रहणे इह न भवति, इडबिडोऽपत्यम् ऐडबिडः, दरदोऽपत्यम् दारदः इति।

[३८८] वडवाया वृषे वाच्ये। (म. भा. २.२५८)

वाडवेयो वृषः [5]स्मृतः। अपत्ये प्राप्तः ततोऽपकृष्य [6]विधीयते। तेनापत्ये वाडवः इति।

[३८९] अण् क्रुञ्चाकोकिलात् स्मृतः। (म. भा. २.२५८)

क्रुञ्चाया अपत्यं क्रौञ्चः। कौकिलः॥

## द्व्यचः। (१२१/११२४)

स्त्रीभ्यः इत्येव। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् प्रत्ययो भवति। तन्नामिकाणोऽपवादः। दत्ताया अपत्यं दात्तेयः। [7]गौपेयः। द्व्यचः इति किम्? [8]यामुनः॥

## इतश्चानिञः। (१२२/११२५)

स्त्रीग्रहणं निवृत्तम्[9]। चकारो द्व्यचः इत्यस्यानुकर्षणार्थः। इकारान्तात् प्रातिपदिकाद् अनिञन्तादपत्ये ढक् प्रत्ययो भवति। आत्रेयः। [10]नैधेयः। इतः इति किम्? दाक्षिः। प्लाक्षिः। अनिञः इति किम्? [11]दाक्षायणः। [12]प्लाक्षायणः। द्व्यचः इत्येव, मरीचेरपत्यं मारीचः॥

---

1. शुङ्ग॰ क. 2. ततो नास्ति फ. 3. भवति नास्ति फ. 4. विज्ञानात् फ. ब. 5. स्मृतः नास्ति फ. 6. विधीयते नास्ति फ. 7. गौप्तेयः अ. 8. यमुनायाः अपत्यं इत्यधिकम् फ. 9. चात् द्व्यचः इत्यनुवर्तते इत्यधिकम् फ. 10. जालेयः फ, नास्ति ड. 11. दाक्षेरपत्यं इत्यधिकम् फ. 12. नास्ति फ.

## शुभ्रादिभ्यश्च । (१२३/११२८)

शुभ्र इत्येवमादिभ्यः प्रातिपदिकेभ्यः ढक् प्रत्ययो भवति । यथायोगम् इञादीनामपवादः । शौभ्रेयः । वैष्टपुरेयः । चकारोऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः, पाण्डवेयः इत्येवमादि सिद्धं भवति ।

शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शालाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । किंकसा । रोहिणी । रुक्मिणी । दिशा । शालूक । अजबस्ति । शकन्धि । 'लक्ष्मणश्यामयोर्वासिष्ठे' (ग.सू. ७८) । गोधा । कृकलास । अणीव । प्रवाहण । भरत । [1]भारम । मुकण्डु । मघष्टु । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस् । [2]सुनामन् । कद्रु । तुद । अकशाप । [3]कुमारिका । किशोरिका । कुवेणिका । जिह्माशिन् । परिधि । वायुदत्त । ककल । खट्वा । अम्बिका । अशोका । शुद्धपिङ्गला । खडोन्मत्ता । अनुदृष्टि । जरतिन् । बालवर्दिन् । विग्रज । वीज । श्वन् । अश्मन् । अश्व । अजिर ॥

## विकर्णकुषीतकात् काश्यपे । (१२४/११२९)

विकर्णशब्दात् कुषीतकशब्दाच्च काश्यपेऽपत्यविशेषे ढक् प्रत्ययो भवति । वैकर्णेयः । कौषीतकेयः । काश्यपे इति किम् ? वैकर्णिः । कौषीतकिः ॥

## भ्रुवो वुक् च । (१२५/११३०)

भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन [4]च वुगागमः । भ्रौवेयः ॥

## कल्याण्यादीनामिनङ् । (१२६/११३१)

कल्याणी इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्संनियोगेन च इनङादेशः । स्त्रीप्रत्ययान्ता-नामादेशार्थं ग्रहणं, प्रत्ययस्य सिद्धत्वाद् । अन्येषामुभयार्थम् । काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (७. ३. १९/११३३) इत्युभयपदवृद्धिः ।

[5]कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुदृष्टि । अनुसृष्टि । जरती । बलीवर्दी । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ॥

## कुलटाया वा । (१२७/११३२)

कुलान्यटति इति कुलटा । पररूपं निपातनात् । [6]कुलटायाः अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङ आदेशो भवति । आदेशार्थं वचनं, प्रत्ययश्च पूर्वेणैव सिद्धः । कौलटिनेयः, [7]कौलटेयः । या तु[8] कुलान्यटन्ती शीलं भिनत्ति, ततः 'क्षुद्राभ्यो वा' (४.१. १३१/११३७) इति परत्वाड् ढ्रका भवितव्यम् । कौलटेरः ॥

---

1. भारत फ. 2. सुदामन् फ. 3. कुवारिका फ, कुरेका न्या. 4. च नास्ति फ. 5. काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । बान्धकिनेयः । आनुदृष्टिनेयः । आनुसृष्टिनेयः । जारतिनेयः । बालीवर्दिनेयः । ज्यैष्ठिनेयः । कानिष्ठिनेयः । माध्यमिनेयः । पारस्त्रैणेयः ग. 6. कुलटाशब्दात् फ. 7. भिक्षाद्यर्थं कुलान्यटन्त्या एवम् इत्यधिकम् ग. 8. व्यभिचारार्थम् इत्यधिकम् फ.

## चटकाया ऐरक्। (१२८/११३४)

चटकायाः अपत्ये ऐरक् प्रत्ययो भवति। चाटकैरः।

[३९०] चटकाच्चेति वक्तव्यम्। (म.भा. २.२५८)

चटकस्यापत्यं चाटकैरः।

[३९१] स्त्रियामपत्ये लुग् वक्तव्यः। (म.भा. २.२५८)

चटकाया अपत्यं स्त्री चटका॥

## गोधाया ढ्रक्। (१२९/११३५)

गोधायाः अपत्ये ढ्रक् प्रत्ययो भवति। गौधेरः। शुभ्रादिष्वयं पठ्यते, तेन गौधेयः अपि भवति॥

## आरगुदीचाम्। (१३०/११३६)

गोधायाः अपत्ये उदीचामाचार्याणां मतेन आरक् प्रत्ययो भवति। गौधारः। आचार्यग्रहणं पूजार्थं, वचनसामर्थ्यादेव[1] पूर्वेण समावेशो भवति। आरग्वचनमनर्थकं, रका सिद्धत्वात्? [2]ज्ञापकं त्वयमन्येभ्योऽपि भवति इति। [3]जाडारः। पाण्डारः॥

## क्षुद्राभ्यो वा। (१३१/११३७)

ढ्रक् अनुवर्तते, न आरक्। क्षुद्राः अङ्गहीनाः [4]शीलहीनाश्च। अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिश्यन्ते। क्षुद्राभ्यो वा [5]अपत्ये ढ्रक् प्रत्ययो भवति। [6]ढकोऽपवादः। काणेरः, काणेयः। दासेरः, दासेयः[7]॥

## पितृष्वसुश्छण्। (१३२/११३८)

पितृष्वसृशब्दात् अपत्ये छण् प्रत्ययो भवति। पैतृष्वस्रीयः॥

## ढकि लोपः। (१३३/११३९)

पितृष्वसुः अपत्यप्रत्यये ढकि परतो लोपो भवति। [8]पैतृष्वसेयः। कथं पुनरिह ढक् प्रत्ययः? एतदेव [9]ज्ञापकं ढको भावस्य॥

---

1. एव नास्ति फ. 2. ज्ञापकार्थं फ. 3. जडस्य पुत्रः जाडारः। पण्डः क्लीबः। तत्पुत्रः पाण्डारः फ. 4. धर्महीनाश्च अ.इ.ग.ह. 5. अपत्ये नास्ति फ. 6. ढकोऽपवादः नास्ति फ. 7. नटचा नाटेरः, नाटेयः। आरगन्येभ्योऽपि नाटारः इत्यधिकम् फ.ह. 8. नास्ति फ. 9. वचनं इत्यधिकम् फ.

## मातृष्वसुश्च। (१३४/११४०)

पितृष्वसुः इत्ये[1]तदपेक्षते। पितृष्वसुर्यदुक्तं तन् मातृष्वसुरपि भवति, छण्प्रत्ययो ढकि लोपश्च। मातृष्वस्रीयः। मातृष्वसेयः[2] ॥

## चतुष्पाद्भ्यो ढञ्। (१३५/११४१)

चतुष्पादभिधायिनीभ्यः प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति। अणादीनामपवादः। कामण्डलेयः। शौन्तिबाहेयः। जाम्बेयः ॥

## गृष्ट्यादिभ्यश्च। (१३६/११४३)

गृष्ट्यादिभ्यः शब्देभ्यो[3]ऽपत्ये ढञ् प्रत्ययो भवति। अणादीनामपवादः। गार्ष्टेयः। [4]हार्ष्टेयः। गृष्टिशब्दो यश्चतुष्पाद्वचनः, ततः पूर्वेणैव [5]सिद्धः। अचतुष्पादर्थं वचनम्।

गृष्टि। हृष्टि। हलि। बलि। विश्रि। कुद्रि। अजबस्ति। मित्रयु[6] ॥

## राजश्वशुराद्यत्। (१३७/११५३)

[7]राजन्श्वशुरशब्दाभ्यामपत्ये यत् प्रत्ययो भवति। यथाक्रममणिञोरपवादः। राजन्यः। श्वशुर्यः।

[३९२] राज्ञोऽपत्ये जातिग्रहणम्। (म. भा. २.२५९)

राजन्यो भवति क्षत्रियश्चेत्। [8]राजनोऽन्यः ॥

## क्षत्राद् घः। (१३८/११६१)

क्षत्रशब्दादपत्ये घः प्रत्ययो भवति। क्षत्रियः। अयमपि जातिशब्द एव। क्षात्रिरन्यः ॥

## कुलात् खः। (१३९/११६२)

उत्तरसूत्रे पूर्वप्रतिषेधादिह तदन्तः केवलश्च [9]दृश्यते। कुलशब्दान्तात् प्रातिपदिकात् केवलाच्च अपत्ये खः प्रत्ययो भवति। आढ्यकुलीनः[10]। [11]श्रोत्रियकुलीनः। कुलीनः ॥

## अपूर्वपदादन्यतरस्यां यड्ढकञौ। (१४०/११६३)

[12]कुलादित्येव। अविद्यमानं पूर्वपदं यस्य तदपूर्वपदम्। समाससम्बन्धिपूर्वपदस्याभावेन कुलशब्दो विशेष्यते। अपूर्वपदात्[13]कुलशब्दात् अन्यतरस्यां यत् ढकञ्[14]इत्येतौ प्रत्ययौ भवतः। ताभ्यां मुक्ते खोऽपि भवति। कुल्यः, कौलेयकः, कुलीनः। पदग्रहणं किम्? [15]बहुचपूर्वादपि यथा स्यात्। बहुकुल्यः, [16]बाहुकुलेयकः, बहुकुलीनः ॥

---

1. एतन्नास्ति फ. 2. मातृपितृभ्यः स्वसरि षत्वम् इत्यधिकम् फ. 3. अपत्ये नास्ति ड. 4. भार्ष्टेयः फ. 5. सिद्धम् फ. 6. फलि अलि दृष्टि इत्यधिकम् ग. 7. राजश्वशुर° फ. 8. जातिग्रहणाच्छूद्रादौ उत्पन्नः राजनः ग. 9. गृह्यते ग. फ. 10. राजकुलीनः ब्राह्मणकुलीनः इत्यधिकम् क. 11. क्षत्रियकुलीनः फ. 12. वाक्यमिदं नास्ति फ. 13. प्रातिपदिकात् इत्यधिकम् फ. 14. इत्येतौ नास्ति फ. 15. बहुपूर्वात् फ. 16. बहुकुलेयकः फ.

## महाकुलादञ्खञौ । (१४१/११६४)

अन्यतरस्यामिति अनुवर्तते । महाकुलशब्दात् अञ्खञौ प्रत्ययौ भवतः । [1]पक्षे खः । माहाकुलः, माहाकुलीनः, महाकुलीनः ॥

## दुष्कुलाड् ढक् । (१४२/११६५)

दुष्कुलशब्दात् अपत्ये ढक् प्रत्ययो भवति । अन्यतरस्यामि[2]त्यनुवृत्तेः खश्च । दौष्कुलेयः, दुष्कुलीनः ॥

## स्वसुश्छः । (१४३/११६६)

स्वसृशब्दादपत्ये छः प्रत्ययो भवति । [3]अणोऽपवादः । स्वसुरपत्यं स्वस्रीयः ॥

## भ्रातुर्व्यच्च । (१४४/११६७)

भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति । चकाराच् छश्च[4] । अणोऽपवादः । भ्रातृव्यः, भ्रात्रीयः । तकारः स्वरार्थः ॥

## व्यन् सपत्ने । (१४५/११६८)

सपत्नशब्दः शत्रुपर्यायः शब्दान्तरव्युत्पन्नमेव । सपत्नीशब्दादपरेऽकारम् इवार्थे [5]निपातयन्ति । सपत्नीव सपत्नः । भ्रातृशब्दाद् व्यन् प्रत्ययो भवति समुदायेन चेदमित्रः सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव । पाप्मना भ्रातृव्येण[6] । [7]भ्रातृव्यः कण्टकः ॥

## रेवत्यादिभ्यष्ठक् । (१४६/११६९)

रेवती इत्येवमादिभ्योऽपत्ये ठक् प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । आश्वपालिकः ।

रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष ॥

## गोत्रस्त्रियाः कुत्सने ण च । (१४७/११७१)

अपत्यं पौत्रप्रभृति गोत्रं गृह्यते । गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति, चकाराट् ठक् [8]च, कुत्सने गम्यमाने । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा । गार्ग्याः अपत्यं गार्गः जाल्मः, गार्गिकः । ग्लुचुकायन्याः अपत्यं ग्लौचुकायनः, ग्लौचुकायनिकः । गोत्राद्यूनि इति यूनि प्रत्ययो भवति । [9]गोत्रम् इति किम्? कारिकेयो जाल्मः । स्त्रियाः इति किम्? औपगविर्जाल्मः । कुत्सने इति किम्? गार्गेयो माणवकः ॥

---

1. अन्यतरस्यांग्रहणानुवृत्तेः खश्च ड.फ. 2. ग्रहणानुवृत्तेः फ. 3. अणोऽपवादः नास्ति फ. 4. च नास्ति फ. 5. वर्णयन्ति फ. 6. हतः इत्यधिकम् ब.क.फ. 7. उदाहरणमिदं नास्ति फ. 8. च नास्ति फ. 9. गोत्रग्रहणम् फ.

## वृद्धाट् ठक् सौवीरेषु बहुलम् । (१४८/११७२)

कुत्सने इत्येव । सौवीरेषु इति प्रकृतिविशेषणम् । वृद्धात् सौवीरगोत्रादपत्ये बहुलं ठक् प्रत्ययो भवति कुत्सने गम्यमाने । भागवित्तेः[1] भागवित्तिकः । [2]तार्णबिन्दवस्य तार्णबिन्दविकः । पक्षे [3]यथाप्राप्तं फक्, भागवित्तायनः । पक्षे तार्णबिन्दविः । अकशापः [4]शुभ्रादिः, आकशापेयः । तस्यापत्यम् आकशापेयिकः । पक्षे आकशापेयिः ।

भागपूर्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः ।
तृतीयस्त्वाकशापेयो गोत्राद् ठग् बहुलं ततः ॥

वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम् । सौवीरेषु इति किम् ? औपगविर्जाल्मः । कुत्सने इत्येव, भागवित्तायनो माणवकः । बहुलग्रहणमुपाधिवैचित्र्यार्थम् । गोत्रस्त्रियाः इत्यारभ्य चत्वारो योगास्तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीर[5]गोत्र एव, मध्यमौ [6]द्वयोरपि । तदेतद् बहुलग्रहणाल्लभ्यते ॥

## फेश्छ च । (१४९/११७३)

कुत्सने इत्येव, सौवीरेषु इति च । फेः इति फिञो ग्रहणं न फिनः, वृद्धाधिकारात् । फिञन्तात् [7]प्रातिपदिकात् सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट् ठक्, कुत्सने गम्यमाने । यमुन्दस्यापत्यं, '[8]तिकादिभ्यः फिञ्' (४.१.१५४/११७८) । तस्यापत्यं यामुन्दायनीयः, यामुन्दायनिकः । कुत्सने इत्येव, यामुन्दायनिः । फिञन्तादौत्सर्गिकस्याण आगतस्य 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२.४.५८/१२७६) इति लुक् । सौवीरेषु इत्येव, तैकायनिः ।

यमुन्दश्च सुयामा च [9]वार्ष्यायणिः फिञः स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ॥

## फाण्टाहृतिमिमताभ्यां णफिञौ । (१५०/११७४)

सौवीरेषु इत्येव । कुत्सने इति निवृत्तम् । फाण्टाहृतिमिमतशब्दाभ्यां सौवीरविषयाभ्यामपत्ये णफिञौ प्रत्ययौ भवतः । फकोऽपवादः । अल्पाच्तरस्यापूर्वनिपातो लक्षणव्यभिचारचिह्नं, [10]तेन यथासङ्ख्यमिह न भवति इति । फाण्टाहृतः, फाण्टाहृतायनिः (म.भा. २.२६१) । मैमतः, मैमतायनिः । सौवीरेषु इत्येव, फाण्टाहृतायनः । मैमतायनः । फाण्टाहृतेः 'यञिञोश्च' (४.१.१०१/११०३) इति फक् । मिमतशब्दो[11]ऽपि नडादिषु पठ्यते ॥

## कुर्वादिभ्यो ण्यः । (१५१/११७५)

सौवीरेषु बहुलम् इति निवृत्तम् । कुरु इत्येवमादिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति । कौरव्यः । गार्ग्यः । 'कुरुनादिभ्यो ण्यः' (४.१.१७२/११९०) इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति । स तु क्षत्रियात् तद्राजसञ्ज्ञकः । तस्य बहुषु लुका भवितव्यम्, अयं तु श्रूयत एव । कौरव्याः । कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिषु पाठात् फिञपि भवति, कौरव्यायणिः । रथकारशब्दोऽत्र पठ्यते, स जातिवचनः । त्रैवर्णिकेभ्यः किंचिन्न्यूना रथकारजातिः । कारिणस्तु रथकारशब्दादुत्तरसूत्रेणैव ण्यः सिद्धः । केशिनीशब्दः पठ्यते, तस्य कैशिन्यः । पुंवद्भावो न भवति, स्त्रीप्रत्ययनिर्देशसामर्थ्यात् ।

---

1. अपत्यं इत्यधिकम् फ. 2. तार्णबिन्दवस्य नास्ति फ. 3. यथाप्राप्तः फ. 4. शुभ्रात् इत्यतः ढकि फ. 5. गोत्रे नास्ति फ. 6. सौवीरेषु कुत्सायां च क.ड. 7. प्रातिपदिकात् नास्ति फ. 8. यामुन्दायनिः इत्यधिकम् फ. 9. बाष्यायणिः ब. 10. तेन नास्ति ब. 11. अपि नास्ति ब.

'वेनाच्छन्दसि' (ग. सू. ८०) इति पठ्यते। कथं भाषायां वैन्यो राजा इति? छान्दस एवायं प्रमादात् कविभिः प्रयुक्तः। वामरथशब्दः पठ्यते, तस्य कण्वादिवत् कार्यमिष्यते। स्वरं वर्जयित्वा लुगादिकमतिदिश्यते। बहुषु वामरथाः। स्त्री वामरथी। वामरथ्यायनी। युवा वामरथ्यायनः। वामरथ्यस्य छात्राः वामरथाः। वामरथानि सङ्घाङ्कलक्षणानि। स्वरस्तु [1]ण्यप्रत्ययस्यैव भवति, नातिदेशिकमाद्युदात्तत्वम्।

कुरु। [2]गर्ग। मङ्गुष। [3]अजमारक। रथकार[4]। वावदूक। 'सम्राजः क्षत्रिये' (ग. सू. ७९)। कवि। मति। वाक्। पितृमत्। इन्द्रजालि। [5]दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शलाका। [6]मुर। एरक। अभ्र। दर्भ। केशिनी। 'वेनाच्छन्दसि' (ग. सू. ८०)। [7]शूर्पणाय। [8]श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यङ्कार। [9]वडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्तृ। [10]हर्तृ। शाकिन्। इनपिण्डी। वामरथस्य कण्वादिवत् स्वरवर्जम्॥

## सेनान्तलक्षणकारिभ्यश्च। (१७२/११७६)

सेनान्तात् प्रातिपदिकात् लक्षणशब्दात् कारिवचनेभ्यश्च अपत्ये ण्यः प्रत्ययो भवति। कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः – तान्तुवाय्यः। कौम्भकार्यः। नापित्यः॥

## उदीचामिञ्। (१७३/११७७)

ण्ये प्राप्ते इञ्[11]अपरो विधीयते। सेनान्तलक्षणकारिभ्योऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन। कारिषेणिः। हारिषेणिः। [12]लाक्षणिः। तान्तुवायिः। [13]कौम्भकारिः। वचनसामर्थ्यादेव प्रत्ययसमावेशो लब्धे आचार्यग्रहणं वैचित्र्यार्थम्। तक्षन्शब्दः शिवादिः, तेन अणा अयमिञ् बाध्यते, न तु ण्यः। तक्ष्णोऽपत्यं ताक्ष्णः, [14]ताक्षण्यः॥

## तिकादिभ्यः फिञ्। (१७४/११७८)

तिक इत्येवमादिभ्यः [15]शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति। तैकायनिः। [16]कैतवायनिः। वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन [17]यकारान्तत्वमिष्यते। वार्ष्यायणिः। कौरव्यशब्दः पठ्यते, स च [18]क्षत्रियवचनः, औरसशब्देन क्षत्रियप्रत्ययान्तेन साहचर्यात्। यस्तु 'कुर्वादिभ्यो ण्यः' (४.१.१५१/११७५), [19]तदन्ताद् इञेव भवितव्यम्। तथा च 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२.४.५८/१२७६) [20]इत्यत्र उदाहृतं कौरव्यः पिता, कौरव्यः पुत्रः इति।

तिक। कितव। सञ्ज्ञा। बाल। शिखा। उरस्। [21]शाटच। सैन्धव। यमुन्द। [22]रूप्य। ग्राम्य। नील। अमित्र। गौकक्ष्य। कुरु। देवरथ। तैतिल। औरस। कौरव्य। भौरिकि। भौलिकि। चौपयत। चैतयत। चैटयत। शैकयत। क्षैतयत। ध्वाजवत। चन्द्रमस्। शुभ। [23]गङ्गा। वरेण्य। सुयामन्। आरद। वह्यका। खल्या। वृष। लोमका। उदन्य। यज्ञ॥

---

1. प्रत्ययस्यैव ब. 2. गर्गर ब. 3. अजमार ब. 4. काक स्फोट इत्यधिकम् ब. 5. धातवि ब. 6. मुदापरक ब. 7. शूर्पणरवी ब. 8. श्यावनाय नास्ति ब. 9. बलभीकार ब. 10. हर्तृ नास्ति ब. 11. अपरो नास्ति फ. 12. लाक्षायणिः ब. 13. कौम्भकारिः नास्ति फ. 14. ताक्षण्यः नास्ति फ. 15. शब्देभ्यः नास्ति फ. 16. कैतवायनिः नास्ति फ. 17. यकारान्तता फ. 18. क्षत्रियसर्गः फ. 19. ततः फ. 20. इत्यत्र चैवं फ. 21. शाख्य फ. 22. ऋप्य फ. 23. भङ्गा फ.

## कौशल्यकार्मार्याभ्यां च। (१५८/११७९)

कौशल्यकार्मार्यशब्दाभ्यामपत्ये फिञ् प्रत्ययो भवति। [1]इञोऽपवादः। कौशल्यायनिः। कार्मार्यायणिः। परमप्रकृतेरेवायं प्रत्ययः इष्यते, कौशलस्य अपत्यं, कर्मारस्यापत्यम् इति। [2]प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते। तथा च स्मृत्यन्तरम्, दगुकोसलकर्मारच्छागवृषाणां युट् वादिष्टस्य (म. भा. २.२६३) इति। दागव्यायनिः। कौसल्यायनिः। [3]कार्मार्यायणिः। छाग्यायनिः। [4]वार्ष्यायणिः॥

## अणो द्व्यचः। (१५६/११८०)

अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति। इञोऽपवादः। [5]कार्त्रायणिः। [6]हार्त्रायणिः। अणः इति किम्? दाक्षायणः। द्व्यचः इति किम्? औपगविः।

[३९३] [7]त्यदादीनां वा फिञ् वक्तव्यः।

त्यादायनिः, त्यादः। यादायनिः, यादः। तादायनिः, तादः। [8]अणत्र प्राप्तः॥

## उदीचां वृद्धादगोत्रात्। (१५७/११८१)

वृद्धं [9]यच्छब्दरूपम् अगोत्रं, तस्मादपत्ये फिञ् प्रत्ययो भवति उदीचामाचार्याणां मतेन। [10]आम्रगुप्तायनिः। ग्रामरक्षायणिः। कारिशब्दादपि वृद्धादगोत्रात् परत्वादनेनैव[11] भवितव्यम्। नापितायनिः। उदीचामिति किम्? आम्रगुप्तिः। वृद्धादिति किम्? याज्ञदत्तिः। अगोत्रादिति किम्? औपगविः॥

## वाकिनादीनां कुक् च। (१५८/११८२)

वाकिन इत्येवमादिभ्यः [12]शब्देभ्योऽपत्ये फिञ् [13]प्रत्ययो भवति, तत्संनियोगेन [14]चैषां कुगागमः। यदिह वृद्धमगोत्रं शब्दरूपं तस्यागमार्थमेव ग्रहणम्, अन्येषामुभयार्थम्। [15]वाकिनकायनिः। गारेधकायनिः। इञाद्यपवादो योगः। उदीचामित्यधिकारात् पक्षे ते[16]ऽपि भवन्ति। वाकिनिः। गारेधिः।

वाकिन। गारेध। कार्कटच। काक। लङ्का। 'चर्मिवर्मिणोर्नलोपश्च'[17] (ग.सू. ८१)॥

## पुत्रान्तादन्यतरस्याम्। (१५९/११८३)

उदीचां वृद्धात् इति वर्तते। [18]पुत्रान्तमगोत्रम् इति पूर्वेणैव [19]प्रत्ययः सिद्धः, तस्मिन्ननेन कुगागमोऽन्यतरस्यां विधीयते। पुत्रान्तात् प्रातिपदिकात् यः फिञ् प्रत्ययः, तस्मिन् परभूतेऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य। तेन त्रैरूप्यं सम्पद्यते। गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, [20]गार्गीपुत्रिः। वात्सीपुत्रकायणिः, [21]वात्सीपुत्रायणिः, वात्सीपुत्रिः॥

---

1. इञोऽपवादः नास्ति फ. 2. प्रत्ययतत्संनियोगेन च ब. फ. 3. नास्ति फ. 4. वार्षायणिः ब. 5. कार्त्रायणिः नास्ति फ. 6. यास्कस्यापत्यं यास्कायनिः। प्रौष्टायनिः। एवं हौत्रायणिः इत्यधिकम् ब. 7. त्यादादीनां – अणत्र प्राप्तः नास्ति फ. 8. अणेव क. 9. प्रातिपदिकम् फ. 10. शालगुप्तायनिः फ. 11. एव नास्ति ब. 12. शब्देभ्यः नास्ति फ. 13. प्रत्ययो नास्ति ब. 14. च तेषां फ. 15. वाकिनस्य अपत्यम् इत्यधिकम् क. 16. इञ् अपि फ. 17. चार्मिकायणिः वार्मिकायणिः इत्यधिकम् फ. 18. वृद्धमगोत्रम् ब. 19. फिञ् इत्यधिकम् फ. 20. गर्गपुत्रिः फ. 21. वात्सीपुत्रायणिः नास्ति फ.

## प्राचामवृद्धात् फिन् बहुलम् । (१६०/११८४)

अवृद्धाच्छब्दरूपादपत्ये फिन् प्रत्ययो भवति [1]बहुलं प्राचां मतेन । ग्लुचुकायनिः । [2]अहिचुम्बकायनिः । प्राचाम् इति किम् ? ग्लौचुकिः । अवृद्धात् इति किम् ? राजदन्तिः । उदीचां प्राचामन्यतरस्यां बहुलम् इति सर्व एते विकल्पार्थास्तेषामेकेनैव सिध्यति । तत्राचार्यग्रहणं पूजार्थम् । बहुलग्रहणं वैचित्र्यार्थम् । क्वचिन्न भवत्येव, दाक्षिः । प्लाक्षिः ।।

## मनोर्जातावञ्यतौ षुक् च । (१६१/११८७)

मनुशब्दाद् अञ् यत् इत्येतौ प्रत्ययौ भवतः, [3]तत्सन्नियोगेन षुगागमः, समुदायेन चेज्जातिर्गम्यते । मानुषः, मनुष्यः । जातिशब्दावेतौ । अपत्यार्थोऽत्र नास्त्येव । तथा च मानुषाः इति बहुषु न लुग् भवति । [4]अपत्यविवक्षायां तु अणैव भवितव्यम् । मानवी प्रजा ।

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः (म.भा. २.२६४) ।।

## अपत्यं पौत्रप्रभृति गोत्रम् । (१६२/१०८९)

पौत्रप्रभृति यदपत्यं तद् गोत्रसञ्ज्ञं भवति । सम्बन्धिशब्दत्वाद् अपत्यशब्दस्य [5]यदपत्यं तदपेक्षया पौत्रप्रभृतेर्गोत्रसञ्ज्ञा विधीयते । गर्गस्यापत्यं [5]पौत्रप्रभृति गार्ग्यः । वात्स्यः । अपत्यम् इति व्यपदेशोऽयं [6]पौत्रप्रभृतेः । पौत्रप्रभृति इति किम् ? अन्यस्य मा भूत् । [7]कौञ्जिः । गार्गिः । गोत्रप्रदेशाः – 'एको गोत्रे' (४. १. ९३/१०९३) इत्येवमादयः ।।

## जीवति तु वंश्ये युवा । (१६३/१०९०)

अभिजनप्रबन्धो वंशः । तत्र भवो वंश्यः पित्रादिः । तस्मिन् जीवति सति पौत्रप्रभृत्यपत्यं युवसञ्ज्ञं भवति । पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्यं विशेषयति, किं तर्हि, [8]षष्ठ्या विपरिणम्यते पौत्रप्रभृतेर्यदपत्यम् इति । तेन चतुर्थादारभ्य युवसञ्ज्ञा विधीयते । गार्ग्यायणः । वात्स्यायनः । तुशब्दोऽवधारणार्थो युवैव न गोत्रम् इति ।।

## भ्रातरि च ज्यायसि । (१६४/१०९१)

भ्रातरि[9] ज्यायसि जीवति [10]कनीयान् भ्राता युवसञ्ज्ञो भवति पौत्रप्रभृतेरपत्यम् । गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् [11]मृते पित्रादौ वंश्ये भ्रातरि[12] ज्यायसि जीवति[13] युवसञ्ज्ञो भवति । अवंश्यार्थोऽयमारम्भः । पूर्वजाः पित्रादयो वंश्या इत्युच्यते । भ्राता तु न वंश्यः । अकारणत्वात् । गार्ग्ये जीवति, गार्ग्यायणो अस्य कनीयान् भ्राता । वात्स्यायनः । दाक्षायणः । प्लाक्षायणः ।।

---

1. बहुलं नास्ति फ. 2. अहिचुम्बकायनिः नास्ति फ. 3. तत्संनियोगेन नास्ति फ. 4. अगोत्रात् इत्यधिकम् क, अगोत्रत्वात् इत्यधिकम् फ. 5. यस्य ब.क.फ. 6. पौत्रप्रभृतेः नास्ति ब.क. 7. कौन्तिः ब. 8. षष्ठी ब. 9. च इत्यधिकम् फ. 10. सति इत्यधिकम् फ. 11. भ्राता इत्यधिकम् फ, मृतेऽपि ब. 12. च इत्यधिकम् फ. 13. सति इत्यधिकम् फ.

## वान्यस्मिन् सपिण्डे स्थविरतरे जीवति। (१६५/१०९२)

[1]सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते। [2]येषाम् 'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते'[3] इत्येवमादिकायां क्रियायाम्[4]अनधिकारः। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसञ्ज्ञं वा भवति। प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु सञ्ज्ञिनः। तरब्निर्देश [5]उभयोत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात् पितृव्ये [6]पितामहे भ्रातरि [7]वयसाधिके जीवति। गर्गस्यापत्यं गार्ग्यायणः गार्ग्यो [8]वा। वात्स्यायनः वात्स्यो वा। दाक्षायणः दाक्षिर्वा। स्थविरतरे इति किम्? स्थानवयोन्यूने गार्ग्य एव भवति। [9]जीवति इति किम्? मृते मृतो वा गार्ग्य एव भवति॥

## वृद्धस्य च पूजायाम्। (१६६/१०९२ वा.)

अपत्यमन्तर्हितं वृद्धम् इति शास्त्रान्तरे परिभाषणाद् गोत्रं वृद्धम् इत्युच्यते। वृद्धस्य युवसञ्ज्ञा वा भवति पूजायां गम्यमानायाम्। सञ्ज्ञासामर्थ्याद् गोत्रं युवप्रत्ययेन पुनरुच्यते। वृद्धस्य इति षष्ठीनिर्देशो 'विचित्रा [10]सूत्रस्य कृतिः' इति। तत्रभवान् गार्ग्यायणः गार्ग्यो वा। तत्रभवान् वात्स्यायनः वात्स्यो वा। तत्रभवान् दाक्षायणः दाक्षिर्वा। पूजायाम् इति किम्? गार्ग्यः। वात्स्यः॥

## यूनश्च कुत्सायाम्। (१६७/१०९२ वा.)

कुत्सायां गम्यमानायां यूनो वा युवसञ्ज्ञा भवति। निवृत्तिप्रधानो विकल्पः। युवसञ्ज्ञायां प्रतिषिद्धायां पक्षे गोत्रसञ्ज्ञैव भवति, प्रतिपक्षाभावात्। गार्ग्यो जाल्मः गार्ग्यायणो [11]वा। वात्स्यो जाल्मः वात्स्यायनो वा। दाक्षि[12]र्जाल्मः दाक्षायणो वा। कुत्सायाम् इति किम्? गार्ग्यायणः॥

## जनपदशब्दात् क्षत्रियादञ्। (१६८/११८६)

जनपदशब्दो यः क्षत्रियवाची, तस्मादपत्ये अञ् प्रत्ययो भवति। पाञ्चालः। ऐक्ष्वाकः। वैदेहः। [13]पौरवः। क्षत्रियात् इति किम्? ब्राह्मणस्य पञ्चालस्य अपत्यं पाञ्चालिः। वैदेहिः। जनपदशब्दात् इति किम्? द्रुह्योरपत्यं द्रौह्यवः।

[३९४] क्षत्रियसमानशब्दाज्जनपदशब्दात्तस्य राजन्यपत्यवत्। (म. भा. २.२६९)

पञ्चालानां राजा पाञ्चालः। वैदेहः। मागधः[14]॥

## साल्वेयगान्धारिभ्यां च। (१६९/११८७)

साल्वेय[15]गान्धारिशब्दाभ्याम् अपत्ये अञ् प्रत्ययो भवति। [16]जनपदशब्दावेतौ क्षत्रियाभिधायिनौ ताभ्यामञपवादे [17]वृद्धादिति ञ्यङि प्राप्ते पुनरञ् विधीयते। साल्वेयः। [18]गान्धारः। तस्य राजनि इत्येव, साल्वेयो राजा। [19]गान्धारो राजा॥

---

1. सप्तपुरुषावधयः फ. 2. येन फ. 3. दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते इत्यधिकम् क. ड. 4. अधिकारः ब. क. फ. 5. उभयोत्कर्षणार्थः फ. 6. पितामहे भ्रातरि नास्ति फ. 7. वा इत्यधिकम् क. 8. वा नास्ति फ. 9. वाक्यमिदं नास्ति फ. 10. हि इत्यधिकम् ब. 11. वा नास्ति फ. 12. जाल्मः दाक्षायणो वा नास्ति फ. 13. पौरवः नास्ति फ. 14. अवृद्धादपीति प्राप्तस्य वुञोऽपवादः इत्यधिकम् अ. क.ड, अवृद्धादपि बहुवचनविषयात् प्राप्तो वुञ् बाध्यते इत्यधिकम् ब. 15. गान्धारिभ्याम् ब. 16. जनपद–वाचिनौ फ. 17. वृद्धैरिति ब, वृद्धादित्यत्र फ. 18. गान्धारः नास्ति फ. 19. उदाहरणमिदं नास्ति फ.

## द्व्यञ्मगधकलिङ्गसूरमसादण् । (१७०/११८८)

जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यचः, मगध कलिङ्ग सूरमस इत्येतेभ्यश्च अपत्ये अण् प्रत्ययो भवति । अञोऽपवादः । आङ्गः । वाङ्गः । पौण्ड्रः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । [1]तस्य राजनि इत्येव, आङ्गो राजा ॥

## वृद्धेत्कोसलाजादाञ्ञ्यङ् । (१७१/११८९)

जनपदशब्दात् क्षत्रियात् इत्येव । वृद्धात्[2] प्रातिपदिकात् इकारान्तात् च, कोसलअजादशब्दाभ्यां चापत्य ञ्यङ प्रत्ययो भवति । अञोऽपवादः । वृद्धात् तावत् – आम्बष्ठ्यः । सौवीर्यः । इकारान्तात् – आवन्त्यः । कौन्त्यः । कौसलाजादयोरवृद्धार्थं वचनम् । कौसल्यः । आजाद्यः । तपरकरणम् किम् ? कुमारी नाम [3]जनपदसमानशब्दः क्षत्रियः, तस्यापत्यं कौमारः ।

[३९५] पाण्डोर्जनपदशब्दात् क्षत्रियाड् ड्यण् वक्तव्यः ।

पाण्ड्यः । अन्यस्मात् पाण्डव एव । तस्य राजनि इत्येव, आम्बष्ठ्यो राजा । आवन्त्यः । [4]कौन्त्यः । कौसल्यः । आजाद्यः ॥

## कुरुनादिभ्यो ण्यः । (१७२/११९०)

जनपदशब्दात् क्षत्रियात् इत्येव । कुरुशब्दात् नादिभ्यश्च प्रातिपदिकेभ्यो[5] ण्यः प्रत्ययो भवति । अणञोरपवादः । कौरव्यः । [6]नकारादिभ्यः – नैषध्यः । नैपथ्यः । तस्य राजनि इत्येव, कौरव्यो राजा ॥

## साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् । (१७३/११९१)

जनपदशब्दात् क्षत्रियात् इत्येव । सल्वा [7]नाम क्षत्रिया तन्नामिका, तस्या अपत्यं, 'द्व्यचः' (४. १. १२१/ ११२४) इति ढक्, साल्वेयः । अण् अपीष्यते, साल्वः । तस्य निवासः साल्वो जनपदः । तदवयवा उदुम्बरादयः, तेभ्यः क्षत्रियवृत्तिभ्य इदं प्रत्ययविधानम् । साल्वावयवेभ्यः प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति । अञोऽपवादः । औदुम्बरिः । [8]तैलखलिः । [9]माद्रकारिः । यौगन्धरिः । भौलिङ्गिः । [10]शारदण्डिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । तस्य राजनि इत्येव, औदुम्बरी राजा ।

उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिताः ॥

---

1. वाक्यमिदं नास्ति फ. 2. च इत्यधिकम् फ. 3. जनपदशब्दः फ. 4. कौन्त्यः नास्ति फ. 5. अपत्ये इत्यधिकम् फ. 6. नादिभ्यः फ. 7. नाम नास्ति फ. 8. तैलखिलिः फ. 9. मद्रकारिः फ. 10. शीरदम्भिः फ.

## ते तद्राजाः । (१७४/११९२)

'[1]जनपदशब्दात् क्षत्रियाद् अञ्' (४.१.१६८/११८६) इत्येवमादयः[2] प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु [3]पूर्वे, [4]गोत्रयुवसञ्ज्ञाकाण्डेन व्यवहितत्वात् । [5]तेऽञादयः तद्राजसञ्ज्ञा भवन्ति । तथा [6]चोदाहृतम् । तद्राजप्रदेशाः – 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२.४.६२/११९३) इत्येवमादयः ॥

## कम्बोजाल्लुक् । (१७५/११९४)

जनपदशब्दात् क्षत्रियात् (४.१.१६८/११८६) इत्यनेन विहितस्य अञो लुगुच्यते । कम्बोजात्[7] प्रत्ययस्य लुक् भवति । [8]कम्बोजः ।

[३९६] कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् । (म. भा. २. २७०)

चोलः । केरलः । शकः । [9]यवनः । तस्य राजनि इत्येव, कम्बोजो राजा ॥

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । (१७६/११९५)

[10]अवन्तिकुन्तिकुरुशब्देभ्य उत्पन्नस्य तद्राजस्य[11] स्त्रिया[12]मभिधेयायां लुग् भवति । अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य । अवन्ती । कुन्ती । कुरूः । स्त्रियाम् इति किम्? आवन्त्यः । कौन्त्यः । कौरव्यः ॥

## अतश्च । (१७७/११९६)

स्त्रियाम् इत्येव । अकारप्रत्ययस्य तद्राजस्य स्त्रिया[13]मभिधेयायां लुग्भवति । शूरसेनी । मद्री । दरत् । तकारो विस्पष्टार्थः । अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति, आम्बष्ठ्या । सौवीर्या ॥

## न प्राच्यभर्गादियौधेयादिभ्यः । (१७८/११९७)

प्राच्येभ्यः भर्गादिभ्यः यौधेयादिभ्यश्च उत्पन्नस्य[14] लुग्न भवति । 'अतश्च' (४.१.१७७/११९६) इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिध्यते । प्राच्येभ्यः क्षत्रियेभ्यस्तावत् – पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । मागधी । भर्गादिभ्यः – भार्गी । कारूषी । कैकेयी । यौधेयादिभ्यः – यौधेयी । शौभ्रेयी । शौक्रेयी ।

कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिध्यते ? [15]पाञ्चमिकस्याञः, पर्श्वादियौधेयादिभ्याम् अणञौ (५.३.११७/२०७०) इत्येतस्य । कथं पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव विज्ञापयति पाश्चमिकस्यापि तद्राजस्य अतश्च इत्यनेन लुग् भवति इति । किमेतस्य ज्ञापनेन प्रयोजनम् ? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति । पर्शूः । रक्षाः । असुरी । तथा चोक्तं यौधेयादिप्रतिषेधो [16]ज्ञापकः पर्श्वाद्यणो लुक् इति ।

---

1. ते इत्यधिकम् फ. 2. अञादयः क. ड. 3. परे क. 4. युवसञ्ज्ञाकाण्डेन क. 5. ते नास्ति फ. 6. चैव क. फ. ब. 7. परस्य इत्यधिकम् फ. 8. कम्बोजः नास्ति ब. 9. यवनः नास्ति फ. 10. अवन्ति कुन्ति कुरु इत्येतेभ्यः फ. 11. प्रत्ययस्य इत्यधिकम् फ. 12. अभिधेयायां नास्ति फ. 13. अभिधेयायां नास्ति फ. 14. प्रत्ययस्य इत्यधिकम् ब. 15. तद्राजस्य अञः ब. 16. ज्ञापकम् ब.

भर्ग। करूष। केकय। [1]कश्मीर। साल्व। सुस्थाल। उरश। कौरव्य। इति भर्गादिः।

यौधेय। शौभ्रेय। शौक्रेय। [2]ज्याबाणेय। धार्तेय। धार्तेय। त्रिगर्त। भरत। उशीनर। यौधेयादिः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

चतुर्थाध्यायस्य प्रथमः पादः॥

---(०)---

1. काश्मीर ब. 2. ज्यावानेय ब.

# चतुर्थाध्यायस्य द्वितीयः पादः

## तेन रक्तं रागात्। (१/१२०२)

शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः। रज्यतेऽनेन इति रागः। तेन इति तृतीयासमर्थाद् रागविशेषवाचिनः [1]शब्दाद् रक्तम् इत्येतस्मिन्नर्थे यथाविहितं[2] प्रत्ययो भवति। कषायेण रक्तं वस्त्रम् [3]काषायम्। [4]माञ्जिष्ठम्। कौसुम्भम्[5]। रागात् इति किम्? देवदत्तेन रक्तं वस्त्रम्। कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादौ इति? उपमानाद् भविष्यति, काषायौ इव काषायौ, हारिद्राविव हारिद्रौ। 'द्वैपवैयाघ्रादञ्' (४.२.१२/१२१३) इति यावत् तृतीयासमर्थविभक्तिरनुवर्तते॥

## लाक्षारोचनाशकलकर्दमाट् ठक्। (२/१२०३)

लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यो रक्तम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। [7]लाक्षया रक्तं वस्त्रम् लाक्षिकम्। [8]रौचनिकम्। शाकलिकम्। कार्दमिकम्।

[३९७] शकलकर्दमाभ्यामणपीष्यते।(म. भा. २.२७०)

शाकलम्। कार्दमम्।

[३९८] नील्या अन् वक्तव्यः। (म. भा. २.२७१)

नील्या रक्तं नीलं [9]वस्त्रम्।

[३९९] पीतात् कन् वक्तव्यः। (म. भा. २.२७१)

पीतेन रक्तं [10]पीतकम्।

[४००] हरिद्रामहारजनाभ्यामञ् वक्तव्यः। (म. भा. २.२७१)

हारिद्रम्। [11]माहारजनम्॥

## नक्षत्रेण युक्तः कालः। (३/१२०४)

तृतीयासमर्थविभक्तिः अनुवर्तते। [12]तेन इति तृतीयासमर्थाद् [13]नक्षत्रविशेषवाचिनः [14]शब्दाद् युक्तः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। योऽसौ युक्तः, कालश्चेत् स भवति। कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते? पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः [15]पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति। पुष्येण युक्तः कालः। [16]पुष्यसमीपस्थेन चन्द्रमसा युक्तः इत्यर्थः। पौषी रात्रिः। पौषमहः। [17]माघी रात्रिः। माघमहः (म. भा. २.२७२)। नक्षत्रेण इति किम्? चन्द्रमसा युक्ता रात्रिः। कालः इति किम्? पुष्येण युक्तश्चन्द्रमाः॥

---

1. प्रातिपदिकात् फ. ह. 2. अण् प्रत्ययः क. फ. 3. काषायं वस्त्रम् फ. 4. माञ्जिष्ठम् नास्ति फ. 5. हारिद्रम् इत्यधिकम् फ. 6. लाक्षारोचनाट्ठक् पमं. 7. लाक्षारक्तं क. ग, रक्तं नास्ति फ. 8. रोचनिकम्, फ. 9. वस्त्रं नास्ति क. फ. 10. वस्त्रं इत्यधिकम् ह. 11. माहारजतम् फ, महारजतम् ग. 12. तेन नास्ति फ. 13. नक्षत्रवाचिनः क. फ. 14. प्रातिपदिकात् फ. 15. पुष्यादयः शब्दाः ह. 16. पुष्यसमीपेन क. 17. माघी रात्रिः नास्ति फ.

## लुबविशेषे। (४/१२०५)

पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे[1]। [2]न चेन् [3]नक्षत्रयुक्तस्य कालस्य [4]रात्र्यादिविशेषोऽभिधीयते। यावान् कालो नक्षत्रेण युज्यते [5]अहोरात्रः, (म.भा. २.२७३) तस्याविशेषे [6]लुब् भवति। अद्य पुष्यः। अद्य कृत्तिकाः। अविशेषे इति किम्? पौषी रात्रिः। पौषमहः[7]॥

## सञ्ज्ञायां श्रवणाश्वत्थाभ्याम्। (५/१२०६)

अविशेषे [8]लुप् विहितः पूर्वेण, विशेषार्थोऽयमारम्भः। श्रवणशब्दाद् अश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य [9]लुब् भवति सञ्ज्ञायां विषये। श्रवणा रात्रिः। अश्वत्थो मुहूर्तः। लुपि युक्तवद्भावः कस्मान् न भवति? निपातनात् 'विभाषा फाल्गुनीश्रवणाकार्तिकी[10]चैत्रीभ्यः' (४.२.२३/१२२५) इति। सञ्ज्ञायाम् इति किम्? श्रावणी, [11]आश्वत्थी रात्रिः[12]॥

## द्वन्द्वाच् छः। (६/१२०७)

नक्षत्रद्वन्द्वात् तृतीयासमर्थाद् [13]युक्ते काले छः प्रत्ययो भवति, विशेषे चाविशेषे च। राधानुराधीया रात्रिः। तिष्यपुनर्वसवीयमहः। अविशेषे – राधानुराधीयम्[14]। [15]अद्य तिष्य[16]पुनर्वसवीयम्। [17]लुपं परत्वाद् बाधते[18]॥

## दृष्टं साम। (७/१२०८)

तेन इति तृतीयासमर्थाद् दृष्टं [19]साम इत्येतस्मिन्नर्थे यथाविहितं [20]प्रत्ययो भवति, यद् दृष्टं साम चेत्तद् भवति। क्रुञ्चेन दृष्टं क्रौञ्चं साम (तै. २.५.११.१)। [21]वासिष्ठम्। वैश्वामित्रम् (ऐ.ब्रा. ६.२०)॥

## कलेर्ढक्। (८/१२०९)

कलिशब्दात् [22]तृतीयासमर्थाद् दृष्टं [23]साम इत्येतस्मिन्नर्थे ढक् [24]प्रत्ययो भवति। [25]अणोऽपवादः। कलिना दृष्टं साम कालेयम्।

[४०१] सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः। (म.भा. २.२७३)

अग्निना दृष्टम्[26] आग्नेयम्। एवम् अग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम् (म. भा. २. २७३) इति सर्वत्र ढग् एव भवति। [27]आग्नेयम्। तथा कालेयम् [28]अपि प्रतिपत्तव्यम्।

[४०२] दृष्टे सामनि[29] अण् वा डिद् भवतीति वक्तव्यम्। (म.भा. २.२७३)

उशनसा दृष्टं साम औशनसम्, औशनम्।

[४०३) जाते चार्थे योऽन्येन बाधितः पुनरण् विधीयते स वा डिद् भवतीति वक्तव्यम्। (म. भा. २. २७३)

---

1. गण्यमाने इत्यधिकम् ह, अविशेषेण च गण्यमाने फ. 2. न नास्ति फ. 3. नक्षत्रेण युक्तस्य ब. 4. रात्र्या विशेषो ह. 5. अहोरात्रादिः क. 6. लुक् ब.क. 7. माघमहः इत्यधिकम् क.फ. 8–9. लुक् क. 10. चैत्राभ्यः ह. 11. आश्वत्थी नास्ति ग. 12. अश्वत्थशब्देन अश्विनी नक्षत्रमुच्यते – अश्वथो मुहूर्तः इत्यधिकम् ग.ह. 13. युक्तः कालः इत्यस्मिन्नर्थे अ. 14. अहः इत्यधिकम् ह. 15. अद्य नास्ति क. 16. पुनर्वस्वीयम् क. 17. लुप् च फ. 18. छः इत्यधिकम् ब.ह. 19. साम नास्ति ब.फ. 20. अण् इत्यधिकम् फ. 21. वासिष्ठम् नास्ति ह, वसिष्ठेन दृष्टं साम वासिष्ठम् ग. 22. तृतीयासमर्थात् नास्ति ह. 23. साम नास्ति फ. 24. प्रत्ययः नास्ति ग. 25. अणोऽपवादः नास्ति फ. 26. साम इत्यधिकम् ड.फ. 27. अग्निः देवता अस्य इति इत्यधिकम् फ, नास्ति ब.क. 28. इति इत्यधिकम् फ. 29. जाते वा इत्यधिकम् फ.ह.

प्रागदीव्यतोऽण् (४.१.८३/१०७३) [1]प्राप्तः [2]कालठञा (४.३.११/१३८१) बाधितः सन्धिवेलाद्यृतु-नक्षत्रेभ्यः (४.३.१६/१३८७) इति [3]पुनर्विधीयते स वा डिद् भवति इति वक्तव्यम् (म. भा. २.२७३)। शतभिषजि जातः। शातभिषजः, [4]शातभिषः।

[४०४] तीयादीकक् स्वार्थे[5] वा वक्तव्यः। (म. भा. २.२७३)

द्वैतीयीकम्। [6]तार्तीयीकम्। [7]द्वितीयकम्। तृतीयकम्।

[४०५] न विद्यायाः। (म. भा. २.२७३)

द्वितीया, तृतीया विद्या।

[४०६] गोत्रादङ्कवदिष्यते। (म. भा. २.२७३)

दृष्टं साम इत्येतस्मिन्नर्थे। औपगवेन दृष्टं साम औपगवकम्। [8]कापटवकम्। गोत्रचरणाद् वुञ् (४.३.१२६/१५०६) भवति।

दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते।
तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते (म. भा. २.२७३)॥

## वामदेवाड् ड्यड्ड्यौ। (९/१२१०)

वामदेवशब्दात् तृतीयासमर्थात् दृष्टं साम इत्येतस्मिन्नर्थे ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः। अणोऽपवादः। वामदेवेन दृष्टं साम वामदेव्यं साम। [9]तित्करणं स्वरार्थम्। डित्करणं किमर्थम्? 'ययतोश्चातदर्थे' (६.२.१५६/३८९०) इति नञ [10]उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत्। अननुबन्धक[11]ग्रहण[12]परिभाषया एकानुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः [13]क्रियते (म. भा. २.२७४)। अवामदेव्यम्[14]।

सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे (म. भा. २.२७४)॥

## परिवृतो रथः। (१०/१२११)

तेन इति तृतीयासमर्थात् परिवृतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतः रथश्चेत् स भवति। वस्त्रेण परिवृतो रथः वास्त्रो[15] रथः। काम्बलः। चार्मणः। रथः इति किम्? वस्त्रेण परिवृतः कायः। समन्तात् वेष्टितः परिवृत [16]उच्यते। यस्य कश्चिदवयवो वस्त्रादिभिरवेष्टितः, तत्र न भवति। तेनेह न, छात्रैः परिवृतो रथः[17] (म. भा. २.२७४)॥

---

1. प्राप्तः – वक्तव्यम् नास्ति फ. ह. 2. कालात् ठञं बाधित्वा क, कालात् ठञा ब. 3. अण् इत्यधिकम् ग. 4. सातभिषजः, सातभिषः ब. क. 5. वा नास्ति क. फ. 6. तार्तीयीकम् नास्ति फ. 7. द्वितीयम्, तृतीयम् ब. क. ड. 8. कापटकम् ब. 9. तित्करणं स्वरार्थम् नास्ति ब. 10. उत्तरस्य पदस्य क. 11. ग्रहण नास्ति फ. 12. °परिभाषायाः ब. 13. क्रियते नास्ति फ. 14. इति इत्यधिकम् क. 15. रथः नास्ति फ. 16. इति इत्यधिकम् ब. ग. क. फ. 17. इति इत्यधिकम् फ.

## पाण्डुकम्बलादिनिः। (११/१२१२)

पाण्डुकम्बलशब्दात् तृतीयासमर्थात् परिवृतो रथः इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति। अणोऽपवादः। [1]पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः (म.भा.२.२७४)। पाण्डुकम्बलशब्दो [2]राजास्तरणस्य वर्णकम्बलस्य वाचकः। मत्वर्थीयेनैव[3] सिद्धे वचनमणो निवृत्त्यर्थम्॥

## द्वैपवैयाघ्रादञ्। (१२/१२१३)

द्वीपिव्याघ्रयो[4]र्विकारभूते चर्मणो द्वैपवैयाघ्रे[5], ताभ्यां तृतीयासमर्थाभ्यां परिवृतो रथः इत्येतस्मिन्नर्थे अञ् प्रत्ययो भवति। अणोऽपवादः। [6]स्वरे विशेषः। द्वैपेन[7] परिवृतो रथः द्वैपः। [8]वैयाघ्रः॥

## कौमारापूर्ववचने। (१३/१२१४)

कौमार इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने। [9]पाणिग्रहणस्यापूर्ववचनम्। उभयतः स्त्रियाः अपूर्वत्वे (म.भा. २. २७४) निपातनमेतत्। अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः। कुमारीशब्दाद् द्वितीयासमर्थाद् उपयन्तरि प्रत्ययः। अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या (म. भा. २. २७४)। प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये।

कौमारापूर्ववचने कुमार्या अण् विधीयते।
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा[10] (म. भा. २. २७५)॥

कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्या इति सिद्धम्॥

## तत्रोद्धृतममत्रेभ्यः। (१४/१२१५)

[11]तत्र इति सप्तमीसमर्थादमत्रवाचिनः शब्दाद् उद्धृतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। भुक्तोच्छिष्टम् उद्धृतम्[12] उच्यते, यस्योद्धरणम् इति प्रसिद्धिः। अमत्रं भाजनं पात्रमुच्यते। शरावेषु उद्धृतः शाराव [13]ओदनः। [14]माल्लिकः। [15]कार्परः। अमत्रेभ्यः इति किम्? पाणावुद्धृत ओदनः। तत्र इति सप्तमी समर्थविभक्तिः 'क्षीराड् ढञ्' (४. २. २०/१२२२) इति यावदनुवर्तते॥

## स्थण्डिलाच्छयितरि व्रते। (१५/१२१६)

[16]स्थण्डिलशब्दात् सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेत् व्रतं गम्यते। व्रतम् इति शास्त्रितो नियमः उच्यते। स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो [17]भिक्षुः। स्थाण्डिलो ब्रह्मचारी। व्रते इति किम्? स्थण्डिले शेते [18]ब्रह्मदत्तः॥

1. पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली रथः ग. 2. गजास्तरणस्य ग, गजास्तरणकम्बलस्य ह, रथास्तरणम् क. 3. इति च इत्यधिकम् फ. 4. विकारे फ. 5. इति शब्दौ वर्तेते इत्यधिकम् फ, शब्दे इत्यधिकम् ह. 6. स्वरविशेषः ब, नास्ति ड. 7. चर्मणा इत्यधिकम् फ. 8. वैयाघ्रेण परिवृतो रथः इत्यधिकम् क.ह. 9. पाणिग्रहस्य फ, वाक्यमिदं नास्ति ह. 10. अनेन प्रत्याख्यायते योगः इत्यधिकम् ब.क.ड.फ.ह. 11. तत्र इति सप्तमी क्षीराड् ढञ् इति यावदनुवर्तते इत्यधिकम् फ. 12. इति इत्यधिकम् फ. 13. ओदनः नास्ति ब. क. 14. माल्लकः क, मालकः ब. 15. खार्परः क, कार्पारः ह. 16. सप्तमी समर्थविभक्तिः इति अनुवर्तते इत्यधिकम् फ. 17. भिक्षुः नास्ति फ. 18. देवदत्तः ब. क. ग.

## संस्कृतं भक्षाः । (१६/१२१७)

तत्र इति सप्तमीसमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् संस्कृतं भक्षाः चेत् [1]ते भवन्ति । खरविशदम्[2]अभ्यवहारार्थं [3]भक्षमित्युच्यते । सत उत्कर्षाधानम् संस्कारः । भ्राष्ट्रे संस्कृता भक्षाः भ्राष्ट्रा अपूपाः । [4]कालशाः । [5]कौम्भाः । भक्षाः इति किम् ? पुष्पपुटे [6]संस्कृतो मालागुणः ।।

## शूलोखाद्यत् । (१७/१२१८)

शूलशब्दाद् [7]उखाशब्दाच्च[8] सप्तमीसमर्थात् संस्कृतं [9]भक्षाः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । [10]उख्यम् ।।

## दध्नष्ठक् । (१८/१२१९)

दधिशब्दात् सप्तमीसमर्थात् संस्कृतं [11]भक्षाः इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । [12]दधनि संस्कृतं दाधिकम् । ननु च संस्कृतार्थे प्राग्वहतेः ठकं (४.४.१/१५४८) वक्ष्यति, तेनैव [13]सिद्धम्[14] ? न सिध्यति । दध्ना हि [15]तत् संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम्, इह [16]तु दधि केवलमाधारभूतं, द्रव्यान्तरेण लवणादिना[17] संस्कारः क्रियते ।।

## उदश्वितोऽन्यतरस्याम् । (१९/१२२०)

उदश्विच्छब्दात् सप्तमीसमर्थात् संस्कृतं [18]भक्षाः इत्येतस्मिन्नर्थे अन्यतरस्यां ठक् प्रत्ययो भवति, पक्षे यथाप्राप्तमण्[19] भवति । औदश्वित्कम्, औदश्वितम् ।।

## क्षीराड् ढञ् । (२०/१२२२)

क्षीरशब्दात् सप्तमीसमर्थात् [20]संस्कृतं भक्षाः इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति । अणोऽपवादः । [21]क्षीरे संस्कृता क्षैरेयी यवागूः ।।

## साऽस्मिन् पौर्णमासीति सञ्ज्ञायाम् । (२१/१२२३)

सा इति प्रथमासमर्थाद् अस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं पौर्णमासी चेद् [22]भवति । इतिकरणः ततश्चेद् विवक्षा भवति । सञ्ज्ञायाम् इति समुदायोपाधिः, [23]प्रत्ययान्तेन [24]चेत् सञ्ज्ञा गम्यते इति । मासार्धमाससंवत्सराणामेषा सञ्ज्ञा । पौषी पौर्णमासी अस्मिन्[25] पौषो मासः ।

---

1. तद् भवति ग. फ. 2. अभ्यवहार्यं ब. क. फ. 3. भक्षशब्देन फ. 4. कालशाः भक्षा इति क. ह. 5. कौम्भाः नास्ति फ. 6. संस्कृताः मालाः फ. 7. उखशब्दात् फ, उखा इति पात्रविशेषः इत्यधिकम् फ. 8. प्रातिपदिकात् इत्यधिकम् ह. 9. भक्षाः नास्ति फ. 10. उखायां चेत् इति उख्यम् ह. 11. भक्षाः नास्ति फ. 12. दध्ना संस्कृतम् फ. 13. सिध्यति क. 14. अपि इत्यधिकम् ह. 15. तत् नास्ति फ. 16. खलु ब. 17. अत्र इत्यधिकम् ह. 18. भक्षाः नास्ति क. फ. 19. एव इत्यधिकम् क. फ. ब. 20. संस्कृतं भक्षाः नास्ति क. 21. क्षीरे संस्कृता नास्ति फ. 22. सा भवति ह. ड. 23. यदि इत्यधिकम् फ. 24. चेत् नास्ति फ. 25. मासे इत्यधिकम् फ.

पौषोऽर्धमासः। पौषः संवत्सरः। इह न भवति, पौषी पौर्णमासी अस्मिन् [1]दशरात्रे इति (म.भा. २.२७५)। भृतकमासे च न भवति (म.भा. २.२७५)। इतिकरणस्य सञ्ज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणं, तत्र किमर्थं द्वयमुपादीयते? सञ्ज्ञाशब्देन तुल्यताम् इतिकरणस्य ज्ञापयितुं, न ह्ययं लोके तथा प्रसिद्धः। सञ्ज्ञार्थत्वे तु सम्प्रति ज्ञापिते यत् तत्र तत्रोच्यते इतिकरणस्ततश्चेद् [2]विवक्षा इति तदुपपन्नं भवति[3]। अथ पौर्णमासी इति कोऽयं शब्दः। 'पूर्णमासादण्' (वा. ४१०) पौर्णमासी। अथवा पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते॥

## आग्रहायण्यश्वत्थाट् ठक्। (२२/१२२४)

सा अस्मिन् पौर्णमासी इति सर्वमनुवर्तते। आग्रहायणीशब्दाद् [4]अश्वत्थशब्दाच्च प्रथमासमर्थात् पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। [5]आग्रहायणिको मासः, अर्धमासः, [6]संवत्सरः। [7]एवम् आश्वत्थिकः॥

## विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः। (२३/१२२५)

फाल्गुन्यादयः पौर्णमासीशब्दाः, तेभ्यो विभाषा ठक् प्रत्ययो भवति, 'साऽस्मिन् पौर्णमासीति सञ्ज्ञायाम्' (४.२.२१/१२२३) इत्येतस्मिन् विषये। नित्यमणि प्राप्ते [8]पक्षे ठग् विधीयते। [9]फाल्गुनो मासः, फाल्गुनिकः। श्रावणः, श्रावणिकः। कार्तिकः, कार्तिकिकः। चैत्रः, [10]चैत्रिकः॥

## साऽस्य देवता। (२४/१२२६)

सा इति प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, [11]यत् प्रथमासमर्थं देवता चेत् सा भवति। यागसंप्रदानं देवता, देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये [12]प्रत्ययः। इन्द्रो देवता अस्य ऐन्द्रं हविः। आदित्यम्। बार्हस्पत्यम्। [13]प्राजापत्यम्। देवता इति किम्? [14]कन्या देवता अस्य। कथमैन्द्रो मन्त्रः? मन्त्रस्तुत्यमपि देवता [15]इत्युपचरन्ति। कथमाग्नेयो वै ब्राह्मणो [16]देवता इति? उपमानाद् भविष्यति। 'महाराज[17]प्रोष्ठपदाट् ठञ्' (४.२.३५/१२३८) इति यावत् 'साऽस्य देवता' इत्यधिकारः। सा इति [18]प्रकृते पुनः समर्थविभक्ति[19]निर्देशः [20]सञ्ज्ञानिवृत्त्यर्थः॥

## कस्येत्। (२५/१२२७)

कशब्दो [21]देवतायां प्रजापतेर्वाचकः, ततः पूर्वेणैव अण् प्रत्ययः सिद्धः, [22]इकारादेशार्थं वचनम्। कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन। [23]कायं हविः। 'कायमेककपालं निर्वपेत्' (मै. सं. ३.१५.१०)॥

## शुक्राद् घन्। (२६/१२२८)

शुक्रशब्दात् साऽस्य देवता इत्यस्मिन्नर्थे घन् प्रत्ययो भवति। अणोऽपवादः। [24]शुक्रियं हविः। शुक्रियोऽध्यायः॥

---

1. पञ्चदशरात्रे क. 2. विवक्षिते क. 3. इति इत्यधिकम् फ. 4. अश्वत्थ नास्ति क. 5. आग्रहायणी पौर्णमासी अस्मिन् अस्ति इति आग्रहायणिको मासः। अश्विनीयुक्ता पौर्णमासी आश्वत्थी तद्वान् मासः आश्वत्थिकः फ. 6. संवत्सरः नास्ति फ. 7. एवमाश्वत्थिकः नास्ति फ. 8. पक्षे नास्ति क. 9. फाल्गुनी पौर्णमासी अस्मिन् स फाल्गुनः फाल्गुनिकः मासः ब. 10. चैत्रिकः नास्ति फ. 11. तत् ह. 12. अयम् इत्यधिकम् ब. 13. प्राजापत्यम् नास्ति ब. फ. 14. कन्या देवदत्तस्य क. 15. इत्युपाचरन्ति ब. 16. देवदत्तायाः ब. 17. प्रोष्ठपदाभ्याम् क. फ. 18. प्रकृतेः क. 19. ग्रहणम् ह. 20. संज्ञानिवृत्त्यर्थम् ह, संज्ञिनिवृत्त्यर्थः फ. 21. देवतायाः फ. 22. इकादेशार्थः फ. 23. कायः पुरोडाशः ह, को देवता यस्य इत्यधिकम् फ. 24. शुक्रीयं हविः, शुक्रीयोऽध्यायः ह.

## अपोनप्त्रपांनप्तृभ्यां घः । (२७/१२२९)

अपोनप्तृ अपांनप्तृ इत्येताभ्यां घः प्रत्ययो भवति साऽस्य देवता इत्यस्मिन् विषये । [1]अणोऽपवादः । 'अपोनप्त्रियं [2]हविः' (श. ब्रा. ३. २९. १२), अपांनप्त्रियम्[3] । अपोनपाद् अपांनपाद् इति[4]देवताया नामधेये एते । तयोस्तु प्रत्ययसन्नियोगेन रूपमिदं निपात्यते ॥

## छ च । (२८/१२३०)

अपोनप्तृ अपांनप्तृ इत्येताभ्यां [5]छकारः प्रत्ययो भवति सा अस्य देवता इत्यस्मिन् विषये । [6]अणोऽपवादः । 'अपोनप्त्रीयं हविः' (आप. श्रौ. २२.२२. २), '[7]अपांनप्त्रीयम्' (काठ. सं. १२. ६) । योगविभागः सङ्ख्यातानुदेश[8]परिहारार्थः ।

[४०७] छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् । (म. भा. २. २७६)

पैङ्गाक्षीपुत्रीयम्[9] । तार्णबिन्दवीयम्[10] (म. भा. २.२७६) ।

[४०८] शतरुद्राच्छश्च घश्च ।

'शतरुद्रीयम्' (तै. सं. ५.४.३. १), 'शतरुद्रियम्' (मै. ३. ३. ४) ॥

## महेन्द्राद् घाणौ च । (२९/१२३१)

महेन्द्रशब्दात् घाणौ प्रत्ययौ भवतः, चकाराच् छश्च, साऽस्य देवता इत्यस्मिन् [11]विषये । महेन्द्रो देवता अस्य महेन्द्रियम् हविः, 'माहेन्द्रम्' (तै. सं. ६. ५.५. ३), 'महेन्द्रीयम्' (काठ. सं. १५. १) ॥

## सोमाट् ट्यण् । (३०/१२३२)

सोमशब्दात् ट्यण् प्रत्ययो भवति साऽस्य देवता इत्यस्मिन् [12]विषये । अणोऽपवादः । णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सोमो देवता अस्य सौम्यं हविः । [13]सौम्यं सूक्तम् । '[14]सौम्यी ऋक्' (मै. १.७.४) ॥

## वाय्वृतुपित्रुषसो यत् । (३१/१२३३)

वाय्वादिभ्यः शब्देभ्यः यत् प्रत्ययो भवति साऽस्य देवता इत्येतस्मिन् विषये । अणोऽपवादः । वायुः देवता अस्य वायव्यम् । [15]ऋतव्यम् । 'पित्र्यम्' (ऋ. ८. २०. १३) । [16]उषस्यम् ॥

---

1. अणोऽपवादः नास्ति फ. 2. हविः नास्ति फ. 3. हविः इत्यधिकम् ब. 4. देवतानामधेये क. 5. छकारप्रत्ययः क. 6. अणोऽपवादः नास्ति फ. 7. अपांनप्त्रीयं हविः क, नास्ति ह, अपांनप्त्रीयश्चरुः, (काठ. सं. 12.6) 8. निवृत्त्यर्थः फ. 9–10. हविः इत्यधिकम् ब. फ. 11. अर्थे फ. 12. अर्थे फ. 13. सौम्यं सूक्तम् नास्ति फ. 14. सौमा क. 15. ऋतव्या (तै. सं. 5. 3. 1). 16. उषस्या (मै. 3. 13. 5).

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च । (३२/१२३५)

द्यावापृथिव्यादिभ्यः छः प्रत्ययो भवति साऽस्य देवता इत्यस्मिन् विषये, चकाराद् यच्च । अणो ण्यस्य चापवादः । द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य 'द्यावापृथिवीयम्' (मै. १.८.१०), 'द्यावापृथिव्यम्' (तै. सं. १.८.२.१) । शुनश्च सीरश्च[1] तौ देवते अस्य [2]इति 'शुनासीरीयम्' (काठ. सं. २६.४), 'शुनासीर्यम्' (मै. ४.३.३) । शुनो वायुः । सीरः आदित्यः । मरुत्वान् देवता अस्य 'मरुत्वतीयम्' (तै. ४.४.२.२), मरुत्वत्यम् । 'अग्नीषोमीयम्' (तै. सं. १.८.१.१), अग्नीषोम्यम् । 'वास्तोष्पतीयम्' (तै. ३.४.१०.३), 'वास्तोष्पत्यम्' (मै. १.५.१३) । 'गृहमेधीयम्' (ऋ. ७.५६.१४), 'गृहमेध्यम्' (काठ. सं. ३६.९) ॥

अग्नेर्ढक् । (३३/१२३६)

अग्निशब्दाद् ढक् प्रत्ययो भवति साऽस्य देवता इत्यस्मिन् [3]विषये । अणोऽपवादः । अग्निर्देवता अस्य '[4]आग्नेयोऽष्टाकपालः' (काठ. सं. ८.१०) ।

[४०९] प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः ।

कालेभ्यो भववत् । (३४/१२३७)

[5]कालविशेषवाचिभ्यः [6]शब्देभ्यो भववत् [7]प्रत्यया भवन्ति साऽस्य देवता इत्यस्मिन् [8]विषये । 'कालाट्ठञ्' (४.३.११/१३८१) [9]इति प्रकरणे [10]भवे प्रत्यया विधास्यन्ते [11]ते साऽस्य देवता इत्यस्मिन्[12]अर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते । वत्करणं [13]सर्वसादृश्यपरिग्रहार्थम् । मासे भवम् मासिकम् । [14]आर्धमासिकम् । सांवत्सरिकम् । [15]वासन्तम् । [16]प्रावृषेण्यम् । [17]तथा मासो देवताऽस्य मासिकम् । [18]आर्धमासिकम् । सांवत्सरिकम् । [19]वासन्तम् । [20]प्रावृषेण्यम् ॥

महाराजप्रोष्ठपदाट् ठञ् । (३५/१२३८)

[21]महाराजशब्दात् प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति साऽस्य देवता इत्यस्मिन् विषये । महाराजो देवता अस्य माहाराजिकम् । [22]प्रौष्ठपदिकम् ।

---

1. शुनासीरौ इत्यधिकम् ब. क. फ, सा देवता ब. 2. इति नास्ति फ. 3. अर्थे फ. 4. आग्नेयमष्टाकपालं निर्वपेत् ग. फ. (मै. सं. 1.4.15.) 5. कालशब्देभ्यो ह. 6. प्रातिपदिकेभ्यः फ. 7. प्रत्ययो भवति क. ब. 8. अर्थे क. 9. इत्यादिना प्रकरणेन भवे ये प्रत्यया विधायिष्यन्ते ते ब. 10. भवप्रत्ययाः क. 11. ते नास्ति फ. 12. विषये ह. 13. सर्वसादृश्यार्थम् फ, सादृश्यग्रहणार्थम् ग, सादृश्यप्रतिपत्त्यर्थम् क. 14. अर्धमासिकम् क. 15. वासन्तिकम् ह. 16. प्रावृषेण्यम् नास्ति क. 17. एवं क. फ. 18. आर्धमासिकम् नास्ति फ, अर्धमासिकम् क. 19. वासन्तिकम् ह. 20. प्रावृषेण्यम् नास्ति क. 12. महाराजप्रोष्ठ–पदाभ्याम् फ. 22. प्रौष्ठपादिकम् क.

[४१०] ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम्। (म. भा. २.२७७)

नवयज्ञोऽस्मिन् वर्तते नावयज्ञिकः [1]कालः। [2]पाकयज्ञिकः (म. भा. २.२७७)।

[४११] पूर्णमासादण्। (म. भा. २.२७७)

पूर्णमासोऽस्यां वर्तते 'पौर्णमासी तिथिः[3]' (मै. ५.६.९)॥

## पितृव्यमातुलमातामहपितामहाः। (३६/१२४२)

पितृव्यादयो[4] निपात्यन्ते। समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्धः [5]इति सर्वं निपातनाद् [6]विज्ञेयम्। [7]पितृमातृभ्यां भ्रातर्यभिधेये व्यत् डुलच् इत्येतौ प्रत्ययौ निपात्येते (म.भा. २.२७७)। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। ताभ्यां पितरि डामहच् मातरि षिच्च। ताभ्यामेव [8]पितरि डामहच् प्रत्ययो [9]भवति। पितुः पिता पितामहः। मातुः पिता मातामहः। मातरि षिच्च। पितामही। मातामही।

[४१२] अवेर्दुग्धे सोढदूसमरीसचो [10]वक्तव्याः। (म. भा. २.२७८)

अवेर्दुग्धम् अविसोढम्, अविदूसम्, अविमरीसम् (म. भा. २.२७८)।

[४१३] तिलान्निष्फलात् [11]पिञ्जपेजौ प्रत्ययौ वक्तव्यौ। (म. भा. २.२७८)

निष्फलस्तिलः तिलपिञ्जः, तिलपेजः।

[४१४] पिञ्जश्छन्दसि डिच्च। (म. भा. २.२७८)

'[12]तिलपिञ्जं दण्डनं नडम्' (अ. वे. १२.२.५४)॥

## तस्य समूहः। (३७/१२४३)

तस्य इति षष्ठीसमर्थात्[13] समूहः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। किमिहोदाहरणम्? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत् [14]प्रतिपदं ग्रहणम्। अचित्तात् ठक् (४.२.४७/१२५६) वक्ष्यति, 'अनुदात्तादेरञ्' (४.२.४४/१२५३), गोत्राद् वुञ् (४.२.३९/१२४६), प्रतिपदं च 'केदाराद् यञ्च' (४.२.४०/१२४८) इत्येवमादि, तत्परिहारेणात्रोदाहरणं द्रष्टव्यम्। काकानां समूहः काकम्। [15]बाकम्। 'इनित्रकट्यचश्च' (४.२.५१/१२६०) इति यावत् समूहाधिकारः।

[४१५] [16]गुणादिभ्यो ग्रामज् वक्तव्यः।

गुणग्रामः। करणग्रामः।

गुण। करण। तत्त्व। [17]शब्द। इन्द्रिय। आकृतिगणः॥

---

1. शरत्कालः फ. ह. 2. पाकयज्ञिकं गृहम् फ. 3. इति इत्यधिकम् ड. 4. शब्दाः इत्यधिकम् फ. ह. 5. तत् फ. 6. सिद्धम् ह. 7. पितृभ्यां फ. 8. पितरि नास्ति फ. 9. भवति नास्ति क. 10. प्रत्ययाः इत्यधिकम् ब. क. फ. 11. पिञ्चपैञ्जौ क. 12. तिलिपजः ब. 13. प्रातिपदिकात् इत्यधिकम् ह. 14. प्रतिपदविधानमस्ति क. ग. ह. 15. शौकम् इत्यधिकम् ब. क. फ. ह, बालाकम् इत्यधिकम् ह. 16. गुणादिभ्यः–ग्रामः नास्ति ब. क. ह. 17. शब्द नास्ति फ.

## भिक्षादिभ्योऽण् । (३८/१२४४)

भिक्षा इत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति तस्य समूहः [1]इत्येतस्मिन् विषये । अणग्रहणं [2]बाधकबाधनार्थम् । भिक्षाणां समूहः भैक्षम् । गार्भिणम् । युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्याद् पुंवद्भावो[3] न भवति '[1]भस्याढे तद्धिते' (६.३.३५/८३६ वा.) इति । युवतीनां समूहो [4]यौवतम् ।

भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । [5]चर्मिन् । धर्मिन् । सहस्र । युवति । पदाति । पद्धति । [6]अथर्वन् । दक्षिणा । [7]भूत[8] ॥

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् । (३९/१२४६)

गोत्रादिभ्यो वुञ् प्रत्ययो भवति तस्य [9]समूहः इत्येतस्मिन् विषये । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं, न तु पौत्रप्रभृत्येव[10] । औपगवानां [11]समूहः औपगवकम् । कापटवकम् (म. भा. २.२७९) । उक्षन् – औक्षकम् । उष्ट्र – औष्ट्रकम् । उरभ्र – औरभ्रकम् । राजन् – राजकम् । राजन्य – [12]राजन्यकम् । राजपुत्र – राजपुत्रकम् । वत्स – [13]वात्सकम् । मनुष्य – मानुष्यकम् । अज – आजकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (७. १. १/१२४७ वा.) इति यलोपो न भवति, 'आपत्यस्य च तद्धितेऽनाति' (६. ४. १५१/१०८२) इति ।

[४१६] वृद्धाच्चेति वक्तव्यम् । (म. भा. २.२७८)

[14]वृद्धानां समूहो वार्धकम् (म. भा. २. २७८) ॥

## केदाराद् यञ् च । (४०/१२४८)

केदारशब्दाद् यञ् प्रत्ययो भवति, चकाराद् वुञ् च, तस्य समूहः इत्येतस्मिन् [15]विषये । अचित्तलक्षणस्य ठकः (४.२. ४७/१२५६) अपवादः । केदाराणां समूहः कैदार्यम्, [16]कैदारकम् ।

[४१७] गणिकायाश्च यञ् वक्तव्यः । (म. भा. २. २७९)

गणिकानां समूहः गाणिक्यम् ॥

## ठञ् कवचिनश्च । (४१/१२४९)

कवचिन् शब्दात् ठञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [17]विषये । कवचिनां समूहः कावचिकम् । चकारः केदारात् [18]इत्यस्यानुकर्षणार्थः । [19]केदाराणां समूहः कैदारिकम् ॥

---

1. इत्यस्मिन्नर्थे ग. फ. 2. बाधकम् क. 3. अत्र इत्यधिकम् फ. 4. यौवतम् नास्ति क. 5. चर्मन् धर्मन् ब. क, वर्मन् इत्यधिकम् ब. 6. अर्वन् ड. 7. भूत नास्ति ब. क. 8. विषय, श्रोत्र । वृक्षादिभ्यः खण्डः । वृक्षखण्डः । तरुखण्डः । वृक्ष तरु पादप इत्यधिकम् ड. क. 9. समूहः नास्ति ग. 10. अपत्यम् इत्यधिकम् फ. 11. समूहः नास्ति फ. 12. राजन्यकम् नास्ति फ. 13. वत्सकम् ब. क. फ. 14. वृद्धानां समूहः नास्ति फ. 15. अर्थे फ. 16. कैदारम् फ. 17. अर्थे क. 18. अस्य नास्ति फ. 19. केदाराणां समूहः नास्ति फ.

## ब्राह्मणमाणववाडवाद्यन्। (४२/१२५०)

ब्राह्मणादिभ्यः शब्देभ्यो यन् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [1]विषये। नकारः स्वरार्थः। ब्राह्मणानां समूहः ब्राह्मण्यम्। माणव्यम्। वाडव्यम्।

[४१८] यन्प्रकरणे पृष्ठादुपसङ्ख्यानम्। (म.भा.२.२७९)

[2]पृष्ठानां समूहः [3]पृष्ठ्यः।

[४१९] अह्नः खः क्रतौ। (म.भा.२.२७९)

अह्नां समूहः "[4]अहीनः क्रतुः" (काठ. सं.२४.१०)। [5]क्रतौ इति किम्? आह्नः। खण्डिकादिषु दर्शनादञ् भवति।

[४२०] पर्श्वा णस् वक्तव्यः। (म. भा. २. २७९)

पर्शूनां समूहः पार्श्वम्। [6]पदसञ्ज्ञकत्वाद् गुणो न भवति।

[४२१] [7]वाताद्दूलः।

वातानां समूहः वातूलः॥

## ग्रामजनबन्धुसहायेभ्यस्तल्। (४३/१२५१)

ग्रामादिभ्यः तल् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [8]विषये। ग्रामाणां समूहः ग्रामता। जनता। बन्धुता। सहायता।

[४२२] गजाच्चेति वक्तव्यम्। (म. भा. २.२७९)

गजानां समूहः गजता॥

## अनुदात्तादेरञ्। (४४/१२५३)

अनुदात्तादेः शब्दादञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [9]विषये। कपोतानां समूहः कापोतम्। मायूरम्। [10]तैत्तिरम्॥

---

1. अर्थे फ. 2. पृष्ठानां समूहः नास्ति फ. 3. पृष्ठ्यम् ब. फ, पृष्ठ्यः अ.ड.ह.क. 4. अहीनः क्रतुः नास्ति ब. फ. 5. वाक्यमिदं नास्ति ब. 6. वाक्यमिदं नास्ति ब. 7. वातात् – वातूलः नास्ति ब. फ. क. ह. 8. अर्थे फ. 9. अर्थे फ. 10. तैत्तिरीयम् ग.

## खण्डिकादिभ्यश्च। (४५/१२५४)

खण्डिका इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [1]विषये। [2]आद्युदात्तार्थमचित्तार्थं च वचनम्। [3]खण्डिकानां समूहः खाण्डिकम्। वाडवम्। [4]क्षुद्रकमालवशब्दोत्र पठ्यते। क्षुद्रकाश्च मालवाश्च इति क्षत्रियद्वन्द्वः। ततः पूर्वेणैवाञि सिद्धे वचनं गोत्र[5]वुञ्(४.२.३९/१२४६)बाधनार्थम्। ननु च परत्वादञा वुञ् बाधिष्यते, न च [6]गोत्रसमुदायो गोत्रं, न च [7]तदन्तविधिरत्रास्ति (म.भा. २.२८०)? एवं तर्हि एतज् ज्ञापयति वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्ति (म.भा. २.२८०) इति। प्रयोजनमौपगवकं कापटवकम् इति वुञ् भवति, [8]वानहस्तिकं गौधेनुकम् इति [9]च तदन्तविधिः। क्षुद्रकमालवात् इत्येतावता योगविभागेन पूर्वविप्रतेषेधस्तदन्तविधिश्च [10]ज्ञापितः, पुनरस्यैव नियमार्थमुच्यते सेनासञ्ज्ञायाम् इति। क्षुद्रकमालवात् सेनासंज्ञायामेवाञ् भवति[11]। क्षौद्रकमालवी सेना। क्षौद्रकमालवमन्यत् (म.भा. २.२८१)।

अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात्।
गोत्राद् वुञ् न च तद्गोत्रं तदन्तान्न च सर्वतः॥

ज्ञापकं स्यात्तदन्तत्वे तथाचापिशलेर्विधिः।
सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा (म.भा. २.२८१)॥

खण्डिका। वडवा। 'क्षुद्रकमालवात् सेनासञ्ज्ञायाम्' (ग. सू. ८२)। भिक्षुक। [12]शुक। उलूक। श्वन्। युग। अहन्। वरत्रा। [13]हलबन्ध॥

## चरणेभ्यो धर्मवत्। (४६/१२५५)

चरणशब्दाः कठकलापादयः[14], तेभ्यः [15]षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति। गोत्रचरणाद् वुञ् (४.३.१२६/१५०६) इत्यारभ्य प्रत्यया [16]वक्ष्यन्ते, तत्र चेदमुच्यते 'चरणाद्धर्माम्नाययोः'(४.३.१२६/१५०६ वा.) इति, तेन धर्मवत् इत्यतिदेशः क्रियते। वतिः सर्वसादृश्यार्थः। कठानां धर्मः काठकम्। [17]कालापकम्। छान्दोग्यम्। औक्थिक्यम्। आथर्वणम्। तथा समूहेऽपि[18]–[19]काठकम्। कालापकम्। [20]छान्दोग्यम्। [21]औक्थिक्यम्। आथर्वणम्॥

## अचित्तहस्तिधेनोष्ठक्। (४७/१२५६)

अचित्तार्थेभ्यो[22] हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [23]विषये। अणञोरपवादः। [24]अपूपानां समूहः आपूपिकम्। शाष्कुलिकम्[25]। हास्तिकम्। धैनुकम्।

[४२३] धेनोरनञ इति वक्तव्यम्। (म.भा. २.२८१)

[26]आधेनवम् (म.भा. २.२८१)॥

---

1. अर्थे फ. 2. आद्युदात्तार्थमयमारम्भः अचित्तार्थश्च फ. 3. खण्डिकानां समूहः नास्ति फ. 4. क्षुद्रमालववत् संज्ञायाम् फ. 5. वुञः बाधनार्थम् ब. क. ह. 6. गोत्रसमुदाये क. 7. तदन्तविधिरिति क. 8. वनहस्तिनां समूहः इत्यधिकम् क. 9. च नास्ति फ. 10. ज्ञापकः फ. 11. इति इत्यधिकम् क. 12. शुक्ल फ. 13. गलबन्ध फ. 14. शब्दाः इत्यधिकम् ह. 15. षष्ठचर्थेभ्यः ब. 16. विधीयन्ते ह. 17. कालापकम् नास्ति फ. 18. विधीयते इत्यधिकम् फ. ह. 19. काठकम् नास्ति ह. 20. छन्दोगानाम् छान्दोग्यम् ब. 21. औक्थिक्यम् नास्ति फ. 22. शब्देभ्यः इत्यधिकम् क.फ.ह. 23. अर्थे फ.ह. 24. अपूपानां समूहः नास्ति . 25. साक्तुकं मौदकिकम् इत्यधिकम् क. 26. अधेनूनां समूहः आधेनवम् ग.

## केशाश्वाभ्यां यञ्छावन्यतरस्याम् । (४८/१२५७)

केश अश्व इत्येताभ्यां [1]यथासङ्ख्यं यञ् छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्यां तस्य समूहः इत्येतस्मिन् विषये। केशानां समूहः कैश्यम्, कैशिकम् । [2]अश्वानां समूहः अश्वीयम्, आश्वम् ॥

## पाशादिभ्यो यः । (४९/१२५८)

पाशादिभ्यः[3] यः प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [4]विषये । पाशानां समूहः पाश्या । तृण्या[5] ।

पाश । तृण । [6]धूम । वात । अङ्गार । [7]पोत । बालक । [8]पिटक । पिटाक । [9]शकट । हल । [10]नड । वन[11] ॥

## खलगोरथात् । (५०/१२५९)

खलगोरथशब्देभ्यः यः प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् [12]विषये । खलानां समूहः खल्या । गव्या । रथ्या । [13]पाशादिष्वपाठः उत्तरार्थः ॥

## इनित्रकट्यचश्च । (५१/१२६०)

खलगोरथशब्देभ्यो यथासङ्ख्यम् इनि त्र कटचच् इत्येते प्रत्यया भवन्ति तस्य समूहः इत्येतस्मिन् [14]विषये । खलिनी । गोत्रा । रथकटचा ।

[४२४] खलादिभ्य इनिर्वक्तव्यः । (म. भा. २.२८२)
[15]डाकिनी । कुण्डलिनी । कुटुम्बिनी ।

[४२५] [16]कमलादिभ्यः खण्डच् [17]प्रत्ययो भवति ।
कमलखण्डम् । अम्भोजखण्डम् ।

[18]कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी ।
कमलादिराकृतिगणः ।

[४२६] नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः ।
नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः ।

[४२७] पूर्वादिभ्यः काण्डः प्रत्ययो भवति ।
पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाण्डम् ॥

---

1. यथासङ्ख्यम् नास्ति फ. ह. 2. अश्वानां समूहः नास्ति फ. 3. शब्देभ्यः इत्यधिकम् ब. क. ड. 4. अर्थे फ. 5. अत्र स्त्रीलिङ्गत्वं लोकाश्रयत्वात् लिङ्गस्य इत्यधिकम् फ. 6. भूम ब. 7. पोट गल ब. क, पाटलक ड. 8. पितृक ड. 9. सकट ग, शकलक, शक ब. 10. नट ड. 11. नल इत्यधिकम् क. ह, इति पाशादिः इत्यधिकम् ड. ब. फ. 12. अर्थे फ. 13. योगविभागः ब. फ. 14. अर्थे फ. 15. खलिनी, डाकिनी, पद्मिनी, रथिनी फ, खलिनी, उलूकिनी, धमिनी, रथिनी, गविनी ह. 16. कमलादिभ्यः – अम्भोज–खण्डम् नास्ति ब, कमलादिभ्यः–कर्मकाण्डम् नास्ति फ. 17. प्रत्ययः नास्ति इ. क. 18. कमल–आकृतिगणः नास्ति ह.

## विषयो देशे। (५२/१२६१)

समूहः इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्तते । तस्य इति षष्ठीसमर्थाद् विषयः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयः [1]देशश्चेत् स भवति । विषयशब्दो बह्वर्थः । क्वचिद् ग्रामसमुदाये वर्तते, विषयो लब्धः इति । क्वचिदिन्द्रियग्राह्ये, [1]चक्षुर्विषयो रूपम् इति । क्वचिद[2]त्यन्तशीलिते ज्ञेये, देवदत्तस्य विषयोऽनुवाकः इति । क्वचि[3]दन्यत्राभावे, मत्स्यानां विषयो जलम् इति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः । देशे इति किम् ? देवदत्तस्य विषयोऽनुवाकः ॥

## राजन्यादिभ्यो वुञ्। (५३/१२६२)

राजन्यादिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति विषयो देशे इत्येतस्मिन्नर्थे[4] । अणोऽपवादः । राजन्यानां विषयो देशः राजन्यकः । दैवयानकः । आकृतिगणश्चायम् । मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्तकः ।

राजन्य । [5]देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर । [6]बैल्वत । आर्जुनायन । [7]संप्रिय । दाक्षि । ऊर्णनाभ ॥

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ। (५४/१२६३)

भौरिक्यादिभ्यः ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल् भक्तल् इत्येतौ प्रत्ययौ भवतः विषयो देशे इत्येतस्मिन् विषये । अणोऽपवादः । [8]भौरिकिविधः । वैपेयविधः । ऐषुकार्यादिभ्यः – [9]ऐषुकारिभक्तः । [10]सारस्यायनभक्तः ।

भौरिकि । वैपेय । भौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत ।

ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्याक्षायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्राण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव ॥

## सोऽस्यादिरिति च्छन्दसः प्रगाथेषु। (५५/१२६४)

स इति [11]समर्थविभक्तिः । अस्य इति प्रत्ययार्थः । आदिः इति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । छन्दसः इति प्रकृतिनिर्देशः । प्रगाथेषु इति प्रत्ययार्थविशेषणम् । स इति प्रथमासमर्थाद् [12]अस्य इति षष्ठ्यर्थे

---

1. चक्षुर्विषयं रूपम् क. 2. अव्यभिचारे ज्ञेये क. 3. अव्यभिचारेऽन्यत्राभावे ह. 4. विषये ब. 5. अशितबाभ्रव्य इत्यधिकम् ब. 6. वैतल ब, बैतिल क.ड, बैल्वल अ. इ. फ. ग. 7. आप्रीत अव्रीड क. ड. 8. भौरिकिविधम्, भौलिकिविधम् ब. 9. ऐषुकारिभक्तम् ब. 10. सारस्यायनभक्तः नास्ति ब. 11. प्रथमा-विभक्तिः फ. 12. प्रातिपदिकात् इत्यधिकम् क.ड.

यथाविहितं प्रत्ययो भवति, [1]यत् प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्य इति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति, इतिकरणस्ततश्चेद् विवक्षा[2]। पङ्क्तिरादिरस्य[3] पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः। आदिः इति किम्? अनुष्टुभ् मध्यम् अस्य प्रगाथस्य। छन्दसः इति किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेषु इति किम्? पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव [4]मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, [5]स प्रग्रथनात् प्रकर्षगानाद् वा प्रगाथः इत्युच्यते।

[४२८] छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसङ्ख्यानम्। (म.भा. २.२८३)

[6]त्रिष्टुबेव त्रैष्टुभम्। जागतम्॥

## सङ्ग्रामे प्रयोजनयोद्धृभ्यः। (५६/१२६५)

सोऽस्य इति समर्थविभक्तिः, प्रत्ययार्थश्चानुवर्तते। प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च। प्रत्ययार्थविशेषणं सङ्ग्रामः। प्रयोजनवाचिभ्यः योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्यः अस्य इति षष्ठ्यर्थे सङ्ग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति। भद्रा प्रयोजनमस्य सङ्ग्रामस्य भाद्रः सङ्ग्रामः। सौभद्रः। गौरिमित्रः[7]। योद्धृभ्यः – अहिमाला योद्धारोऽस्य सङ्ग्रामस्य आहिमालः। [8]स्यान्दनाश्वः। भारतः[9]। सङ्ग्रामे इति किम्? सुभद्रा प्रयोजनमस्य [10]दानस्य। प्रयोजनयोद्धृभ्यः इति किम्? सुभद्रा [11]प्रेक्षिकाऽस्य सङ्ग्रामस्य॥

## तदस्यां प्रहरणमिति क्रीडायां णः। (५७/१२६६)

तत् इति प्रथमासमर्थाद् अस्याम् इति सप्तम्यर्थे णः प्रत्ययो भवति, यत तत् इति निर्दिष्टं प्रहरणं चेत् भवति। [12]यदस्याम् इति निर्दिष्टं क्रीडा तद् चेत् सा भवति। इतिकरणस्ततश्चेद् [13]विवक्षा। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा। प्रहरणम् इति किम्? माला भूषणमस्यां क्रीडायाम्। क्रीडायाम् इति किम्? खड्गः प्रहरणमस्यां सेनायाम्॥

## घञः सास्यां क्रियेति ञः। (५८/१२६७)

सा इति समर्थविभक्तिः। अस्याम् इति प्रत्ययार्थः स्त्रीलिङ्गः। क्रिया इति प्रकृत्यर्थविशेषणम्। [14]घञः इति प्रकृतिनिर्देशः। इतिकरणो [15]विवक्षार्थः। घञन्तात् कियावाचिनः प्रथमासमर्थाद् अस्याम् इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति। घञः इति [16]कृद्ग्रहणं, तत्र गतिकारकपूर्वमपि गृह्यते। श्येनपातोऽस्यां वर्तते श्यैनंपाता। तैलंपाता। घञः इति किम्? [17]श्येनपतनमस्यां वर्तते। क्रिया इति किम्? प्राकारोऽस्यां वर्तते। अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात् पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव? [18]क्रीडायाम् इत्यनेन [19]तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत। सामान्येन चेदं विधानम्। दण्डपातोऽस्यां [20]तिथौ वर्तते दाण्डपाता तिथिः। मौसलपाता [21]तिथिः॥

## तदधीते तद्वेद। (५९/१२६९)

तत् इति द्वितीयासमर्थात् अधीते वेद इत्येतयोः अर्थयोः यथाविहितं प्रत्ययो भवति। छन्दोऽधीते छान्दसः। वैयाकरणः। [22]नैरुक्तः। निमित्तानि वेद नैमित्तः। [23]मौहूर्तः। औत्पातः। द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम्॥

---

1. तत् फ. 2. भवति इत्यधिकम् फ. 3. प्रगाथस्य इत्यधिकम् फ. 4. मन्त्रविशेषेषु एव ड. 5. स नास्ति फ. 6. आनुष्टुभम् इत्यधिकम् ग.ह, त्रिष्टुबेव त्रैष्टुभम् नास्ति ह. 7. वासवदत्तः इत्यधिकम् ह. 8. स्यान्दिताश्वः ह.क. 9. संग्रामः इत्यधिकम् क. 10. वैरस्य ह. 11. प्रेषिका ह.अ.क.ड. 12. यत्तदस्याम् ब. 13. विवक्षार्थः फ. 14. घञ् ब. 15. ततश्चेत् इत्यधिकम् फ. 16. कृद्ग्रहणे फ, कृद्ग्रहणात् ब. 17. श्येनपातनं ह. 18. तदा इत्यधिकम् फ. 19. तत् नास्ति फ. 20. तिथौ नास्ति फ. 21. भूमिः ब.क.ड.फ.ह. 22. नास्ति फ. 23. नास्ति फ, मौहूर्तिकः क.

## क्रतूक्थादिसूत्रान्ताट् ठक्। (६०/१२७०)

क्रतुविशेषवाचिभ्यः[1] उक्थादिभ्यश्च सूत्रान्ताच्च ठक् प्रत्ययो भवति तदधीते तद्वेद (४.२.५९/१२६९) [2]इत्येतस्मिन् विषये। अणोऽपवादः। अग्निष्टोममधीते वेद वा आग्निष्टोमिकः। वाजपेयिकः। उक्थादिभ्यः– औक्थिकः। लौकायतिकः। [3]सूत्रान्तात्– [4]वार्त्तिकसूत्रिकः। [5]साङ्ग्रहसूत्रिकः। सूत्रान्तादकल्पादेरिष्यते। कल्पसूत्रमधीते [6]काल्पसूत्रः। अणेव भवति। उक्थशब्दः केषुचिदेव सामसु रूढः। यज्ञायज्ञीयात् परेण यानि [7]गीयन्ते, [8]न च तान्यधीयाने [9]प्रत्यय इष्यते, [10]किं तर्हि, सामलक्षणे औक्थिक्ये वर्तमानः उक्थशब्दः प्रत्ययमुत्पादयति। [11]उक्थमधीते औक्थिकः। औक्थिक्यमधीते इत्यर्थः। औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव,[12] अनभिधानात्। विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम् (म. भा. २.२८४)। वायसविद्यिकः। सार्पविद्यिकः। गौलक्षणिकः। आश्वलक्षणिकः। [13]मातृकल्पिकः। [14]पाराशरकल्पिकः। विद्या च नाङ्गक्षत्रधर्म[15]संसर्गत्रिपूर्वा। [16]अङ्गविद्यामधीते [17]आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। [18]त्रैविद्यः। आख्यानाख्यायिकेतिहास–पुराणेभ्य[19]ष्ठग् वक्तव्यः (म. भा. २. २८४)। आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम्। यावक्रीतिकः। [20]प्रैयङ्गविकः। [21]वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः। सर्वसादेर्द्विगोश्च [22]लः (म. भा. २. २८४)। सर्ववेदः। सर्वतन्त्रः। सादेः–सवार्त्तिकः। ससङ्ग्रहः। द्विगोः– द्विवेदः[23]। [24]पञ्चव्याकरणः। अनुसूर्लक्ष्यलक्षणे [25]च (म. भा. २. २८४)। अनुसूर्नाम[26]ग्रन्थः, तमधीते [27]आनुसुकः। लाक्षिकः। लाक्षणिकः। इकन् बहुलं पदोत्तरपदात्। [28]पूर्वपदिकः। शतषष्टेः [29]षिकन् पथो बहुलम् (म. भा. २. २८४)। [30]शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी। बहुलग्रहणादणपि[31] भवति। [32]शातपथः। [33]षाष्टिपथः।

उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। [34]निरुक्त। यज्ञ। [35]चर्चा। धर्म। क्रमेतर। श्लक्ष्ण। संहिता। पद। क्रम। सङ्घात। वृत्ति। सङ्ग्रह। [36]गुणागुण। आयुर्वेद। 'सूत्रान्तादकल्पादेः' (ग. सू. ८३)। 'विद्यालक्षणकल्पान्तात्' (ग. सू. ८४)। 'विद्याचानङ्ग-क्षत्रधर्मसंसर्गत्रिपूर्वा' (ग. सू. ८५)। 'आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक्' (ग. सू. ८६)। 'सर्वसादेर्द्विगोश्च लः' (ग. सू. ८७)। 'अनुसूर्लक्ष्यलक्षणे च' (ग. सू. ८८)। '[37]द्विपदी ज्योतिषि' (ग. सू. ८९)। अनुपद। अनुकल्प। अनुगुण। 'इकन्बहुलं पदोत्तरपदात्' (ग. सू. ९०)। 'शतषष्टेः षिकन् पथो बहुलम्' (ग. सू. ९१)॥

## क्रमादिभ्यो वुन्। (६१/१२७१)

क्रम इत्येवमादिभ्यः शब्देभ्यः वुन् प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन् [38]विषये। अणोऽपवादः। क्रमकः। पदकः।

क्रम। पद। [39]शिक्षा। मीमांसा। सामन्[40]॥

---

1. शब्देभ्यः इत्यधिकम् ब. क. फ. 2. इत्येतयोः फ. 3. सूत्रान्तात् च क, नास्ति फ. 4. वार्तिकः सूत्रिकः ब. 5. नास्ति फ. 6. काल्पसूत्रिः फ. 7. अधीयन्ते क. 8. न च नास्ति ह. 9. प्रत्ययो नेष्यते ह. 10. क्वचिदपि फ. 11. उक्थमधीते नास्ति फ. 12. एव नास्ति फ. 13. माताकल्पिकः क, मान्त्रकल्पिकः फ. ड. 14. पाराशरसूत्रकल्पिकः ह. 15. संसर्ग नास्ति फ. 16. अङ्गविद्यामधीते नास्ति फ. 17. आङ्गविद्यिकः क्षात्रविद्यिकः धार्मविद्यिकः सांसर्गविद्यिकः क. 18. अवयवविद्यापदवाक्यलक्षणानि अधीते इत्यधिकम् ड. 19. च इत्यधिकम् ग. 20. नास्ति ड. 21. नास्ति क. 22. लुक् अ. क. ड. ह. 23. त्रिवेदः इत्यधिकम् क. 24. नास्ति क. 25. च नास्ति क. 26. ग्रन्थः नास्ति फ. 27. अनुसुकः ह. 28. पदोत्तरपदिकः उत्तरपदिकः ब. ग. फ. ह, अन्ये तु पदोत्तरपदात् इति पदशब्दं उत्तरपदं यस्य तस्मात् इत्यर्थं व्याचक्षते तन्मते पूर्वपदिकः उत्तरपदिकः क. 29. टिकन् क. 30. शातपथिकः शातपथिकी षाष्टिपथिकः षाष्टिपथिकी क, शतपथिकी षष्टिपथिकी नास्ति फ. 31. अपि नास्ति ग. फ. 32. नास्ति फ. 33. नास्ति ड. 34. नास्ति क. 35. पर्व ह. 36. नास्ति क. ड. 37. द्विपात् क. ड. 38. अर्थे फ. ह. 39. नास्ति फ. 40. उपनिषद् इत्यधिकम् ग.

## अनुब्राह्मणादिनिः । (६२/१२७२)

अनुब्राह्मणशब्दात् इनिः प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन् [1]विषये । [2]अणोऽपवादः । ब्राह्मण-सदृशोऽयं ग्रन्थः अनुब्राह्मणम् । तदधीते[3] अनुब्राह्मणी । [4]अनुब्राह्मणिनौ, अनुब्राह्मणिनः । [5]मत्वर्थेन 'अत इनिठनौ' (५.२.११५/१९२२) इति [6]इनिना सिद्धम् ? तत्रैतस्माद् ठन्नपि[7] प्राप्नोति । अनभिधानान् न भविष्यति ? अणो निवृत्त्यर्थं र्तीह वचनम् ॥

## वसन्तादिभ्यष्ठक् । (६३/१२७३)

वसन्त इत्येवमादिभ्यः ठक् प्रत्ययो भवति तदधीते तद्वेद इत्यस्मिन् [8]विषये । [9]अणोऽपवादः । वसन्त-सहचरितोऽयं ग्रन्थः वसन्तः । तमधीते[10] वासन्तिकः । वार्षिकः[11] ।

वसन्त । वर्षाशरदम् । हेमन्त । शिशिर । प्रथम । गुण । [12]चरम । अनुगुण । [13]अपर्वन् । अथर्वन्[14] ॥

## प्रोक्ताल् लुक् । (६४/१२७४)

प्रोक्तसहचरितः प्रत्ययः प्रोक्तः । प्रोक्तप्रत्ययान्ताद् अध्येतृवेदित्रोः उत्पन्नस्य[15] लुग् भवति । पाणिनिना प्रोक्तं पाणिनीयम् । तदधीते पाणिनीयः । [16]आपिशलः । स्त्रियां स्वरे च विशेषः । पाणिनीया ब्राह्मणी ॥

## सूत्राच्च कोपधात् । (६५/१२७७)

सूत्रवाचिनः ककारोपधाद्[17]उपन्नस्य प्रत्ययस्य लुग् भवति । अप्रोक्तार्थ आरम्भः । पाणिनीयमष्टकं सूत्रम् । तदधीयते अष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः ।

[४२९] सङ्ख्याप्रकृतेरिति वक्तव्यम् । (म. भा. २. २८५)

इह[18] मा भूत्, महावार्त्तिकं [19]सूत्रमधीते माहावार्त्तिकः । कालापकमधीते कालापकः । कोपधात् इति किम् ? चतुष्टयमधीते चातुष्टयः ॥

## छन्दोब्राह्मणानि च तद्विषयाणि । (६६/१२७८)

प्रोक्तग्रहणमनुवर्तते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति । अध्येतृवेदितृ-प्रत्ययविषयाणि[20] । [21]अनन्यभावो विषयार्थः । तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च [22]निवर्तते । कठेन

---

1. अर्थे ह. फ. 2. अणोऽपवादः नास्ति फ. 3. तद् वेद इति वा इत्यधिकम् ग. 4. अनुब्राह्मणिनौ नास्ति फ. 5. ननु इत्यधिकम् फ. 6. इनिः सिद्धः फ. 7. न इत्यधिकम् ह. 8. अर्थे फ. ह. 9. अणोऽपवादः नास्ति फ. 10. वेद वा इत्यधिकम् ड. 11. शारतिकः इत्यधिकम् फ, शारदिकः इत्यधिकम् ग. ह. 12. चरण फ. 13. अपर्वन् फ, अथर्वणः ह, अथर्वन् नास्ति क. 14. प्रथमं भागं विदन् प्राथमिकः । चारमिकः । आनुगुणिकः । काल्पिकः । आथर्वणिकः । इत्यधिकम् ग. 15. प्रत्ययस्य इत्यधिकम् ग. फ. 16. आपिशलं शास्त्रं तदधीते इति इत्यधिकम् ह. 17. अध्येतृवेदित्रोः इत्यधिकम् ह. 18. न भवति फ. 19. सूत्रं नास्ति फ. 20. एव भवन्ति इत्यधिकम् फ. 21. अनन्यत्वं ह. 22. निवर्त्यते ह.

प्रोक्तमधीयते कठाः । मौदाः । पैप्पलादाः । [1]आर्चाभिनः । वाजसनेयिनः । ब्राह्मणानि खल्वपि – [2]ताण्डिनः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः । ब्राह्मणग्रहणं किं, यावता छन्द एव तद् ? ब्राह्मणविशेषप्रतिपत्त्यर्थम् । इह [3]तद्विषयता मा भूत्, याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि[4] । सौलभानि (म. भा. २.२८५) । चकारोऽनुक्तसमुच्चयार्थः । कल्पे – [5]काश्यपिनः । कौशिकिनः । सूत्रे – [6]पाराशरिणो भिक्षवः । शैलालिनो नटाः (म. भा. २.२८६) । कर्मन्दिनः । कृशाश्विनः । छन्दोब्राह्मणानि इति किम् ? पाणिनीयं [7]व्याकरणम् । [8]पैङ्गी कल्पः (म. भा. २.२८६) ॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि । (६७/१२७९)

तत् इति प्रथमा समर्थविभक्तिः । अस्मिन् इति प्रत्ययार्थः । अस्ति इति प्रकृत्यर्थविशेषणम् । इतिकरणो विवक्षार्थः । देशे तन्नाम्नि इति प्रत्ययार्थविशेषणम् । तत् इति प्रथमासमर्थादस्मिन् इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थमस्ति चेत् तद् भवति, यद् अस्मिन् इति निर्दिष्टं देशश्चेत् स तन्नामा भवति, प्रत्ययान्तनामा, इतिकरणस्ततश्चेद् विवक्षा । उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः[9] । बाल्बजः । पार्वतः । मत्वर्थीयापवादो योगः ॥

## तेन निर्वृत्तम् । (६८/१२८०)

तेन इति तृतीयासमर्थात् निर्वृत्तम् इत्येतस्मिन् [10]विषये यथाविहितं प्रत्ययो भवति [11]देशनामधेये गम्यमाने । देशे तन्नाम्नि (४.४.६७-७०) इति चतुर्ष्वपि योगेषु सम्बध्यते । सहस्रेण निर्वृत्ता[12] [13]साहस्री परिखा । कुशाम्बेन [14]निर्वृत्ता कौशाम्बी नगरी । हेतौ कर्तरि च यथायोगं[15] तृतीया समर्थविभक्तिः ॥

## तस्य निवासः । (६९/१२८१)

तस्य इति षष्ठीसमर्थात् निवासः इत्येतस्मिन्नर्थे[16] यथाविहितं प्रत्ययो भवति [17]देशनामधेये गम्यमाने । निवसन्त्यस्मिन्निति निवासः । [18]ऋजुनावां निवासो देशः आर्जुनावो [19]देशः । [20]शैबः । [21]औदिष्ठः ॥

## अदूरभवश्च । (७०/१२८२)

[22]पूर्वा समर्थविभक्तिरनुवर्तते । तस्य इति षष्ठीसमर्थात्[23] अदूरभवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति[24] । विदिशायाः [25]अदूरभवं नगरं वैदिशम्[26] । [27]हैमवतम् । चकारः पूर्वेषां त्रयाणाम[28]र्थानामिह [29]सन्निधानार्थः । तेनोत्तरेषु[30] चत्वारो[31]ऽप्यर्थाः सम्बध्यन्ते ॥

---

1. आर्चनायिनः ह. 2. काण्डिनः ह. 3. तद्विषयो ह. 4. ब्राह्मणानि इत्यधिकम् ह. 5. काश्यपेन प्रोक्तमधीयते इत्यधिकम् ब. क. फ. ह. 6. पाराशर्येण प्रोक्तम् अधीयते इत्यधिकम् क. ड. 7. सूत्रम् इत्यधिकम् ग. 8. पिङ्गेन प्रोक्तः कल्पः इत्यधिकम् ग. 9. देशः इत्यधिकम् ह. 10. अर्थे ब.क.ह. 11. देशनामाभिधेये क. 12. परिखा इत्यधिकम् फ. 13. साहस्रा क. 14. कृता ग. फ. 15. च इत्यधिकम् क. 16. विषये क. 17. देशनामाभिधेये क. 18. ऋजुनावानां क. 19. देशः नास्ति फ. 20. शिबीनां देशः शैबः ह. 21. औष्ट्रः ह, आविष्टः ब. 22. षष्ठी ब, पूर्वस्मात् क. 23. प्रातिपदिकात् इत्यधिकम् क. 24. देशनामधेये गम्यमाने इत्यधिकम् ड. ह. 25. अदूरभवो ग्रामः वैदिशः फ. 26. नगरम् इत्यधिकम् ह. 27. त्रैहिमतम् ब. क. फ, प्रैहिमतम् ह. 28. अर्थानाम् नास्ति फ. ह. 29. सन्निधानार्थम् ह. 30. योगेषु इत्यधिकम् ड. फ. ह. ब. 31. अर्थयोगाः ह.

## ओरञ्। (७१/१२८३)

चत्वारोऽर्थाः (४.२.६७–७०) अनुवर्तन्ते। उवर्णान्तात् प्रातिपदिकात् [1]यथाविहितं समर्थविभक्तियुक्तात् अञ् प्रत्ययो भवति तदस्मिन्नस्ति[2] इत्येवमादिष्व[3]र्थेषु। अणोऽपवादः। [4]अरडु – आरडवम्। [5]कक्षतु – काक्षतवम्। कर्कटेलु – कार्कटेलवम्। नद्यां तु परत्वान्मतुब् भवति[6]। [7]इक्षुमती। अञधिकारः प्राक् सुवास्त्वादिभ्योऽणः (४.२.७७/१२८९)॥

## मतोश्च बह्वजङ्गात्। (७२/१२८४)

बह्वच् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात् प्रातिपदिकात् अञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। [8]ऐषुकावतम्। [9]सैध्रकावतम्। बह्वजङ्गात् इति किम्? [10]आहिमतम्। [11]यावमतम्। अङ्गग्रहणं[12] बह्वजिति [13]तद्विशेषणम् यथा [14]विज्ञायते, [15]मत्वन्तविशेषणं मा [16]विज्ञायि इति। मालावतां[17] निवासो [18]मालावतम्॥

## बह्वचः कूपेषु। (७३/१२८५)

बह्वचः प्रातिपदिकात् अञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु। अणोऽपवादः। [19]यथासम्भव[20]मर्थाः सम्बध्यन्ते। दीर्घवरत्रेण निर्वृत्तः [21]कूपः दैर्घवरत्रः। [22]कापिलवरत्रः॥

## उदक् च विपाशः। (७४/१२८६)

[23]विपाशः [24]उत्तरे कूले[25] ये कूपास्तेष्वभिधेयेषु अञ् [26]प्रत्ययो भवति चातुरर्थिकः। [27]अणोऽपवादः। [28]अबह्वजर्थ आरम्भः। दत्तेन [29]निर्वृत्तः कूपः दात्तः। गौप्तः। उदक् इति किम्? [30]दक्षिणतो विपाशः कूपेषु अणेव। दात्तः। गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका [31]वर्तते [32]सूत्रकारस्य॥

## सङ्कलादिभ्यश्च। (७५/१२८७)

[33]कूपेषु इति निवृत्तम्। सङ्कल इत्येवमादिभ्यः अञ् प्रत्ययो भवति चातुरर्थिकः। [34]अणोऽपवादः। यथासम्भवमर्थसम्बन्धः। सङ्गतः कलः सङ्कलः। सङ्कलेन [35]निर्वृत्तः साङ्कलः। पौष्कलः।

---

1. यथायथं ब. ड. फ ह. 2. इति देशे इत्यधिकम् फ. ह. 3. अर्थेषु नास्ति फ, चतुर्ष्वर्थेषु ड. ह. 4. आरडु ब. ह. 5. कन्तु कान्तवम् फ, कक्रुतु काक्रुतवम् क, कनक्रतु कानक्रतवम् कर्कन्धु कार्कन्धवम् कर्कटलु कार्कटलवम् ककन्दु काकन्दवम् इत्यधिकम् ह. 6. एव इत्यधिकम् फ. 7. द्रुमती क. फ. ह. 8. ऐक्षुकावनम् फ ऐकटावतम् ड. ब, ऐत्कटावतम् इ. 9. सैधृकावतम् क, सैन्धुकावतम् इ. 10. त्रैहिमतम् ब. ह, जाहिमतम्, इत्यधिकम् ब. क. 11. यावमतम् नास्ति फ. 12. किम् इत्यधिकम् क. फ. 13. प्रकृतिविशेषणम् फ. 14. विज्ञायेत ब. इ. ह. 15. मत्वन्तस्य मा भूत् फ. ह, मतुब्विशेषणं इ. 16. विज्ञायेत ब. इ. ह. 17. अयम् इत्यधिकम् ग. 18. मालावती ह, मालवती ब. 19. अत्र इत्यधिकम् ड. 20. अर्थसम्बन्धः इ.फ. 21. दैर्घवरत्रः कूपः फ. इ. क. 22. कोपिलवरत्रः ह. 23. देशे तन्नाम्नि इति वर्तते इत्यधिकम् ह. 24. उत्तरे नास्ति ड. 25. ये नास्ति ब. 26. एव इत्यधिकम् ड. 27. अणोऽपवादः नास्ति ब. ड. फ. 28. अबह्वर्थः इ. 29. निवृत्तः इ. 30. दक्षिणतीरे ह. 31. वर्तते नास्ति ह. 32. सूत्रकारस्य नास्ति ब. ड. फ. ह. 33. वाक्यमिदं नास्ति फ. 34. अणोऽपवादः नास्ति फ. 35. निवृत्तं साङ्कलम् पौष्कलं क. ब.

सङ्कुल । पुष्कल । [1]उद्वप । उडुप । उत्पुट । कुम्भ । [2]विधान । [3]सुदक्ष । [4]सुदत्त । सुभूत । [5]सुनेत्र । सुपिङ्गल । सिकता । [6]पूतीकी । पूलास । कूलास । पलाश । निवेश । गवेष । गम्भीर । [7]इतर । शर्मन् । [8]अहन् । लोमन् । वेमन् । [9]वरुण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । [10]भल्ल । माल । वृत् ॥

## स्त्रीषु सौवीरसाल्वप्राक्षु । (७६/१२८८)

देशे तन्नाम्नि इत्यस्य विशेषणं सौवीरादयः, स्त्रीत्वं च । ङ्याप्प्रातिपदिकाद् अञ् प्रत्ययो भवति चातुरर्थिकः, अणोऽपवादः, सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि[11] । सौवीरे तावत् – [12]दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री । साल्वे[13] – विधूमाग्निना निर्वृत्ता वैधूमाग्नी[14] । प्राचि खल्वपि – [15]ककन्देन निर्वृत्ता काकन्दी । माकन्दी । माणिचरी[16] । [17]जारुषी ॥

## सुवास्त्वादिभ्योऽण् । (७७/१२८९)

सुवास्तु इत्येवमादिभ्यः अण् प्रत्ययो भवति चातुरर्थिकः[18] । अञ [19]उवर्णान्तलक्षणस्य [20]कूपलक्षणस्य चापवादः । सुवास्तोः[21] अदूरभवं नगरं सौवास्तवम् । [22]वार्णवम् । अण्ग्रहणं नद्यां मतुपो बाधनार्थम् । सौवास्तवी नदी ।

सुवास्तु । [23]वर्णु । [24]भण्डु । [25]खण्डु । [26]सेचालिन् । कर्पूरिन् । शिखण्डिन् । [27]गर्त । कर्कश । [28]शटीकर्ण । [29]कृष्ण । [30]कर्क । कर्कंधूमती । [31]गोह्य । अहिसक्थ । वृत्[32] ॥

## रोणी । (७८/१२९०)

रोणीशब्दाद् अण् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवम[33]र्थसम्बन्धः । कूपलक्षणस्य अञोऽपवादः । रोणी इति कोऽयं निर्देशो, यावता प्रत्ययविधौ पञ्चमी युक्ता ? [34]सर्वावस्थप्रतिपत्त्यर्थमेवमुच्यते । रोणीशब्दः [35]सर्वावस्थोऽण्प्रत्ययमुत्पादयति, केवलस्तदन्तश्च । [36]रौणः । [37]आजकरोणः । [38]सैंहिकरोणः ॥

---

1. उत्पुव फ, नास्ति क. ह. 2. निधान क. फ. 3. सुदक्षिणा क. ह. 4. सुदन्त ह. 5. सुनेत्र सिक्त दूर्वा सङकुला सम्फला गम्भीर अरुण दशसाद आभूत सारेवण अभिक्षिप्त गोभृत अजभृत ड. 6. सुपूतीक क. 7. इतर नास्ति क. 8. अर्हत् ह. 9. करुण क. 10. कर्णभाल्ल क. 11. तन्नामधेये च इत्यधिकम् फ, च इत्यधिकम् ब.क.ड. 12. दत्तमित्रेण ह. 13. खल्वपि इत्यधिकम् फ. ह. 14. नगरी इत्यधिकम् ब. फ. 15. कङ्कुटेन निर्वृत्ता कङ्कुटी ड. 16. औहती इत्यधिकम् ड. 17. जारूधी ह, जारुन्धी ड. 18. यथासम्भवमर्थसम्बन्धः इत्यधिकम् ब. क. ड. फ. ह. 19. उवर्णान्तिदेशलक्षणस्य क. 20. अञः इत्यधिकम् फ. ह. 21. नद्याः इत्यधिकम् फ. 22. खाण्डवम् फ. 23. वण्डु ब. 24. बण्ड ब. 25. खण्डु नास्ति ब. 26. शैवालिन् ब. 27. गर्तकम् ब. 28. शकटीकर्ण क, सकुटीकर्ण विकटी ह. 29. कृष्णकर्ण ह, कृष्णार्ण क. 30. कर्क नास्ति ब. 31. गोह ड. 32. शेफाली ककुविन्दु कापूरी कण्डूमती पतिगाहम् इत्यधिकम् ह. 33. च इत्यधिकम् ब. 34. सर्वावस्था° क. 35. अण् नास्ति ब, सर्वावस्थासु क. 36. रोणः कूपः क. ड. फ. 37. आढकरोणः ड, आजाकरोणः फ, आजाक–रौणः ह. 38. सैंहिकरौणः क. इ. ह.

कोपधाच्च । (७९/१२९१)

ककारोपधात् च प्रातिपदिकात् अण् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्यो[1]वर्णलक्षणस्य चाञोऽपवादः । [2]कार्णच्छिद्रिकः [3]कूपः । कार्णवेष्टकः । [4]कृकवाकुना निर्वृत्तं कार्कवाकवम् । [5]त्रैशङ्कवम् ॥

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । (८०/१२९२)

वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव[6] प्रातिपदिकगणाः । आदिशब्दः प्रत्येकमभिसम्बध्यते । तत्र यथासङ्ख्यं [7]सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश[8] प्रत्ययाः भवन्ति चातुरर्थिकाः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । अरीहणादिभ्यो वुञ् प्रत्ययो भवति । आरीहणकम् । द्रौघणकम् ।

अरीहण । [9]द्रुघण । खदिर । [10]सार । भगल । उलन्द । साम्परायण । [11]क्रौष्ट्रायण । भास्त्रायण । मैत्रायण । त्रैगर्तायन । रायस्पोष । [12]विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । [13]जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । वैमतायन । [14]सौसायन । [15]शाण्डिल्यायन । शिरीष । बधिर[16] । अरीहणादिः ।

कृशाश्वादिभ्यः छण् प्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः ।

कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । अवनत । [17]विकुघास । अरुस् । अवयास । मौद्गल्य । कृशाश्वादिः ।

[18]ऋश्यादिभ्यः कः प्रत्ययो भवति । [19]ऋश्यकः । न्यग्रोधकः ।

ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण । ऋश्यादिः ।

कुमुदादिभ्यः ठच् प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् ।

कुमुद । शर्करा । न्यग्रोध । [20]इत्कट । गर्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । [21]यवाष । कूप । [22]विकङ्कत । कुमुदादिः ।

---

1. उवर्णान्तलक्षणस्य क. फ. 2. कर्णछिद्रकेण निर्वृत्तः इत्यधिकम् ब. क. ड. फ. ह, कर्णचित्रकेण निर्वृत्तः कार्णचित्रकः कूपः ड. 3. कूप नास्ति फ. 4. कृतवाकुना निवृत्तम् – कार्तवाकवम् ह. 5. त्रैशङ्कवम् नास्ति क, त्रैशङ्कवः ह. 6. एव नास्ति ड. फ. 7. सप्तदशप्रातिपदिकेभ्यः फ. 8. एव इत्यधिकम् ह. 9. द्रुगण ब. 10. नास्ति ब. 11. क्रौष्टायन ब. फ. 12. विपाश ब. 13. जाङ्घ ब. 14. गौमतायन इत्यधिकम् ब. 15. खाण्डायन बिल्व सुयज्ञ इत्यधिकम् ब. 16. जम्बूखदिर इत्यधिकम् ब. 17. विघास ब. 18. ऋष्यादिभ्यः ब. 19. ऋष्यकः ब. 20. उत्कट कङ्कट सङ्कट इत्यधिकम् ब. 21. पलाश ब. 22. त्रिक कत दशग्राम त्यधिकम् ब.

काशादिभ्य इलः प्रत्ययो भवति। काशिलम्। वाशिलम्।

काश। वाश। अश्वत्थ। पलाश। पीयूष। [1]विश। तृण। नर। चरण। कर्दम। कर्पूर। कण्टक। गृह। काशादिः।

तृणादिभ्यः शः प्रत्ययो भवति। तृणशः। नडशः।

तृण। नड। बुस। पर्ण। वर्ण। चरण। अर्ण[2]। जन। बल। लव। वन। तृणादिः।

प्रेक्षादिभ्य इनिप्रत्ययो भवति। प्रेक्षी। हलकी।

प्रेक्षा। हलका। बन्धुका। [3]ध्रुवका। क्षिपका। न्यग्रोध। इर्कुट[4]। प्रेक्षादिः।

अश्मादिभ्यो रप्रत्ययो भवति। अश्मरः[5]।

अश्मन्। [6]यूष। [7]रूष। मीन। दर्भ। वृन्द। गुड। खण्ड। [8]नग। शिखा[9]। अश्मादिः।

सख्यादिभ्यो ढञ् प्रत्ययो भवति। साखेयम्। साखिदत्तेयम्।

सखि। सखिदत्त। [10]वायुदत्त। गोहित। भल्ल। पाल। चक्रपाल। चक्रवाल। छगल। अशोक। करवीर। सीकर। सकर। सरस। समल[11]। सख्यादिः।

संकाशादिभ्यो ण्यप्रत्ययो भवति। सांकाश्यम्। काम्पिल्यम्।

संकाश। काम्पिल्य। समीर। [12]कश्मर। शूरसेन। [13]सुपथिन्। सक्थच। [14]यूप। अंश। एग। अश्मन्। कूट। मलिन। तीर्थ। अगस्ति। [15]विरत। चिकार। विरह। नासिका। संकाशादिः।

बलादिभ्यो यः प्रत्ययो भवति। बल्यः। [16]कुल्यम्।

बल। [17]वुल। तुल। उल। डुल। कवल। [18]वन। कुल। बलादिः।

पक्षादिभ्यः फक् प्रत्ययो भवति। पाक्षायणः। तौषायनः।

पक्ष। तुष। अण्ड। [19]कम्बलिक। चित्र। [20]अश्मन्। [21]अतिस्वन्। पथिन् पन्थ च[22]। पक्षादिः।

कर्णादिभ्यः फिञ् प्रत्ययो भवति। कार्णायनिः। वासिष्ठायनिः।

---

1. आवास नड वन वधूल गुहा बर्बर इत्यधिकम् ब. 2. सूल इत्यधिकम् ब. 3. बुधका ब. 4. सङ्कुट कूपकाक कर्करा सङ्कुटा सुकमह इत्यधिकम् ब. 5. यूथरम् इत्यधिकम् ब. 6. यूथ ब. 7. ऊष ब. 8. नख ब. 9. काटयाम इत्यधिकम् ब. 10. पायुदत्त ब. 11. सुरस रोहतमाल कदल सत्पल इत्यधिकम् ब. 12. कश्मीर ब. 13. पन्था इत्यधिकम् ब. 14. यूथ ब. 15–16. नास्ति ब. 17. पुल ब. 18. वनकुल ब. 19. वलिक ब, कम्बनिल ड. 20. नास्ति ड. 21. नास्ति ब. 22. कुम्भ सीरज सरस समल रोमक लोमन् हंसक काकण्डक अस्तिबल यमल हस्त सिंहक इत्यधिकम् ब.

कर्ण । [1]वसिष्ठ । अलुश । [2]शल । डुपद । अनडुह्य । पाञ्चजन्य । [3]स्थिरा । कुलिश । कुम्भी । जीवन्ती । [4]जित्व । [5]आण्डीवत् । कर्णादिः ।

सुतङ्गमादिभ्य इञ् प्रत्ययो भवति । सौतङ्गमिः । [6]मौनिचित्तिः ।

सुतङ्गम । [7]मुनिचित्त । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । [8]विग्र । बीजवापिन् । श्वन् । अर्जुन । [9]अजिर । [10]जीव । सुतङ्गमादिः ।

प्रगदिन्नादिभ्यः ञ्यः प्रत्ययो भवति । प्रागद्यम् ।

प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । [11]चूडार । मार्जार । कोविदार । प्रगद्यादिः ।

वराहादिभ्यः कक् प्रत्ययो भवति । वाराहकम् । पालाशकम् ।

वराह । पलाश । शिरीष । [12]पिनद्ध । स्थूण । विदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा । वराहादिः ।

कुमुदादिभ्यः ठक् प्रत्ययो भवति । [13]कौमुदिकम् ।

कुमुद । [14]गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल[15] । [16]मुनिस्थूल । कूट । मुचुकर्ण । कुमुदादिः ।

शिरीषशब्दोऽरीहणादिषु, [17]कुमुदादिषु, वराहादिषु [18]च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च [19]वरणादिषु दर्शनाल् लुब् भवति । [20]तथा चोक्तम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं [21]शिरीषवनम् इति ॥

## जनपदे लुप् । (८१/१२९३)

देशे तन्नाम्नि [22]यश्चातुर्थिकः प्रत्ययः [23]भवति, तस्य[24] देशविशेषे जनपदेऽभिधेये लुब् भवति । ग्रामसमुदायो जनपदः । पञ्चालानां निवासो जनपदः पञ्चालाः । [25]कुरवः । मत्स्याः । अङ्गाः । बङ्गाः । [26]मगधाः । सुह्माः । पुण्ड्राः । इह कस्मान् न [27]भवति, उदुम्बराः अस्मिन्[28] सन्ति [29]औदुम्बरो [30]जनपदः, [31]वैदिशो जनपदः इति ? तन्नाम्नि इति वर्तते । न चात्र लुबन्तं [32]तन्नामधेयं भवति ॥

## वरणादिभ्यश्च । (८२/१३०१)

वरण इत्येवमादिभ्यः उत्पन्नस्य चातुर्थिकस्य प्रत्ययस्य लुप् भवति । अजनपदार्थ आरम्भः । वरणानामदूरभवं [33]नगरं वरणाः । शृङ्गी । शाल्मलयः । चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । [34]कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी । शिरीषाः । [35]काञ्ची ।

वरणाः । [36]पूर्वौ गोदौ । [37]आलिङ्ग्यायन । [38]पर्णी । शृङ्गी । शाल्मलयः । सदाण्वी । [39]वणिकि । वणिक । [40]जालपद । मथुरा । उज्जयिनी । गया । तक्षशिला । [41]उरशा । आकृत्या ॥

---

1. अर्कलूष ब. 2. नास्ति ब. 3. स्फिक् ब. 4. अजित्व ब, ज्ञावत् इत्यधिकम् ब. 5. आण्डीव ब. 6. मौनचित्तिः ब. 7. मुनिचित्तिः फ. 8. व्यग्र ब. ड. 9–10. नास्ति ब. ड. 11. चूनार ब. 12. विनद्ध निबद्ध मूल स्निग्ध इत्यधिकम् ब. 13. कौमुदिकः ब, गौमथिकः इत्यधिकम् ब. 14. गोमध ब. 15. कुन्द मधुकर्ण शुचिकर्ण शिरीष इत्यधिकम् ब. 16. मुनिस्थल फ. 17–19. नास्ति फ. 20. यथा चोक्तम् क. 21. शिरीषवणम् ह.फ. 22. इति इत्यधिकम् फ. 23. भवति नास्ति ब. 24. च इत्यधिकम् फ. 25–26. नास्ति फ. 27. भवति नास्ति क. 28. देशे इत्यधिकम् ब.क.फ. 29. इति इत्यधिकम् ब. 30. देशः ब.क.फ. 31. वैतसो ब.क. 32. देशनामधेयं इ.ड. 33. ग्रामः नगरं वा क.ड. 34. कटुबदर्याः ब. 35. नास्ति ब. 36. पूर्वेण गोदौ अपरेण गोदौ ब.क.ह, पूर्वगोदौ अपरगोदौ ड. 37. आलिङ्गायन ड.फ, अवहणी इत्यधिकम् ड. 38. वर्णिक इत्यधिकम् ब.क. 39. वाणिक ब, वाणाक क. 40. जलपदा ब. 41. उरसा ब.क, उरगा फ.ह.

## शर्कराया वा। (८३/१३०२)

शर्कराशब्दादुत्पन्नस्य चातुर्रथिकस्य [1]प्रत्ययस्य वा लुब् भवति। [2]वाग्रहणं [3]किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्[4] प्रत्ययस्य पक्षे श्रवणं [5]भविष्यति ? एवं [6]तह्येतज् ज्ञापयति, शर्कराशब्दाद् औत्सर्गिको[7] भवति, [8]तस्यायं [9]विकल्पितो लुप् इति। शर्करा। शार्करम्। गणपाठाच्च [10]श्रवण-मुत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ, तदेवं षड् रूपाणि भवन्ति। शर्करा, शार्करम्, शर्करिकम्, शार्करकम्, शार्करिकम्, [11]शर्करीयम् इति ॥

## ठक्छौ च। (८४/१३०३)

शर्कराशब्दात् ठक् छ[12]इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवमर्थसम्बन्धः। शार्करिकम्। [13]शर्करीयम् ॥

## नद्यां मतुप्। (८५/१३०४)

नद्यामभिधेयायां मतुप् प्रत्ययो भवति [14]चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। [15]उदुम्बरा यस्यां[16] सन्ति उदुम्बरावती। मशकावती। [17]वीरणावती। पुष्करावती। [18]इक्षुमती। [19]द्रुमती। इह कस्मान्न भवति, भागीरथी, [20]भैमरथी[21] ? मतुबन्तस्यात[22]न्नामधेयत्वात् ॥

## मध्वादिभ्यश्च। (८६/१३०५)

मधु इत्येवमादिभ्यः शब्देभ्यो मतुप् प्रत्ययो भवति चातुरर्थिकः। [23]अनद्यर्थ आरम्भः। मधुमान्[24]। बिसवान्।

मधु। बिस। स्थाणु। [25]मुष्टि। इक्षु। वेणु। रम्य। [26]ऋक्ष। [27]कर्कन्धु। शमी। [28]किरीर। [29]हिम। किशरा। [30]शर्पणा। [31]मरुत्। मरुव। दार्वाघाट। शर। इष्टका। तक्षशिला। शक्ति। आसन्दी। [32]आसुति। शलाका। [33]आमिधी। [34]खडा। [35]वेटा। मध्वादिः ॥

## कुमुदनडवेतसेभ्यो ड्मतुप्। (८७/१३०६)

कुमुद नड वेतस इत्येतेभ्यः [36]शब्देभ्यः ड्मतुप् प्रत्ययो भवति चातुरर्थिकः। कुमुद्वान्। नड्वान्। वेतस्वान्।

[४३०] महिषाच्चेति वक्तव्यम्। (म. भा. २.२८८)

महिष्मान् [37]नाम देशः ॥

---

1. प्रत्ययस्य नास्ति क, वा नास्ति फ.ह. 2. अथ इत्यधिकम् ब. 3. किमर्थम् फ. 4. एव इत्यधिकम् फ. 5. भवति फ. 6. तर्हि तत् इ. 7. अपि इत्यधिकम् व.क.ड.इ.फ.ह. 8. अयं नास्ति फ. 9. विकल्पेन ह. 10. भवति इत्यधिकम् फ, उत्तरसूत्रविहितौ ब. इ. 11. शार्करीयम् क. ह. 12. च इत्यधिकम् फ. 13. शार्करीयम् क. ह. 14. चातुरर्थिकः नास्ति फ. 15. उदुम्बरा यस्यां सन्ति नास्ति फ. ह. 16. नद्याम् इत्यधिकम् ब. 17. वारणावती ब, नास्ति फ, वीणावती ह. 18. इक्षुवती ह. 19. द्रुमवती ह. 20. हैमरथी ड. फ. ह. 21. इति इत्यधिकम् ब. क. 22. नामधेयित्वात् क. 23. अनद्यर्थ आरम्भः नास्ति फ. 24. देशः इत्यधिकम् ग. ह. 25. ऋष्टिः क, रुष्टि ब. इ. 26. नास्ति ब, ऋष्य इ. 27. शकन्धु फ. 28. करीर ब. क. फ. ह. 29. हिमा ब. 30. शर्वरा ब, सर्याण क, शर्यात फ, शर्याणा ह. 31. मरुष क, वार्दाली ब. फ. समानवाल्मिकि ह. 32. असुतिः क, आसुकि ह. 33. आभिधी ब. 34. खण्डा ब. ड. 35. वेदा ब. ड. 36. शब्देभ्यः नास्ति क. इ. फ. 37. नाम देशः नास्ति ह.

## नडशादाड् ड्वलच्। (८८/१३०७)

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति [1]चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। [2]नड्वलम्। शाद्वलम्॥

## शिखाया वलच्। (८९/१३०८)

शिखाशब्दात् वलच् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। शिखावलं नाम नगरम्। मतुप्प्रकरणेऽपि शिखाया [3]वलचं (५. २. ११३/१९२०) वक्ष्यति, [4]तद्देशार्थं वचनम्॥

## उत्करादिभ्यश्छः। (९०/१३०९)

उत्कर इत्येवमादिभ्यः छः प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। उत्करीयम्। [5]शफरीयम्।

उत्कर। [6]संफल। शफर। [7]पिप्पल। पिप्पलीमूल। अश्मन्। अर्क। पर्ण। सुपर्ण। [8]खलाजिन। [9]इडा। अग्नि। तिक। कितव। आतप। [10]अनेक। पलाश। [11]तृणव। पिचुक। अश्वत्थ। [12]शकाक्षुद्र। भस्त्रा। विशाला। [13]अवरोहित। गर्त। शाल। अन्य। जन्या। अजिन। [14]मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। [15]शूर्पणाय। श्यावनाय। [16]नैव। बक। [17]नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। उत्करादिः॥

## नडादीनां कुक् च। (९१/१३१०)

नड इत्येवमादीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः। [18]यथासम्भवमर्थसम्बन्धः। नडकीयम्। प्लक्षकीयम्।

नड। प्लक्ष। बिल्व। वेणु। वेत्र। वेतस। तृण। इक्षु। काष्ठ। कपोत। '[19]क्रुञ्चायां ह्रस्वत्वं च' (ग.सू.९२)। 'तक्षन्नलोपश्च' (ग.सू.९३)॥

## शेषे। (९२/१३१२)

शेषे इत्यधिकारोऽयम्। [20]यानित ऊर्ध्वं [21]प्रत्ययाननुक्रमिष्यामः, [22]शेषेऽर्थे ते वेदितव्याः। [23]उपयुक्तादन्यः [24]शेषः। अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्यो[25]ऽन्योऽर्थः[26] शेषः (म.भा. २.२९१)। [27]तस्यैदंविशेषा ह्यपत्य-[28]समूहादयः, तेषु घादयो मा भूवन् इति शेषाधिकारः[29] क्रियते। किं च सर्वेषु जातादिषु[30] घादयो यथा स्युः[31] अनन्तरेणैवा[32]र्थादेशेन [33]सम्बन्धित्वेन कृतार्थता मा [34]ज्ञायि इति [35]साकल्यार्थं [36]शेषवचनम्। वक्ष्यति— '[37]राष्ट्रावारपाराद् घखौ' (४.२.९३/१३१३) [38]राष्ट्रियः। अवारपारीणः।

---

1. चातुरर्थिकः नास्ति फ. 2. नड्वलः शाद्वलः क. 3. वलच् इति फ. 4. तदादेशार्थं क. ह. 5. सङ्कुलीयम् ब, सम्पदीयम् फ, सम्फलीयम् इ. 6. सम्पद् फ, सङ्कुल ब. 7. पियाल ब. 8. खलजित फ, शूलाजिन इ. 9. इडा अग्नि नास्ति क, अनितिक ह. 10. अनेक नास्ति ब, अनक क, आकण ह. 11. त्रैवर्ण फ, त्रौवण क. त्रिवण ब. 12. काशक्षुद्र इ, काशलु ब. 13. अपरोहित ब. 14. नास्ति ह. 15. नास्ति इ. 16. नैचानक ह. 17. कबन्ध क. 18. अथ इत्यधिकम् ह. 19. कुञ्चकीयम् तक्षकीयम् इ. क, क्रुञ्चाह्रस्वत्वं ब. 20. यान् प्रत्ययान् इ.ब.फ. 21. प्रत्ययान् नास्ति क. 22. शेष इत्येवं तद् वेदितव्यम् क. 23. उपर्युक्तात् ह. 24. शेषः नास्ति क. 25. यो इत्यधिकम् क. इ. फ. ब. 26. स इत्यधिकम् क.ड.फ.इ.ब. 27. तस्येदं अपत्यादयः समूहादयश्च क. 28. समूहनिकाराः फ. 29. अपि इत्यधिकम् क. 30. अर्थेषु इत्यधिकम् क. 31. इति इत्यधिकम् क. 32. अर्थनिर्देशेन ड. ह. फ. 33. सम्बन्धे ह. ब. ड, सम्बन्धेन क. 34. विज्ञायि ब. फ. क. ड. 35. साकल्यार्थे वचनम् क. 36. शेष नास्ति फ. 37. राष्ट्रपारावारात् फ. 38. राष्ट्रीयः ह.

शेषे इति लक्षणं चाधिकारश्च । चक्षुषा गृह्यते चाक्षुषं रूपम् । [1]श्रावणः शब्दः[2] । दृषदि पिष्टाः दार्षदाः [3]सक्तवः । उलूखले [4]क्षुण्णः औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं [5]शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः [6]इति ॥

## राष्ट्रावारपाराद् घखौ । (९३/१३१३)

राष्ट्र अवारपार इत्येताभ्यां यथासङ्ख्यं [7]घखौ इत्येतौ प्रत्ययौ भवतः । [8]राष्ट्रियः । अवारपारीणः ।

[४३१] विगृहीतादपीष्यते । (म. भा. २.२९१)

अवारीणः । पारीणः ।

[४३२] [9]विपरीताच्च । (म. भा. २.२९१)

[10]पारावारीणः ।

प्रकृतिविशेषोपादानमात्रेण तावत् प्रत्यया विधीयन्ते । तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च [11]पुरस्ताद् [12]वक्ष्यन्ते ॥

## ग्रामाद् यखञौ । (९४/१३१४)

ग्रामशब्दात् य खञ् इत्येतौ प्रत्ययौ भवतः । ग्राम्यः, ग्रामीणः ॥

## कत्र्यादिभ्यो ढकञ् । (९५/१३१५)

कत्रि इत्येवमादिभ्यो[13] ढकञ् प्रत्ययो भवति[14] । कात्रेयकः । [15]औम्भेयकः ।

कत्रि । उम्भि । पुष्कर[16] । मोदन । कुम्भी । [17]कुण्डिन । नगर । [18]वञ्जी । [19]भक्ति । माहिष्मती । [20]चर्मण्वती । ग्राम । उख्या । '[21]कुड्याया यलोपश्च' (ग. सू. ९४)[22] । कत्र्यादिः ॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु । (९६/१३१६)

कुलकुक्षिग्रीवा[21]शब्देभ्यो यथासङ्ख्यं श्वन् असि अलङ्कार इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति । कौलेयको भवति श्वा चेत् । कौलोऽन्यः । कौक्षेयको भवति असिश्चेत् । कौक्षोऽन्यः । ग्रैवेयको भवति अलङ्कारश्चेत् । ग्रैवोऽन्यः ॥

---

1. श्रवणेन गण्यते इत्यधिकम् फ. 2. रासनो रसः स्पार्शनः स्पर्शः इत्यधिकम् क.इ. 3. माषाः फ. ह. 4. क्षुण्णाः औलूखला यवाः क. 5. हलम् फ, चातुरः शकटः ह. 6. इति नास्ति ब. फ. 7. घ ख क. ह. ब. 8. राष्ट्रीयः ह. 9. विपर्यस्ताच्च ड. 10. पारावरीणः क. ह. 11. परस्तात् क. ह. 12. वर्तन्ते इ. 13. शब्देभ्यः इत्यधिकम् क. 14. शैषिकः इत्यधिकम् क. ड. 15. ग्रामेयकः क. ड. 16. पुष्कल इत्यधिकम् ब. क. 17. अगस्ति इत्यधिकम् क. 18. वञ्जि क. 19. नास्ति ब. क. 20. धर्मवती वर्मती क. ब. ह. 21. कुल्याया अ. ब. क. 22. कौलेयकः इत्यधिकम् क. 23. इत्येतेभ्यः इत्यधिकम् ह.

## नद्यादिभ्यो ढक्। (९७/१३१७)

नदी इत्येवमादिभ्यो ढक् प्रत्ययो भवति। नादेयम्। माहेयम्। पूर्वनगरीशब्दोऽत्र पठ्यते। [1]पौर्वनगरेयम्। केचित्तु पूर्वनगिरी इति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति, पौरेयम्, [2]वानेयम्, गैरेयम् इति। तदुभयमपि दर्शनं[3] प्रमाणम्।

नदी। मही। वाराणसी। [4]श्रावस्ती। [5]कौशाम्बी। [6]नवकौशाम्बी। [7]काशफरी। खादिरी। पूर्वनगरी। पावा। मावा। साल्वा। [8]दार्वा। [9]दाल्वा। [10]वासेनकी। 'वडवाया वृषे' (ग. सू. ९५)॥

## दक्षिणापश्चात्पुरसस्त्यक्। (९८/१३१८)

दक्षिणा पश्चात् पुरस् इत्येतेभ्यः त्यक् प्रत्ययो भवति शैषिकः। दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥

## कापिश्याः ष्फक्। (९९/१३१९)

[11]कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः। षकारो ङीषर्थः। कापिशायनं मधु। कापिशायनी द्राक्षा।

[४३३] बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम्। (म. भा. २.२९२)

बाह्लायनी। और्दायनी। [12]पार्दायनी॥

## रङ्कोरमनुष्येऽण् च। (१००/१३२०)

रङ्कुशब्दाद् अण् प्रत्ययो भवति, चकारात् ष्फक् च शैषिकोऽमनुष्येऽभिधेये। राङ्कवो [13]गौः, राङ्कवायणो गौः। अमनुष्ये इति किम्? [14]राङ्कवको मनुष्यः (म. भा. २.२९२)।

ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र [15]च 'मनुष्यतत्स्थयोर्वुञ्' (४.२.१३४/१३५८) इति मनुष्ये परत्वाद् वुञैव भवितव्यं, [16]कच्छादिपाठाद[17]मनुष्ये अणपि सिद्धः, किमिह [18]मनुष्यप्रतिषेधेन[19]अण्ग्रहणेन च? तदुच्यते, नैवायं मनुष्यप्रतिषेधः, किं [20]तर्हि, नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि[21] प्रतिपत्तिः क्रियते। तेन राङ्कवः कम्बलः इति[22] ष्फक् [23]न भवति। विशेषविहितेन च ष्फका अणो बाधा मा [24]भूत् इत्यण्ग्रहणमपि[25] क्रियते॥

## द्युप्रागपागुदक्प्रतीचो यत्। (१०१/१३२१)

दिव् प्राच् अपाच् उदच् प्रत्यच् इत्येतेभ्यो यत् प्रत्ययो भवति शैषिकः। दिव्यम्। प्राच्यम्। [26]अपाच्यम्। उदीच्यम्। प्रतीच्यम्[27]। अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ[28] भवतः। प्राक्तनम्॥

---

1. पूर्वनगरेयम् ह. 2. वानेयम् नास्ति ह. 3. भवति इत्यधिकम् क. 4. आवन्ती क. 5. नास्ति ह. 6. नास्ति क. ब. 7. कायफली शादिनी क. फ, सैकती ह. 8. नास्ति ब, दर्वा फ. 9. नास्ति ब. क. ह. 10. सेनकी ब. फ. 11. कपिशशब्दात् ह. 12. नास्ति ब, पार्दायणी ह. 13. गौः नास्ति फ. 14. राङ्कवः ह. 15. च नास्ति फ. 16. कच्छादिषु ब. क. 17. अमनुष्ये नास्ति क. ड. फ. ह. 18. मनुष्यस्य प्रतिषेधेन ब. क. 19. वा इत्यधिकम् ब. 20. तर्हि नास्ति फ. 21. इति फ. 22. अप्राणिनि कच्छादिपाठादण् इत्यधिकम् 23. न नास्ति ब. 24. विज्ञायि फ. 25. अपि नास्ति फ. 26. अवाच्यम् फ. ह. 27. भसंज्ञायामञ्चतेः उत् ईत् इति ईकारादेशः। अच इति अञ्चतेः अकारलोपः चादिति दीर्घः इत्यधिकम् ब. 28. एव प्रत्ययौ इत्यधिकम् ड.

## कन्थायाष्ठक्। (१०२/१३२२)

कन्थाशब्दात् ठक् प्रत्ययो भवति [1]शैषिकः। कान्थिकः॥

## वर्णौ वुक्। (१०३/१३२३)

कन्थायाः इत्येव। [2]वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति [3]शैषिकः। ठकोऽपवादः। वर्णुर्नाम नदः, [4]तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं [5]प्रत्ययः। [6]तथाहि – जातं हिमवत्सु [7]कान्थकम्॥

## अव्ययात् त्यप्। (१०४/१३२४)

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः।

अमेहक्वतसित्रेभ्यस्त्यद्विधिर्योऽव्ययात्स्मृतः।
[8]निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा॥ (म.भा. २.२९२)

अमात्यः। इहत्यः। क्वत्यः। [9]इतस्त्यः। तत्रत्यः। यत्रत्यः। परिगणनं किम्? औपरिष्टः [10]पौरस्तः। [11]पारस्तः। वृद्धात्तु छो भवति। आरातीयः।

[४३४] त्यब् नेर्ध्रुवे। (म. भा. २. २९३)

[12]नियतं ध्रुवम् नित्यम्।

[४३५] निसो गते। (म. भा. २. २९३)

निर्गतो वर्णाश्रमेभ्यः निष्टचः चण्डालादिः।

[४३६] [13]आविसश्छन्दसि। (म.भा. २.२९३)

आविस् शब्दाच् छन्दसि त्यप् प्रत्ययो भवति। 'आविष्टचो वर्धते चारुरासु' (ऋ.१.९५.५)।

[४३७] [14]अरण्याण् णो वक्तव्यः। (म.भा.२.२९३)

आरण्याः सुमनसः।

[४३८] [15]दूरादेत्यः। (म. भा.२. २९३)

दूरेत्यः पथिकः।

[४३९] उत्तरादाहञ्। (म.भा. २. २९३)

औत्तराहम्॥

---

1. शैषिकः नास्ति फ. 2. वर्णे क. 3. शैषिकः नास्ति फ. 4. तत्सामीप्यं वर्णः क. ह. 5. वुक् फ. 6. यथाहि ब. क. ड. फ. 7. कन्थकम् क. 8. अर्धमिदं नास्ति ब. क. ड. इ. फ. 9. नास्ति ब. फ, ततस्त्यः कुतस्त्यः क. ड. इ. ह. 10. नास्ति ब. क. फ. 11. पारतः ब. क, अव्ययानां भमात्रे टिलोपः वक्तव्य इत्यधिकम् ड. इ. 12. नित्यं ब. 13. अविसः ब. 14. अरण्याण्णो वक्तव्यः नास्ति ब. 15. दुरादैत्यः ब.

## ऐषमोह्यःश्वसोऽन्यतरस्याम् । (१०५/१३२६)

ऐषमस् ह्यस् श्वस् इत्येतेभ्योऽन्यतरस्यां त्यप् प्रत्ययो भवति [1]शैषिकः । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । 'श्वसस्तुट् च' (४.३.१५/१३८५) इति ठञपि तृतीयो भवति । शौवस्तिकम् ॥

## तीररूप्योत्तरपदादञ्ञौ । (१०६/१३२७)

तीरोत्तरपदात् रूप्योत्तरपदाच्च प्रातिपदिकाद् [2]यथासङ्ख्यम् अञ् ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ । अणोऽपवादौ । [3]काकतीरम् । [4]पाल्वलतीरम् । रूप्योत्तरपदात् – [5]वार्करूप्यम् । [6]शैवरूप्यम् । तीररूप्यान्तात् इति नोक्तं [7]बहुच्प्रत्ययपूर्वाद् मा भूत् इति । [8]बाहुरूप्यम् । [9]अणेव भवति[10] ॥

## दिक्पूर्वपदादसञ्ज्ञायां ञः । (१०७/१३२८)

असञ्ज्ञायाम् इति प्रकृतिविशेषणम् । दिक्पूर्वपदात् प्रातिपदिकात् [11]असञ्ज्ञाविषयात् ञः प्रत्ययो भवति शैषिकः । [12]अणोऽपवादः । पौर्वशालः । [13]दाक्षिणशालः । [14]आपरशालः । असञ्ज्ञायाम् इति किम् ? [15]पूर्वेषुकामशमः । अपरेषुकामशमः । 'दिक्सङ्ख्ये सञ्ज्ञायाम्' (२.१.५०/७२७) इति समासः । प्राचां ग्रामनगराणाम् (७.३.१४/१४००) इति उत्तरपदवृद्धिः । पदग्रहणं स्वरूपविधि[16]निरासार्थम् ॥

## मद्रेभ्योऽञ् । (१०८/१३२९)

दिक्पूर्वपदात् इत्येव । दिक्पूर्वपदात् मद्रशब्दाद् अञ् प्रत्ययो भवति शैषिकः[17] । पौर्वमद्रः । आपरमद्रः । 'दिशोऽमद्राणाम्' (७.३.१३/१३९९) इति पर्युदासाद् आदिवृद्धिरेव ॥

## उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् । (१०९/१३३०)

उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः । [18]दिग्ग्रहणं निवृत्तम् । अणोऽपवादः । शैवपुरम् । [19]माण्डवपुरम् । उदीच्यग्रामात् इति किम् ? [20]माथुरम् । बह्वचः इति किम् ? [21]ध्वजी । ध्वाजम् । अन्तोदात्तात् इति किम् ? [22]शार्करीधानम् । [23]शार्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः ॥

---

1. शैषिकः नास्ति फ. 2. यथासङ्ख्यम् नास्ति फ. 3. कर्कतीरम् फ. 4. नास्ति फ, पार्वतीरम् ह. 5. वार्क्यरूप्यम् ब. 6. नास्ति क. 7. बहुपूर्वात् ब.ह. 8. नास्ति फ. 9. अणेव भवति नास्ति ब. 10. स्वरे विशेषः इति इत्यधिकम् क.इ. 11. असंज्ञायां विषये इ. 12. अणोऽपवादः नास्ति फ. 13. नास्ति ह. 14. आवरशालः ह, नास्ति क. 15. पूर्वेषुकामशम्यां भवः इत्यधिकम् ह, पूर्वेषुकामशमः, अपरेषुकामशमः क, आपरेषुकामशमः ब, नास्ति ह. 16. नियमार्थम् क. 17. अणोऽपवादः इत्यधिकम् ह. 18. दिक्पूर्वपदग्रहणं फ. 19. नास्ति ड, माण्डवनगरम् ब.क, मगधनगरम् फ.ड. 20. माधुरम् ब.क.ड. 21. नास्ति फ. 22. शर्करीधानः फ, शाक्वरीधानम् क. 23. शार्करीधानशब्दे ब.ड.

## प्रस्थोत्तरपदपलद्यादिकोपधादण् । (११०/१३३१)

प्रस्थोत्तरपदात पलद्यादिभ्यः ककारोपधात् च प्रातिपदिकाद् अण् प्रत्ययो भवति शैषिकः । उदीच्यग्रामलक्षणस्य अञोऽपवादः । [1]माद्रीप्रस्थः । माहकीप्रस्थः । पलद्यादिभ्यः – पालदः । [2]पारिषदः । ककारोपधात् – नैलीनकः । [3]चैयातकः । पलद्यादिषु यो वाहीकग्रामः, ततः ठञ्ञिठयोः (४.२.११७/१३४१) अपवादः । यथा – गौष्ठी, [4]नैतकी इति । गोमतीशब्दः पठ्यते, ततो 'रोपधेतोः प्राचाम्' (४.२.१२३/१३४७) इति वुञोऽपवादः । वाहीकशब्दः कोपधोऽपि पुनः पठ्यते परं छं (४. २. ११४/१३३७) बाधितुम् । अण्ग्रहणं बाधकबाधनार्थम् ।

पलदी । [5]परिषत् । [6]यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । [7]कलकीट । मलकीट । कमलकीट । [8]कमलभिदा । गोष्ठी । कमलकीर । बाहुकीट । नैतकी । परिखा । शूरसेन । [9]गोमती । उदयान । पलद्यादिः ॥

## कण्वादिभ्यो गोत्रे । (१११/१३३२)

गोत्रमिह न प्रत्ययार्थो न [10]च प्रकृतिविशेषणम् । [11]तह्येवं [12]सम्बध्यते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितः, तदन्तेभ्य [13]एव अण् प्रत्ययो भवति शैषिकः । छस्यापवादः । [14]काण्वाः छात्राः । [15]गौकक्षाः[16] ॥

## इञश्च । (११२/१३३३)

गोत्रे इत्येव । गोत्रे य इञ् विहितः तदन्तात् प्रातिपदिकात् अण् प्रत्ययो भवति शैषिकः । छस्यापवादः । दाक्षाः । प्लाक्षाः । [17]माहकाः । गोत्रे इत्येव, सौतङ्गमेरिदं सौतङ्गमीयम् ॥

## न द्व्यचः प्राच्यभरतेषु । (११३/१३३४)

द्व्यचः प्रातिपदिकात् प्राच्यभरतगोत्राद् इञन्ताद् अण् प्रत्ययो [18]न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । पैङ्गीयाः । प्रौष्ठीयाः । [19]चैदीयाः । [20]पौष्कीयाः । [21]काशीयाः । पाशीयाः । द्व्यचः इति किम् ? पान्नागाराः[22] । प्राच्यभरतेषु इति किम् ? दाक्षाः[23] । काशीयाः इति कथमुदाहृतं, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां (४.२.११६/१३४०) भवितव्यम् ? नैतदस्ति । देशवाचिनः काशिशब्दस्य तत्र ग्रहणं [24]चैदिशब्देन साहचर्यात् । गोत्रात् तु वृद्धाच्छः (४. २. ११४/१३३७) एव भवति । ज्ञापकादन्यत्र [25]प्राच्यग्रहणेन भरतग्रहणं न भवति इति स्वशब्देन भरताना[26]मुपादानं कृतम् ॥

---

1. माध्रीप्रस्थः ब, राध्रीप्रस्थः क. 2. पार्षदः ब.क.इ. 3. नैयानकः ब, वैयानकः क. इ, वैरयातकः ह. 4. नैलकी ब. 5. पार्षदी ब, पार्षद क. 6. पक्षरोमक ब. 7. जालकीट क. 8. कमललीय कमलकी इत्यधिकम् ब. 9. नास्ति अ.क. ड. इ. 10. च नास्ति क, न विधिविशेषणम् इत्यर्थः फ. 11. किम् इत्यधिकम् ब. क. फ. इ. 12. अभिसंबध्यते क, एवं सम्बन्धः क्रियते फ. 13. एव नास्ति फ. 14. शाकटाः ड. 15. वौकक्षाः क. 16. गोत्रे इति किम् ? कण्वो देवता अस्य काण्वः, तस्य इदं काण्वीयम् इत्यधिकम् ब, गर्गाद्यन्तर्गणोऽयम् इत्यधिकम् क. ड. इ. फ. ह. 17. माहकालाः फ, साहकाः क. 18. न नास्ति फ. ह. 19. बैदीयाः फ, बैकीयाः ड. 20. पौष्पीया. क. फ. ड. 21. वाशीयाः क, वात्स्याः ड. 22. माथरेषणाः इत्यधिकम् फ, मान्तरेषणाः इत्यधिकम् ह. 23. प्लाक्षाः इत्यधिकम् ब. क. ड. फ. 24. चेदिशब्देन ब. क. ड. फ, बैदिशब्देन ह. 25. प्राच्यग्रहणे ब. फ. इ. 26. ग्रहणम् फ. ह.

## वृद्धाच्छः । (११४/१३३७)

गोत्रे इति नानुवर्तते । सामान्येन विधानम् । वृद्धात् प्रातिपदिकात् छः प्रत्ययो भवति शैषिकः । [1]अणोऽपवादः । गार्गीयः । वात्सीयः । शालीयः । मालीयः । अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधीन् (४.२.१०४, १०६.१०९, ११०) तु परत्वाद् बाधते ॥

## भवतष्ठक्छसौ । (११५/१३३९)

वृद्धात् इत्येव । भवच्छब्दाद् वृद्धात् [2]ठक्छसौ प्रत्ययौ भवतः शैषिकौ[3] । छस्यापवादौ । सकारः पदसञ्ज्ञार्थः । [4]भवतस्त्यदादित्वाद् वृद्धसञ्ज्ञा । [5]भावत्कः । भवदीयः । अवृद्धात्तु भवतः शतुरणेव भवति । भावतः ॥

## काश्यादिभ्यष्ठञ्ञिठौ । (११६/१३४०)

[6]काशि इत्येवमादिभ्यः ठञ् ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ । इकार [7]उच्चारणार्थः[8] । ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः । स्त्रीप्रत्यये विशेषः । काशिकी । काशिका । [9]बैदिकी । बैदिका । वृद्धात् इत्यत्रा[10]नुवर्तते । ये तु अवृद्धाः पठ्यन्ते, वचनप्रामाण्यात् तेभ्यः प्रत्ययविधिः । देवदत्तशब्दः पठ्यते, तस्य 'एङ् प्राचां देशे' (१.१.७५/१३३८) इति वृद्धसञ्ज्ञा । [11]दैवदत्तिकः । वाहीकग्रामस्य तु नास्ति वृद्धसञ्ज्ञा । [12]दैवदत्तः । कथं भाष्ये उदाहृतं 'वा नामधेयस्य वृद्धसञ्ज्ञा वेदितव्या देवदत्तीयाः, दैवदत्ताः' इति, यावता वृद्धसञ्ज्ञापक्षे काश्यादित्वात् ठञ्ञिठाभ्यां भवितव्यम् ? तत्रैवं वर्णयन्ति, वा नामधेयस्य इति व्यवस्थितविभाषेयम्, सा छे कर्तव्ये भवति, ठञ्ञिठयोर्न भवति इति ।

काशि । [13]चेदि । सञ्ज्ञा । [14]संवाह । अच्युत । [15]मोहमान । शकुलाद । [16]हस्तिकर्षू । [17]कुदामन् । [18]हिरण्य । करण[19] । [20]गोधाशन । [21]भौरिकि । भौलिङ्गि । अरिन्दम । [22]सर्वमित्र । देवदत्त । साधुमित्र । दासमित्र । दासग्राम । सौधावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । 'आपदादिपूर्वपदात् कालात्' (ग.सू. ९६) । आपत्कालिकी, आपत्कालिका । [23]और्ध्वकालिकी, और्ध्वकालिका । तात्कालिकी, तात्कालिका ॥

## वाहीकग्रामेभ्यश्च । (११७/१३४१)

[24]वृद्धात् इत्येव । वाहीकग्रामवाचिभ्यः वृद्धेभ्यः [25]ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ । छस्यापवादौ । [26]शाकलिकी, शाकलिका । [27]मान्थविकी, मान्थविका ॥

---

1. अणोऽपवादः नास्ति क.ड.इ.फ. 2. ठक् छस् इत्येतौ ब.इ.फ.ह. 3. सकार उच्चारणार्थः । जकारः एव उभयत्र आदेशः इत्यधिकम् ब. 4. भवतः नास्ति फ. 5. भवतः अयं भावत्कः क. 6. काश्यादिभ्यः फ. 7. सुखमुच्चारणार्थः फ. 8. छस्यापवादः इत्यधिकम् ह. 9. चैदिकी चैदिका ब. 10. अत्र नास्ति फ. 11. देवदत्तिकः क. 12. देवदत्तः ब.क.ह. 13. बेदि इ, बदि ब. 14. संवाहि ह.क. 15. मोदमान ड.ब.क, मादमान ह. 16. बस्तिकरिषु ह, हस्तिकर्ष क. 17. कुमार ब.क, कुनामन् इ. 18. नास्ति ह. 19. कुमातनु इत्यधिकम् ब. 20. गोवाशन ब.क. 21. भौरिगि भौलिगि ब. 22. सवामि ब. 23. पौर्वकालिकी पौर्वकालिका इत्यधिकम् ब. 24. वाक्यमिदं नास्ति फ. 25. शब्देभ्यः इत्यधिकम् फ. 26. शालिकी शालिका ह. 27. माण्डविकी माण्डविका फ.ह, माञ्चविकी माञ्चविका ड, मार्थविकी मार्थविका ब.

## विभाषोशीनरेषु। (११८/१३४२)

[1]वृद्धात् इति वर्तते, वाहीकग्रामेभ्यः इति च। उशीनरेषु ये वाहीकग्रामाः, तद्वाचिभ्यो वृद्धेभ्यः [2]प्रातिपदिकेभ्यः विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, [3]आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया॥

## ओर्देशे ठञ्। (११९/१३४३)

वृद्धात् एति नावुवर्तते, उत्तरसूत्रे [4]पुनर्वृद्धग्रहणात्। उवर्णान्तात् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। [5]नैषादकर्षुकः। [6]शाबरजम्बुकः। देशे इति किम्? पटोश्छात्राः पाटवाः[7]। ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिः [8]न लभ्यते इति[9] ठञ्ग्रहणं कृतम्॥

## वृद्धात् प्राचाम्। (१२०/१३४४)

ओर्देशे[10] इत्येव। उवर्णान्तात् वृद्धात् प्राग्देशवाचिनः [11]प्रातिपदिकात् ठञ् प्रत्ययो भवति [12]शैषिकः। [13]आढकजम्बुकः। [14]शाकजम्बुकः। [15]नापितवास्तुकः (म. भा. २.२९७)। पूर्वेणैव [16]ठञि सिद्धे नियमार्थं वचनम्, [17]वृद्धादेव प्राचाम् अवृद्धान्न भवति इति। मल्लवास्तु – [18]माल्लवास्तवः॥

## धन्वयोपधाद् वुञ्। (१२१/१३४५)

वृद्धात् इति वर्तते, देशे इति च। धन्ववाचिनो यकारोपधाच्च [19]देशाभिधायिनो वृद्धात् प्रातिपदिकात् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो [20]मरुदेशवचनः। [21]पारेधन्वकः। ऐरावतकः। योपधात् – सांकाश्यकः (म. भा. २.२९७)। [22]काम्पिल्यकः॥

## प्रस्थपुरवहान्ताच्च। (१२२/१३४६)

वृद्धात् इत्येव, देशे इति [23]च। [24]अन्तशब्दः प्रत्येकमभिसम्बध्यते। प्रस्थ पुर वह [25]इत्येवमन्तात् देशवाचिनः प्रातिपदिकाद् [26]वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः[27]। [28]नान्दीपुरकः। (म. भा. २.२९८)। [29]कान्तीपुरकः। पैलुवहकः। [30]फालगुनीवहकः। [31]पुरान्तो रोपधस्ततः [32]उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह [33]ग्रहणम्॥

## रोपधेतोः प्राचाम्। (१२३/१३४७)

वृद्धात् इत्येव, देशे इति च। तद्विशेषणं प्राग्ग्रहणम्। [34]रोपधात् ईकारान्ताच् च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। [35]पाटलिपुत्रकाः। ऐकचक्रकाः। [36]ईतः खल्वपि – [37]काकन्दी। काकन्दकः। माकन्दी। माकन्दकः। प्राचाम् इति किम्? [38]दात्तामित्रीयः। तपरकरणं विस्पष्टार्थम्॥

---

1. वाक्यमिदं नास्ति फ. 2. शब्देभ्यः फ. 3. ओकजालिकी, ओकजालिका, ओकजालकीया ड. 4. पुनर् नास्ति फ. 5. नैषातकर्षुकः ह, नैषाहकर्षुकः ड. 6. शीबरजम्बुकः ड. 7. छात्राः इत्यधिकम् फ. 8. न भवति फ, अलभ्या क. 9. पुनः इत्यधिकम् फ. 10. ठञ् इत्यधिकम् फ. 11. प्रातिपदिकात् नास्ति फ. 12. शैषिकः नास्ति फ. 13. आढकः क. 14. शाबरजम्बुकः क, नास्ति फ. 15. नापितवस्तुकः क, नाविकवास्तुकः ह. 16. ठञि नास्ति फ. 17. वृद्धादेव प्राचाम् नास्ति ब. 18. मल्लवास्तव्यः क. 19. देशवाचिनः क. फ. 20. मरुदेशवाची क. 21. पारेधन्वदेशे जातः इत्यधिकम् क. 22. काम्बिल्यकः ह. 23. च नास्ति फ. 24. अन्तः शब्दः ह. 25. अन्तादेशवाचिनः ह. 26. वृद्धात् नास्ति फ, वृद्धात् प्रातिपदिकात् क. 27. शौणाप्रस्थकः इत्यधिकम् क. ड. फ. 28. पुरान्तात् रोपधात् इत्यधिकम् फ. ह. 29. काञ्चीपुरकः ड. 30. फाल्गुतीवहकः ह. 31. पुरान्तात् रोपधात् ब. 32. उत्तरेणैव सिद्धे ड. क. ह. 33. वचनम् फ. 34. रेफोपधात् क. ब. 35. पाटलिपुत्रकः, ऐकचक्रकः ब. ह. 36. ईकः ह. 37. नास्ति ह, काकन्दा ड. 38. दात्तमित्रीयः फ. ह, दत्तमित्रीयः क.ड, चारमित्रीयः इत्यधिकम् ह.

## जनपदतदवध्योश्च । (१२४/१३४८)

वृद्धात् इत्येव, देशे इति च । तद्विशेषणं जनपदतदवधी । वृद्धाज् जनपदवाचिनः तदवधिवाचिनश्च प्रातिपदिकात् वुञ् प्रत्ययो भवति शैषिकः । छस्यापवादः । [1]आभिसारकः । [2]आदर्शकः । [3]जनपदावधेः खल्वपि– [4]औपुष्टकः । श्यामायनकः । तदवधेरपि जनपद एव गृह्यते न ग्रामः । किमर्थं तर्हि [5]ग्रहणम् ? बाधकबाधनार्थम् । गर्तोत्तरपदाच् छं बाधित्वा [6]वुञ् एव जनपदावधेर्भवति । त्रैगर्तकः ॥

## अवृद्धादपि बहुवचनविषयात् । (१२५/१३४९)

जनपदतदवध्योः इत्येव । अवृद्धाद् वृद्धाच्च [7]जनपदात् तदवधिवाचिनश्च बहुवचनविषयात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः । अण्छयोरपवादः । अवृद्धाज्जनपदात् तावत् – अङ्गाः । वङ्गाः । [8]कलिङ्गाः । आङ्गकः । वाङ्गकः । कालिङ्गकः । [9]अवृद्धाज्जनपदावधेः – अजमीढाः । अजक्रन्द्राः । आजमीढकः । आजक्रन्दकः । वृद्धाज्जनपदात् – दार्वाः । [10]जाम्ब्वाः । दार्वकः । [11]जाम्ब्वकः । वृद्धाज् जनपदावधेः – कालञ्जराः । वैकुलिशाः । [12]कालञ्जरकः । [13]वैकुलिशकः । विषयग्रहणमनन्यत्र भावार्थम् । जनपदैकशेष-बहुत्वे मा भूत् । वर्तन्यः । [14]वार्तनः । अपिग्रहणं किम् यावता वृद्धात पूर्वेणैव सिद्धम् ? तक्रकौण्डिन्यन्यायेन बाधा [15]मा विज्ञायि इति समुच्चीयते ॥

## कच्छाग्निवक्त्रगर्तोत्तरपदात् । (१२६/१३५०)

देशे इत्येव । उत्तरपदशब्दः प्रत्येकमभिसम्बध्यते । कच्छाद्युत्तरपदाद् देशवाचिनः प्रातिपदिकाच् च अवृद्धाद् वृद्धाच् च वुञ् प्रत्ययो भवति शैषिकः । छाणोरपवादः । [16]दारुकच्छकः । [17]पैप्पलीकच्छकः । [18]काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः । [19]सैन्धुवक्त्रकः । [20]बाहुगर्तकः । [21]चाक्रगर्तकः ॥

## धूमादिभ्यश्च । (१२७/१३५१)

[22]धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यः वुञ् प्रत्ययो भवति शैषिकः । [23]अणादेरपवादः । [24]धौमकः । खाण्डकः । पाथेयशब्दः पठ्यते, तस्य योपधात्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम् । तथा विदेहानर्तशब्दयोः जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः । विदेहानां क्षत्रियाणां स्वं वैदेहकम् । आनर्तकम् । समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञ् इष्यते । सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र न भवति, सामुद्रं जलम् इति ।

धूम । [25]खण्ड । [26]शशादन । [27]आर्जुनाद । दाण्डायनस्थली । माहकस्थली । घोषस्थली । माषस्थली । राजस्थली । [28]राजगृह । सत्रासाह । भक्षास्थली । मद्रकूल । गर्तकूल । [29]आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीय । वर्वर । [30]वर्चगर्त । विदेह । आनर्त । माठर । [31]पाथेय । घोष । [32]शिष्य । मित्र । [33]वल । आराज्ञी । धार्तराज्ञी । अवयात । तीर्थ । 'कूलात् सौवीरेषु' (ग. सू. ९७) । 'समुद्रान्नावि मनुष्ये च' (ग. सू. ९८) । कुक्षि । अन्तरीप । द्वीप । [34]अरुण । उज्जयिनी । दक्षिणापथ । साकेत ॥

---

1. आभिचारकः फ. 2. आधिदर्शकः ह. 3. तदवध्योः ह. 4. औपपुष्टकः ब. 5. तदवधिग्रहणम् ड. फ. ह. 6. जनपदवुञेव यथा स्यात् क. फ. 7. जनपदवाचिनः क. फ. 8. नास्ति फ. ड. 9. अवृद्धाच्च ब. 10. काम्बवताः क. इ, याम्बाः ड, काम्ब्रवाः ब. 11. काम्बवकः ब, जाम्बलकः ह, याम्बकः ड. 12. कलञ्जरकः ह. 13. वैजकुलिशः ड, वैकुलिशिकः ह. 14. वार्तनः नास्ति ह.ड. 15. मा भूत् इति क. 16. तारुकच्छकः क, भारुकच्छुकः ब. 17. पिप्पलीकच्छुकः ब, नास्ति फ. 18. खाण्डानकः ह, कौबरजानकः इत्यधिकम् ह. 19. गजेन्द्रवक्त्रकः फ. 20. बाहुकर्षकः क. 21. चाक्रकर्तकः क. 22. धूम इत्येवमादिभ्यः ब. 23. अणोऽपवादः क. 24. नास्ति क. 25. स्वेडा ब. 26. शशानस् ह. 27. आर्जुनायन. ब. 28. विदेहराजगृह क. 29. आञ्जनकूल ह, आञ्जीकूप ब. 30. चर्वगर्त ब, वाचागर्त क. 31. सैर इत्यधिकम् ब. 32. शिष्टामित्र ब. 33. वल्ली ब, सुराज्ञी इत्यधिकम् ब. क. 34. अतरुण ब.

## नगरात् कुत्सनप्रावीण्ययोः । (१२८/१३५२)

नगरशब्दात् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च गम्यमाने । प्रत्ययार्थविशेषणं चैतत्, कुत्सने [1]प्रावीण्ये च जातादौ प्रत्ययार्थ इति । कुत्सनं निन्दनम् । प्रावीण्यं [2]नैपुण्यम् ।

केनायं मुषितः [3]पन्था गात्रे पक्ष्मालिधूसरः ।

इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । चोरा हि नागरका भवन्ति ।

[4]केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत् ।

इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । [5]प्रवीणा हि नागरका भवन्ति । कुत्सनप्रावीण्ययोः इति किम्? नागरा ब्राह्मणाः । कत्र्यादिषु तु सञ्ज्ञाशब्देन साहचर्यात् सञ्ज्ञानगरं पठ्यते, तस्मिन् नागरेयकम् इति प्रत्युदाहार्यम् ॥

## अरण्यान्मनुष्ये । (१२९/१३५३)

अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये । औपसङ्ख्यानिकस्य णस्यापवादः । आरण्यको मनुष्यः ।

[४४०] पथ्यध्यायन्याय[6]विहारमनुष्यहस्तिषु इति वक्तव्यम् । (म. भा. २.२९९)

आरण्यकः पन्थाः । आरण्यकोऽध्यायः । [7]आरण्यको न्यायः । आरण्यको [8]विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती ।

[४४१] वा गोमयेषु ।

आरण्याः, आरण्यका गोमयाः । एतेषु इति किम् ? आरण्याः पशवः ॥

## विभाषा कुरुयुगन्धराभ्याम् । (१३०/१३५४)

कुरु युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः । कौरवकः, कौरवः । यौगन्धरकः, [9]यौगन्धरः (म.भा. २.३००) । जनपदशब्दावेतौ, [10]ताभ्यामवृद्धादपि इति नित्ये[11] वुञि प्राप्ते विकल्प उच्यते । कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति । [12]सैषा युगन्धरार्था विभाषा । मनुष्यतत्स्थयोः (४.२.१३४/१३५८) तु कुरुशब्दात् नित्य एव वुञ् [13]प्रत्ययो भवति, [14]कौरवको मनुष्यः, कौरवकमस्य हसितम् (म.भा. २.३००) इति ॥

## मद्रवृज्योः कन् । (१३१/१३५५)

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । मद्रेषु जातः मद्रकः । [15]वृजिकः ॥

---

1. प्रावीण्ये नास्ति फ. 2. नैपुणम् ब. 3. रागः ह, पन्थाः – धूसरः नास्ति ब, गात्रपक्ष्मालिधूसरः इ. 4. तेनेदं मुषितं ड. ह, तनेदं लिखितं हिमनगरे ब. 5. चौरा हि नागरकाः ब. 6. व्यवहार इ. 7. उदाहरणमिदं नास्ति क. 8. व्यवहारः इ. 9. यौगन्धरः नास्ति फ. 10. क्षत्रियाभिधायकौ इत्यधिकम् फ. 11. बहुवचनविषये इत्यधिकम् फ. 12. पारिशेष्यात् अ.ब.ग. 13. प्रत्ययः नास्ति फ. 14. कौरवको मनुष्यः नास्ति फ. 15. वृजिषु भवः इत्यधिकम् फ.

## कोपधादण्। (१३२/१३५६)

देशे इत्येव। ककारोपधात् प्रातिपदिकाद् अण् प्रत्ययो भवति शैषिकः। जनपदवुञोऽपवादः। अन्यत्र [1]जनपदं मुक्त्वा पूर्वेणैव [2]कोपधादणि सिद्धम्। ऋषिकेषु जातः आर्षिकः। [3]माहिषिकः। अण्ग्रहणमुवर्णान्तादपि यथा स्यात्, इक्ष्वाकुषु जातः [4]ऐक्ष्वाकः॥

## कच्छादिभ्यश्च। (१३३/१३५७)

देशे इत्येव। कच्छ इत्येवमादिभ्यो देशवाचिभ्यः [5]अण् प्रत्ययो भवति शैषिकः। [6]वुञादेरपवादः। काच्छः। सैन्धवः। वार्णवः। कच्छशब्दो न बहुवचनविषयः, तस्य मनुष्यतत्स्थयोर्वुञर्थः (४.२.१३४/१३५८) पाठः। विजापकशब्दः पठ्यते, तस्य कोपधत्वादेवाणि सिद्धे[7] ग्रहणमुत्तरार्थम्।

कच्छ। सिन्धु। वर्णु। [8]गन्धार। मधुमत्। कम्बोज। [9]कश्मीर। साल्व। कुरु। रङ्कु। [10]अणु। खण्ड। द्वीप। अनूप। अजवाह। विजापकः। [11]कुलून[12]। कच्छादिः॥

## मनुष्यतत्स्थयोर्वुञ्। (१३४/१३५८)

कच्छादिभ्यः इत्येव। मनुष्ये [13]मनुष्यस्थे च [14]जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति[15]। अणोऽपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितं, [16]जल्पितम्। [17]काच्छिका चूडा। सैन्धवको मनुष्यः। सैन्धवमस्य हसितं, [18]जल्पितम्। सैन्धविका चूडा। मनुष्यतत्स्थयोः [19]इति किम्? काच्छो गौः। [20]सैन्धवो वार्णवः॥

## अपदातौ साल्वात्। (१३५/१३५९)

साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोः वुञि सिद्धे नियमार्थं वचनम्। अपदातावेव मनुष्ये [21]मनुष्यस्थे च साल्वशब्दाद् वुञ् प्रत्ययो भवति। साल्वको मनुष्यः। साल्वकमस्य हसितम्, [22]जल्पितम्। अपदातौ इति किम्? साल्वः पदातिर्व्रजति॥

## गोयवाग्वोश्च। (१३६/१३६०)

गवि यवाग्वां च जातादौ [23]प्रत्ययार्थे साल्वशब्दाद् वुञ् प्रत्ययो भवति शैषिकः। कच्छाद्यणोऽपवादः। साल्वको गौः। [24]साल्विका यवागूः। साल्वमन्यत्॥

---

1. जनपदं नास्ति फ. 2. कोपधादणा ब, अण्सिद्धः क.इ.ड, अण्सिद्धिः ह. 3. माहिषकः क. फ. 4. ऐक्ष्वाकवः क. 5. प्रातिपदिकेभ्यः इत्यधिकम् ब. क. इ. 6. वुञोऽपवादः फ. 7. इह इत्यधिकम् क. 8. गन्धारि ह. 9. काश्मीर क. 10. अण्ड ब. 11. कुनुक ह, कुसूल क. 12. क्षत्रियकूप इत्यधिकम् क. 13. तत्स्थे क.फ. 14. जातावर्थे ह, जातादौ अभिधेये फ. 15. शैषिकः इत्यधिकम् ब.क. 16. जल्पितम् नास्ति ह. 17. कच्छादिका ह. 18. जल्पितम् नास्ति ह. 19. जातयोः इत्यधिकम् ह. 20. सैन्धवो वार्तवर्णः ह, सैन्धवः कम्बलः ड. 21. तत्स्थे फ.ह. 22. जल्पितं नास्ति फ. 23. अर्थे ह. 24. साल्वका ब.

## गर्तोत्तरपदाच्छः। (१३७/१३६१)

देशे इत्येव। गर्तोत्तरपदात् देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति [1]शैषिकः। अणोऽपवादः। वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते। वृकगर्तीयम्। शृगालगर्तीयम्। [2]श्वाविद्गर्तीयम्। उत्तरपदग्रहणं [3]बहुच्पूर्वनिरासार्थम्। [4]बाहुगर्तम्॥

## गहादिभ्यश्च। (१३८/१३६२)

गह इत्येवमादिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति शैषिकः। [5]अणादेरपवादः। [6]गहीयः। अन्तःस्थीयः। देशाधिकारेऽपि संभवापेक्षं विशेषणं, न सर्वेषाम्। मध्यमध्यमं चाण् चरणे इति पठ्यते, तस्यायमर्थः। मध्यशब्दः प्रत्ययसंनियोगेन [7]मध्यममापद्यते। मध्यमीयाः। चरणे तु प्रत्ययार्थे अण्[8] भवति, माध्यमाः [9]इति। [10]तदेतद्विशेष एव स्मर्यते पृथिवीमध्यस्य मध्यमभावः। चरणसम्बन्धेन निवासलक्षणोऽण् इति च (म. भा. २. ३०१)। मुखपार्श्वतसोर्लोपश्च। मुखतीयम्। पार्श्वतीयम्। कुग्जनस्य परस्य च। जनकीयम्। परकीयम्। देवस्य चेति वक्तव्यम्। [11]देवकीयम्। वेणुकादिभ्यश्छण् वक्तव्यः। आकृतिगणोऽयम्। [12]वैणुकीयम्। वैत्रकीयम्। [13]औत्तरपदकीयम्। प्रास्थकीयम्। माध्यमकीयम्।

गह। अन्तःस्थ। सम। विषम। 'मध्यमध्यमं चाण् चरणे' (ग. सू. ९९)। उत्तम। [14]अङ्ग। [15]वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। [16]उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनी। अवस्यन्दी। कामप्रस्थ। खाडायनि। [17]कावेरणि। शैशिरि। शौङ्गि। आसुरि। आहिंसि। [18]आमित्रि। व्याडि। वैदजि। भौजि। [19]आढ्यश्वि। आनृशंसि। [20]सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। [21]श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन्। उत्तर। [22]अन्तर। 'मुखपार्श्वतसोर्लोपः'[23] (ग. सू. १००)। 'जनपरयोः कुक्च' (ग. सू. १०१)। 'देवस्य च' (ग. सू. १०२)[24]। 'वेणुकादिभ्यश्छण्' (ग. सू. १०३)। गहादिः॥

## प्राचां कटादेः। (१३९/१३६३)

देशे इत्येव। तद्विशेषणं [25]प्राग्ग्रहणम्। प्राग्देशवाचिनः कटादेः प्रातिपदिकात् [26]छः प्रत्ययो भवति शैषिकः। [27]अणोऽपवादः। कटनगरीयम्। [27]कटघोषीयम्। [29]कटपल्वलीयम्॥

## राज्ञः क च। (१४०/१३६४)

असंभवाद् देशाधिकारो न विशेषणम्। राज्ञः ककारश्चा[30]न्तादेशो भवति छश्च प्रत्ययः। राजकीयम्। आदेशमात्रमिह [31]विधेयं, प्रत्ययस्तु 'वृद्धाच्छः' (४. २. ११४/१३३७) इत्येव सिद्धः॥

---

1. शैषिकः नास्ति फ. 2. स्वाविद्गर्तीयम् इ. क, नास्ति ह. 3. बहुच् नास्ति फ. 4. बहुगर्तम् ब.क. 5. अणोऽपवादः क. 6. गहीययः क, गर्हीयः ह. 7. मध्यमभावम् फ. 8. प्रत्ययः इत्यधिकम् क. 9. इति नास्ति ब. 10. तदेकविशेषः ह. 11. देवीयम् क. 12. वैणकीयम् ब. क. 13. औत्तरपदीयम् क. 14. नास्ति ह. 15. दङ्ग ब. 16. उत्तमशाख समानशाख नास्ति ब. 17. कामवेरिणि ब. 18. नास्ति ब. 19. आध्यश्वि ब. 20. सौविपारकि नास्ति ब. 21. श्रैति ब. 22. अनन्तर क. 23. एकतीयं मुखतीयं पार्श्वतीयं इत्यधिकम् क. 24. देवकीयम् इत्यधिकम् क. 25. प्राचांग्रहणम् ह. 26. छण् क. 27. वाहीकलक्षण° इत्यधिकम् ह. 28. कटशासीयम् फ, नास्ति ह. 29. कटपाल्वलीयः ह. 30. च नास्ति क. 31. विधीयते फ.

## वृद्धादकेकान्तखोपधात्। (१४१/१३६५)

देशे इत्येव। वृद्धाद् देशवाचिनः अक इक इत्येवमन्तात् खकारोपधाच्च [1]प्रातिपदिकात् छः प्रत्ययो भवति शैषिकः। कोपधलक्षणस्या[2]णोऽपवादः। वाहीकग्रामलक्षणस्य च प्रत्ययस्य, 'रोपधेतोः प्राचाम्' (४.२.१२३/१३४७) इति च। [3]अकान्तात् तावत्–[4]आरीहणकीयम्। [5]द्रौघणकीयम्। [6]इकान्तात् – [7]आश्वपथिकीयम्। शाल्मलिकीयम्। खोपधात् – [8]कौटिशिखीयम्। आयोमुखीयम्।

[४४२] अकेकान्तग्रहणे कोपधग्रहणं[9] सौसुकाद्यर्थम्। (म. भा. २.३०१)

[10]सौसुकीयम्। [11]मौसुकीयम्। [12]ऐन्द्रवेणुकीयम्॥

## कन्थापलदनगरग्रामह्रदोत्तरपदात्। (१४२/१३६६)

देशे इत्येव, वृद्धात् इति च। कन्थाद्युत्तरपदाद् देशवाचिनो वृद्धात् प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। वाहीक[13]ग्रामादिलक्षणस्य [14]प्रत्ययस्यापवादः। दाक्षिकन्थीयम्। माहिकिकन्थीयम्। दाक्षिपलदीयम्। माहिकिपलदीयम्। दाक्षिनगरीयम्। माहिकिनगरीयम्। दाक्षिग्रामीयम्। माहिकिग्रामीयम्। दाक्षिह्लदीयम्। माहिकिह्लदीयम्॥

## पर्वताच्च। (१४३/१३६७)

पर्वतशब्दाच् छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। [15]पर्वतीयो राजा। पर्वतीयः [16]पुरुषः॥

## विभाषाऽमनुष्ये। (१४४/१३६८)

पर्वतशब्दाच् छः प्रत्ययो भवति वा अमनुष्ये [17]वाच्ये। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। पर्वतीयानि फलानि, [18]पार्वतानि फलानि। पर्वतीयमुदकम्, [19]पार्वतमुदकम्[20]। अमनुष्ये इति किम्? पर्वतीयो मनुष्यः॥

## कृकणपर्णाद् भारद्वाजे। (१४५/१३६९)

देशे इत्येव। भारद्वाजशब्दोऽपि [21]देशवचन एव,[22] न गोत्रशब्दः। प्रकृतिविशेषणं चैतत्, न प्रत्ययार्थः। कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः[23]। कृकणीयम्। पर्णीयम्। भारद्वाजे इति किम्? कार्कणम्[24]। पार्णम्॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
चतुर्थाध्यायस्य द्वितीयः पादः॥

---

1. प्रातिपदिकात् नास्ति ड. 2. अञो क. इ. 3. अगन्तात् ब. 4. अरीकणकीयः इ. 5. द्रौपणकीयम् ब, द्राघणकीयम् ड, दौष्पणकीयम् इ 6. इगन्तात् ब. ड. 7. आश्वत्थिकीयम् ब. क. ड. इ. फ. 8. कोटिशिखीयम् ह. 9. कर्तव्यम् इत्यधिकम् क. 10. सौस्रुकीयम् क. 11. नास्ति ड, अवेडकीयम् ब. 12. ऐरण्डकीयम् इ. 13. ग्रामलक्षणस्य क. 14. प्रत्ययस्य नास्ति फ. 15. पर्वते भवः इत्यधिकम् ह, पार्वतीयः ह. इ. 16. पुमान् ह. फ. 17. अभिधेये ब. फ. ह, नास्ति इ. 18. पार्वतीयानि क. ह. 19. पार्वतीयम् क. 20. इति इत्यधिकम् ह. 21. देशवाची फ. 22. गृह्यते इत्यधिकम् फ. ह. 23. अणोऽपवादः इत्यधिकम् ब. क. ड. इ. फ. ह. 24. फलम् इत्यधिकम् ड.

## चतुर्थाध्यायस्य तृतीयः पादः

### युष्मदस्मदोरन्यतरस्यां खञ् च । (१/१३७०)

देशाधिकारो निवृत्तः । युष्मदस्मदोः [1]खञ् प्रत्ययो भवति शैषिकः । चकाराच् छः च । अन्यतरस्यां-ग्रहणाद् यथाप्राप्तम्[2] । तदेते त्रयः प्रत्ययाः भवन्ति, तत्र वैषम्याद् यथासङ्ख्यं न भवति । त्यदादित्वाद् [3]वृद्धसञ्ज्ञकयोर्युष्मदस्मदोः छे (४.२.११४/१३३७) प्राप्ते प्रत्येकं [4]प्रत्ययत्रयं विधीयते । यौष्माकीणः । आस्माकीनः । युष्मदीयः । अस्मदीयः । यौष्माकः । आस्माकः ॥

### तस्मिन्नणि च युष्माकास्माकौ । (२/१३७१)

तस्मिन् इति साक्षाद् विहितः खञ् निर्दिश्यते, [5]न चकारानुकृष्टः [6]छः । तस्मिन् खञि अणि च[7] युष्मदस्मदोर्यथासङ्ख्यं युष्माक अस्माक इत्येतावादेशौ भवतः । निमित्तयोरादेशौ प्रति यथासङ्ख्यं कस्मान्न भवति ? योगविभागः करिष्यते, तस्मिन् खञि युष्मदस्मदोः युष्माकास्माकौ [8]भवतः, ततोऽणि च इति । यौष्माकीणः । आस्माकीनः । यौष्माकः । [9]आस्माकः । तस्मिन् अणि च इति किम् ? युष्मदीयः । अस्मदीयः ॥

### तवकममकावेकवचने । (३/१३७२)

एकवचनपरयोर्युष्मदस्मदोः तवक ममक इत्येतावादेशौ भवतः यथासङ्ख्यं [10]तस्मिन् खञि अणि च परतः । निमित्तयोस्तु यथासङ्ख्यं पूर्ववदेव न भवति । ननु च 'न लुमताङ्गस्य' (१.१.६३/२६३) इति [11]प्रत्ययलक्षण-प्रतिषेधादेकवचनपरता युष्मदस्मदोर्न सम्भवति ? वचनात् [12]प्रत्ययलक्षणं भविष्यति । अथ वा [13]नैवेदं प्रत्ययलक्षणं, किं [14]तर्ह्यन्वर्थग्रहणम् । [15]एकवचने युष्मदस्मदी [16]एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः । तावकीनः । मामकीनः । तावकः । मामकः । तस्मिन्नणि च (४.३.२/१३७१) इत्येव, त्वदीयः । मदीयः ॥

### अर्धाद् यत् । (४/१३७४)

अर्धशब्दात् यत् प्रत्ययो भवति [17]शैषिकः । अणोऽपवादः । अर्ध्यम् ।

[४४३] सपूर्वपदाट् ठञ् वक्तव्यः । (म.भा. २.३०३)

[18]बालेयार्धिकम् । गौतमार्धिकम् ॥

---

1. अन्यतरस्याम् इत्यधिकम् ड. 2. च इत्यधिकम् ब. फ. ह. 3. वृद्धसंज्ञयोः क. फ. 4. त्रयः प्रत्यया विधीयन्ते फ. 5. तेन इत्यधिकम् इ. 6. छः नास्ति फ.ब. 7. परतः इत्यधिकम् फ. 8. इत्येतावादेशौ इत्यधिकम् ब.फ. 9. नास्ति फ.ह. 10. तस्मिन् नास्ति ह. 11. प्रत्ययलक्षणे ह. 12. प्रत्ययलक्षणप्रतिषेधो न संभवति ह. 13. नैवमेतत् क, नेदं फ. 14. तर्ह्यर्थग्रहणम् ड. 15. एकार्थवचने क. 16. एकार्थवाचके क. 17. शैषिकः नास्ति फ. 18. बालेयार्धिका गौतमार्धिका ड, बालेयार्धिकः गौतमार्धिकः म.भा.

## परावराधमोत्तमपूर्वाच्च । (५/१३७५)

पर अवर अधम उत्तम इत्येवंपूर्वाच्चार्धात्[1] यत् प्रत्ययो भवति शैषिकः[2] । परार्ध्यम् । अवरार्ध्यम् । [3]अधमार्ध्यम् । उत्तमार्ध्यम् । पूर्वग्रहणं किम् ? [4]परावराधमोत्तमेभ्यः इत्येवोच्यते, अर्धात् इति [5]वर्तते, तस्य तत्पूर्वता [6]विज्ञास्यते ? परावरशब्दा[7]वदिग्ग्रहणावपि स्तः परं सुखम्, अवरम् [8]सुखम् इति । तत्र कृतार्थत्वाद् दिक्शब्दपक्षे परेण ठञ्यतौ स्याताम् । अस्मात् पूर्वग्रहणाद् यत् प्रत्ययो भवति परार्ध्यम्, अवरार्ध्यम् [9]इति ॥

## दिक्पूर्वपदाट्ठञ् च । (६/१३७६)

दिक्पूर्वपदाद[10]र्धान्तात् प्रातिपदिकात् ठञ् प्रत्ययो भवति, चकाराद् यत् च शैषिकः । अणोऽपवादः । पौर्वार्धिकम्, पूर्वार्ध्यम् । दाक्षिणार्धिकम्, दक्षिणार्ध्यम् । पदग्रहणं स्वरूपविधि[11]निवारणार्थम् ॥

## ग्रामजनपदैकदेशादञ्ठञौ । (७/१३७७)

दिक्पूर्वपदात् इत्येव । ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदाद[12]र्धान्ताद् अञ्ठञौ प्रत्ययौ भवतः शैषिकौ । यतोऽपवादौ । इमे खल्वस्माकं ग्रामस्य जनपदस्य वा [13]पौर्वार्धाः, पौर्वार्धिकाः । दाक्षिणार्धाः, दाक्षिणार्धिकाः ॥

## मध्यान्मः । (८/१३७८)

मध्यशब्दान् मः प्रत्ययो भवति शैषिकः । [14]अणोऽपवादः । मध्यमः ।

[४४४] आदेश्चेति वक्तव्यम् ।

आदिमः ।

[४४५] अवोऽधसोर्लोपश्च ।

अवमम् । अधमम् ॥

## अ साम्प्रतिके । (९/१३७९)

अकारः प्रत्ययो भवति मध्यशब्दात् साम्प्रतिके जातादौ प्रत्ययार्थे । मस्यापवादः । साम्प्रतिकं न्याय्यं, युक्तम् उचितं, [15]सममुच्यते । नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः । मध्या स्त्री ॥

---

1. अर्धशब्दात् फ. 2. औपसंख्यानिकस्य ठञोऽपवादः इत्यधिकम् ब. 3. नास्ति फ. 4. ननु इत्यधिकम् फ. ह. 5. अनुवर्तते ह. 6. विज्ञायते अ. क. ड. इ. ग. 7. अदिग्वचनौ ब. क. 8. दुःखम् इ. क. 9. इति नास्ति फ. 10. शब्दान्तात् फ. 11. °निरासार्थम् ब. क. ड. इ. फ. ह. 12. अर्धशब्दान्तात् ह, अर्धान्तात् प्रातिपदिकात् ब. 13. पूर्वार्धे भवाः इत्यधिकम् ड, नास्ति ब. 14. अणोऽपवादः नास्ति फ. 15. समम् नास्ति ड, समुच्यते ब.

## द्वीपादनुसमुद्रं यञ्। (१०/१३८०)

समुद्रसमीपे यो द्वीपः, [1]तस्माद् यञ् प्रत्ययो भवति शैषिकः। [2]कच्छादिपाठात् अणो (४.२.१३३/१३५७), मनुष्यवुञः (४.२.१३४/१३५८) [3]चापवादः। द्वैप्यम्। [4]द्वैप्यं भवन्तोऽनुचरन्ति [5]चक्रम्। अनुसमुद्रम् इति किम्? [6]द्वैपकम्। द्वैपमन्यत्॥

## कालाट्ठञ्। (११/१३८१)

कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। वृद्धात् तु छं परत्वाद् बाधते। [7]मासिकः। [8]आर्धमासिकः। सांवत्सरिकः। यथाकथञ्चिद् [9]गुणवृत्त्यापि काले वर्तमानात् [10]प्रत्यय इष्यते। कादम्बपुष्पिकम्। [11]त्रैहिपलालिकम्। 'तत्र जातः' (४.३.२५/१३९३) इति [12]प्रागतः कालाधिकारः॥

## श्राद्धे शरदः। (१२/१३८२)

शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः। ऋत्वणः (४.३.१६/१३८७) अपवादः। [13]श्राद्धे इति च कर्म गृह्यते, न श्रद्धावान् पुरुषः, अनभिधानात्। शारदिकं श्राद्धम्। शारदम् अन्यत्॥

## विभाषा रोगातपयोः। (१३/१३८३)

शरदः इत्येव। रोगे आतपे चाभिधेये शरच्छब्दाट् ठञ् प्रत्ययो [14]वा भवति शैषिकः। ऋत्वणोऽपवादः। शारदिको रोगः। शारदिकः आतपः। [15]शारदो रोगः। शारदः आतपः। रोगातपयोः इति किम्? शारदं दधि॥

## निशाप्रदोषाभ्यां च। (१४/१३८४)

निशाप्रदोषशब्दाभ्यां [16]च विभाषा ठञ् प्रत्ययो भवति शैषिकः। 'कालाट् [17]ठञ्' (४.३.११/१३८१) इति नित्ये [18]ठञि प्राप्ते विकल्प उच्यते। नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्॥

## श्वसस्तुट् च। (१५/१३८५)

विभाषा इत्येव। श्वःशब्दाद् [19]विभाषा ठञ् प्रत्ययो भवति,[20] तस्य च तुडागमो भवति। त्यप्-प्रत्ययोऽप्यतो [21]विहितः, 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' (४.२.१०५/१३२६) इति। एताभ्यां मुक्ते टयुटयुलावपि भवतः। [22]शौवस्तिकः, श्वस्त्यः, श्वस्तनः॥

---

1. तद्विषयात् द्वीपशब्दात् ब.ड.फ.ह. 2. कच्छादिषु ब.क.फ.ह. 3. च बाधकः फ. 4. द्वैप्याः ब.क.ड, द्वैप्यानुदन्तो ह. 5. चक्रम् नास्ति क. 6. द्वैपः क, नास्ति ड.फ. 7. मासिकम्, आर्धमासिकम्, सांवत्सरिकम् ह.फ. 8. नास्ति ड. 9. गौणवृत्त्याऽपि फ, गुणवृत्त्यातिकालवर्तमानात् क. 10. प्रातिपदिकात् इत्यधिकम् फ. 11 त्रैहिपलालकम् क. 12. प्राक् नास्ति फ. 13. श्राद्धम् ब. 14. विभाषा फ, वा नास्ति ब. 15. शारदो रोगः नास्ति ब, शारदः फ. 16. च नास्ति फ. 17. ठञ् नास्ति फ. 18. ठञि नास्ति ब. इ. 19. विभाषया ब. 20. शैषिकः इत्यधिकम् फ. 21. प्राप्यः फ. 22. शौवस्तिकम् श्वस्त्यम् श्वस्तनम् फ. ह.

## सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्। (१६/१३८७)

कालात् इत्येव। सन्धिवेलादिभ्यः [1]ऋतुभ्यो नक्षत्रेभ्यश्च [2]कालवृत्तिभ्योऽण् प्रत्ययो भवति शैषिकः। ठञोऽपवादः। अण्ग्रहणं वृद्धाच्छस्य (४.२.११४/१३३७) बाधनार्थम्। सन्धिवेलादिभ्यस्तावत् – सान्धिवेलम्। सान्ध्यम्। ऋतुभ्यः – ग्रैष्मम्। शैशिरम्। नक्षत्रेभ्यः – तैषम्। [3]पौषम्।

सन्धिवेला। सन्ध्या। अमावास्या। त्रयोदशी। चतुर्दशी। पञ्चदशी। [4]पौर्णमासी। प्रतिपद्। 'संवत्सरात् फलपर्वणोः' (ग. सू. १०४)–सांवत्सरं फलम्। सांवत्सरं पर्व[5]॥

## प्रावृष एण्यः। (१७/१३८८)

प्रावृष्शब्दाद् एण्यः प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। प्रावृषेण्यः बलाहकः॥

## वर्षाभ्यष्ठक्। (१८/१३८९)

वर्षाशब्दात् ठक् प्रत्ययो भवति शैषिकः। [6]ऋत्वणोऽपवादः। वार्षिकं वासः। वार्षिकमनुलेपनम्॥

## छन्दसि ठञ्। (१९/३४८०)

वर्षाशब्दात् छन्दसि विषये ठञ् प्रत्ययो भवति [7]शैषिकः। [8]ठकोऽपवादः। स्वरे [9]भेदः। 'नभश्च नभस्यश्च[10] वार्षिकावृतू' (तै. सं. ४.४.११.१)॥

## वसन्ताच्च। (२०/३४८१)

छन्दसि इत्येव। वसन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। 'मधुश्च माधवश्च वासन्तिकावृतू' (तै. सं. ४.४.११.१)॥

## हेमन्ताच्च। (२१/३४८२)

छन्दसि इत्येव। हेमन्तशब्दाच्छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। 'सहश्च सहस्यश्च हैमन्तिकावृतू' (तै. सं. ४.४.११.१)। योगविभागः उत्तरार्थः॥

## सर्वत्राण् च तलोपश्च। (२२/१३९०)

हेमन्तशब्दाद् अण् प्रत्ययो भवति, तत्संनियोगेन चास्य [11]तकारलोपः[12]। [13]हैमनं वासः। हैमनमुपलेपनम्। सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। छन्दसि भाषायां च सर्वत्रैतद्भवति। ननु च छन्दसि इति

---

1. ऋतुवाचिभ्यः फ 2. कालवृत्तिभ्यः नास्ति फ. ह. 3. नास्ति ह. 4. नास्ति फ. ह. 5. सांवत्सरिकम् अन्यत् इत्यधिकम् ड. 6. अणोऽपवादः ह. 7. शैषिकः नास्ति फ. 8. ऋत्वणोऽपवादः ब. 9. विशेषः क. इ. फ. ह, स्वरे भेदः नास्ति ब. 10. अपि इत्यधिकम् फ. 11. तकारस्य फ. 12. च इत्यधिकम् क. 13. हैमनो वायुः इ.

नानुर्वतिष्यते ? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्धार्थम् । हैमन्तिकम् इति भाषायामपि ठञं स्मरन्ति । [1]अथ अण् च इति चकारः किमर्थः ? अण्, यथाप्राप्तं च ऋत्वण् इति[2] । कः पुनरनयो-[3]विशेषः ? ऋत्वणि हि तकारलोपो नास्ति हैमन्ती पङ्क्तिः (म. भा. २.३०४) इति । तदेवं त्रीणि रूपाणि भवन्ति, 'हैमन्तिकम्' (तै.४.४.११.१), 'हैमन्तम्' (पै. १७.१९.११), '[4]हैमनम्' (अ.वे.१५.४.१४) इति ॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । (२३/१३९१)

कालात् इत्येव । सायं चिरं प्राह्णे प्रगे इत्येतेभ्यः अव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोः तुडागमो भवति । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । अव्ययेभ्यः – दोषातनम् । दिवातनम्[5] । सायम् इति मकारान्तं पदमव्ययम्, ततोऽव्ययादेव सिद्धः प्रत्ययः । [6]यस्तु स्यतेरन्तकर्मणो घञि सायशब्दस्तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते । दिवसावसानं [7]सायः । चिरशब्दस्यापि मकारान्तत्वं निपात्यते । प्राह्णे, प्रगे [8]इत्येकारान्तत्वम्[9] ।

[४४६] चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । (म. भा. २.३०४)

चिरत्नम् । परुत्नम् । परारित्नम् ।

[४४७] प्रगस्य छन्दसि गलोपश्च । (म. भा. २.३०४)

'प्रत्नम्' (ऋ.१.३६.४) ।

[४४८] अग्रपश्चाड्डिमच् । (म. भा. २.३०४)

अग्रिमम् । पश्चिमम् ।

[४४९] अन्ताच्चेति वक्तव्यम् । (म. भा. २.३०४)

अन्तिमम् ॥

## विभाषा पूर्वाह्णापराह्णाभ्याम् । (२४/१३९२)

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतः, [10]तुट् च तयोरागमः । 'कालाट् ठञ्' (४.३.११/१३८१) इति ठञि प्राप्ते वचनं, पक्षे सोऽपि भवति । पूर्वाह्णेतनम् । अपराह्णेतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । 'घकालतनेषु कालनाम्नः' (६.३.१७/९७५) इति सप्तम्या अलुक् । यदा तु न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढः अस्य इति तदा पूर्वाह्णतनः[11] इति भवितव्यम् ॥

---

1. तथा अण् एव च क. 2. किम् इत्यधिकम् फ. 3. अणोः इत्यधिकम् ह. 4. हैमतम् ब, हिमनम् क. 5. स्वस्तनम् इत्यधिकम् फ. 6. अत्र तु फ, कालवाचिनामित्येव इत्यधिकम् क. 7. सायम् फ. 8. इत्येतयोः फ. 9. निपातनात् इत्यधिकम् फ, निपात्यते इत्यधिकम् ह. 10. तुट् च नास्ति फ. ह. 11. अपराह्णतनः इत्यधिकम् ह. क.

## तत्र जातः। (२५/१३९३)

अणादयो घादयश्च[1] प्रत्ययाः प्रकृताः, तेषामतः प्रभृति अर्थाः समर्थविभक्तयः च निर्दिश्यन्ते। तत्र इति सप्तमीसमर्थात् जातः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्त्रौघ्नः। [2]माथुरः (४.१.८३/१०७३)। औत्सः। औदपानः (४.१.८६/१०७८)। [3]राष्ट्रियः। अवारपारीणः (४.२.९३/१३१३)। शाकलिकः। माकलिकः (४. २. ११७/१३४१)। [4]ग्राम्यः। [5]ग्रामीणः (४. २.९४/१३१४)। कात्रेयकः। औम्भेयकः (४. २. ९५/१३१५)॥

## प्रावृषष्ठप्। (२६/१३९४)

प्रावृट्शब्दात् सप्तमीसमर्थाज् जातः इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति। एण्यस्य (४.३. १७/१३८८) अपवादः। पकारः स्वरार्थः। प्रावृषि जातः प्रावृषिकः॥

## सञ्ज्ञायां शरदो वुञ्। (२७/१३९५)

शरच्छब्दात् सप्तमीसमर्थाज् जातः इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति ऋत्वणः (४.३.१६/१३८७)अपवादः, सञ्ज्ञा चेत् समुदायेन गम्यते। शारदका दर्भाः। शारदका मुद्गाः। दर्भविशेषस्य [6]मुद्गविशेषस्य चेयं सञ्ज्ञा। सञ्ज्ञायाम् इति किम्? शारदं सस्यम्। सञ्ज्ञाधिकारं केचित् 'कृतलब्धक्रीतकुशलाः' (४. ३. ३८/१४१३) इति यावदनुवर्तयन्ति॥

## पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन्। (२८/१४०१)

पूर्वाह्णादिभ्यः शब्देभ्यः वुन् प्रत्ययो भवति[7] 'तत्र जातः' (४. ३. २५/१३९४) [8]इत्येतस्मिन् विषये सञ्ज्ञायां गम्यमानायाम्। [9]पूर्वाह्णकः। अपराह्णकः। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' (४. ३. २४/१३९२) इत्यस्यापवादः। आर्द्रकः। मूलकः। नक्षत्राणः (४. २. ३/१२०४) अपवादः। प्रदोषकः। 'निशाप्रदोषाभ्यां च' (४.३. १४/१३८४) इत्यस्यापवादः। [10]अवस्करकः। औत्सर्गिकस्याणः (४. १. ८३/१०७३) अपवादः। असञ्ज्ञायां तु [11]यथाप्राप्तं ठञादयः एव भवन्ति॥

## पथः पन्थ च। (२९/१४०२)

[12]पथिशब्दाद् वुन् प्रत्ययो भवति, [13]तत्र जातः इत्येतस्मिन् विषयेऽणोऽपवादः। प्रत्ययसंनियोगेन च पथः पन्थ इत्ययमादेशः भवति। पथि जातः [14]पन्थकः॥

---

1. च नास्ति क. 2. माधुरः ड. 3. राष्ट्रीयः ह. 4. मान्थविकः ड. ह. 5. नास्ति फ. 6. कस्यचित् इत्यधिकम् क. ड. इ. फ. ह. 7. अणोऽपवादः इत्यधिकम् फ. 8. इत्येतस्मिन् विषये नास्ति फ. 9. पूर्वाह्णकम् अपराह्णकम् फ. 10. अवरकारकः ह. 11. यथाप्राप्ताः ह. 12. पथात् फ, पथःशब्दात् क. 13. सप्तमीसमर्थात् इत्यधिकम् फ. 14. पथकः फ.

## अमावास्याया वा । (३०/१४०३)

अमावास्याशब्दाद् वुन् प्रत्ययो भवति [1]वा तत्र जातः इत्येतस्मिन् [2]विषये । 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' (४.३.१६/१३८७) इत्यादिषु पाठात् अणोऽपवादः । [3]अमावास्यकः, आमावास्यः । एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति । अमावस्यकः, [4]आमावस्यः ॥

## अ च । (३१/१४०४)

अमावास्याशब्दात् अकारः [5]प्रत्ययो भवति 'तत्र जातः' (४.३.२५/१३९३) इत्येतस्मिन् विषये । पूर्वेण वुन्नणोः प्राप्तयोः अयं तृतीयः [6]प्रत्ययो विधीयते । अमावास्यः, अमावास्यकः, अमावास्यः । [7]अमावस्यः, अमावस्यकः, आमावस्यः ॥

## सिन्ध्वपकराभ्यां कन् । (३२/१४०५)

सिन्धुशब्दाद् अपकरशब्दाच्च कन् प्रत्ययो भवति 'तत्र जात' (४.३.२५/१३९३) इत्येतस्मिन् [8]विषये । सिन्धुशब्दः कच्छादिः, ततोऽणि [9]मनुष्यवुञि च (४.२.१३३,१३४/१३५७,१३५८) प्राप्ते [10]विधानम् । [11]अपकरशब्दाद् [12]अपि औत्सर्गिकेऽणि । सिन्धुकः । अपकरकः ॥

## अणञौ च । (३३/१४०६)

सिन्ध्वपकरशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः 'तत्र जातः' (४.३.२५/१३९३) इत्येतस्मिन् विषये । पूर्वेण कनि प्राप्ते वचनम् । सैन्धवः । आपकरः ॥

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् । (३४/१४०७)

श्रविष्ठादिभ्यः शब्देभ्यः [13]नक्षत्रेभ्यः आगतस्य[14] (४.२.३/१२०४) जातार्थे लुग् भवति । तस्मिन्[15] स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि' (१.२.४९/१४०८) इति[16] भवति । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ।

[४५०] लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम् । (म.भा. २.३०७)

चित्रायां जाता चित्रा । रेवती । रोहिणी । स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वात् (४.१.४१/४९८) ङीष् ।

[४५१] फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । (म.भा. २.३०८)

'फल्गुनी' (तै. सं. २.१.२.२) । 'अषाढा' (तै. सं. ४.४.१०.२) ।

[४५२] श्रविष्ठाषाढाभ्यां छणपि[17] वक्तव्यः । (म.भा. २.३०८)

[18]श्राविष्ठीयः । [19]आषाढीयः[20] ॥

---

1. वा नास्ति ब.फ. 2. अर्थे फ. 3. आमावास्यकः ब. 4. अमावास्यः क.इ. 5. च इत्यधिकम् फ. 6. प्रत्ययः नास्ति इ.क. 7. एतानि त्रीणि उदाहरणानि न सन्ति फ. 8. अर्थे क. 9. मनुष्यतत्स्थयोः फ. 10. वचनं ब.फ. 11. अपकरे क. 12. अथ ब. 13. नक्षत्राणः ब.क. 14. प्रत्ययस्य इत्यधिकम् क. 15. कृते इत्यधिकम् ब.क.इ.फ.ह. 16. लुक् इत्यधिकम् ब.फ. 17. अपि नास्ति फ. 18. श्रविष्ठीयः क. 19. आषाढीयः नास्ति फ. 20. एण्यस्यापवादः । पकारः स्वरार्थः । प्रावृषि जातः प्रावृषिकः इत्यधिकम् इ.

## स्थानान्तगोशालखरशालाच्च। (३५/१४१०)

[1]स्थानान्तात् प्रातिपदिकात् गोशालशब्दात् खरशालशब्दात् च जातार्थे[2] प्रत्ययस्य लुग् भवति। गोस्थाने जातः गोस्थानः। [3]अश्वस्थानः। गोशालः। खरशालः॥

## वत्सशालाभिजिदश्वयुक्छतभिषजो वा। (३६/१४११)

वत्सशालादिभ्यः परस्य [4]जातार्थे प्रत्ययस्य लुग् वा भवति। वत्सशालायां जातः वत्सशालः, [5]वात्सशालः। अभिजित्, [6]आभिजितः। अश्वयुक्, आश्वयुजः। शतभिषक्, शातभिषजः। बहुलग्रहणस्य अयं प्रपञ्चः॥

## नक्षत्रेभ्यो बहुलम्। (३७/१४१२)

[7]नक्षत्रेभ्यः [8]उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग् भवति। रोहिणः, रौहिणः। [9]मृगशिराः, मार्गशीर्षः[10]॥

## कृतलब्धक्रीतकुशलाः। (३८/१४१३)

तत्र इत्येव[11]। सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहितं प्रत्ययः भवति। स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघ्नः। [12]माथुरः। [13]राष्ट्रियः।

ननु च यद् [14]यत्र कृतं जातमपि[15] तत्र भवति, यच्च यत्र क्रीतं लब्धमपि तत्रैव भवति किमर्थं भेदेनोपादानं क्रियते, [16]शब्दार्थस्याभिन्नत्वात्? वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस्तु भिद्यते एव॥

## प्रायभवः। (३९/१४१४)

तत्र इत्येव[17]। सप्तमीसमर्थात् ङ्याप्प्रातिपदिकात् प्रायभवः इत्येतस्मिन् [18]विषये [19]यथाविहितं प्रत्ययो भवति। प्रायशब्दः साकल्यस्य किंचिन्न्यूनतामाह। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः। माथुरः। राष्ट्रियः। प्रायभवग्रहणमनर्थकं तत्र भवेन [20]कृतत्वात् (म. भा. २.३०८)। अनित्यभवः प्रायभवः इति चेद्, मुक्तसंशयेन तुल्यम् (म. भा. २.३०८)॥

---

1. स्थानात् क. 2. छप्रत्ययस्य ह. 3. नास्ति फ. 4. जातार्थप्रत्ययस्य फ. ह. 5. वात्सशालः नास्ति ब. फ. 6. अभिजितः ब. 7. नक्षत्रशब्देभ्यः ब. फ. इ. 8. उत्पन्नस्य जातार्थप्रत्ययस्य फ. 9. मृगशिरः मार्गशिरसः मृगशीर्षः मार्गशीर्षः क. 10. ये च तद्धिते इति चकारात् अणि शिरसः शीर्षभावः इत्यधिकम् ब, पूर्णो जातार्थः इत्यधिकम् फ. 11. एव नास्ति इ. फ. 12. माधुरः ब. ड. ह. 13. राष्ट्रीयः ह, खड्गे कुशलः खाड्गः योधः, राष्ट्रे कृतं राष्ट्रियं इत्यधिकम् फ. 14. यत्र नास्ति फ. 15. तत् इत्यधिकम् क. 16. शब्दार्थभिन्नत्वात् ह. 17. एव नास्ति फ. 18. अर्थे ब. क. ड. इ. फ. ह. 19. यथाविहितप्रत्ययो भवति ब. 20. एव इत्यधिकम् ह.

## उपजानूपकर्णोपनीवेष्ठक्। (४०/१४१५)

उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः प्रायभव इत्येतस्मिन् विषये ठक् प्रत्ययो भवति। अणोऽपवादः। औपजानुकः। औपकर्णिकः। औपनीविकः॥

## सम्भूते। (४१/१४१६)

तत्र [1]इत्येव। सप्तमीसमर्थाद् [2]ङ्याप्प्रातिपदिकात् सम्भूते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अवक्लृप्तिः [3]प्रमाणानतिरेकश्च [4]सम्भवत्यर्थः इह गृह्यते, नोत्पत्तिः सत्ता वा, जातभवाभ्यां[5] गतत्वात्। स्रुघ्ने सम्भवति स्रौघ्नः। [6]माथुरः। राष्ट्रियः॥

## कोशाड् ढञ्। (४२/१४१७)

कोशशब्दात् ढञ् प्रत्ययो भवति तत्र सम्भूते इत्यस्मिन् [7]विषये। अणोऽपवादः। कोशे [8]सम्भूतं कौशेयं वस्त्रम्। रूढिरेषा, तेन क्रिमौ न भवति, [9]खड्गकोशाच्च॥

## कालात् साधुपुष्प्यत्पच्यमानेषु। (४३/१४१८)

तत्र इत्येव। कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। हेमन्ते साधुः[10]हैमन्तः [11]प्राकारः। शैशिरमनुलेपनम्। वसन्ते [12]पुष्प्यन्ति वासन्त्यः [13]कुन्दलताः। [14]ग्रैष्म्यः पाटलाः। शरदि पच्यन्ते शारदाः शालयः। ग्रैष्मा यवाः॥

## उप्ते च। (४४/१४१९)

तत्र इत्येव, कालात् इति च। सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकात् उप्ते[15]ऽर्थे यथाविहितं प्रत्ययो भवति। हेमन्ते उप्यन्ते [16]हैमन्ता यवाः। ग्रैष्माः व्रीहयः। योगविभाग उत्तरार्थः॥

## आश्वयुज्या वुञ्। (४५/१४२०)

[17]आश्वयुजीशब्दात् वुञ् प्रत्ययो भवति उप्तेऽर्थे। ठञोऽपवादः। आश्वयुज्यामुप्ताः आश्वयुजकाः माषाः। [18]अश्विनीभ्यां युक्ता पौर्णमासी आश्वयुजी। अश्विनीपर्यायोऽश्वयुक्शब्दः॥

---

1. एव नास्ति फ.ह. 2. ङ्याप्प्रातिपदिकात् नास्ति फ. 3. प्रमाणातिरेकश्च फ. 4. संभूतः फ, सम्भूतार्थः ह. 5. एव इत्यधिकम् फ. 6. माधुरः ड. 7. अर्थे ह. 8. सम्भवं क. 9. खड्गकोशाद् वा ब. 10. हैमतः ब, हैमनः ब. क. इ. ह. 11. प्रावार ब. क. ड. इ. फ. ह. 12. पुष्पन्ति ब, वसन्तेषु पुष्पन्ति क. 13. वनलताः ह. 14. ग्रैष्म्याः ब. 15. अर्थे नास्ति ब. 16. हैमनाः शालयः ब. इ. ह. 17. तत्र इति [illegible]मर्थात् इत्येव इत्यधिकम् क. इ. 18. अश्वयुग्भ्याम् ब, अश्विन्या ड.

## ग्रीष्मवसन्तादन्यतरस्याम् । (४६/१४२१)

ग्रीष्मवसन्तशब्दाभ्याम् अन्यतरस्यां वुञ् प्रत्ययो भवति उप्तेऽर्थे । ऋत्वणोऽपवादः । ग्रीष्मं सस्यम्, ग्रैष्मकम् । वासन्तम्, [1]वासन्तकम् ॥

## देयमृणे । (४७/१४२२)

तत्र इत्येव, कालात् इति च । सप्तमीसमर्थात् [2]कालवाचिनः प्रातिपदिकात् देयम् इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, [3]यद् देयमृणं चेत्तद्भवति । [4]मासे देयमृणं मासिकम् । आर्धमासिकम् । सांवत्सरिकम् । ऋणे इति किम् ? [5]मासे देया भिक्षा ॥

## कलाप्यश्वत्थयवबुसाद् वुन् । (४८/१४२३)

कालात् इत्येव । कलापिन् अश्वत्थ यवबुस इत्येतेभ्यः [6]कालवाचिभ्यः सप्तमीसमर्थेभ्यो देयमृणम् इत्येतस्मिन्नर्थे वुन् प्रत्ययो भवति । कलाप्यादयः शब्दाः साहचर्यात् काले वर्तन्ते । यस्मिन् काले मयूशः कलापिनो भवन्ति स कलापी । यस्मिन्[7]अश्वत्थाः फलन्ति सो[8]ऽश्वत्थः । यस्मिन् [9]यवबुसं [10]सम्पद्यते स यवबुसशब्देनोच्यते । कलापिनि काले देयम् ऋणम् कलापकम् । अश्वत्थकम् । यवबुसकम् ॥

## ग्रीष्मावरसमाद् वुञ् । (४९/१४२४)

ग्रीष्म[11]अवरसमशब्दाभ्यां वुञ् प्रत्ययो भवति देयमृणम् इत्येतस्मि[12]न्नर्थे । [13]अणठञोरपवादः । ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् । प्रत्ययान्तरकरणं वृद्ध्यर्थम् । समाशब्दो वर्षपर्यायः ॥

## संवत्सराग्रहायणीभ्यां ठञ् च । (५०/१४२५)

संवत्सराग्रहायणीशब्दाभ्यां[14] ठञ् प्रत्ययो भवति, चकाराद् वुञ् च देयमृणम् इत्येतस्मि[15]न्नर्थे । संवत्सरे देयमृणं सांवत्सरिकम्, सांवत्सरकम् । आग्रहायणिकम्, [16]आग्रहायणकम् । वा इति वक्तव्ये ठञ्ग्रहणं सन्धिवेलादिषु संवत्सरात् फलपर्वणोः इति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यात् इति[17] ॥

---

1. वासन्तिकम् इ. 2. कालविशेषवाचिनः फ. 3. यत्र देयं क. 4. मासदेयम् क. 5. मासदेया क. 6. शब्देभ्यः इत्यधिकम् फ, कालविशेषवाचिभ्यः ब. क. फ. 7. काले इत्यधिकम् ब. फ. 8. आश्वत्थः फ. 9. काले इत्यधिकम् फ. 10. उत्पद्यते फ. ह. 11. °अवरसमाभ्यां शब्दाभ्यां क. 12. अर्थे नास्ति फ, विषये ब. 13. अणञोः ह. 14. सप्तमीसमर्थाभ्याम् इत्यधिकम् ड. 15. विषये ब. क. इ. 16. आग्रहायणम् ह. 17. एवमर्थं ठञ्ग्रहणम् इत्यधिकम् ह.

## व्याहरति मृगः । (५१/१४२६)

तत्र इत्येव, कालात् इति च । [1]कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकात् व्याहरति [2]मृगः इत्येतस्मिन् [3]विषये यथाविहितं प्रत्ययो भवति । निशायां व्याहरति मृगः नैशः, नैशिकः । प्रादोषः, प्रादोषिकः[4] । मृगः इति किम् ? निशायां व्याहरति उलूकः ॥

## तदस्य सोढम् । (५२/१४२७)

कालात् इत्येव । तद् इति प्रथमासमर्थात् कालवाचिनः प्रातिपदिकात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं सोढं चेत्तद्भवति । सोढं जितमभ्यस्तम् इत्यर्थः । निशासहचरितमध्ययनं निशा, तत् सोढमस्य छात्रस्य नैशः, नैशिकः । प्रादोषः, प्रादोषिकः ॥

## तत्र भवः । (५३/१४२८)

कालात् इति निवृत्तम् । तत्र इति सप्तमीसमर्थात् ङ्याप्प्रातिपदिकात् भवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सत्ता [5]भवत्यर्थो गृह्यते, न जन्म, 'तत्र जातः' (४.३.२५/१३९३) इति [6]गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । [7]माथुरः । [8]राष्ट्रियः । [9]पुनस्तत्रग्रहणं तदस्य इति निवृत्त्यर्थम् ॥

## दिगादिभ्यो यत् । (५४/१४२९)

दिश् इत्येवमादिभ्यः प्रातिपदिकेभ्यः यत् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् [10]विषये । [11]अणश्छस्य चापवादः । दिशि भवम् दिश्यम् । वर्ग्यम् । मुखजघनशब्दयोरशरीरावयवार्थः[12] पाठः, [13]सेनामुख्यम्, सेनाजघन्यम् इति[14] ।

दिश् । वर्ग । [15]पूग । [16]गण । पक्ष । [17]धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । [18]उखा । साक्षिन् । आदि । अन्त । मुख । जघन । मेघ । यूथ । 'उदकात् सञ्ज्ञायाम्' (ग.सू. १०५)[19] । न्याय । वंश । अनुवंश । [20]विश । काल । अप् । आकाश । दिगादिः ॥

## शरीरावयवाच्च । (५५/१४३०)

[21]शरीरं प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद् यत्प्रत्ययो भवति तत्र भवः इत्येतस्मिन् [22]विषये । अणोऽपवादः । दन्तेषु भवं दन्त्यम् । [23]कर्ण्यम् । [24]ओष्ठ्यम् ॥

---

1. तत्र इत्यधिकम् ह. 2. मृगः नास्ति ब. 3. अर्थे ब.क.इ.फ.ह. 4. निशाप्रदोषाभ्यां वा ठक् इत्यधिकम् ब. 5. भवार्थे फ. 6. गतत्वात् ह. 7. माधुरः ड, माथरः ब. 8. राष्ट्रीयः फ.ह. 9. वाक्यमिदं नास्ति ब. 10. अर्थे ब.फ. 11. अणछयोः इ.ह. 12. इह इत्यधिकम् फ.ह. 13. सेनामुख्यः, सेनाजघन्यः ह, सेनायाः मुखं, सेनायाः जघनम् ब. 14. मुखजघनाभ्यां सेनायाः अग्रभागपश्चाद्भागौ उच्येते इत्यधिकम् ब. 15. नास्ति फ. 16. ग्रहण क. 17. धाष्ट्र्या क. 18. उखा, साक्षिन् नास्ति फ. 19. उदक्या रजस्वला । संज्ञायामिति किम् ? औदको मत्स्यः इत्यधिकम् ब.क.ड.ह. 20. वेश क.ड. 21. शरीरं प्राणिकायः नास्ति क.फ. 22. अर्थे फ.ह. 23. कण्ठ्यम् ड. 24. नास्ति इ.ह.

## दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् । (९६/१४३३)

दृत्यादिभ्यः प्रातिपदिकेभ्यः ढञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् [1]विषये । दृतौ भवं दार्तेयम् । [2]कौक्षेयम् । कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयम् अजरं विषम् । अस्तिशब्दः प्रातिपदिकं, न [3]तिङन्तः ॥

## ग्रीवाभ्योऽण् च । (९७/१४३४)

ग्रीवाशब्दाद् अण् प्रत्ययो भवति, चकाराड् ढञ् च, तत्र भवः इत्येतस्मिन् विषये । [4]शरीरावयवाद् यतोऽपवादः । [5]ग्रीवासु भवं [6]ग्रैवम्, ग्रैवेयम् । ग्रीवाशब्दो धमनीवचनस्तासां बहुत्वाद् बहुवचनं कृतम् ॥

## गम्भीराञ् ञ्यः । (९८/१४३५)

गम्भीरशब्दाद् ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये । अणोऽपवादः । गम्भीरे भवं गाम्भीर्यम् ।

[४५३] बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् । (म. भा. २.३१०)

बाह्यम् । दैव्यम् । पाञ्चजन्यम्[7] ॥

## अव्ययीभावाच्च । (९९/१४३६)

अव्ययीभावसञ्ज्ञकात् प्रातिपदिकाच् च ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये । अणोऽपवादः । न च सर्वस्मादव्ययीभावाद् भवति, किं तर्हि, परिमुखादेः । परिमुखादीनां [8]च [9]गणपाठस्य [10]एतदेव प्रयोजनम् । तेषां विशेषण[11]मव्ययीभावग्रहणम् । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । [12]परिमुखादेरन्यत्र न भवति, [13]औपकूलम् ।

परिमुख । परिहनु । पर्योष्ठ । पर्युलूखल[14] । परिसीर । [15]अनुसीर । [16]उपसीर । [17]उपस्थल । [18]उपकलाप । अनुपथ । अनुखङ्ग । अनुतिल । अनुशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश ॥

## अन्तःपूर्वपदाट् ठञ् । (१००/१४३७)

अव्ययीभावात् इत्येव । अन्तःशब्दो विभक्त्यर्थे समस्यते । तत्पूर्वपदात् अव्ययीभावाट् ठञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये । अणोऽपवादः । आन्तर्वेश्मिकम् । आन्तर्गेहिकम्[19] ।

---

1. अर्थे फ ह. 2. नास्ति ब. 3. तिङन्तम् ब. 4. शरीरावयवयतोऽपवादः ब. क. ड. फ. ह. 5. ग्रीवाभवं फ. 6. ग्रैवम् नास्ति ब. 7. चतुर्मासाद् यज्ञे ञ्यो वक्तव्यः (म. भा. 2.310) । चातुर्मास्यानि व्रतानि । चातुर्मास्यो यज्ञः । चातुर्मासोऽन्यत्र इत्यधिकम् ब. क. इ. 8. च नास्ति फ. 9. गणे पाठस्य ड. 10. एष एव प्रत्ययो भवति क. 11. °ग्रहणम् क. 12. पारिमुखादेः क. 13. औपमूलम् ब. ड. क. इ. फ. 14. उपस्थूल इत्यधिकम् ड. 15. अनुसीर नास्ति फ, अवशीर क. 16. उपस्थीर फ. 17. उपस्थाल इत्यधिकम् ब, परिस्थल फ. 18. उपकपाल इ, उपकर्ण ह. 19. आन्तरगारिकम् इत्यधिकम् ब. क. ड. इ, आन्तर्मालिकम् इत्यधिकम् ह.

[४५४] समानशब्दाद् ठञ्[1] वक्तव्यः। (म. भा. २. ३१०)

समाने भवं सामानिकम्[2]।

[४५५] तदादेश्च। (म. भा. २. ३१०)

सामानग्रामिकम्। सामानदेशिकम्।

[४५६] अध्यात्मादिभ्यश्च। (म. भा. २. ३१०)

आध्यात्मिकम्। आधिदैविकम्। आधिभौतिकम्। अध्यात्मादिराकृतिगणः।

[४५७] ऊर्ध्वन्दमाच्च ठञ् वक्तव्यः। (म. भा. २. ३१०)

और्ध्वन्दमिकः। ऊर्ध्वशब्देन समानार्थ ऊर्ध्वन्दमशब्दः।

[४५८] ऊर्ध्वदेहाच्च। (म. भा. २. ३१०)

और्ध्वदेहिकम्।

[४५९] लोकोत्तरपदाच्च। (म. भा. २. ३१०)
ऐहलौकिकम्। पारलौकिकम्।

[४६०] मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः। (म. भा. २. ३१०)
मुखतीयम्। पार्श्वतीयम्।

[४६१] जनपरयोः कुक् च। (म. भा. २. ३१०)
जनकीयम्। परकीयम्।

[४६२] मध्यशब्दादीयः[3]। (म. भा. २. ३१०)
मध्यीयः।

[४६३] मण्मीयौ च प्रत्ययौ वक्तव्यौ। (म. भा. २. ३१०)
माध्यमम्। मध्यमीयम्।

[४६४] मध्यो मध्यं दिनण् चास्मात्। (म. भा. २. ३१०)
मध्ये भवं माध्यन्दिनम्।

[४६५] स्थाम्नो लुग् वक्तव्यः। (म. भा. २. ३१०)
अश्वत्थामा।

[४६६] [4]अजिनान्ताच्च। (म. भा. २. ३१०)
वृकाजिनः। सिंहाजिनः[5]।

---

1. प्रत्ययो भवति इति वक्तव्यम् ब. क. इ. 2. अनुशतिकादिपाठात् उभयपदवृद्धिः इत्यधिकम् ड. ह. 3. प्रत्ययो भवतीति वक्तव्यम् इत्यधिकम् फ. 4. वार्तिकमिदं नास्ति ब. 5. व्याघ्राजिनम् वृषभाजिनम् इत्यधिकम् फ. ह.

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च ॥

मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ [1]प्रत्ययौ तथा ॥

[2]मध्यो मध्यं दिनण् चास्मात् स्थाम्नो लुगजिनात्तथा ॥ (म.भा. २.३१०)

## ग्रामात् पर्यनुपूर्वात् । (६१/१४४०)

अव्ययीभावात् इत्येव । [3]ग्रामशब्दान्तादव्ययीभावात् परि अनु इत्येवंपूर्वात् ठञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् [4]विषये । अणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ॥

## जिह्वामूलाङ्गुलेश्छः । (६२/१४४१)

जिह्वामूलशब्दादङ्गुलिशब्दात् च छः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये । यतोऽपवादः । [5]जिह्वामूलीयम् । अङ्गुलीयम् ॥

## वर्गान्ताच्च । (६३/१४४२)

वर्गशब्दान्तात् च [6]प्रातिपदिकाच् छः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये । [7]अणोऽपवादः । कवर्गीयम् । [8]चवर्गीयम् ॥

## अशब्दे यत्खावन्यतरस्याम् । (६४/१४४३)

वर्गान्तात् इत्येव । शब्दादन्यस्मिन् प्रत्ययार्थे वर्गान्तात् प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः तत्र भवः इत्येतस्मिन् [9]विषये । छे प्राप्ते वचनम् । पक्षे सोऽपि भवति । [10]वासुदेववर्ग्यः, [11]वासुदेववर्गीणः, वासुदेववर्गीयः । युधिष्ठिरवर्ग्यः, युधिष्ठिरवर्गीणः, युधिष्ठिरवर्गीयः[12] । अशब्दे इति किम् ? कवर्गीयो वर्णः ॥

## कर्णललाटात् कनलङ्कारे । (६५/१४४४)

कर्णललाटशब्दाभ्यां कन् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषयेऽलङ्कारेऽभिधेये । यतोऽपवादः । कर्णिका । ललाटिका । अलङ्कारे इति किम् ? कर्ण्यम् । ललाटयम् ॥

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः । (६६/१४४५)

व्याख्यायतेऽनेन इति व्याख्यानं, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम । तस्य इति षष्ठीसमर्थात् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति तत्र भवे [13]च । वाक्यार्थसमीपे चकारः

---

1. चापि प्रत्ययौ ड.इ. 2. मध्यमध्यं फ.ड.इ. 3. ग्रामशब्दात् इ. 4. अर्थे ह. 5. जिह्वामूले भवः जिह्वामूलीयः ह. 6. प्रातिपदिकात् नास्ति इ. 7. यतोऽपवादः ड. 8. चवर्गीयम् नास्ति ब.ड.इ.फ, पवर्गीयम् इत्यधिकम् ह. 9. अर्थे ब.इ. 10. वासुदेववर्गे भवः इत्यधिकम् ड. 11. वासुदेववर्गीणः नास्ति फ. 12. अर्जुनवर्ग्यः अर्जुनवर्गीयः इत्यधिकम् ब.क.इ.फ.ड, अञ्जनवर्ग्यः अञ्जनवर्गीयः इत्यधिकम् ह. 13. इत्येतस्मिन् विषये फ.

श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति 'तत्र भव.' (४.३.५३/१४२८) इति। सुपां व्याख्यानः[1] सौपो [2]ग्रन्थः। तैङः। [3]कार्त्तः। सुप्सु भवं सौपम्। तैङम्। कार्तम्। व्याख्यातव्यनाम्नः इति किम्? पाटलिपुत्रस्य व्याख्यानी सुकोशला, पाटलिपुत्रः सुकोशलया व्याख्यायते, [4]एवंसंनिवेशं पाटलिपुत्रम् इति, न [5]तु [6]पाटलिपुत्रो व्याख्यातव्यनाम। भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः (म.भा. २.३११)। कृतनिर्देशौ हि तौ॥

## बह्वचोऽन्तोदात्ताट्ठञ्। (६७/१४४६)

बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकाद् अन्तोदात्ताद् भवव्याख्यानयोः[7] ठञ् प्रत्ययो भवति। अणोऽपवादः। [8]षात्वणत्विकम्। [9]नातानतिकम्। समासस्वरेणान्तोदात्ताः प्रकृतयः। बह्वचः इति किम्? द्व्यचः ठक् (४.३.७२/१४५१) वक्ष्यति। एकाच् प्रत्युदाह्रियते। सौपम्। तैङम्। [10]कार्तम्। अन्तोदात्तात् इति किम्? संहितायाः[11] सांहितम्। संहिताशब्दो हि गतिस्वरेणाद्युदात्तः॥

## क्रतुयज्ञेभ्यश्च। (६८/१४४७)

क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनामभ्यः [12]प्रातिपदिकेभ्यः भवव्याख्यानयोरर्थयोः ठञ् प्रत्ययो भवति। अणोऽपवादः। क्रतुभ्यस्तावत् – अग्निष्टोमस्य [13]व्याख्यानः, तत्र भवः आग्निष्टोमिकः। [14]वाजपेयिकः। राजसूयिकः (म.भा. २.३१२)। यज्ञेभ्यः – पाकयज्ञिकः। [15]नावयज्ञिकः। अनन्तोदात्तार्थ आरम्भः। क्रतुभ्यः इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्[16]। पाञ्चौदनिकः। [17]दाशौदनिकः। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## अध्यायेष्वेवर्षेः। (६९/१४४८)

ऋषिशब्दाः [18]प्रवरनामधेयानि, तेभ्यः ऋषिशब्देभ्यो भवव्याख्यानयोः अर्थयोः ठञ् प्रत्ययो भवति [19]अणोऽपवादः अध्यायेष्वेव [20]प्रत्ययार्थे विशेषणेषु। व्याख्यातव्यनाम्नः इत्यनुवर्तते, तत्साहचर्याद् [21]ऋषिशब्दैर्ग्रन्थ उच्यते। वसिष्ठस्य [22]व्याख्यानः तत्र भवो [23]वा वासिष्ठिकोऽध्यायः। [24]वैश्वामित्रिकः। अध्यायेषु इति किम्? वासिष्ठी ऋक्[25]॥

## पौरोडाशपुरोडाशात् ष्ठन्। (७०/१४४९)

पौरोडाशशब्दात् पुरोडाशशब्दाच्च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति। पुरोडाशाः पिष्टपिण्डाः, तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य [26]व्याख्यानः तत्र भवो वा पौरोडाशिकः, पौरोडाशिकी। पुरोडाशसहचरितो [27]ग्रन्थः पुरोडाशः, तस्य [28]व्याख्यानस्तत्र भवो वा पुरोडाशिकः, पुरोडाशिकी[29]। षकारो ङीषर्थः॥

---

1. ग्रन्थः इत्यधिकम् क. 2. ग्रन्थः नास्ति फ, सौपं तैङम् कार्तम् ड, तैङः कार्तः नास्ति फ. 3. कार्क्षः ब. 4. एवं निवेशं ब. 5. च ड. 6. पाटलिपुत्रशब्दः ब.क.ड.इ.फ. 7. अर्थयोः इत्यधिकम् ड, अर्थे इत्यधिकम् ह. 8. षत्वणत्वयोः व्याख्यानग्रन्थः इत्यधिकम् फ. 9. नातानतिकम् नास्ति ब, तात्वलत्विकम् ग. 10. नास्ति फ 11. व्याख्यानं इत्यधिकम् ड, संहितायां भवं सांहितम् ह. 12. प्रातिपदिकेभ्यः नास्ति ब. 13. व्याख्यानम् ड.इ.फ. 14. नास्ति ब. 15. नास्ति फ.ह. 16. इति इत्यधिकम् ब.क.इ. 17. नास्ति ब. 18. प्रवर नास्ति फ. 19. अणोऽपवादः नास्ति फ. 20. प्रत्ययार्थविशेषणेषु ब.क.इ.ह. 21. ऋषिशब्देन ड. 22. व्याख्यानं ड. 23. वा नास्ति ब. फ. 24. वैश्वामित्री ड. 25. इति वर्तते इत्यधिकम् फ. 26. व्याख्यानं ड. 27. मन्त्रः ड.ह. 28. व्याख्यानं ड. 29. इति इत्यधिकम् ह.

## छन्दसो यदणौ। (७१/१४६०)

छन्दःशब्दाद् भवव्याख्यानयोरर्थयोः यदणौ प्रत्ययौ भवतः। द्व्यचः इति ठकि प्राप्ते वचनम्। 'छन्दस्यः' (तै.सं. १.६.११.४) 'छान्दसः' (कौ. गृ. १४१.३.४)॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्। (७२/१४६१)

[1]द्व्यजादिभ्यः [2]प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोः ठक् प्रत्ययो भवति। [3]अणादेरपवादः। द्व्यचस्तावत् – ऐष्टिकः। [4]पाशुकः। ऋकारान्तात् – चातुर्होतृकः। पाञ्चहोतृकः। ब्राह्मण – ब्राह्मणिकः। ऋक् – आर्चिकः। प्रथम – प्राथमिकः। अध्वर – आध्वरिकः। पुरश्चरण – पौरश्चरणिकः। नामिकः। आख्यातिकः। नामाख्यातिकः॥ नामाख्यातग्रहणं सङ्घातविगृहीतार्थम् (म. भा. २.३१२)।

## अणृगयनादिभ्यः। (७३/१४६२)

ऋगयनादिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोः अण् प्रत्ययो भवति। ठञादेरपवादः। आर्गयनः। पादव्याख्यानः। अण्ग्रहणं बाधकबाधनार्थम्। वास्तुविद्यः।

ऋगयन। पदव्याख्यान। [5]छन्दोमान। छन्दोभाषा। [6]छन्दोविचिति। [7]न्याय। पुनरुक्त[8]। व्याकरण। [9]निगम। वास्तुविद्या। [10]अङ्गविद्या। क्षत्रविद्या। उत्पात। उत्पाद[11]। संवत्सर। मुहूर्त। निमित्त। उपनिषत्। [12]शिक्षा। ऋगयनादिः॥

## तत आगतः। (७४/१४६३)

ततः इति पञ्चमीसमर्थादागतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्नात् आगतः स्रौघ्नः। [13]माथुरः। [14]राष्ट्रियः। ततः इति मुख्यमपादानं विवक्षितं यत्तदिह[15] गृह्यते, न नान्तरीयकम्। स्रुघ्नादागच्छन् वृक्षमूलादागतः इति॥

## ठगायस्थानेभ्यः। (७५/१४६४)

आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्। आयस्थानवाचिभ्यः प्रातिपदिकेभ्यः ठक् प्रत्ययो भवति तत आगतः इत्येतस्मिन् [16]विषये। अणोऽपवादः। [17]छं तु परत्वाद् बाधते। शुल्कशालाया आगतः [18]शौल्कशालिकः। [19]आकरिकम्[20]। बहुवचनं स्वरूपविधिनिरासार्थम्॥

---

1. द्व्यजादिभ्यः नास्ति ब. 2. प्रातिपदिकेभ्यः नास्ति ब. 3. अणोऽपवादः ब. 4. पांशुकः क. 5. छन्दोनाम क. 6. छन्दोविजितीया क. इ, विद्या उद्याव भिक्षा इत्यधिकम् इ. 7. न्यायविद्या ड. 8. निरुक्त इत्यधिकम् फ. 9. निगदविद्या ह. 10. अण्डविद्या ड, नक्षत्रविद्या ह. 11. उद्याव इत्यधिकम् ब. क. 12. भिक्षा ब. 13. माधुरः ड. 14. नास्ति फ. 15. इह नास्ति ह. ड, परिगृह्यते ह. 16. अर्थे ह. 17. वृद्धात् इत्यधिकम् ड. 18. शौल्किकं फ. 19. आकरिकः ड, आकरात् आगतं इत्यधिकम् फ. ह. 20. नारिकम् आपणिकम् इत्यधिकम् ब, आपणिकः इत्यधिकम् क. ड. इ, प्रातरिकम् इत्यधिकम् इ.

## शुण्डिकादिभ्योऽण् । (७६/१४७७)

[1]शुण्डिक इत्येवमादिभ्यः [2]प्रातिपदिकेभ्यः अण् प्रत्ययो भवति ततः आगतः इत्येतस्मिन् विषये । आयस्थानठकोऽपवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः । अण्ग्रहणं बाधकबाधनार्थम्[3] । औदपानः ।

शुण्डिक । कृकण । स्थण्डिल । उदपान । उपल । तीर्थ । भूमि । तृण । पर्ण । शुण्डिकादिः ॥

## विद्यायोनिसम्बन्धेभ्यो वुञ् । (७७/१४७६)

विद्यायोनिकृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः । तद्वाचिभ्यः [4]शब्देभ्यो वुञ् प्रत्ययो भवति तत आगतः इत्येतस्मिन् [5]विषये । अणोऽपवादः । छं तु परत्वाद् बाधते । विद्यासम्बन्धेभ्यस्तावत् – उपाध्यायादागतं औपाध्यायकम् । [6]शैष्यकम् । आचार्यकम् । योनिसम्बन्धेभ्यः – [7]मातामहकः । पैतामहकः । मातुलकः ॥

## ऋतष्ठञ् । (७८/१४७७)

विद्यायोनिसम्बन्धेभ्यः इत्येव । ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसम्बन्धवाचिभ्यः ठञ् प्रत्ययो भवति तत आगतः इत्येतस्मिन् विषये । वुञोऽपवादः । विद्यासम्बन्धवाचिभ्यस्तावत् – होतुरागतं हौतृकम् । पौतृकम् । योनिसम्बन्धवाचिभ्यः – [8]भ्रातृकम् । स्वासृकम् । [9]मातृकम् । तपरकरणं मुखसुखार्थम्[10] । विद्यायोनिभ्यामन्यत्र, '[11]सावित्रम्' (तै. सं. १.८.२.१) ॥

## पितुर्यच्च । (७९/१४७८)

पितृशब्दाद् यत् प्रत्ययो भवति, चकाराद् ठञ् च तत आगतः इत्येतस्मिन् विषये[12] । पितुरागतं पित्र्यम्, [13]पैतृकम् ॥

## गोत्रादङ्कवत् । (८०/१४७९)

अपत्याधिकारादन्यत्र लौकिकं [14]गोत्रमपत्यमात्रं गृह्यते । गोत्रप्रत्ययान्तात् प्रातिपदिकाद् [15]अङ्कवत् प्रत्ययविधिर्भवति ततः आगतः इत्येतस्मिन् [16]विषये । अङ्कग्रहणेन [17]तस्येदमर्थसामान्यं लक्ष्यते । तस्माद् [18]वुञतिदिश्यते, न अण्[19], 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४.३.१२७/१५०७) इति । औपगवानामङ्कः औपगवकः । कापटवकः । नाडायनकः । चारायणकः । एवम् औपगवेभ्य आगतम् औपगवकम् । कापटवकम् । नाडायनकम् । [20]चारायणकम् ॥

---

1. शुण्डिका ब. ह. 2. शब्देभ्यः क. ह. 3. उदपानशब्दस्य उत्सादिपाठात् अञ्, तदपवादः आरभ्यते इत्यधिकम् ड. 4. प्रातिपदिकेभ्यः ब. 5. अर्थे फ. 6. शैष्यकः आचार्यकः फ. 7. मातामहकम् पैतामहकम् मातुलकम् ड, मातुलकः नास्ति क. 8. नास्ति फ. 9. मातुरागतम् इत्यधिकम् फ. 10. न त्वयं तात्परः असंभवात् इत्यधिकम् ह, तकारः मुखसुखार्थः ड. फ. ह. 11. नास्ति ह. 12. वुञोऽपवादः इत्यधिकम् फ. 13. पक्षे योनिसम्बन्धात् पैतृकम् क. इ. ड. 14. अपत्यमात्रं गोत्रं गृह्यते क. 15. अङ्क इव ड. 16. अर्थे ह. 17. तस्य इदम् लक्ष्यते ड. 18. वुञप्यतिदिश्यते ब. क. ड. फ. 19. एव इत्यधिकम् ब. ह. 20. नास्ति ड.

## हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। (८१/१४६१)

हेतुभ्यो मनुष्येभ्यश्च अन्यतरस्यां रूप्यः प्रत्ययो भवति तत आगतः इत्येतस्मिन् विषये। मनुष्यग्रहण-महेत्वर्थम्। हेतुः कारणम्। हेतुभ्यस्तावत् – समादागतम् [1]समरूप्यम्, समीयम्। [2]विषमरूप्यम्, विषमीयम्। गहादित्वाच्छः (४.२.१३८/१३६२)। मनुष्येभ्यः – देवदत्तरूप्यम्। यज्ञदत्तरूप्यम्। [3]दैवदत्तम्। याज्ञदत्तम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## मयट् च। (८२/१४६२)

हेतुभ्यो मनुष्येभ्यः च मयट् प्रत्ययो भवति ततः आगतः इत्येतस्मिन् विषये। सममयम्। विषममयम्। मनुष्येभ्यः – देवदत्तमयम्। यज्ञदत्तमयम्। टकारो ङीबर्थः। सममयी[4]। योगविभागो यथासङ्ख्य[5]निरासार्थः॥

## प्रभवति। (८३/१४६३)

ततः इत्येव। पञ्चमीसमर्थात् [6]ङ्याप्प्रातिपदिकात् प्रभवति इत्येतस्मिन् [7]विषये यथाविहितं प्रत्ययो भवति। प्रभवति प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः। हिमवतः प्रभवति हैमवती गङ्गा। दारदी सिन्धुः॥

## विदूराञ् ञ्यः। (८४/१४६४)

विदूरशब्दात् ञ्यः प्रत्ययो भवति ततः प्रभवति इत्येतस्मिन् [8]विषये। अणोऽपवादः। विदूरात् प्रभवति वैदूर्यो मणिः। ननु च वालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते ? एवं तर्हि –

वालवायो विदूरं च प्रकृत्यन्तरमेव वा।

न वै तत्रेति चेद् ब्रूया[9]ज्जित्वरीवदुपाचरेत् (म. भा. २.३१३)॥

## तद्गच्छति पथिदूतयोः। (८५/१४६५)

तद् इति द्वितीयासमर्थाद् गच्छति इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति, [10]योऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः [11]पन्था दूतो वा। माथुरः[12]। तत्स्थेषु गच्छत्सु पन्था गच्छति इत्युच्यते। अथ वा स्रुघ्न[13]प्राप्तिः पथो गमनम्। पथिदूतयोः इति किम् ? स्रुघ्नं गच्छति सार्थः॥

---

1. सामरूप्यम् ह. 2. विषमरूप्यम् नास्ति फ. 3. देवदत्तम् यज्ञदत्तम् ह. 4. विषयमयी इत्यधिकम् इ. फ. 5. °निरासार्थम् फ. 6. ङ्याप् नास्ति फ. 7. अर्थे ब. क. फ. ह. 8. अर्थे ह. 9. जित्वरीय-मुपाचरेत् क. 10. असौ नास्ति इ. 11. स्रौघ्नः दूतः ब. क. ड. ह. 12. राष्ट्रीयः इत्यधिकम् ह, राष्ट्रियः इत्यधिकम् ब. क. ड, अवारपारीणः इत्यधिकम् ड. 13. स्रुघ्नप्राप्तिफलम् ड.

## अभिनिष्क्रामति द्वारम् । (८६/१४६६)

तद् इत्येव । [1]तदिति द्वितीयासमर्थादभिनिष्क्रामति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् अभिनिष्क्रामति द्वारं चेद् तद् भवति । आभिमुख्येन निष्क्रामति अभिनिष्क्रामति । स्रुघ्नमभिनिष्क्रामति [2]कान्यकुब्जद्वारं स्रौघ्नम् । [3]माथुरम् । [4]राष्ट्रियम् । [5]द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धं, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा साध्वसिश्छिनत्ति इति । द्वारम् इति किम् ? [6]स्रुघ्नमभिनिष्क्रामति पुरुषः ॥

## अधिकृत्य कृते ग्रन्थे । (८७/१४६७)

तदित्येव । [7]अधिकृत्यैतदपेक्ष्य द्वितीया । अधिकृत्य [8]प्रस्तुत्य, आगूर्य इत्यर्थः । तदिति द्वितीयासमर्थादधिकृत्य कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तत् कृतं ग्रन्थश्चेत् स भवति । सुभद्रामधित्य कृतो ग्रन्थः सौभद्रः । गैरिमित्रः । यायातः । ग्रन्थे इति किम् ? सुभद्रामधिकृत्य कृतः प्रासादः ।

[४६७] [9]लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् । (म. भा. २.३१३)

वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी । न च भवति । भैमरथी (म. भा. २.३१३) ॥

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । (८८/१४६८)

तदित्येव, अधिकृत्य कृते ग्रन्थे इति च । शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यः छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे[10] । अणोऽपवादः । शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम्[11], यमसभीयः । [12]द्वन्द्वात् – [13]अग्निकाश्यपीयः । [14]श्येनकपोतीयः । [15]शब्दार्थसम्बन्धीयं प्रकरणम् । वाक्यपदीयम् । इन्द्रजननादिभ्यः – [16]इन्द्रजननीयम् । प्रद्युम्नागमनीयम् । इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्तव्यः, प्रातिपदिकेषु न पठ्यते ।

[४६८] द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः[17] । (म. भा. २.३१४)

दैवासुरम् । राक्षोऽसुरम् । गौणमुख्यम् ।

इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव [18]द्रष्टव्याः । प्रपञ्चार्थमेषां ग्रहणम् । एवं [19]सति देवासुरादिप्रतिषेधो[20]ऽपि न वक्तव्यः, तत[21]श्छप्रत्ययस्यादर्शनात् ॥

---

1. तदिति नास्ति क. ड. 2, कान्यकुब्जस्य फ. 3. नास्ति फ. 4. राष्ट्रीयम् ह. 5. द्वारमभिनिष्क्रामति इति फ. 6. स्रौघ्नम् फ. 7. अधिकृत्यैतदपेक्षया फ. ह, अधिकृत्य इति ड. 8. प्रस्तुत्य नास्ति फ, आरभ्य ड, अवगूर्य ह. 9. लुबाख्यायिकाभ्यः फ, लुबाख्यायिकादिभ्यः ड, लुवितिहासेभ्यः ह. 10. इत्येतस्मिन्नर्थे इत्यधिकम् फ. 11 तदधिकृतो ग्रन्थः इत्यधिकम् फ. 12. द्वन्द्वात् नास्ति फ. 13. अत्रिकाश्यपीयः ड, अग्निकाश्यपीयम् क. 14. श्येनकपोतीयम् क. 15. शब्दार्थीयम् फ. 16. सीतान्वेषणीयः इत्यधिकम् ब.क.ड, न्द्रजननीयः प्रद्युम्नगमनीयः ब. क. 17. वक्तव्यः इत्यधिकम् फ. 18. पठितव्याः ह. 19. च इत्यधिकम् क. फ. 20. अपि नास्ति ब. क. फ. 21. छस्यादर्शनात् फ.

## सोऽस्य निवासः । (८९/१४६९)

सः इति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं निवासः चेत् [1]स भवति । निवसन्त्यस्मिन् [2]निवासो देश उच्यते । स्रुघ्नो निवासोऽस्य स्रौघ्नः । माथुरः । [3]राष्ट्रियः ॥

## अभिजनश्च । (९०/१४७०)

सोऽस्य इत्येव । स इति प्रथमासमर्था[4]दस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थमभिजनश्चेत् स भवति । [5]अभिजनः पूर्वबान्धवः । तत्सम्बन्धाद् देशोऽपि अभिजनः इति उच्यते, यस्मिन् पूर्वबान्धवैरुषितम् । [6]तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यो, [7]निवासप्रत्यासत्तेः । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । माथुरः । [8]राष्ट्रियः । निवासाभिजनयोः को विशेषः ? यत्र संप्रत्युष्यते स निवासः[9], यत्र पूर्वैरुषितं सोऽभिजनः (म. भा. २.३१४) । योगविभाग उत्तरार्थः ॥

## आयुधजीविभ्यश्छः [10]पर्वते । (९१/१४७१)

सोऽस्याभिजनः इति[11] वर्तते । आयुधजीविभ्यः इति तादर्थ्ये चतुर्थी, पर्वते इति प्रकृतिविशेषणम् । पर्वतवाचिनः प्रथमासमर्थादभिजनादस्येति षष्ठ्यर्थे छः प्रत्ययो भवति । [आयुधजीविभ्यः [12]आयुधजीव्यर्थमायुधजीविनोऽभिधातुं प्रत्ययो भवति इत्यर्थः । [13]हृद्गोलः पर्वतोऽभिजनः एषामायुधजीविनां हृद्गोलीयाः[14] । अन्धकवर्तीयाः । रोहितगिरीयाः । [15]आयुधजीविभ्यः इति किम् ? ऋक्षोदः पर्वतोऽभिजनः एषां ब्राह्मणानाम् आर्क्षोदा ब्राह्मणाः । [16]पर्वते इति किम् ? सांकाश्यका आयुधजीविनः ॥

## शण्डिकादिभ्यो ञ्यः । (९२/१४७२)

शण्डिक इत्येवमादिभ्यः प्रातिपदिकेभ्यः ञ्यः प्रत्ययो भवति सोऽस्याभिजनः इत्येतस्मिन् विषये । [17]अणादेरपवादः । शाण्डिक्यः । [18]सार्वसेन्यः ।

शण्डिक । सर्वसेन । सर्वकेश । शक । [19]सट । रक । शङ्ख । बोध । शण्डिकादिः ॥

## सिन्धुतक्षशिलादिभ्योऽणञौ । (९३/१४७३)

आदिशब्दः प्रत्येकमभिसम्बध्यते । सिन्ध्वादिभ्यः [20]प्रातिपदिकेभ्यः तक्षशिलादिभ्यश्च यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः सोऽस्याभिजनः इत्येतस्मिन् विषये । सैन्धवः । वार्णवः ।

---

1. स नास्ति ब. 2. इति इत्यधिकम् ब.क.फ. 3. राष्ट्रीयः ह. 4. प्रातिपदिकात् इत्यधिकम् ह.
5. अभिजनाः पूर्वबान्धवाः ब.फ.ह, पूर्वे बान्धवाः इ. 6. तदिह फ. 7. अस्य इत्यधिकम् फ, सम्बध्यते इत्यधिकम् क.
8. राष्ट्रीयः फ.ह. 9. इति भावः इत्यधिकम् फ. 10. पर्वतात् ब. 11. च इत्यधिकम् फ. 12. च इत्यधिकम् अ.ड.फ.ह. 13. हृद्गोलपवर्तः ब, हृदगोलपर्वतः क. 14. भोजकटीयाः अनूकवनीयाः लोहितगिरीयाः इत्यधिकम् ड.
15. वाक्यमिदं नास्ति ह. 16. पर्वतात् फ.ह. 17. अणोऽपवादः क. 18. सार्वसैन्यः ब. 19. शट ब.इ.
20. प्रातिपदिकेभ्यः नास्ति ब.

सिन्धु। [1]वर्णु। गन्धार। मधुमत्। कम्बोज। [2]कश्मीर। साल्व। किष्किन्धा। [3]गदिका। उरस। दरत्।

ये [4]तु कच्छादिषु पठ्यन्ते सिन्धुवर्णुप्रभृतयः, तेभ्यस्तत एव अणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। तक्षशिलादिभ्यः खल्वपि–[5]ताक्षशिलः। वात्सोद्धरणः।

तक्षशिला। [6]वत्सोद्धरण। [7]कौमेदुर। काण्डवारण। ग्रामणी। [8]सरालक। कंस। किन्नर। संकुचित। [9]सिंहकोष्ठ। कर्णकोष्ठ। बर्बर। अवसान॥

## तूदीशलातुरवर्मतीकूचवाराड् ढक्छण्ढञ्यकः। (९४/१४७४)

तूद्यादिभ्यश्चतुर्भ्यः [10]शब्देभ्यो यथासङ्ख्यं चत्वार एव ढक् छण् ढञ् यक् इत्येते प्रत्यया भवन्ति सोऽस्याभिजनः इत्येतस्मिन् विषये। अणोऽपवादः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥

## भक्तिः। (९५/१४७५)

समर्थविभक्तिः [11]प्रत्ययार्थश्चानुवर्तते। अभिजन इति निवृत्तम्। स इति प्रथमासमर्थात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं भक्तिश्चेद् तद् भवति। भज्यते सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः। [12]राष्ट्रियः॥

## अचित्ताददेशकालाट् ठक्। (९६/१४७६)

देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट् ठक् प्रत्ययो भवति सोऽस्य भक्तिरित्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच्छं [13]परत्वाद् बाधते। [14]अपूपो भक्तिरस्य आपूपिकः। पायसिकः। शाष्कुलिकः। अचित्तादिति किम्? [15]दैवदत्तः। अदेशादिति किम्? स्रौघ्नः। अकालात् इति किम्? ग्रैष्मः॥

## महाराजाट् ठञ्। (९७/१४७७)

महाराजशब्दात् ठञ् प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन् विषये। अणोऽपवादः। महाराजो भक्तिरस्य माहाराजिकः। प्रत्ययान्तरकरणम् स्वरार्थम्॥

---

1. वर्ण ब. 2. कश्मीर नास्ति फ. 3. गङ्गादिक ब. 4. च अ. क. ड. 5. ताक्षशीलः ड. 6. वाधसोद्धरण ह. 7. कैमेडर ब. क. ड. 8. सुशलक ह, सलक ब. 9. सिंहकर्णक क्रोष्टुकर्णक क. 10. शब्देभ्यः नास्ति फ. 11. प्रत्ययार्थविभक्तिश्च ब. 12. राष्ट्रियः ह. 13. तु इत्यधिकम् ड. 14. अपूपाः क. 15. देवदत्तः क.

## वासुदेवार्जुनाभ्यां वुन्। (९८/१४७८)

वासुदेवार्जुनशब्दाभ्यां वुन् प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन् विषये। छाणोरपवादः। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। ननु च वासुदेवशब्दाद् गोत्रक्षत्रियाख्येभ्यः (४.३.९९/१४७९) इति वुञस्त्येव, न चात्र वुन्वुञोर्विशेषो विद्यते (म. भा. २.३१४), किमर्थं वासुदेवग्रहणम्? सञ्ज्ञैषा [1]देवताविशेषस्य न क्षत्रियाख्या (म. भा. २.३१४)। 'अल्पाच्तरम्' (२.२.३४/९०५), 'अजाद्यदन्तम्' (२.२.३३/९०४) इति च अर्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयति अभ्यर्हितं पूर्वम् निपतति इति ॥

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्। (९९/१४७९)

गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च प्रातिपदिकेभ्यः बहुलं वुञ् प्रत्ययो भवति सोऽस्य भक्तिः इत्येतस्मिन् विषये। अणोऽपवादः। वृद्धाच्छं[2] परत्वाद् बाधते। ग्लुचुकायनिर्भक्तिरस्य [3]ग्लौचुकायनकः। [4]औपगवकः। [5]कापटवकः। क्षत्रियाख्येभ्यः – नाकुलकः। साहदेवकः। [6]साम्बकः। आख्याग्रहणं प्रसिद्ध[7]क्षत्रियशब्दपरिग्रहार्थं, यथाकथंचित् क्षत्रियवृत्तिभ्यो मा भूत्। बहुलग्रहणात् क्वचिदप्रवृत्तिरेव[8]। [9]पाणिनो भक्तिरस्य पाणिनीयः। [10]पौरवीयः ॥

## जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने। (१००/१४८०)

जनपदिनो ये बहुवचने जनपदेन समानशब्दा[11]स्तेषां जनपदवत् सर्वं[12] भवति, प्रत्ययः प्रकृतिश्च सोऽस्य भक्तिः इत्येतस्मिन् विषये। जनपदतदवध्योश्च (४.२.१२४/१३४८) [13]इत्यत्र प्रकरणे [14]ये प्रत्यया विहिताः, ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते। जनपदिनो [15]जनपदस्वामिनः क्षत्रियाः[16]। अङ्गा जनपदो भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। [17]तद्वत् अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। जनपदिनाम् इति किम्? पञ्चालाः ब्राह्मणा भक्तिरस्य पाञ्चालः। सर्वग्रहणं प्रकृत्यतिदेशार्थं, स च द्व्येकयोः प्रयोजयति, वृद्धिनिमित्तेषु च वुञादिषु विशेषो नास्ति इति।

मद्रवृज्योः [18]कनि विशेषः। मद्रस्यापत्यं, 'द्व्यञ्मगधकलिङ्गसूरमसादण्' (४.१.१७०/११८८), माद्रः। वृजिशब्दादपि, 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४.१.१७१/११८९), वार्ज्यः। स भक्तिरस्य इति [19]प्रकृतिनिर्ह्रासे कृते (म. भा. २.३१४), मद्रकः। वृजिकः। जनपदेन समानशब्दानाम् इति किम्? [20]अनुषण्डो जनपदः पौरवो राजा, स भक्तिरस्य, पौरवीयः। बहुवचनग्रहणं [21]समानशब्दताविषयलक्षणार्थम्। अन्यथा हि यत्रैव समानशब्दता तत्रैवातिदेशः स्यात्, एकवचनद्विवचनयोर्न स्यात्, वाङ्गो वाङ्गौ वा भक्तिरस्य इति। [22]बहुवचने तु, बहुवचने समानशब्दानामेकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति। वाङ्गः वाङ्गौ वा भक्तिरस्य वाङ्गक ॥

---

1. वासुदेव इति इत्यधिकम् क. 2. तु इत्यधिकम् फ. 3. ग्लौचुकायनः क. 4. औपगावकः ब. 5. नास्ति ब. 6. नास्ति फ, साल्वकः ह, साम्बकः – माभूत् नास्ति ड. 7. क्षत्रियपरिग्रहार्थम् फ. ह. 8. इति इत्यधिकम् फ. 9. पाणिनिः ड. इ. 10. नास्ति ड. 11. तुल्यशब्दाः इत्यधिकम् फ. 12. कार्यम् इत्यधिकम् फ. 13. इत्येतस्मिन् फ. 14. ये नास्ति क. 15. जनपदवाचिनः ब. 16. उच्यन्ते इत्यधिकम् ड. 17. तद्वत् – पौण्ड्रकः नास्ति फ. 18. कन् इति फ. 19. प्रकृतिनिर्देशे ड. 20. अनुखञ्जो ड. 21. समानशब्दानां ड. समानशब्दविषयोपलक्षणार्थम् ह, °लक्षणार्थे ब. 22. बहुवचनेषु समानशब्दानाम् ब. क. ड. फ.

## तेन प्रोक्तम् । (१०१/१४८१)

तेन इति तृतीयासमर्थात् प्रोक्तम् [1]इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतम्, 'कृते ग्रन्थे' (४.३.११६/१४९६) इत्यनेन [2]गतार्थत्वात् । अन्येन कृता [3]माथुरेण प्रोक्ता [4]माथुरी वृत्तिः । पाणिनीयम् । आपिशलम् । काशकृत्स्नम् ।।

## तित्तिरिवरतन्तुखण्डिकोखाच्छण् । (१०२/१४८२)

तित्तिर्यादिभ्यः शब्देभ्यः छण् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । अणोऽपवादः । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । [5]औखीयाः । छन्दसि चायमिष्यते । तित्तिरिणा प्रोक्तः श्लोकः इत्यत्र न भवति । 'शौनकादिभ्यश्छन्दसि' (४.३.१०६/१४८६) [6]इत्यत्रास्यानुवृत्तेः छन्दोऽधिकार-विहितानां च [7]तद्विषयता इष्यते ।।

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । (१०३/१४८३)

[8]काश्यपकौशिकाभ्याम् [9]ऋषिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः । [10]कल्पस्ताभ्यां प्रोक्तः इति स्मर्यते । [11]तस्यापि तद्विषयता भवत्येव । 'शौनकादिभ्य-श्छन्दसि' (४.३.१०६/१४८६) [12]इत्यत्रानुवृत्तेः छन्दोऽधिकारविहितानां च तत्र तद्विषयता इष्यते । काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः । कौशिकिनः । ऋषिभ्याम् इति किम्? इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ।।

## कलापिवैशम्पायनान्तेवासिभ्यश्च । (१०४/१४८४)

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दास्तेभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । अणोऽपवादः । छं तु परत्वाद् बाधते । तत्र कलाप्यन्तेवासिनश्चत्वारः – हरिद्रुः, [13]छगली, तुम्बुरुः, [14]उलपः इति । वैशम्पायनान्तेवासिनः नव – [15]आलम्बिः, [16]पलङ्गः, कमलः, [17]ऋचाभः, आरुणिः, [18]ताण्ड्यः, श्यामायनः, कठः, कलापी इति । प्रत्यक्षकारिणो गृह्यन्ते न तु व्यवहिताः [19]शिष्यशिष्याः । कुतः ? [20]कलापिखाण्डायनग्रहणात् । तथाहि वैशम्पायनान्तेवासी [21]कलापी, तदन्तेवासिनो [22]वैशम्पायनान्तेवासिन एव भवन्ति, किं कलापिग्रहणेन ? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी [23]खाण्डायनः, तस्य किं शौनकादिषु पाठेन ? तदेतत् प्रत्यक्षकारिग्रहणस्य लिङ्गम् । कलाप्यन्तेवासिभ्यः तावत् – हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । तौम्बुरविणः । औलपिनः । छगलिनः ढिनुकं वक्ष्यति । वैशम्पायनान्तेवासिभ्यः – आलम्बिनः । [24]पालङ्गिनः । [25]कामलिनः । [26]आर्चाभिनः । [27]आरुणिनः । [28]ताण्डिनः । श्यामायनिनः । कठाल्लुकं वक्ष्यति (४.३.१०७/१४८७), कलापिनश्चाणम् (४.३.१०८/१४८८) ।

---

1. इत्येतस्मिन्नर्थे ब.क.इ. 2. एव सिद्धत्वात् फ, गतत्वात् अ.ब.ड.ग. 3. माधुरेण ड. 4. माधुरी ड. 5. औदवीयाः ब. 6. इत्येतदनुवर्तयितव्यम् इत्याहुः ब.ड.इ.फ. 7. तद्विषये नेच्छते क. 8. काश्यपकौ–शिकशब्दाभ्याम् ब. 9. ऋषिवाचिभ्याम् ब.क. 10. कल्प्यः अ.ड.इ.फ. 11. तस्मादपि ब. 12. इत्यनुवर्तते फ. 13. छगला ब. 14. हलय ब. 15. आलम्बः क.ड, अलम्ब इ. 16. फलिंग ड.ह. 17. ऋचाहः ह. 18. ताण्डिः ड, काण्डचः ह. 19. शिष्याः फ, शिष्यप्रशिष्यादयः ह. 20. कलापिग्रहणात् फ. 21. कलापः ब. 22. अपि इत्यधिकम् फ. 23. खाडायनः अ.क.फ. 24. फालङ्गिनः ड, नास्ति ह. 25. कालालिनः क. 26. नास्ति ह. 27. आहिनः इत्यधिकम् ह. 28. काण्डिन ह.

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू ।
उलपेन चतुर्थेन [1]कालापकमिहोच्यते ॥

आलम्बिश्चरकः प्राचां [2]पलङ्गकमलावुभौ ।
ऋचाभारुणि[3]ताण्ड्याश्च मध्यमीयास्त्रयोऽपरे ॥

श्यामायन उदीच्येषु उक्तः [4]कठकलापिनोः ।

चरकः इति वैशम्पायनस्याख्या, तत्सम्बन्धेन [5]सर्वे तदन्तेवासिनश्चरकाः इत्युच्यन्ते ॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु । (१०५/१४८५)

प्रत्ययार्थविशेषणमेतत् । [6]तृतीयासमर्थात् प्रोक्ते णिनिः प्रत्ययो भवति यत्[7] प्रोक्तं [8]पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति । पुराणेन [9]चिरन्तनेन [10]मुनिना प्रोक्ताः । ब्राह्मणेषु तावत्—भाल्लविनः । [11]शाट्यायनिनः । ऐतरेयिणः । कल्पेषु – पैङ्गी कल्पः । आरुणपराजी । पुराणप्रोक्तेषु इति किम् ? [12]याज्ञवल्कानि ब्राह्मणानि । [13]आश्मरथः कल्पः । याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्ता । तथा व्यवहरति सूत्रकारः । तद्विषयता कस्मान्न भवति ? प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्य तद्विषयता विधीयते णिनेः । अयं तु याज्ञवल्क्यशब्दस्य [14]कण्वादिषु पाठादण् । [15]न वाऽयं योगश्छन्दोऽधिकार[16]मनुवर्तयति, तेन कल्पेष्वपि न [17]भवति । पुराण इति निपातनात् तुडभावः[18] । न [19]वाऽत्यन्तबाधैव, तेन पुरातनमित्यपि भवति ॥

## शौनकादिभ्यश्छन्दसि । (१०६/१४८६)

शौनक इत्येवमादिभ्यः[20] णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् [21]विषये छन्दस्यभिधेये । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिनः (कौ. सू, ८५. ८) । वाजसनेयिनः (आ. श्रौ. १. ८. १२) । छन्दसि इति किम् ? शौनकीया [22]शिक्षा । [23]कठशाठ इत्यत्र पठ्यते तत्संहतार्थं[24], केवलाद्धि लुकं वक्ष्यति । [25]कठशाठाभ्यां प्रोक्तमधीयते [26]काठशाठिनः ।

शौनक । वाजसनेय । [27]साङ्गरव । शार्ङ्गरव । [28]साम्पेय । शाखेय । खाण्डायन । [29]स्कन्ध । स्कन्द । [30]देवदत्तशठ । रज्जुकण्ठ । [31]रज्जुभार । कठशाठ । कशाय । तलवकार । [32]पुरुषांसक । [33]अश्वपेय । शौनकादिः ॥

---

1. कलापिकम् क, कालापकमिवोच्यते ह. 2. फलिंग° ड. 3. °ताण्डचश्च ड. 4. कठकलापिनौ इ. 5. सर्वे नास्ति ड. 6. तेन इत्यधिकम् फ. 7. तत् इत्यधिकम् ब. क. फ. 8. पुराणप्रोक्तम् इति ब्राह्मण–कल्पास्ते ड. 9. चिरन्तनेन नास्ति ह. 10. ऋषिणा प्रोक्तम् पुराणप्रोक्तम् क.ड.इ.ह. 11. शाण्डायनिनः ड 12. याज्ञवल्क्यानि ब. 13. अश्मारथः इ. 14. कण्वादिभ्यो गोत्रे इत्यधिकम् ब. 15. नायं फ, न चायं ड. ब. 16. अनुवर्तते ब. फ. 17. विधीयते इ. 18. विधीयते इत्यधिकम् इ. 19. च फ. 20. शब्देभ्यः इत्यधिकम् ह, प्रातिपदिकेभ्यः इत्यधिकम् क. 21. अर्थे ह. 22. शिष्याः क. 23. कठशठ ब.ड. 24. वचनम् इत्यधिकम् ड. 25 कठशठाभ्याम् ड. 26. काठशठिनः क. 27. शाकर ब, साङ्गेरव क, साङ्गर ड. 28. शौपेय शाम्बेय ब, शाष्पेय. शापेय इ. 29. स्तम्भ ब. 30. देवदत्त अर्जुन रज्जु ड, देवदर्शन ब. 31. रज्जुहार फ. 32. पुरुषसख इ. ह. 33. अश्वपेजः ब. क.

## कठचरकाल्लुक् । (१०७/१४८७)

कठचरकशब्दाभ्यां परस्य प्रोक्तप्रत्ययस्य लुग् भवति । [1]कठशब्दाद् वैशम्पायनान्तेवासिभ्यः (४.३.१०४/१४८४) इति [2]णिनेः, चरकशब्दादण्णः । कठेन प्रोक्त[3]मधीयते [4]कठाः । चरकाः । छन्दसि इत्येव । काठाः । चारकाः[5] ॥

## कलापिनोऽण् । (१०८/१४८८)

कलापिशब्दादण् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । वैशम्पायनान्तेवासित्वाण् णिनेरपवादः । कलापिना प्रोक्तमधीयते कालापाः । 'इनण्यनपत्ये' (६.४.१६४/१२४५) इति प्रकृतिभावे [6]प्राप्ते,

[४६९] नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापि[7]कुथुमितैतलिजाजलिजाङ्गलि[8]लाङ्गलि[9]शिलालिशिखण्डि-सूकरसद्मसुपर्वणामुपसङ्ख्यानम् ।

इति टिलोपः । अथाण्ग्रहणं [10]किम्, [11]यथाप्राप्तमित्येव सिद्धम् ? अधिकविधानार्थं, तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानि इत्येवमादि सिद्धम्[12] ॥

## छगलिनो ढिनुक् । (१०९/१४८९)

छगलिन्शब्दात् ढिनुक् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । कलाप्यन्तेवासित्वाण् णिनेरपवादः । छगलिना प्रोक्तमधीयते [13]छागलेयिनः ॥

## पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । (११०/१४९०)

णिनिरिहानुवर्तते, न ढिनुक् । पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये । भिक्षुनटसूत्रयोः इति यथासङ्ख्यं [14]प्रत्ययार्थविशेषणम् । सूत्रशब्दः प्रत्येकमभिसम्बध्यते । तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहण[15]मनुवर्त्यं, गुणकल्पनया च भिक्षुनटसूत्रयोः छन्दस्त्वम् । पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । भिक्षुनटसूत्रयोः इति किम् ? पाराशरम् । शैलालम् ॥

## कर्मन्दकृशाश्वादिनिः । (१११/१४९१)

भिक्षुनटसूत्रयोः इत्येव । कर्मन्दकृशाश्वशब्दाभ्याम् इनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् [16]विषये यथासङ्ख्यं भिक्षुनटसूत्रयोरभिधेययोः । अणोऽपवादः । [17]अत्रापि [18]तद्विषयतार्थं छन्दोग्रहण[19]मनुवर्त्यम् । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः । भिक्षुनटसूत्रयोः इत्येव, कार्मन्दम् । काशाश्वम्[20] ॥

---

1. कठशब्दात् – अणः नास्ति फ. 2. णिनिः क. 3. वेदं इत्यधिकम् फ. 4. ये ते इत्यधिकम् क. 5. श्लोकाः इत्यधिकम् ब. क. ड. इ. फ. 6. प्राप्ते नास्ति फ. 7. कौथुमि ब. क. ड. 8. लाङ्गलि नास्ति क. 9. शलिलि क. 10. किमर्थम् फ. 11. न च इत्यधिकम् ब.ड.इ, न इत्यधिकम् ह. 12. भवति इत्यधिकम् ब. क.इ.फ.ह. 13. छगलेयिनः ब.ह. 14. प्रत्ययार्थे क. 15. अनुवर्तितव्यम् फ. 16. अर्थे क. 17. तत्रापि क. 18. तद्विषयार्थं ब.क. 19. अनुवर्तनीयम् फ. 20. इति इत्यधिकम् क.

## तेनैकदिक् । (११२/१४९२)

तेन इति तृतीयासमर्थाद् एकदिक् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । एकदिक् [1]तुल्यदिक् समानदिक् इत्यर्थः । सुदाम्ना एकदिक् सौदामनी विद्युत् । हैमवती । [2]त्रैककुदी । पैलुमूली । तेन इति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम् । [3]पूर्वत्र [4]हि छन्दोऽधिकारात् तद्विषयता साध्यते ॥

## तसिश्च । (११३/१४९३)

तसिश्च[5] प्रत्ययो भवति तेनैकदिक् इत्येतस्मिन् [6]विषये । पूर्वेण घादिषु अणादिषु च प्राप्तेषु [7]अयमपरः प्रत्ययो विधीयते । स्वरादिपाठाद[8] व्ययत्वम् । सुदामतः । हिमवत्तः[9] । [10]पिलुमूलतः ॥

## उरसो यच्च । (११४/१४९४)

उरस्शब्दात् यत् प्रत्ययो भवति, चकारात् तसिश्च, तेन एकदिक् इत्येतस्मिन् [11]विषये । अणोऽपवादः । उरसा [12]एकदिग् उरस्यः, उरस्तः ॥

## उपज्ञाते । (११५/१४९५)

तेन इत्येव[13] । तृतीयासमर्थात् उपज्ञाते इत्येतस्मिन् [14]विषये यथाविहितं प्रत्ययो भवति[15] । विना उपदेशेन ज्ञातमुपज्ञातं, स्वयम[16]भिसम्बद्धमित्यर्थः । पाणिनिना [17]उपज्ञातं पाणिनीयमकालकं व्याकरणम् । काशकृत्स्नं गुरुलाघवम् । आपिशलं दुष्करणम् ॥

## कृते ग्रन्थे । (११६/१४९६)

तेन इत्येव[18] । तृतीयासमर्थात् कृते इत्येतस्मिन्नर्थे[19] यथाविहितं प्रत्ययो भवति, यत् तत्कृतं ग्रन्थश्चेत् स भवति । वररुचिना कृताः वाररुचाः श्लोकाः । [20]हैकुपादो ग्रन्थः । [21]भैकुराटो ग्रन्थः । जालूकः[22] । ग्रन्थे इति किम् ? [23]तक्षकृतः प्रासादः । उत्पादितं कृतं, विद्यामानमेव ज्ञातमुपज्ञातम् इत्ययमनयोर्विशेषः ॥

## सञ्ज्ञायाम् । (११७/१४९७)

[24]तृतीयासमर्थात् कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत् सञ्ज्ञा [25]ज्ञायते । मक्षिकाभि कृतं माक्षिकम् । [26]कार्मुकम् । सारघम् । पौत्तिकम् । मधुनः सञ्ज्ञाः [27]एताः ॥

---

1. तुल्यदिक् नास्ति फ. 2. त्रैकुटी, पैलुमाली ड, त्रैककुम्भि बैलुमूली ह. 3. पूर्वसूत्रे ह. 4. हि नास्ति फ. 5. च नास्ति फ. 6. अर्थे फ. 7. अयमपवादप्रत्ययः फ, अयं तसिप्रत्ययः ह. 8. अव्ययम् फ. ब. 9. त्रिककुत्तः इत्यधिकम् फ. 10. पीलुमूलतः ब.क.इ, पीलुमालतः ड. 11. अर्थे फ.ह. 12. एका दिक् ह. 13. एव नास्ति फ.ह. 14. अर्थे फ.ह. 15. अणोऽपवादः इत्यधिकम् ब. 16. अभिसंबुद्धम् ब, अभिसंबुध्यते क. 17. एव इत्यधिकम् ह. 18. एव नास्ति फ. 19. विषये इ. 20. हैरुसतः फ, हैकपादः ब.इ. 21. बैकुराटः ड, नास्ति फ. 22. ग्रन्थः इत्यधिकम् ब.क. 23. तक्ष्णा कृतः ब.क.इ.फ. 24. तेन इत्यधिकम् ड.फ. 25. गम्यते ब.क.ड.इ.फ.ह. 26. गार्मुतम् ब.ड, कार्मुतम् फ, नास्ति ह. 27. एताः नास्ति ड.

## कुलालादिभ्यो वुञ्। (११८/१४९८)

तेन, कृते, सञ्ज्ञायाम् इति [1]चैतत्सर्वमनुवर्तते। कुलालादिभ्यः वुञ् प्रत्ययो भवति तेन कृतम् इत्येतस्मिन्नर्थे[2] सञ्ज्ञायां गम्यमानायाम्[3]। कौलालकम्। [4]वारुडकम्।

कुलाल। [5]वरुड। चण्डाल। निषाद। कर्मार। सेना। [6]सिरिध्र। सेन्द्रिय। देवराज। परिषत्। [7]वधू। [8]रुरु। ध्रुव। रुद्र। अनडुह्। ब्रह्मन्। कुम्भकार। [9]श्वपाक। कुलालादिः॥

## क्षुद्राभ्रमरवटरपादपादञ्। (११९/१४९९)

तेन, कृते, सञ्ज्ञायाम् इति [10]सर्वम[11]नुवर्तते। क्षुद्रादिभ्यः[12] अञ् प्रत्ययो भवति तेन कृते इत्येतस्मिन् विषये सञ्ज्ञायां गम्यमानायाम्। [13]अणोऽपवादः। [14]स्वरे विशेषः। क्षुद्रादिभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। [15]पादपम्॥

## तस्येदम्। (१२०/१५००)

तस्य इति षष्ठीसमर्थाद् इदम् इत्येतस्मिन् [16]विषये यथाविहितं प्रत्ययो भवति। अणादयः पञ्च महोत्सर्गाः। घादयश्च प्रत्यया [17]यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं [18]तत्सम्बन्धिमात्रं च विवक्षितं, यदपरं लिङ्गसङ्ख्याप्रत्यक्षपरोक्षादिकं [19]तत्सर्वमविवक्षितम्। उपगोरिदमौपगवम्। कापटवम्। राष्ट्रियम्। [20]अवारपारीणम्। अनन्तरादिष्वनभिधानान् न भवति, [21]देवदत्तस्यानन्तरम् इति।

[४७०] संवहेस्तुरणिट् च। (म.भा. २.३१८)

संवोढुः स्वं सांवहित्रम्। सिद्धः एवात्राण्, इडर्थमुपसङ्ख्यानम्।

[४७१] आग्नीधः शरणे रण् भं च। (म.भा. २.३१८)

[22]आग्नीध्रम्।

[४७२] समिधामाधाने षेण्यण्। (म.भा. २.३१९)

सामिधेन्यो मन्त्रः। सामिधेनी ऋक्॥

## रथाद्यत्। (१२१/१५०१)

रथशब्दात् यत् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [23]विषये। अणोऽपवादः। रथस्य इदं रथ्यं, चक्रं वा युगं वा। रथाङ्ग एवेष्यते, नान्यत्र अनभिधानात्।

[४७३] रथसीताहलेभ्यो [24]यद्विधाविति तदन्तविधिरुपसङ्ख्यायते।

परमरथ्यम्। उत्तमरथ्यम्॥

---

1. एतत् नास्ति फ. 2. विषये ब. 3. अणोऽपवादः इत्यधिकम् फ. 4. चारुटकम् ड. 5. चरुट ड. 6. सरिध्र ब, सिरभ्र क, शिरन्ध्र ड, शिरध्र इ. 7. बभ्रु ब, बभ्रु क. 8. नास्ति फ. 9. आहक ड. 10. चैतत् इत्यधिकम् ब, एतत् इत्यधिकम् क. 11. वर्तते क. 12. प्रातिपदिकेभ्यः इत्यधिकम् फ. ह. 13. छाणोरपवादः ड. 14. स्वरादिविशेषः इ. 15. चातपम् इ. 16. अर्थे ब.क.फ. 17. यथायथं फ. 18. तत्सम्बन्धितामात्रं ब. 19. तत्सर्वमपि क. 20. अवारपारीणः ह, नास्ति फ. 21. देवदत्तस्य समीपम् फ. 22. अग्नीध्रः क. 23. अर्थे ह. 24. यद्विधानम् ड.

## पत्रपूर्वादञ् । (१२२/१५०२)

पतन्ति [1]तेन [2]इति पत्रम् अश्वादिकं वाहनमुच्यते । तत्पूर्वाद् रथशब्दात् अञ् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [3]विषये । पूर्वस्य यतोऽपवादः । आश्वरथं चक्रम् । [4]औष्ट्ररथम् । गार्दभरथम्[5] ॥

## पत्राध्वर्युपरिषदश्च । (१२३/१५०३)

पत्रं वाहनम्, तद्वाचिनः [6]प्रातिपदिकात् अध्वर्युपरिषच्छब्दाभ्यां च अञ् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [7]विषये । अणोऽपवादः ।

[४७४] पत्राद् [8]वाह्ये । (म. भा. २.३१९)

अश्वस्य इदं वहनीयमाश्वम् । औष्ट्रम् । [9]गार्दभम् । आध्वर्यवम् । पारिषदम् ॥

## हलसीराट्ठक् । (१२४/१५०४)

हलसीरशब्दाभ्यां ठक् प्रत्ययो भवति तस्येदम् इत्यस्मिन् [10]विषये । [11]अणोऽपवादः । हलस्य इदं हालिकम् । सैरिकम् ॥

## द्वन्द्वाद् वुन् वैरमैथुनिकयोः । (१२५/१५०५)

द्वन्द्वसञ्ज्ञकात्[12] वुन् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [13]विषये, वैरमैथुनिकयोः [14]प्रत्ययार्थविशेषणयोः । अणोऽपवादः । छं तु परत्वाद् बाधते । वैरे तावत् – [15]बाभ्रव्यशालङ्कायनिका । काकोलूकिका । मैथुनिकायाम् – अत्रिभरद्वाजिका । कुत्सकुशिकिका । विवहनमैथुनिका । [16]वैरस्य नपुंसकत्वेऽप्यमी स्वभावतः स्त्रीलिङ्गाः ।

[४७५] वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । (म. भा. २.३१९)

दैवासुरम् । राक्षोऽसुरं वैरम् ॥

## गोत्रचरणाद् वुञ् । (१२६/१५०६)

गोत्रवाचिभ्यः चरणवाचिभ्यः च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [17]विषये अणोऽपवादः । छं तु परत्वाद् बाधते । [18]गोत्रात् तावत् – [19]ग्लौचुकायनकम् । औपगवकम्[20] ।

[४७६] चरणाद् धर्माम्नाययोरिष्यते ।

काठकम् । कालापकम् । मौदकम् । पैप्पलादकम् ॥

---

1. इत्यनेन फ. 2. इदं क. 3. अर्थे ह. 4. नास्ति फ. 5. रासभरथम् । छं परत्वात् बाधते इत्यधिकम् ड. 6. शब्दात् फ. 7. अर्थे ह. 8. वहनीये ड, वाह्य एव ग. 9. नास्ति फ. 10. अर्थे ह. 11. अणोऽपवादः नास्ति फ. 12. प्रातिपदिकात् इत्यधिकम् फ. 13. अर्थे ह. 14. अर्थविशेषणयोः ड. 15. बाभ्रवशालङ्कायनिका ब.क.फ, बाभ्रवशालङ्किका ड. 16. वाक्यमिदं नास्ति ब.फ.ह. 17. अर्थे फ. 18. गोत्रान्तात् ब. 19. गौचुकायनम् क. 20. कापटवकम् इत्यधिकम् फ. ह.

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् । (१२७/१५०७)

सङ्घादिषु प्रत्ययार्थविशेषणेषु अञन्ताद्, यञन्ताद्, इञन्ताच् च प्रातिपदिकाद् अण् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [1]विषये । पूर्वस्य वुञोऽपवादः ।

[४७७] घोषग्रहणमत्र कर्तव्यम् । (म.भा. २.३१९)

तेन वैषम्याद् यथासङ्ख्यं न भवति । अञन्तात्[2] – बैदः सङ्घः । बैदोऽङ्कः । बैदं लक्षणम् । बैदो घोषः । यञन्तात्[3] – गार्गः सङ्घः । गार्गोऽङ्कः । गार्गं लक्षणम् । गार्गो घोषः । इञन्तात्[4] – दाक्षः सङ्घः । दाक्षोऽङ्कः । दाक्षं लक्षणम् । दाक्षो घोषः । अङ्कलक्षणयोः को विशेषः ? लक्षणं [5]लक्ष्यभूतस्यैव चिह्नभूतं स्वं यथा विद्या बिदानाम्, अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति । णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च (म.भा. २.३२०) । बैदी विद्या अस्य बैदीविद्यः ॥

## शाकलाद्वा । (१२८/१५०८)

शाकलशब्दात् सङ्घादिषु [6]प्रत्ययार्थविशेषणेषु वा अण्प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [7]विषये । वुञोऽपवादः । शाकलेन प्रोक्तमधीयते शाकलाः । तेषां सङ्घः शाकलः, शाकलकः । शाकलोऽङ्कः, [8]शाकलकोऽङ्कः । [9]शाकलं लक्षणम्, शाकलकं लक्षणम् । शाकलो घोषः, शाकलको घोषः ॥

## छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः । (१२९/१५०९)

सङ्घादयो निवृत्ताः, सामान्येन विधानम् । छन्दोगादिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति तस्येदम् [10]इत्येतस्मिन् [11]विषये । वुञणोरपवादः । चरणाद् धर्माम्नाययोः, तत्साहचर्यान् नटशब्दादपि धर्माम्नाययोरेव भवति । छन्दोगानां धर्मो वा आम्नायो वा [12]छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । [13]अन्यत्र छान्दोगं कुलम् इत्यादि ॥

## न दण्डमाणवान्तेवासिषु । (१३०/१५१०)

दण्डप्रधाना माणवाः दण्डमाणवाः, अन्तेवासिनः शिष्याः । तेष्वभिधेयेषु वुञ् प्रत्ययो [14]न भवति । [15]गोत्रग्रहणमिहानुवर्तते, तेन [16]वुञ्प्रतिषेधो विज्ञायते । [17]गौकक्षाः दण्डमाणवाः अन्तेवासिनो वा । दाक्षाः[18] । माहकाः ॥

## रैवतिकादिभ्यश्छः । (१३१/१५११)

[19]रैवतिकादिभ्यः छः प्रत्ययो भवति तस्येदम् इत्येतस्मिन् [20]विषये । गोत्रप्रत्ययान्ता एते, ततः पूर्वेण[21] वुञि प्राप्ते [22]छविधानार्थं वचनम् । [23]रैवतिकीयः । [24]स्वापिशीयः ।

रैवतिक । [25]स्वापिशि । क्षैमवृद्धि । गौरग्रीवि । औदमेयि । औदवाहि । बैजवापि ॥

---

1. अर्थे ह. 2. तावत् इत्यधिकम् फ, अञस्तावत् ब. 3–4. तावत् इत्यधिकम् फ. 5. लक्ष्यस्यैव ब.क.इ.फ. 6. प्रत्ययार्थविशेषेषु ड.इ.फ. 7. अर्थे फ.ह. 8. शाकलोऽङ्कः नास्ति फ. 9. उदाहरणमिदं नास्ति फ. 10. इत्यस्मिन् ब. 11. अर्थे ह. 12. छन्दोग्यः ह. 13. वाक्यमिदं नास्ति ब.ह. 14. न नास्ति फ. 15. गोत्रानुवृत्तिः फ. 16. वुञः प्रतिषेधः ब.क.इ. 17. गौकाक्षाः ब. 18. साङ्क्षाः इत्यधिकम् ब, प्लाक्षाः इत्यधिकम् क.ड.इ. 19. रैवतिकादिभ्यः शब्देभ्यः ब.क.इ.ह, रैवतिक इत्येवमादिभ्यः शब्देभ्यः ड. 20. अर्थे ह. क. 21. च इत्यधिकम् ब. क. 22. विधानम् ब. क. इ. 23. रैवतिकीयम् फ. 24. स्वापितीयः ह. 25. विशिक्षेम द्विपक्षेम वृद्धि शौरग्रीव औदमेधि ह, क्षेमवृद्धिन् ब.क.

## कौपिञ्जलहास्तिपदादण्। (१३२/१५१२)

कौपिञ्जलहास्तिपदशब्दाभ्याम् अण् प्रत्ययो भवति तस्येदम् इत्येतस्मिन् विषये। गोत्रवुञोऽपवादः, गोत्राधिकारात्। कौपिञ्जलः। हास्तिपदः॥

## आथर्वणिकस्येकलोपश्च। (१३३/१५१३)

अण् इत्येव। आथर्वणिकशब्दाद् अण् प्रत्ययो भवति, तत्संनियोगेन च [1]इकलोपः, तस्येदम् इत्येतस्मिन् [2]विषये। चरणवुञोऽपवादः। आथर्वणिकस्यायं आथर्वणो धर्मः आम्नायो वा। 'चरणाद्धर्माम्नाययोः' (वा. ४७५)॥

## तस्य विकारः। (१३४/१५१४)

तस्य इति षष्ठीसमर्थाद् विकारः इत्येतस्मिन् [3]विषये यथाविहितं प्रत्ययो भवति। प्रकृतेरवस्थान्तरं विकारः। किमिहोदाहरणम्? अप्राण्याद्युदात्तमवृद्धं, यस्य च नान्यत् [4]प्रतिपदं विधानम्। अश्मनो विकारः आश्मनः, आश्मः।

[४७८] अश्मनो विकारे।

इति टिलोपः पाक्षिकः। भास्मनः। मार्त्तिकः। नित्स्वरेणाद्युदात्ता एते। तस्य प्रकरणे तस्य इति पुनर्वचनं शैषिकनिवृत्त्यर्थम् (म. भा. २. ३२१)। विकारावयवयोर्घादयो न भवन्ति[5]। हालः। सैरः॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः। (१३५/१५१५)

प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः अवयवे यथाविहितं प्रत्ययो भवति, चकाराद् विकारे च। तत्र प्राणिभ्यः अञं वक्ष्यति। कपोतस्य विकारो अवयवो वा कापोतः। मायूरः। तैत्तिरः। [6]ओषधिभ्यः — [7]मौर्वं काण्डम्। [8]मौर्वं भस्म। वृक्षेभ्यः — कारीरं काण्डम्। कारीरं भस्म।

इत उत्तरे प्रत्ययाः [9]प्राण्योषधिवृक्षेभ्यः विकारावयवयोः भवन्ति[10]। अन्येभ्यस्तु विकारमात्रे। कथं द्वयमप्यधिक्रियते 'तस्य विकारः', 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति? विकारावयवयोर्युगपदधिकारोऽपवाद-विधानार्थः। कृतनिर्देशौ हि तौ (म.भा. २.३२२)॥

## बिल्वादिभ्योऽण्। (१३६/१५१६)

बिल्व इत्येवमादिभ्यो[11]ऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। [12]यथायोगम् अञ्मयटोरपवादः। बिल्वस्य विकारोऽवयवो वा बैल्वः। [13]गवेधुकाशब्दोऽत्र पठ्यते, ततः [14]कोपधात् एव सिद्धे मयड्बाधनार्थं ग्रहणम्।

बिल्व। व्रीहि। [15]काण्ड। मुद्ग। मसूर। गोधूम। इक्षु। वेणु। [16]गवेधुका। कर्पासी। [17]पाटली। कर्कन्धू। [18]कुटीर। बिल्वादिः॥

---

1. इकः लोपः ब. इकलोपः भवति फ. 2. अर्थे ह. 3. अर्थे ब. फ. ह. 4. प्रतिपदविधानमस्ति ह. 5. इति इत्यधिकम् ड. 6. औषधिभ्यः ब. 7. दौर्वम् फ, मूर्वाशब्दात् अवयवे प्रत्ययः इत्यधिकम् ड. 8. विकारे इत्यधिकम् ड. 9. प्राण्यौषधि° क.ब. 10. वृक्षशब्देन वनस्पतयोऽपि गृह्यन्ते। न्यग्रोधस्य विकारोऽवयवो वा नैयग्रोधः। पैप्पलः। औदुम्बरः। ओषधिशब्दाद् लतादयोऽपि गृह्यन्ते। ताम्बूल्या विकारोऽवयवो वा ताम्बूलः। गान्दूचः। एभ्यो विकारावयवयोर्भवन्ति इत्यधिकम् क. 11. शब्दादिभ्यः इत्यधिकम् फ. 12. यथायोगम् नास्ति फ. 13. गवेधुका–वेणु इति भागः नास्ति ब, गवेधुकशब्दः क. 14. कोपधत्वात् इ. 15. कुण्ड ड. 16. गवेधुक क, गवेयिका ह. 17. पाटल क. 18. कुयर इ.

## कोपधाच्च । (१३७/१५१७)

ककारोपधात् प्रातिपदिकाद् [1]अण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः । अञोऽपवादः । तर्कु – तार्कवम् । तित्तिडीक-तैत्तिडीकम् । [2]माण्डूकम् । दार्दुरूकम् । माधूकम् ॥

## त्रपुजतुनोः षुक् । (१३८/१५१८)

त्रपुजतुशब्दाभ्यामण् प्रत्ययो भवति विकारे, तत्सन्नियोगेन तयोः षुगागमो भवति । ओरञोऽपवादः । त्रपुणो विकारः त्रापुषम् । जातुषम् । अप्राण्यादित्वान्नावयवे ॥

## ओरञ् । (१३९/१५१९)

उवर्णान्तात् प्रातिपदिकात् अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणोऽपवादः । अनुदात्तादेरन्यदि-होदाहरणम् ।[3]दैवदारम् । [4]भाद्रदारवम् ॥

## अनुदात्तादेश्च । (१४०/१५२०)

अनुदात्तादेः प्रातिपदिकात् अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणोऽपवादः । [5]दाधित्थम् । [6]कापित्थम् । [7]माहित्थम् ॥

## पलाशादिभ्यो वा । (१४१/१५२१)

पलाशादिभ्यः [8]प्रातिपदिकेभ्यः वा अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । पालाशम् । खादिरम् । [9]यवासम् । उभयत्र विभाषेयम् । पलाशखदिरशिंशपास्पन्दनानामनुदात्तादित्वात् प्राप्ते, [10]अन्येषामप्राप्ते ।

पलाश । खदिर । शिंशपा । स्पन्दन । करीर । शिरीष । [11]यवास । विकङ्कत । पलाशादिः ॥

## शम्याष्ट्लञ् । (१४२/१५२२)

शमीशब्दात् ट्लञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अञोऽपवादः । शामीलं भस्म । शामीली [12]स्रुक् ॥

---

1. च इत्यधिकम् क. ह. 2. मारयूकं क. 3. देवदारवम् ह. 4. नास्ति इ, माद्यदारवम् ह. 5. दधित्थ इत्यधिकम् ब. क. इ. ड. 6. कपित्थ इत्यधिकम् ब. क. इ. ग. 7. महित्थ इत्यधिकम् ब. क. इ. ड, माहित्थम् नास्ति ह. 8. प्रातिपदिकेभ्यः नास्ति फ. 9. नास्ति फ. 10. शेषाणाम् ब. 11. मूलास ब, पूयलाश क. पनास ड, पूलाश इ, पुलास फ. 12. समिध् ग.

## मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । (१४३/१५२३)

प्रकृतिमात्राद् वा मयट् प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोः विकारावयवयोरर्थयोर्भाषायां विषये [1]यथायथं प्रत्ययेषु प्राप्तेषु । अश्ममयम्, [2]आश्मनम् । [3]मूर्वामयम्, मौर्वम् । भाषायाम् इति किम् ? [4]बैल्वः खादिरो वा यूपः स्यात् । अभक्ष्याच्छादनयोः इति किम् ? मौद्गः सूपः । कार्पासमाच्छादनम् । एतयोः [5]इत्यनेन किं [6]यावता विकारावयवौ प्रकृतावेव ? [7]ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' (४.३.१५४/१५३२) इत्येवमादयस्तद्विषयेऽपि यथा स्यात्, कपोतमयम्, कापोतम्, लोहमयम्, लौहम् इति ॥

## नित्यं वृद्धशरादिभ्यः । (१४४/१५२४)

भाषायामभक्ष्याच्छादनयोः इत्येव[8] । वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्च [9]अभक्ष्याच्छादनयोः विकारावयवयोः[10] भाषायां विषये नित्यं मयट् प्रत्ययो भवति । वृद्धेभ्यस्तावत् – आम्रमयम् । [11]शालमयम् । [12]शाकमयम् । शरादिभ्यः – शरमयम् । दर्भमयम् । [13]मृन्मयम् । नित्यग्रहणं किं [14]यावता आरम्भसामर्थ्यादेव[15] नित्यं भविष्यति ? [16]एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते, त्वङ्मयम्, स्रङ्मयम्[17], वाङ्मयम् इति ।

शर । दर्भ । मृत् । कुटी । तृण । सोम । [18]बल्वज । शरादिः ॥

## गोश्च पुरीषे । (१४५/१५२५)

गोशब्दात् पुरीषेऽभिधेये मयट् प्रत्ययो भवति । गोमयम् । पुरीषे इति किम् ? गव्यं पयः । पुरीषं न विकारो न चावयवः, [19]तस्येदंविषये विधानम् । विकारावयवयोस्तु गोपयसोर्यत् (४.३.१६०/१५३८) वक्ष्यति ॥

## पिष्टाच्च । (१४६/१५२६)

[20]पिष्टशब्दान् नित्यं मयट् प्रत्ययो भवति तस्य विकारः इत्येतस्मिन् [21]विषये । अणोऽपवादः । पिष्टमयं [22]भस्म ॥

## सञ्ज्ञायां कन् । (१४७/१५२७)

पिष्टशब्दात् कन् प्रत्ययो भवति विकारे सञ्ज्ञायां विषये । मयटोऽपवादः । [23]पिष्टकः ॥

## व्रीहेः पुरोडाशे । (१४८/१५२८)

व्रीहिशब्दान् मयट् प्रत्ययो भवति पुरोडाशे विकारे । बिल्वाद्यणोऽपवादः । [24]व्रीहिमयः पुरोडाशः । व्रैहम् अन्यत् ॥

---

1. यथायोगं ब. क. 2. आश्मम् ड. ह. 3. दूर्वामयं दौर्वम् ड. 4. बैन्वः ब, खैल्वः ह. 5. अनेन नास्ति ड. फ. 6. वाक्यमिदं नास्ति क. 7. ये नास्ति फ. 8. वर्तने इत्यधिकम् ह. 9. भक्ष्याच्छादनवर्जितयोः फ. 10. अर्थयोः इत्यधिकम् फ. 11. सालमयम् ह. 12. नास्ति ब. क. ड. 13. नास्ति फ. 14. यावता नास्ति फ. 15. मयट् प्रत्ययो इत्यधिकम् फ. 16. केचित् इत्यधिकम् फ. ह. 17. इति इत्यधिकम् फ, स्रङ्मयम् नास्ति ह, वाङ्मयम् नास्ति फ. 18. बिल्वज फ. 19. तेन इत्यधिकम् ह. 20. पिष्टाच्च ब. 21. अर्थे ह. 22. हविः फ, अपूपम् ह. 23. पिष्टकाः ब. ड. इ. ह. 24. व्रीहिमयाः पुरोडाशाः फ.

## असञ्ज्ञायां तिलयवाभ्याम् । (१४९/१६२९)

तिलयवशब्दाभ्याम[1]सञ्ज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः । तिलमयम् । यवमयम् । असञ्ज्ञायाम् इति किम् ? तैलम् । यावकः । [2]'यावादिभ्यः कन्' (५.४.२९/२०९७) ॥

## द्व्यचश्छन्दसि । (१५०/३४५३)

द्व्यचः प्रातिपदिकात् छन्दसि विषये मयट् प्रत्ययो भवति [3]विकारावयवयो[4]रर्थयोः । [5]भाषायां मयडुक्तः, छन्दस्यप्राप्तो विधीयते । 'यस्य पर्णमयी जुहूर्भवति' (नि. ३.५.७.१) । 'दर्भमयं वासो भवति' (मै. सं. १.११.१) । 'शरमयं बर्हिर्भवति' (काठ. सं. ११.८) ॥

## नोत्वद्वर्ध्रबिल्वात् । (१५१/३४५४)

उत्वतः प्रातिपदिकाद् वर्ध्रबिल्वशब्दाभ्यां [6]च मयट् प्रत्ययो न भवति । 'द्व्यचश्छन्दसि' (४.३.१५०/३४५३) इति प्राप्तः प्रतिषिध्यते । 'मौञ्जं शिक्यम्' (तै.सं. ५.१.२०.१) । '[7]गार्मुतं चरुम्' (तै.सं. २.४.४.१) । [8]वार्ध्री बालप्रग्रथिता भवति । 'बैल्वो ब्रह्मवर्चसकामेन कार्यः' (मै. सं. ३.९.३) । तपरकरणं तत्कालार्थम् । धूममयानि अभ्राणि । मतुब्निर्देशस्तदन्तविधिनिरासार्थः । इहैव स्यात् वैणवी यष्टिः इति ॥

## तालादिभ्योऽण् । (१५२/१६३०)

तालादिभ्यः प्रातिपदिकेभ्यः अण् प्रत्ययो भवति विकारावयवयोरर्थयोः । मयडादीनामपवादः । तालं धनुः । बार्हिणम् । [9]ऐन्द्रालिशम् ।

[४७९] तालाद्धनुषि[10] ।

बार्हिण । इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । [11]चाप । [12]श्यामाक । [13]पीयुक्षा । तालादिः ॥

## जातरूपेभ्यः परिमाणे । (१५३/१६३१)

जातरूपं [14]सुवर्णम् । बहुवचननिर्देशात् तद्वाचिनः सर्वे गृह्यन्ते । जातरूपवाचिभ्यः प्रातिपदिकेभ्यः अण् प्रत्ययो भवति परिमाणे विकारे । मयडादीनामपवादः । [15]हाटको निष्कः । हाटकं कार्षापणम् । जातरूपम् । तापनीयम् । परिमाणे इति किम् ? यष्टिरियं हाटकमयी ॥

---

1. असंज्ञायाम् ब. क. इ. फ. 2. सूत्रमिदं नास्ति ह. 3. विकारावयवयोः – वासो भवति नास्ति ड. 4. अर्थयोः नास्ति फ. 5. भाषायां नास्ति ब. 6. च नास्ति फ. 7. कार्मुकं चक्रम् क, गार्मुतश्चरुः ब. 8. वाक्यमिदं नास्ति क. 9. ऐन्द्रादृशम् । तालं धनुषि इत्यधिकम् ह. 10. तालमयमन्यत् । नित्यम् द्वन्द्वे मयट् इत्यधिकम् फ. 11. बप फ, चप चपो वंशभेदः इ, चय ब. 12. श्यामक क.फ. 13. पीयूष्य क, पीयूष फ.ह, पीयूक्षा ब, पीयुक्ष्या ड. इ. 14. सुवर्णे ब. 15. उदाहरणमिदं नास्ति ह.

## प्राणिरजतादिभ्योऽञ्। (१५४/१५३२)

प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतादिभ्यश्च अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। [1]अणादीनामपवादः। अनुदात्तादेः अञ् विहित एव परिशिष्टमिहोदाहरणम्। प्राणिभ्यस्तावत् – कापोतम्। मायूरम्। तैत्तिरम्। [2]रजतादिभ्यः – राजतम्। सैसम्। लौहम्। रजतादिषु येऽनुदात्तादयः पठ्यन्ते रजतकण्टकारप्रभृतयस्तेभ्योऽञि सिद्धे पुनर्वचनं मयड्बाधनार्थम्।

रजत। सीस। लोह। उदुम्बर। [3]नीलदारु। [4]रोहितक। बिभीतक। पीतदारु। [5]तीव्रदारु। त्रिकण्टक। कण्टकार। रजतादिः॥

## ञितश्च तत्प्रत्ययात्। (१५५/१५३३)

अञ् इत्येव। तद् इति विकारावयवयोर[6]र्थयोः प्रत्यवमर्शः। ञिद् यो विकारावयवप्रत्ययस्तदन्तात् प्रातिपदिकात् अञ् प्रत्ययो भवति विकारावयवयोः एव। मयटोऽपवादः। [7]'ओरञ्' (४.२.७१/१२८३), 'शम्याष्ट्लञ्' (४. ३. १४२/१५२२), 'प्राणिरजतादिभ्योऽञ्' (४. ३. १५४/१५३२), 'उष्ट्राद्वुञ्' (४. ३. १५७/१५३५), [8]'एण्या ढञ्' (४.३.१५९/१५३७), 'कंसीयपरशव्ययोर्यञञौ लुक्च' (४.३.१६८/१५४७) इत्येते प्रत्ययाः गृह्यन्ते। दैवदारवस्य विकारोऽवयवो वा दैवदारवम्। दाधित्थस्य दाधित्थम्। पालाशस्य पालाशम्। शामीलस्य शामीलम्। [9]कापोतस्य कापोतम्। औष्ट्रकस्य औष्ट्रकम्। ऐणेयस्य ऐणेयम्। कांस्यस्य कांस्यम्। [10]पारशवस्य पारशवम्। ञितः इति किम्? बैल्वमयम्। [11]तत्प्रत्ययात् इति किम्? बैदमयम्॥

## क्रीतवत् परिमाणात्। (१५६/१५३४)

[12]'प्राग्वतेष्ठञ्' (५.१.१८/१६८०) इत्यत[13] आरभ्य क्रीतार्थे ये प्रत्ययाः [14]परिमाणाद् [15]विहिताः, ते विकारेऽतिदिश्यन्ते। परिमाणात् क्रीत इव प्रत्यया भवन्ति तस्य विकारः इत्येतस्मिन् [16]विषये। अणादीनामपवादः। सङ्ख्या [17]अपि परिमाणग्रहणेन गृह्यते, न [18]रूढिपरिमाणमेव। निष्केण क्रीतं नैष्किकम्। [19]एवं निष्कस्य विकारो नैष्किकः। शतेन क्रीतं शत्यम्, शतिकम्। शतस्य विकारः शत्यः, शतिकः। साहस्रः। वतिः सर्वसादृश्यार्थः। 'अध्यर्धपूर्वाद् द्विगोर्लुगसञ्ज्ञायाम्' (५.१.२८/१६९३) इत्येवमादिक[20]मप्यतिदिश्यते। [21]द्विसहस्रः, द्विसाहस्रः। द्विनिष्कः, द्विनैष्किकः॥

## उष्ट्राद् वुञ्। (१५७/१५३५)

उष्ट्रशब्दाद् वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोऽपवादः। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः॥

---

1. अणोऽपवादः फ. 2. रजतादिभ्यः – कण्टकारः नास्ति फ. 3. नीचदारु ब. 4. लोहितक ड. 5. वृद्धदारु इत्यधिकम् ब.क.ड. 6. अर्थयोः नास्ति ब. 7. ओरञ् – शामीलम् इति नास्ति फ. 8. एण्या ढञ् नास्ति ब. 9. राजतम् इत्यधिकम् ह. 10. पाराशवस्य पाराशवम् क. 11. मयट् प्रत्ययात् ह. 12. प्राग्वहतेष्ठञ् क.इ. 13. अतः नास्ति फ. 14. परिमाणेन क. 15. विध्यर्थमिष्यन्ते फ. 16. अर्थे ह. 17. च ब.ह. 18. रूढिः परिमाणमेव इ.क. 19. एवं नास्ति फ. 20. उपदिश्यन्ते फ. 21. द्विसहस्रकः द्वैनिष्किकः ड.

## उमोर्णयोर्वा । (१५८/१६३६)

उमाशब्दाद् ऊर्णाशब्दाच्च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । औमकम्, [1]औमम् । और्णकम्; [2]और्णम् ॥

## एण्या ढञ् । (१५९/१६३७)

एणीशब्दाद् ढञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । प्राण्यञोऽपवादः । ऐणेयम् मांसम् । पुंसस्तु अञ् एव भवति । एणस्य मांसम् ऐणम्[3] ॥

## गोपयसोर्यत् । (१६०/१६३८)

[4]गोपयस्शब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः । गव्यम् । पयस्यम् । सर्वत्र गोरजादि-[5]प्रसङ्गे यद् अस्त्येव, मयड्विषये [6]तु विधीयते ॥

## द्रोश्च । (१६१/१६३९)

द्रुशब्दाद् यत् प्रत्ययो भवति विकारावयवयोरर्थयोः । ओरञोऽपवादः । [7]द्रव्यम् ॥

## माने वयः । (१६२/१६४०)

द्रुशब्दान् माने विकारविशेषे वयः प्रत्ययो भवति । यतोऽपवादः । द्रुवयम्[8] ॥

## फले लुक् । (१६३/१६४१)

विकारावयवयोरुत्पन्नस्य[9] फले [10]तद्विषये विवक्षिते लुग् भवति । आमलक्याः फलम् आमलकम् । [11]कुवलम् । [12]बदरम् । फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च, पल्लवितस्येव पल्लवः ॥

## प्लक्षादिभ्योऽण् । (१६४/१६४२)

फले इत्येव । प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षिते अण् प्रत्ययो भवति । [13]अञोऽपवादः । विधानसामर्थ्यात् [14]तस्य न लुग् भवति । [15]प्लाक्षम् । नैयग्रोधम् ।

प्लक्ष । न्यग्रोध । अश्वत्थ । इङ्गुदी । [16]शिग्रु । [17]कर्कन्धु । बृहती । प्लक्षादिः ॥

---

1. औमम् नास्ति ब. 2. और्ण्यम् ह. 3. कोशात् ढञ् वक्तव्यः । कौशेयं वासः सूत्रं च इत्यधिकम् क.ड. 4. गोपयस् इत्येताभ्याम् फ. 5. प्रत्ययप्रसङ्गे यत् वक्तव्यः इति फ. ड. 6. तु नास्ति फ. 7. नास्ति फ, द्रव्या खट्वा ग. 8. मानं इत्यधिकम् ड. फ, प्रतानम् इत्यधिकम् ह, द्रुवयः ब. क. 9. प्रत्ययस्य इत्यधिकम् ड. 10. तद्विशेषे पमं. 11. कुवलयम् क. 12. बदर्याः विकारः फलं वा बदरम् क. ड. 13. अञोऽपवादः नास्ति ड. 14. अस्य फ. 15. प्लक्षस्य फलम् इत्यधिकम् ड. 16. सरग्रु फ. 17. कक्ष्यतु बृहन्ती ड.

## जम्ब्वा वा । (१६५/१५४४)

फले इत्येव । जम्बूशब्दात् फले[1]ऽभिधेये वा अण् प्रत्ययो भवति । [2]अञोऽपवादः । अत्राणो विधान-सामर्थ्याल् लुग् न भवति, अञस्तु भवत्येव[3] । [4]जाम्बवानि फलानि, [5]जम्बूनि वा ॥

## लुप् च । (१६६/१५४५)

वा इत्येव । जम्ब्वाः फले[6]ऽभिधेये प्रत्ययस्य वा लुप् भवति । युक्तवद्भावे विशेषः । जम्ब्वाः फलम् [7]जम्बूः फलम्, जम्बु फलम्, जाम्बवम् इति वा ।

[४८०] लुप्प्रकरणे फलपाकशुषामुपसङ्ख्यानम् । (मा.भा.२.३२७)

व्रीहयः । [8]यवाः । माषाः । मुद्गाः । तिलाः ।

[४८१] पुष्पमूलेषु बहुलम् । (म.भा.२.३२७)

मल्लिकायाः पुष्पम् मल्लिका[9] । [10]नवमल्लिका जातिः । बिदार्याः मूलं बिदारी । अंशुमती । बृहती । न च भवति । पाटलानि पुष्पाणि । शाल्वानि मूलानि । बहुलवचनात् क्वचि[11]दन्यदपि भवति, [12]कदम्बं पुष्पम्, [13]अशोकम्. [14]करवीरम्, [15]बैल्वानि फलानि इति ॥

## हरीतक्यादिभ्यश्च । (१६७/१५४६)

हरीतकी इत्येवमादिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति । लुकि प्राप्ते लुपो [16]विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः । हरीतक्याः फलं हरीतकी । कोशातकी । नखरजनी । [17]अत्र च व्यक्तिर्युक्तवद्भावेनेष्यते, वचनं त्वभिधेयवदेव भवति । हरीतक्याः फलानि हरीतक्यः ।

हरीतकी । कोशातकी । [18]नखरजनी । शष्कण्डी । दाडी । दोडी । [19]दीडी । [20]श्वेतपाकी । अर्जुनपाकी । [21]काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । [22]कण्टकारिका । शेफालिका । [23]येषां च फलपाकनिमित्तः शोषः । पुष्पमुलेषु बहुलम् । हरीतक्यादिः ॥

## कंसीयपरशव्ययोर्यञञौ लुक् च । (१६८/१५४७)

'प्राक् क्रीताच्छः' (५.१.१/१६६१), कंसीयः । उगवादिभ्यो यत्' (५.१.२/१६६२), [24]परशव्यः । कंसीयपरशव्यशब्दाभ्यां यथासङ्ख्यं यञञौ प्रत्ययौ भवतः तस्य विकारः इत्येतस्मिन् [25]विषये, तत्संनियोगेन [26]च

---

1. विषये ब. 2. ओरञः ड. 3. एव नास्ति फ. 4. जम्बोः फलानि फ. 5. जम्बूनि फलानि ह. 6. अभिधेये नास्ति ब. क. इ. 7. लुपि प्रकृतिवल्लिङ्गेन जम्बूः क. 8. यवानां फलानि यवाः क. 9. पुष्पम् इत्यधिकम् फ. 10. नवमालिका ब. क. ड. इ. फ. 11. अन्यत्रापि क. 12. कादम्बं क. ड. 13. आशोकं क. ड. 14. कारवीरं क. ड. 15. वैणवानि ड. फ. ह. 16. अर्थे ह, वचनं ब, विधानं क.इ.ह. 17. अत्र – हरीतक्यः नास्ति ब. 18. नास्ति फ. 19. दडि ड, शोकि दधि वाकी इत्यधिकम् ह. 20. शाकमिदं इत्यधिकम् फ, शाकण्डी क.इ, शष्कुलीः जातिः ह, शतपाकी ड. 21. शूला ह, कला इ. 22. कण्टका क्षारा ह, कण्डकारिका इ. 23. येषां–बहुलम् नास्ति अ. ग. ई. 24. पारशव्यम् फ, पारिशनः क. 25. अर्थे ह. 26. च नास्ति ब.

कंसीयपरशव्ययोः लुग् भवति। कंसीयस्य विकारः [1]कांस्यः। परशव्यस्य विकारः पारशवः। प्रातिपदिकाधिकाराद् धातुप्रत्ययस्य न लुग् भवति। परशव्यशब्दादनुदात्तादित्वादेव अञि सिद्धे लुगर्थं वचनम्। ननु च 'यस्येति च' (६.४. १४८/३११) इति लोपे कृते 'हलस्तद्धितस्य' (६.४. १५०/४७२) इति [2]यलोपो भविष्यति ? नैतदस्ति, [3]ईतीति तत्र [4]वर्तते ॥

इति [5]श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

चतुर्थाध्यायस्य तृतीयः पादः ॥

———o———

1. कांस्यम् ब. 2. लोपो फ. 3. इतीति क. ब. 4. अनुवर्तते ह. 5. श्रीजयादित्यविरचितायां नास्ति ब. क.

# चतुर्थाध्यायस्य चतुर्थः पादः

## प्राग्वहतेष्ठक्। (१/१५४८)

'तद्वहति रथयुगप्रासङ्गम्' (४.४.७६/१६२७) इति वक्ष्यति। प्रागेतस्माद् वहतिसंशब्दनाद् [1]यानर्थाननुक्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति – 'तेन दीव्यति खनति जयति जितम्' (४.४.२/१५५०) इति। अक्षैर्दीव्यति आक्षिकः[2]।

[४८२] ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्। (म.भा. २.३२९)

माशब्दः इत्याह माशब्दिकः। नैत्यशब्दिकः। कार्यशब्दिकः[3]। वाक्यादेतत् प्रत्ययविधानम्।

[४८३] आहौ प्रभूतादिभ्यः[4]। (म. भा. २.३२९)

प्रभूतमाह प्राभूतिकः। पार्याप्तिकः। क्रियाविशेषणात् प्रत्ययः।

[४८४] पृच्छतौ सुस्नातादिभ्यः। (म. भा. २.३२९)

सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः। [5]सौखशायनिकः।

[४८५] गच्छति परदारादिभ्यः। (म. भा. २.३२९)

परदारान् गच्छति पारदारिकः। गौरुतल्पिकः॥

## तेन दीव्यति खनति जयति जितम्। (२/१५५०)

तेन इति तृतीयासमर्थाद् दीव्यति खनति जयति जितम् [6]इत्येतेष्वर्थेषु ठक् प्रत्ययो भवति। अक्षैर्दीव्यति आक्षिकः। शालाकिकः। [7]अभ्रचा खनति आभ्रिकः। कौद्दालिकः। अक्षैर्जयति आक्षिकः। अक्षैर्जितम् आक्षिकम्। शालाकिकम्। सर्वत्र करणे तृतीया समर्थविभक्तिः। देवदत्तेन जितम् इति [8]प्रत्ययो न भवति, [9]अनभिधानात्। अङ्गुल्या खनति इति च। प्रत्ययार्थे सङ्ख्याकालयोरविवक्षा। क्रियाप्रधानत्वेऽपि[10] चाख्यातस्य तद्धितः स्वभावात् साधनप्रधानः॥

---

1. इत ऊर्ध्वम् यत् ह. 2. शातकिकः इत्यधिकम् ड. फ, अक्षैः जितः आक्षिकः ह. 3. स्वस्ति इत्याह सौवस्तिकः इत्यधिकम् ह. 4. उपसंख्यानम् इत्यधिकम् फ. ह. 5. सौखराजिक इत्यधिकम् इ, सौखयात्रिकः इत्यधिकम् फ. 6. एतेषु नास्ति फ. 7. आभ्र्या ब. 8. प्रत्ययो नास्ति फ. 9. अनभिधानात् नास्ति फ, अनभिधानात् च ड. ह. 10. अपि नास्ति फ, °तद्धितस्वभावात् साधनं प्रधानम् ड.

## संस्कृतम् । (३/१६६१)

तेन इति[1] तृतीयासमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः । दध्ना संस्कृतम् दाधिकम् । शार्ङ्गवेरिकम् । [2]मारीचिकम् । योगविभाग उत्तरार्थः ॥

## कुलत्थकोपधादण् । (४/१६६२)

कुलत्थ[3]शब्दात् ककारोपधात् शब्दाच्च प्रातिपदिकाद् अण् प्रत्ययो भवति संस्कृतम् इत्येतस्मिन् [4]विषये । ठकोऽपवादः । कुलत्थैः संस्कृतम् कौलत्थम् । ककारोपधात् – [5]तैत्तिडीकम् । [6]दार्दभकम् ॥

## तरति । (५/१६६३)

तेन [7]इति तृतीयासमर्थात् तरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । तरति [8]प्लवते इत्यर्थः । काण्डप्लवेन तरति काण्डप्लविकः । [9]औडुपिकः ॥

## गोपुच्छाट् ठञ् । (६/१६६४)

[10]गोपुच्छशब्दाट् ठञ् प्रत्ययो भवति तरति इत्येतस्मि[11]न्नर्थे । ठकोऽपवादः । स्वरे विशेषः । [12]गौपुच्छिकः ॥

## नौद्व्यचष्ठन् । (७/१६६५)

नौशब्दाद् द्व्यचश्च प्रातिपदिकाट् ठन् प्रत्ययो भवति तरति इत्येतस्मिन् [13]अर्थे । ठकोऽपवादः । नावा तरति नाविकः[14] । द्व्यचः खल्वपि – [15]घटिकः । प्लविकः । [16]बाहुकः । षकारः सांहितिको नानुबन्धः । बाहुका स्त्री ।

[17]आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
[18]आवसथात् किशरादेः षितः षडेते ठगधिकारे ॥

[19]विधिवाक्यापेक्षं च षट्त्वं, प्रत्ययास्तु सप्त (मा. भा. २.३२९) ॥

## चरति । (८/१६६६)

तेन [20]इति तृतीयासमर्थाच् चरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । चरतिर्भक्षणे गतौ च (धा.पा. ५५९) वर्तते । दध्ना चरति दाधिकः[21] । [22]हास्तिकः । शाकटिकः ॥

---

1. इत्येव फ. 2. मारीचिकम् नास्ति फ. ह, मारिचिकम् ब. 3. शब्दात् नास्ति फ. ड. 4. अर्थे फ. ह. 5. तैत्तिणीकम् फ, तैस्तिकम् ह. 6. नास्ति फ, दार्दरुकम् ड, दारुष्कम् ह. 7. इत्येव ड. ह. 8. प्लवने ब. 9. औकप्लविकः ह, शारप्लविकः इत्यधिकम् ब. ड. ह. 10. पुच्छशब्दात् क. 11. विषये क. 12. गोपुच्छेन तरति इत्यधिकम् फ. ह. 13. विषये ब. 14. भवति इत्यधिकम् फ. 15. घटेन तरति इति इत्यधिकम् ह. 16. बाहुभ्यां तरति इति इत्यधिकम् ह, नास्ति फ, पतिकः इत्यधिकम् ड. 17. आकर्षपर्पादिभ्यः क. 18. आवसथ्यात् क. 19.विधिव्याख्यापेक्षया फ. 20. इत्येव फ. 21. शार्ङ्गवेरिकः इत्यधिकम् ड. ह, भुङ्क्ते इत्यर्थः इत्यधिकम् ड. 22. हस्तिना चरति इत्यधिकम् ह, औष्ट्रिकः इत्यधिकम् फ.

## आकर्षात् ष्ठल्। (९/१५५७)

आकर्षशब्दाद् ष्ठल् प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे[1]। ठकोऽपवादः। लकारः स्वरार्थः। षकारो [2]ङीषर्थः। आकर्षेण चरति आकर्षिकः। आकर्षिकी[3]। आकर्षः इति सुवर्णपरीक्षार्थो निकषोपलः उच्यते ॥

## पर्पादिभ्यः ष्ठन्। (१०/१५५८)

[4]पर्प इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे। ठकोऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। [5]पर्पिकः। पर्पिकी। अश्विकः। अश्विकी[6]।

पर्प। अश्व। अश्वत्थ। रथ। जाल। [7]न्यास। व्याल। पाद। पञ्च। पदिक। पर्पादिः ॥

## श्वगणाट् ठञ्च। (११/१५५९)

श्वगणशब्दात् ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, चरति इत्येतस्मिन्नर्थे। ठकोऽपवादः। श्वगणेन चरति श्वागणिकः। श्वागणिकी। ठन् – श्वगणिकः। श्वगणिका।

'श्वादेरिञि' (७.३.८/१५६०) इत्यत्र वक्ष्यति, 'इकारादिग्रहणं [8]च कर्तव्यम् श्वागणिकाद्यर्थम्' (७.३.८/१५६० वा.) इति। तेन ठञि द्वारादिकार्यं न भवति ॥

## वेतनादिभ्यो जीवति। (१२/१५६२)

तेन [9]इति तृतीयासमर्थेभ्यः वेतनादिभ्यः शब्देभ्यः जीवति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। वेतनेन जीवति वैतनिकः [10]कर्मकरः[11]। धनुर्दण्डग्रहणमत्र[12] सङ्घातविगृहीतार्थम्। धानुर्दण्डिकः। धानुष्कः। दाण्डिकः।

वेतन। वाह। अर्धवाह। धनुर्दण्ड[13]। जाल। [14]वेस। उपवेस। प्रेषण। [15]उपस्ति। सुख। शय्या। शक्ति। उपनिषत्। उपवेष। [16]स्रक्। पाद। उपस्थान। वेतनादिः ॥

## वस्नक्रयविक्रयाट्ठन्। (१३/१५६३)

वस्नक्रयविक्रयशब्दाभ्यां[17] तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति जीवति इत्येतस्मिन्[18]विषये। [19]ठकोऽपवादः। [22]वस्नेन जीवति [21]वस्निकः। क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्। क्रयविक्रयिकः। [23]क्रयिकः। विक्रयिकः ॥

---

1. तृतीयासमर्थात् इत्यधिकम् फ, तेन इति तृतीयासमर्थात् इत्यधिकम् ड. 2. ङीबर्थः क. 3. स्त्री इत्यधिकम् ह. 4. पर्षादिभ्यः क. 5. पर्षिकः पर्षिकी क, नास्ति फ. 6. अश्वत्थिकः अश्वत्थिकी इत्यधिकम् ह. 7. त्यास व. 8. च कर्तव्यम् नास्ति ड. 9. इत्येव फ. 10. कार्मारिकः। वाहिकः ह. 11. वाहिकः आर्धवाहिकः इत्यधिकम् फ. 12. पठ्यते इत्यधिकम् ह. 13. उपदेश स्फिक इत्यधिकम् ड. 14. वेश उपवेश ड. 15. उपस्थित मुख ड. 16. सिक्त ब. 17. तेन इति इत्यधिकम् ड. 18. अर्थे ब. 19. ठकोऽपवादः नास्ति फ. 20. वस्तेन वस्तिकः ब. 21. वस्निका ह. 22. क्रयेण जीवति इत्यधिकम् ड.

## आयुधाच्छ च । (१४/१५६४)

[1]आयुधशब्दात् छ प्रत्ययो भवति, चकाराट् ठंश्च, [2]जीवति इत्येतस्मिन् [3]विषये । आयुधेन जीवति आयुधीयः, आयुधिकः ॥

## हरत्युत्सङ्गादिभ्यः । (१५/१५६५)

[4]तेन इत्येव । उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यो हरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । हरतिर्देशान्तरप्रापणे वर्तते । उत्सङ्गेन [5]हरति [6]औत्सङ्गिकः । औडुपिकः ।

[7]उत्सङ्ग । उडुप । [8]उत्पत । [9]पिटक । उत्सङ्गादिः ॥

## भस्त्रादिभ्यः ष्ठन् । (१६/१५६६)

भस्त्रा इत्येवमादिभ्यः तृतीयासमर्थेभ्यः हरति इत्येतस्मि[10]न्नर्थे ष्ठन् प्रत्ययो भवति । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी । [11]भरटिकः । भरटिकी ।

भस्त्रा । भरट । भरण । शीर्षभार । शीर्षेभार । अंसभार । अंसेभार । भस्त्रादिः ॥

## विभाषा विवधवीवधात् । (१७/१५६७)

हरति इत्येव । विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति । तेन मुक्ते[12] प्रकृतः ठग् भवति । विवधेन हरति विवधिकः । विवधिकी । वीवधिकः । वीवधिकी । ठक् खल्वपि — वैवधिकः । वैवधिकी ।

विवधवीवधशब्दौ समानार्थौ पथि [13]पर्याहारे च वर्तेते ॥

## अण् कुटिलिकायाः । (१८/१५६८)

हरति इत्येव । कुटिलिकाशब्दात् [14]तृतीयासमर्थाद् अण् प्रत्ययो भवति हरति इत्येतस्मिन्नर्थे । कुटिलिकया हरति [15]मृगो व्याधं कौटिलिको [16]मृगः । कुटिलिकया हरत्यङ्गारात् कौटिलिकः [17]कर्मारः । [18]कुटिलिका वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते ॥

---

1. तेन इत्येव इत्यधिकम् फ. 2. तेन इत्यधिकम् फ. 3. अर्थे फ. 4. तेन इत्येव नास्ति फ 5. नयति उपादत्ते वा क. फ, उत्सङ्गेन हरति नास्ति ड. 6. औत्तुपिकः ड. 7. उत्तुप ड, उत्पुर ह. 8. उत्तप उत्फट ड. 9. पिटका इ, पिठक ड, पिटाक क. ह. 10. प्रत्ययार्थे फ. 11. भरटैः भृत्यैः हरति इत्यधिकम् फ. 12. पक्षे इत्यधिकम् क. 13. पर्यायाहारे क, उभयतो बद्धशिक्ये स्कन्धवाह्यं काष्ठे वर्तेते फ. 14. तृतीयासमर्थात नास्ति फ. 15. मृगान् व्याधः फ, मृगं व्याधः ब. 16. व्याधः फ. 17. कर्मकारः ड. ह. 18. वाक्यमिदं नास्ति ब. ड. ह.

## निर्वृत्तेऽक्षद्यूतादिभ्यः । (१९/१५६९)

तेन इत्येव । अक्षद्यूतादिभ्यः तृतीयासमर्थेभ्यो निर्वृत्ते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम् । जानुप्रहृतिकम् ।

अक्षद्यूत । जानुप्रहृत । [1]जङ्घाप्रहृत । [2]पादस्वेदन । कण्टकमर्दन । [3]गतागत । [4]यातोपयात । अनुगत । अक्षद्यूतादिः ॥

## त्रेर्मम् नित्यम् । (२०/१५७०)

निर्वृत्त इत्येव । 'ड्वितः क्त्रिः' (३.३.८८/३२६६) इत्ययं [5]त्रिशब्दो गृह्यते । [6]त्र्यन्तात् नित्यं मप् प्रत्ययो भवति तेन निर्वृत्ते इत्येतस्मिन्नर्थे । 'डुपचष् पाके' (धा.पा.९९७) – पक्त्रिमम् । 'डुवप्' (धा.पा. १००३) – उप्त्रिमम् । 'डुकृञ्' (धा.पा.१४७३)–कृत्रिमम् । नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्, तेन [7]त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति, विषयान्तरे न प्रयोक्तव्यम् (म.भा.२.३३०) इति ।

[४८६] भावप्रत्ययान्तादिमब्वक्तव्यः । (म. भा. २.३३०)

पाकेन निर्वृत्तम् पाकिमम् । [8]त्यागिमम् । [9]सेकिमम् । [10]कुट्टिमम् ॥

## अपमित्ययाचिताभ्यां कक्कनौ । (२१/१५७१)

निर्वृत्त इत्येव । अपमित्ययाचितशब्दाभ्यां यथासङ्ख्यं कक् कन् इत्येतौ प्रत्ययौ भवतः निर्वृत्ते इत्येतस्मिन्नर्थे । आपमित्यकम्[11] । याचितकम् ॥

## संसृष्टे । (२२/१५७२)

तेन इत्येव । तृतीयासमर्थात् संसृष्टे इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । संसृष्टम् एकीभूतम् [12]अभिन्नम् इत्यर्थः । दध्ना [13]संसृष्टं दाधिकम् । [14]मारिचिकम् । [15]शाार्ङ्गवेरिकम् । [16]पैप्पलिकम् ॥

## चूर्णादिनिः । (२३/१५७३)

चूर्णशब्दाद् [17]इनिः प्रत्ययो भवति संसृष्टे[18] । ठकोऽपवादः । चूर्णैः संसृष्टाः चूर्णिनोऽपूपाः । [19]चूर्णिनो धानाः[20] ॥

---

1. जङ्घाप्रहरतिकम् ब. 2. पादच्छन्दन ह. 3. गतानुगत ब. 4. पातोपयात ब. 5. क्त्रि ड. इ. 6. क्त्र्यन्तात् ड. इ, प्रातिपदिकात् इत्यधिकम् ह. 7. क्त्र्यन्तात् ड. इ. 8. रागिमम् क. ड. इ. 8. सेकिमम् नास्ति फ. ह. 10. कुट्टिमम् नास्ति फ. 11. ठकोऽपवादः इत्यधिकम् ह. 12. संभिन्नम् ब, संमिश्रम् ड. 13. एकीभूतम् ड. 14. मारीचिकम् ड. 15. शार्ङ्गवैरिकम् ब. 16. पैप्पिलिकम् ब. क. 17. तृतीयासमर्थात् इत्यधिकम् ह. 18. अर्थे इत्यधिकम् ब. क. इ. फ, इत्येतस्मिन्नर्थे ह. 19. चूर्णिन्यः फ. 20. चूर्णिनो माषाः इत्यधिकम् ह.

## लवणाल्लुक् । (२४/१६७४)

'संसृष्टे' (४.३.२२/१५७२) इत्यनेनोत्पन्नस्य ठको लवणशब्दाल् लुक् भवति । [1]लवणः सूपः । लवणं शाकम् । लवणा यवागूः । द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची ॥

## मुद्गादण् । (२५/१६७५)

मुद्गशब्दाद् अण् प्रत्ययो भवति संसृष्टे [2]इत्येतस्मिन् विषये । ठकोऽपवादः । मौद्ग ओदनः । मौद्गी यवागूः ॥

## व्यञ्जनैरुपसिक्ते । (२६/१६७६)

तेन इत्येव । [3]व्यञ्जनवाचिभ्यः [4]प्रातिपदिकेभ्यः तृतीयासमर्थेभ्यः उपसिक्ते इत्येतस्मि[5]न्नर्थे [6]ठक् प्रत्ययो भवति । [7]दध्ना उपसिक्तं दाधिकम् । सौपिकम्[8] । [9]खारिकम् । व्यञ्जनैः इति किम् ? उदकेनोपसिक्त ओदनः ॥

## ओजःसहोऽम्भसा वर्तते । (२७/१६७७)

ओजस् सहस् अम्भस् इत्येतेभ्यः तृतीयासमर्थेभ्यो वर्तते [10]इत्यर्थे ठक् प्रत्ययो भवति । ओजसा वर्तते औजसिकः [11]शूरः । साहसिक[12]श्चौरः । आम्भसिको मत्स्यः ॥

## तत्प्रत्यनुपूर्वमीपलोमकूलम् । (२८/१६७८)

तद् इति द्वितीयासमर्थविभक्तिः । प्रति अनु [13]इत्येवंपूर्वेभ्यः ईपलोमकूलशब्देभ्यो द्वितीयासमर्थेभ्यो वर्तते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । ननु च वृतिरकर्मकः, तस्य कथं [14]कर्मणा सम्बन्धः ? क्रियाविशेषण-मकर्मकाणामपि कर्म भवति । [15]प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । [16]आनुकूलिकः ॥

## परिमुखं च । (२९/१६७९)

परिमुखशब्दाद् [17]द्वितीयासमर्थाद् वर्तते इत्यस्मिन्नर्थे ठक् प्रत्ययो भवति । परिमुखं वर्तते पारिमुखिकः[18] । चकारोऽनुक्तसमुच्चयार्थः । [19]पारिपार्श्विकः ॥

---

1. लवणेन संसृष्टः इत्यधिकम् ब. क. ड. इ. ह. 2. एतस्मिन् नास्ति फ, अर्थे इ. ह. 3. व्यञ्जनविशेषवाचिभ्यः ड. 4. प्रातिपदिकेभ्यः नास्ति फ. 5. विषये क. इ. 6. यथाविहितं प्रत्ययो भवति ब. 7. दध्ना उपसिक्तः ओदनः दाधिकः ड. 8. कार्मरिकम् इत्यधिकम् ह. 9. खारिकम् नास्ति ब. क. ड. फ, वारिकम् इ. 10. इत्येतस्मिन्नर्थे फ. 11. शूरः नास्ति फ. 12. चौरः नास्ति फ. 13. इति नास्ति फ. 14. कर्मणादिसम्बन्धः ह, कर्मणा सह सम्बन्धः ड. 15. प्रतीपं वर्तते नास्ति फ. 16. नास्ति फ. 17. तदिति इत्यधिकम् ड. 18. सेवकः इत्यधिकम् ब. ड. फ. ह. 19. तेन इत्यधिकम् फ.

## प्रयच्छति गर्ह्यम् । (३०/१५८०)

तत् इति द्वितीयासमर्थात् प्रयच्छति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति, यत्तद् द्वितीयासमर्थं गर्ह्यं चेत् तद्भवति । द्विगुणार्थं द्विगुणं,[1] तादर्थ्यात् ताच्छब्द्यम् । द्विगुणं प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।

[४८७] वृद्धे[2]र्वृधुषिभावो वक्तव्यः । (म. भा. २.२३१)

[3]वार्धुषिकः । प्रकृत्यन्तरं [4]वा बृद्धिपर्यायो वृधुषिशब्दः । गर्ह्यम् इति किम् ? द्विगुणं प्रयच्छत्यधमर्णः ॥

## कुसीददशैकादशात् ष्ठन्ष्ठचौ । (३१/१५८१)

प्रयच्छति गर्ह्यम् इत्येव । कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदम् । एकादशार्था दश दशैकादशशब्देनोच्यन्ते । कुसीददशैकादशशब्दाभ्यां यथासङ्ख्यं ष्ठन् ष्ठच् इत्येतौ प्रत्ययौ भवतः प्रयच्छति गर्ह्यम् इत्येतस्मिन् [5]विषये । [6]ठकोऽपवादौ । कुसीदं प्रयच्छति कुसीदिकः । कुसीदिकी । [7]दशैकादशिकः । दशैकादशिकी ॥

## उञ्छति । (३२/१५८२)

तद् इति द्वितीयासमर्थाद् उञ्छति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । बदराणि उञ्छति बादरिकः । श्यामाकिकः[8] । [9]भूमौ पतितस्यैकैकस्य कणस्योपादानमुञ्छः । कणानुञ्छति काणिकः ॥

## रक्षति । (३३/१५८३)

तद् इति द्वितीयासमर्थाद् रक्षति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । [10]समाजं रक्षति सामाजिकः । सांनिवेशिकः[11] ॥

## शब्ददर्दुरं करोति । (३४/१५८४)

तद् इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां करोति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । [12]दार्दुरिकः कुम्भकारः ॥

## पक्षिमत्स्यमृगान् हन्ति । (३५/१५८५)

तद् इत्येव । पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो हन्ति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । स्वरूपस्य पर्यायाणां [13]तद्विशेषाणां च ग्रहणमिहेष्यते । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । तैत्तिरिकः । मत्स्य – मात्स्यिकः । मैनिकः । शाफरिकः । [14]शाकुलिकः । मृग – मार्गिकः । [15]हारिणिकः । सौकरिकः । [16]सारङ्गिकः ॥

---

1. तद्द्विगुणं प्रयच्छति इत्यधिकम् ड. 2. वर्धुषि ब. 3. स्ववार्धुषिकः ह. 4. एव ड. 5. अर्थे फ. ह. 6. ठकोऽपवादः ड.ह. 7. नास्ति फ. 8. नैवारिकः इत्यधिकम् क. 9. भूमौ--काणिकः नास्ति ब.क.ड.फ. 10. उदाहरणमिदं नास्ति ह. 11. मण्डलं रक्षति इति माण्डलिक इत्यधिकम् ह. 12. दार्दिकः ह, दर्दरं करोति इति दार्दरिकः क. 13. तद्विशेषाणां च नास्ति फ. 14. शाष्कुलिकः ह. ड. 15. हारिणकः ड. 16. नास्ति ह.

## परिपन्थं च तिष्ठति । (३६/१५८६)

परिपन्थशब्दात् तद् इति द्वितीयासमर्थात् तिष्ठति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । परिपन्थं तिष्ठति[1] पारिपन्थिकश्चौरः । चकारो भिन्नक्रमः प्रत्ययार्थं[2] समुच्चिनोति । परिपन्थं [3]हन्ति पारिपन्थिकः । समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम् । [4]परिपथशब्दपर्यायः परिपन्थशब्दोऽस्ति [5]इति ज्ञापयति । स विषयान्तरेऽपि प्रयोक्तव्यः ॥

## माथोत्तरपदपदव्यनुपदं धावति । (३७/१५८७)

[6]माथशब्दोत्तरपदात् प्रातिपदिकात् पदवी अनुपद इत्येताभ्यां च धावति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दण्डमाथं धावति दाण्डमाथिकः । [7]शौल्कमाथिकः । पादविकः । आनुपदिकः । माथशब्दः पथिपर्यायः ॥

## आक्रन्दाट् ठञ् च । (३८/१५८८)

आक्रन्दन्ति एतस्मिन्नित्याक्रन्दो देशः । अथ वा आक्रन्द्यते इत्याक्रन्दः [8]आर्तायनमुच्यते । विशेषाभावाद् द्वयोरपि ग्रहणम् । आक्रन्दशब्दात् [9]तद् इति द्वितीयासमर्थाद् धावति इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति, चकाराद् ठक् [10]च । स्वरे विशेषः । आक्रन्दं धावति आक्रन्दिकः । [11]आक्रन्दिकी ॥

## पदोत्तरपदं गृह्णाति । (३९/१५८९)

पदशब्दः उत्तरपदं यस्य तस्मात् पदोत्तरपदशब्दात् तद् इति [12]द्वितीयासमर्थाद् गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः[13] । पदान्तात् इति नोक्तं, [14]बहुचपूर्वान्मा भूत् इति ॥

## प्रतिकण्ठार्थललामं च । (४०/१५९०)

प्रतिकण्ठार्थललामशब्देभ्यः [15]तद् इति द्वितीयासमर्थेभ्यः गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । प्रतिकण्ठं गृह्णाति [16]प्रातिकण्ठिकः । [17]आर्थिकः । [18]लालामिकः ॥

## धर्मं चरति । (४१/१५९१)

धर्मशब्दात् [19]तद् इति द्वितीयासमर्थाच् चरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । चरतिरासेवायां नानुष्ठानमात्रे । धर्मं चरति धार्मिकः ।

[४८८] अधर्माच्चेति वक्तव्यम् । (म. भा. २.३३१)

[20]आधर्मिकः ॥

---

1. हन्ति वा इत्यधिकम् ड. 2. च इत्यधिकम् ड. 3. तिष्ठति हन्ति वा ड. 4. परिपथपर्यायः ह. 5. इति नास्ति फ. 6. माथोत्तरपदात् ब. ह. 7. शौलमाथिकः फ. 8 आर्तायम् ह. 9. तदिति नास्ति इ. 10. च नास्ति ब. 11. नास्ति ब. 12. द्वितीयासमर्थात् नास्ति फ. 13. पदोत्तरं च पदं च इत्यन्ये । तेन पदं गृह्णाति इति पादिकः इत्यधिकम् क. ड. 14. बहुपूर्वात् ह. 15. तद् इति नास्ति ह. 16. प्रातिकण्ठिकं ह. 17–18. नास्ति फ. 19. तद् इति नास्ति फ. ह. 20. अधर्मं चरति इत्यधिकम् ब. क. ड. इ.

## प्रतिपथमेति ठंश्च । (४२/१५९२)

प्रतिपथशब्दाद् [1]द्वितीयासमर्थाद् एति इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट् ठक् च । प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः ॥

## समवायान् समवैति । (४३/१५९३)

समवायवाचिभ्यः शब्देभ्यः तद् इति द्वितीयासमर्थेभ्यः समवैति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । समवायः समूहः [2]उच्यते, न संप्रधारणा । [3]समवायान् इति बहुवचनं सरूपविधिनिरासार्थम् । समवैति आगत्य तदेकदेशी भवति इत्यर्थः । समवायान् समवैति सामवायिकः । सामाजिकः । सामूहिकः । सान्निवेशिकः ॥

## परिषदो ण्यः । (४४/१५९४)

[4]परिषदः ण्यः प्रत्ययो भवति समवायान् समवैति इत्येतस्मिन् विषये । ठकोऽपवादः । परिषदं समवैति पारिषद्यः ॥

## सेनाया वा । (४५/१५९५)

सेनाशब्दाद्[5] वा ण्यः प्रत्ययो भवति समवायान् समवैति इत्येतस्मिन्नर्थे । ठकोऽपवादः । पक्षे सोऽपि भवति । सेनां समवैति सैन्यः, सैनिकः[6] ॥

## सञ्ज्ञायां ललाटकुक्कुट्यौ पश्यति । (४६/१५९६)

ललाटकुक्कुटीशब्दाभ्यां तद् इति द्वितीयासमर्थाभ्यां पश्यति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति सञ्ज्ञायां विषये । सञ्ज्ञाग्रहणमभिधेयनियमार्थं, न [7]तु रूढ्यर्थम् । ललाटं पश्यति लालाटिकः सेवकः । कौक्कुटिको भिक्षुः । सर्वावयवेभ्यो ललाटं दूरे दृश्यते । तदनेन [8]ललाटदर्शनेन सेवकस्य स्वामिनं प्रति अनुपश्लेषः कार्येषु[9]अनुपस्थायित्वं लक्ष्यते । लालाटिकः सेवकः । स्वामिनः कार्येषु नोपतिष्ठते इत्यर्थः । कुक्कुटीशब्देनापि कुक्कुटीपातो लक्ष्यते । देशस्याल्पतया हि भिक्षु[10]रविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिकः इति[11] ॥

---

1. तद् इति इत्यधिकम् क. 2. इह इत्यधिकम् ब.क.ड.इ. 3. समवायान् इति नास्ति फ. 4. परिषद्-शब्दात् फ, परिषत्शब्दात् द्वितीयासमर्थात् समवैति इत्येतस्मिन्नर्थे ण्यप्रत्ययो भवति । पारिषद्यः । परिषद इत्यधिकरणे क्विप् । पृषोदरादित्वात् पर्षदपि । ततोऽपि एकदेशविकृतस्य अनन्यत्वात् पार्षदः । पार्षद्यः इत्यन्ते । तत्र भवः पारिषदः । क.ड. 5. द्वितीयासमर्थात् इत्यधिकम् ड. 6. वाग्रहणात् सेना एव सैन्यम् इत्यधिकम् क. 7. तु नास्ति फ. 8. ललाट नास्ति फ. 9. अनुपस्थायकत्वम् ब.क. 10. अवक्षिप्तदृष्टिः क. 11. तदयमभिधेये नियमः संज्ञाग्रहणेन क्रियते । कुक्कुटी दाम्भिकचेष्टा इत्यधिकम् ब.क.ड.इ.ह.

## तस्य धर्म्यम् । (४७/१६०७)

तस्य इति षष्ठीसमर्थाद् धर्म्यम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । धर्म्यं न्याय्यम् । आचारयुक्तम् इत्यर्थः । [1]शुल्कशालायाः धर्म्यं शौल्कशालिकम् । [2]आकरिकम् । आपणिकम् । गौल्मिकम्[3] ॥

## अण् महिष्यादिभ्यः । (४८/१६०८)

महिषी इत्येवमादिभ्यः अण् प्रत्ययो भवति तस्य धर्म्यम् इत्येतस्मिन् [4]विषये । ठकोऽपवादः । महिष्याः धर्म्यम् माहिषम् । [5]प्राजावतम् ।

महिषी । [6]प्रजावती । प्रलेपिका । विलेपिका । अनुलेपिका । पुरोहित[7] । मणिपाली । [8]अनुचारक । होतृ । यजमान । महिष्यादिः ॥

## ऋतोऽञ् । (४९/१६०९)

ऋकारान्तात् प्रातिपदिकात् अञ् प्रत्ययो भवति तस्य धर्म्यम् इत्येतस्मिन् [9]विषये । ठकोऽपवादः । [10]पोतुर्धर्म्यं पौत्रम् । औद्गात्रम् ।

[४८९] [11]नराच्चेति वक्तव्यम् । (म. भा. २. ३३१)

नरस्य[12] धर्म्या नारी ।

[४९०] विशसितुरिड्लोपश्च । (म.भा.२.३३१)

विशसितुः धर्म्यम् वैशस्त्रम्[13] ।

[४९१] विभाजयितुर्णिलोपश्च । (म. भा.२.३३२)

[14]विभाजयितुर्धर्म्यम् वैभाजित्रम् ॥

## अवक्रयः । (५०/१६००)

तस्य [15]इत्येव । षष्ठीसमर्थात् अवक्रय इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । [16]अवक्रीणीतेऽनेन इति अवक्रयः पिण्डकः उच्यते । शुल्कशालायाः अवक्रयः शौल्कशालिकः । [17]आकरिकः । आपणिकः । गौल्मिकः । ननु [18]अवक्रयोऽपि [19]धर्म्यमेव ? नैतदस्ति । लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति ॥

---

1. शुष्कशालायाः धर्म्यं शौष्कशालिकं, दौवारिकम् ह. 2. आकरिकः ब, आन्तरगारिकम् क, आन्तरिकम् इ. ड. 3. आपूपिकम् इत्यधिकम् फ. ह. 4. अर्थे फ. 5. प्राजापतम् फ. ड. 6. प्रजापति ड. ह, ब्रह्मन् इत्यधिकम् ड. 7. मणिपादः इत्यधिकम् ब. 8. अनुगा ह. 9. अर्थे फ. ह. 10. होतुः धर्म्यं हौत्रम् इत्यधिकम् ब. ह. 11. नृनराभ्याम् इति भाष्यपाठः. 12. धर्म्यः नारः फ. धर्म्यम् नारम् ह. 13. आन्तरिकम्, गोष्ठिकं, दौत्यरिकम् इत्यधिकम् ब. 14. विभाजयितुर्धर्म्यम् नास्ति फ. 15. एव नास्ति फ. 16. अवक्रीयते ब. क. 17. आन्तरगारिकः क, आन्तरिकः ब. 18. च इत्यधिकम् फ. 19. धर्म्यं एव ह.

## तदस्य पण्यम् । (५१/१६०१)

तद् इति प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत् तद् भवति । अपूपाः पण्यमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः । पण्यम् इति विशेषणं [1]तद्धितवृत्ताव[2]न्तर्भूतमतः पण्य-शब्दो न प्रयुज्यते ॥

## लवणाट् ठञ् । (५२/१६०२)

लवणशब्दाट् ठञ् प्रत्ययो भवति तदस्य पण्यम् इत्येतस्मिन् विषये । ठकोऽपवादः । स्वरे विशेषः । लवणं पण्यमस्य लावणिकः ॥

## किशरादिभ्यः ष्ठन् । (५३/१६०३)

किशर इत्येवमादिभ्यः[3] ष्ठन् प्रत्ययो भवति तदस्य पण्यम् इत्येतस्मिन् [4]विषये । ठकोऽपवादः । किशरा-दयो [5]गन्धविशेषवचनाः । किशराः पण्यमस्य किशरिकः । किशरिकी । नरदिकः । नरदिकी ।

किशर । [6]नरद । [7]नलद । [8]सुमङ्गल । [9]तगर । गुग्गुलु[10] । उशीर । हरिद्रा । [11]हरिद्रायणी । किशरादिः ॥

## शलालुनोऽन्यतरस्याम् । (५४/१६०४)

शलालुशब्दादन्यतरस्यां [12]ष्ठन् प्रत्ययो भवति तदस्य पण्यम् इत्येतस्मिन् [13]विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । शलालुशब्दो गन्धविशेषवचनः । शलालु पण्यमस्य शलालुकः । [14]शलालुकी । शालालुकः । [15]शालालुकी ॥

## शिल्पम् । (५५/१६०५)

तद् इति [16]प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत् प्रथमासमर्थं शिल्पं चेत् तद्भवति । मृद-ङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति । शिल्पं [17]कौशलम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । [18]वैणिकः (म. भा. २.३३२) । शिल्पं [19]तद्धितवृत्तावन्तर्भवति ॥

---

1. तद्धित नास्ति ब. ह. 2. अन्तर्भूतमिति ब, अन्तर्भवति इति ड. फ. ह. 3. प्रातिपदिकेभ्यः इत्यधिकम् ब. 4. अर्थे फ. 5. गन्ध नास्ति फ, सुगन्धिद्रव्यवाचिनः क, गन्धविशेषवाचिनः ब. 6. नदर ब. 7. नलन स्फग फ. 8. सुगल क. ड, स्थगल ब. 9. तगल ह. 10. छगल इत्यधिकम् ह. 11. हरिद्रपर्णी ब. इ, हरिद्रापण्य ह. 12. ठन् फ. 13. अर्थे फ. ह. 14–15. नास्ति फ. 16. प्रथमासमर्थविभक्तिः । षष्ठ्या यथा अर्थोऽनुवर्तते ब. फ. 17. कर्म ड. 18. वैणिकः नास्ति फ. ड, वैणिको वैणविकः हि नारदः इति वीणाविषयं विज्ञानातिशयं शिल्पशब्दो वक्ति । वीणा हि विद्या शिल्पतुल्यत्वात् शिल्पमित्यन्ये क.ड. 19. तद्धित नास्ति ह.

## मड्डुकझर्झरादणन्यतरस्याम् । (५६/१६०६)

मड्डुकझर्झरशब्दाभ्यामन्यतरस्याम् अण् प्रत्ययो भवति तदस्य शिल्पम् इत्येतस्मिन्[1]विषये । ठकोऽपवादः। पक्षे सोऽपि भवति। मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ॥

## प्रहरणम् । (५७/१६०७)

तदस्य इत्येव । तद् इति प्रथमासमर्थाद् अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत् प्रथमासमर्थं प्रहरणं चेत् तद्भवति । असिः प्रहरणमस्य आसिकः । [2]प्रासिकः । [3]चाक्रिकः । धानुष्कः ॥

## परश्वधाट् ठञ् च । (५८/१६०८)

परश्वधशब्दात् ठञ् प्रत्ययो भवति[4], चकारात् ठक् । स्वरे विशेषः । परश्वधः प्रहरणमस्य पारश्वधिकः[5] ॥

## शक्तियष्ट्योरीकक् । (५९/१६०९)

शक्तियष्टिशब्दाभ्याम् ईकक् प्रत्ययो भवति तदस्य प्रहरणम् इत्येतस्मिन् [6]विषये । ठकोऽपवादः । शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः[7] ॥

## अस्तिनास्तिदिष्टं मतिः । (६०/१६१०)

तदस्य इत्येव । तदिति प्रथमासमर्थेभ्यः अस्ति नास्ति दिष्ट [8]इत्येतेभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति [9]यत् तत् प्रथमासमर्थं मतिश्चेत् [10]तद्भवति । अस्ति मतिः अस्य आस्तिकः । नास्ति मतिः अस्य नास्तिकः । [11]दैष्टिकः । न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि, परलोकोऽस्ति इति यस्य मतिः स आस्तिकः । [12]तद्विपरीतो नास्तिकः । प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः । तदेतदभिधान[13]शक्तिस्वभावाल्लभ्यते । अस्तिनास्तिशब्दौ [14]निपातौ, वचनसामर्थ्याद्वा आख्यातात् वाक्याच्च प्रत्ययः ॥

## शीलम् । (६१/१६११)

तदस्य इत्येव । तद् इति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत् प्रथमासमर्थं शीलं चेद् तद्भवति । [15]शीलं स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । [16]शाष्कुलिकः । मौदकिकः । भक्षणक्रिया [17]तद्विशेषणं च [18]शीलं तद्धितवृत्तावन्तर्भवति ॥

---

1. अर्थे फ.ह. 2. नास्ति फ. 3. चार्मिकः ह. 4. तत्प्रहरणमस्य इत्येतस्मिन्नर्थे क.फ.ह. 5. पारश्वधिकी इत्यधिकम् ह. 6. अर्थे फ.ह. 7. याष्टीकी इत्यधिकम् ब. 8. एतेभ्यः नास्ति क. फ. 9. यत् तत् प्रथमासमर्थं नास्ति फ. 10. सा ब.क.ड. 11. दिष्टमित्यस्य मतिः इत्यधिकम् क. 12. तद्विपरीतो नास्तिकः नास्ति ह. 13. शक्तिस्वाभाव्यात् फ. ह. 14. निपातितौ फ. 15. शीलं स्वभावः नास्ति फ, शीलं चेतः ड. 16. नास्ति ब. ड. 17. तद्विषयं च ब. ड. ह. 18. शीलं नास्ति फ.

## छत्रादिभ्यो णः । (६२/१६१२)

छत्र इत्येवमादिभ्यः [1]प्रातिपदिकेभ्यो [2]णः प्रत्ययो भवति तदस्य शीलम् इत्येतस्मिन् विषये । ठकोऽपवादः । छत्रं शीलमस्य छात्रः । छादनादावरणाच्छत्रम् । गुरुकार्येष्वहितः[3]तच्छिद्रावरणप्रवृत्तः छत्रशीलः [4]शिष्यः छात्रः । स्थाशब्दोऽत्र पठ्यते, स उपसर्गपूर्वो[5]ऽत्र गृह्यते आस्था संस्था अवस्था इति ।

छत्र । [6]बुभुक्षा । [7]शिक्षा । [8]पुरोह । स्था । चुरा । [9]उपस्थान । [10]ऋषि । [11]कर्मन् । [12]विश्वधा । तपस् । सत्य । [13]अनृत । [14]शिबिका । छत्रादिः ॥

## कर्माध्ययने वृत्तम् । (६३/१६१४)

तदस्य इत्येव । तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत्प्रथमासमर्थं कर्म चेत् तद् वृत्तमध्ययनविषयं भवति । एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः । द्वैयन्यिकः । त्रैयन्यिकः । एकमन्यत् इति विगृह्य तद्धितार्थं इति समासः । ततश्च ठक् [15]प्रत्ययः । अध्ययने कर्म वृत्तम् इत्येतत् सर्वं तद्धितवृत्तावन्तर्भवति । यस्याध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिकः इति । [16]एवं द्वैयन्यिकः त्रैयन्यिक [17]इति ॥

## बह्वच्पूर्वपदाट् ठच् । (६४/१६१५)

बह्वच् पूर्वपदं यस्य तस्माद् बह्वच्पूर्वपदात् प्रातिपदिकात् ठच् प्रत्ययो भवति तदस्य कर्माध्ययने वृत्तम् इत्येतस्मि[18]न्नर्थे । ठकोऽपवादः । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । चतुर्दशान्यिकः । चतुर्दशापपाठा अस्य जाता इत्यर्थः । उदात्ते कर्तव्ये योऽनुदात्तं करोति स उच्यते अन्यत् त्वं करोषि इति ॥

## हितं भक्षाः । (६५/१६१६)

तदस्य इत्येव । तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत् तत्प्रथमासमर्थं हितं चेत्तद् भवति, तच् च [19]भक्षाः । ननु च हितयोगे चतुर्थ्या भवितव्यं, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद् विभक्तिविपरिणामो भविष्यति । अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । [20]हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥

---

1. प्रातिपदिकेभ्यः नास्ति फ. 2. अण् फ. 3. तच्छिद्रावरणे ह. 4. शिष्यः नास्ति फ. 5. अत्र नास्ति ब. 6. नास्ति ब. ह, भुक्षा इ, भुक्ष्य क. 7. धुक्षा ह, भिक्षा तितिक्षा फ. 8. पुरः एव पुराः ह, प्ररोह ब. ड, परोह क. 9. नास्ति ह. 10. कृषिः ब. क. ह. 11. कर्मकरः क. ह. फ. 12. वैर इत्यधिकम् ब. 13. अनुमत ह. 14. विशिक क. 15. प्रत्ययः नास्ति फ, भवति इत्यधिकम् ब. 16. एवं नास्ति फ. 17. इति नास्ति ब. 18. विषये ब. क. 19. भक्ष्यः क. इ. 20. हितार्थः क्रिया च ब. इ. ह, हितं भक्षणक्रिया ड.

## तदस्मै दीयते नियुक्तम् । (६६/१६१७)

[1]तत् इति प्रथमासमर्थाद् अस्मा इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति यत् तत् प्रथमासमर्थं तच्चेद् दीयते नियुक्तम् । नियोगेनाव्यभिचारेण दीयते इत्यर्थः । [2]अव्यभिचारो नियोगः । [3]अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः । आपूपिकः । [4]शाष्कुलिकः । केचित्तु नियुक्तं नित्यमाहुः । अपूपा नित्यमस्मै दीयन्ते आपूपिकः ।।

## श्राणामांसौदनाट् टिठन् । (६७/१६१८)

श्राणामांसौदनशब्दाभ्यां टिठन् प्रत्ययो भवति तदस्मै दीयते नियुक्तम् इत्येतस्मिन्न[5]र्थे । ठकोऽपवादः । इकार उच्चारणार्थः । टकारो ङीबर्थः । श्राणा नियुक्तम् अस्मै दीयते श्राणिकः । श्राणिकी । [6]मांसौदनिकः । मांसौदनिकी । [7]अथ ठञेव कस्मान्नोक्तः, न ह्यत्र [8]ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिद् इच्छन्ति, तत्र [9]वृद्धयभावो विशेषः । ओदनिकः । ओदनिकी[10] ।।

## भक्तादणन्यतरस्याम् । (६८/१६१९)

भक्तशब्दाद् अण् प्रत्ययो भवति अन्यतरस्यां तदस्मै दीयते [11]नियुक्तम् इत्येतस्मिन् [12]विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । भक्तमस्मै दीयते नियुक्तम् [13]भाक्तः, भाक्तिकः ।।

## तत्र नियुक्तः । (६९/१६२०)

तत्र इति सप्तमीसमर्थान् नियुक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । नियुक्तः अधिकृतो व्यापारितः इत्यर्थः । शुल्कशालायां नियुक्तः शौल्कशालिकः । [14]आकरिकः । आपणिकः । [15]गौल्मिकः । दौवारिकः ।।

## अगारान्ताट् ठन् । (७०/१६२१)

[16]अगारशब्दान्तात् प्रातिपदिकात् ठन् प्रत्ययो भवति तत्र नियुक्तः इत्येतस्मिन् [17]विषये । ठकोऽपवादः । देवागारे नियुक्तः देवागारिकः । [18]कोष्ठागारिकः । भाण्डागारिकः ।।

---

1. वाक्यमिदं नास्ति क.इ. 2. अव्यभिचारो नियोगः नास्ति ड. 3. अग्रभोजनं अस्मै एव देयम् इति आग्रभोजनिको विद्वान् ह. 4. मौदकिकः ह, क्षैरिकः इत्यधिकम् ब. 5. विषये ब.फ. 6. मांसिकः मांसिकी मांसौदनिकी फ. 7. ननु च अ.ड.ग.ह. 8. ठञः ठनो वा ड. 9. वृद्धयभावे क.ब. 10. श्राणिकीयम् इत्यधिकम् ब. 11. नियुक्तं नास्ति फ. 12. अर्थे ह.फ. 13. भाक्तं भाक्तिकम् ह. 14. आन्तरिकः इ.ह.ड, आतरिकः क. 15. धौल्किकः फ, नास्ति ब. 16. अगारान्तात् फ.ह. 17. अर्थे ह. 18. नास्ति ब.ड.ह.

## अध्यायिन्यदेशकालात् । (७१/१६२२)

तत्र इत्येव । सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकाद् अकालवाचिनः च अध्यायिन्यभिधेये ठक् प्रत्ययो भवति । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम् । श्मशानेऽधीते श्माशानिकः । चातुष्पथिकः । अकालात् – चतुर्दश्यामधीते चातुर्दशिकः । आमावास्यिकः । अदेशकालात् इति किम् ? स्रुघ्नेऽधीते । पूर्वाह्णेऽधीते ॥

## कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति । (७२/१६२३)

तत्र इत्येव । कठिनशब्दान्तात् सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति व्यवहरति इत्येतस्मिन्नर्थे । व्यवहारः क्रियातत्त्वम् यथा [1]लौकिकव्यवहारः इति । [2]वंशकठिने व्यवहरति वांशकठिनिकः [3]चक्रचरः । [4]वार्ध्रकठिनिकः । [5]प्रास्तारिकः । [6]सांस्थानिकः ॥

## निकटे वसति । (७३/१६२४)

निकटशब्दात् सप्तमीसमर्थात् वसति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । यस्य [7]शास्त्रतो निकटवासस्तत्रायं विधिः । आरण्यकेन भिक्षुणा ग्रामात्[8] क्रोशे वस्तव्यम् इति शास्त्रम् । निकटे वसति नैकटिको भिक्षुः ॥

## आवसथात् ष्ठल् । (७४/१६२५)

तत्र इत्येव । [9]आवसथशब्दात् सप्तमीसमर्थात् वसति इत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति । लकारः स्वरार्थः । षकारो ङीषर्थः । आवसथे वसति आवसथिकः । आवसथिकी । ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो [10]विधीयते ॥

## प्राग्घिताद् यत् । (७५/१६२६)

'तस्मै हितम्' (५.१.५/१६६५) इति वक्ष्यति । प्रागेतस्माद्धितसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामो यत् प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – 'तद्वहति रथयुगप्रासङ्गम्' (४.४.७६/१६२७)[11] । [12]रथ्यः । युग्यः । प्रासङ्ग्यः ॥

## तद्वहति रथयुगप्रासङ्गम् । (७६/१६२७)

तद् इति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यो वहति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । रथं वहति [13]रथ्यः । युग्यः । प्रासङ्ग्यः । [14]'रथसीताहलेभ्यो यद्विधौ' (कात्या.वा. १) इति तदन्तविध्युपसङ्ख्यानात् परमरथ्यः[15] इत्यपि भवति ॥

---

1. लौकिको व्यवहारः ड. 2. वंशकठिनेषु ड 3. वनचरकः ड. 4. वाध्रकठिनिकः चक्रचरः ब, नास्ति क. इ. ह. 5. नास्ति फ, चाक्रकठिनिकः इत्यधिकम् ब. ह. ड. इ, व्रीह्यादेः प्रसारणे व्यापृतः इत्यधिकम् ह. 6. प्रतिमादेः संस्थाशिक्षापरः सांस्थानिकः ड. 7. शास्त्रीयः ब. 8. बहिः इत्यधिकम् ड. 9. आवसथशब्दात् नास्ति ह. 10. अधिक्रियते ब. 11. इति इत्यधिकम् फ. 12.–13. रथ्यम् युग्यम् प्रासङ्ग्यम् फ. ज. 14. रथ–भवति इति नास्ति ब. फ. ज. ह. 15. उत्तमरथ्यः इत्यधिकम् ड, परमरथ्यम् क.

## धुरो यड्ढकौ। (७६/१६२८)

[1]तद् वहति इत्येव। [2]धुर् इत्येतस्माद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे यत् ढक् इत्येतौ प्रत्ययौ भवतः। धुरं वहति धुर्यः, धौरेयः॥

## खः सर्वधुरात्। (७८/१६३०)

तद्वहति इत्येव। [3]सर्वधुराशब्दाद् द्वितीयासमर्थात् वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। [4]सर्वधुरां वहति सर्वधुरीणः। [5]स्त्रीलिङ्गे न्याय्ये सर्वधुरात् इति [6]प्रातिपदिकमात्रापेक्षो निर्देशः। खः इति योगविभागः [7]कर्तव्यः इष्टसङ्ग्रहार्थः। उत्तरधुरीणः। दक्षिणधुरीणः॥

## एकधुराल्लुक् च। (७९/१६३१)

तद् वहति इत्येव। [8]एकधुराशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति, तस्य च लुग् भवति। वचनसामर्थ्यात् पक्षे लुग् [9]विधीयते। [10]एकधुरां वहति एकधुरीणः, एकधुरः॥

## शकटादण्। (८०/१६३२)

तद्वहति इत्येव। शकटशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे अण् प्रत्ययो भवति। शकटं वहति शाकटो गौः[11]॥

## हलसीराट् ठक्। (८१/१६३३)

तद्वहति इत्येव। हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां वहति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः॥

## सञ्ज्ञायां जन्याः। (८२/१६३४)

तद् वहति इत्येव। जनीशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत् सञ्ज्ञा गम्यते। जनीं वहति जन्या, जामातुर्वयस्या। [12]सा हि विहारादिषु जामातृसमीपं प्रापयति। जनी[13] वधूरुच्यते॥

---

1. तदिति द्वितीयासमर्थात् धुर्शब्दात् ज. 2. धुरशब्दात् फ. 3. सर्वधुरशब्दात् ड. ज. 4. सर्वधुरां वहति नास्ति ड. 5. स्त्रीलिङ्गनिर्देशो न्याय्यः ड. 6. प्रातिपदिकापेक्षो ड. इ. 7. इष्टः संग्रहार्थः क. 8. एकधुरशब्दात् ड. 9. विज्ञायते ब. ह. ज. 10. एकां धुरं वहति ड. इ. ज. 11. द्वैशकटः इत्यधिकम् फ. 12. सा हि–प्रापयति नास्ति ब. क. ड. इ. ह. ज. 13. इति इत्यधिकम् फ.

## विध्यत्यधनुषा। (८३/१६३५)

तत् इति द्वितीयासमर्थाद् विध्यति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद् धनुष्करणं भवति। पादौ विध्यन्ति [1]पद्याः शर्कराः। [2]ऊरव्याः कण्टकाः। अधनुषा इति किम्? पादौ विध्यति धनुषा। ननु [3]असमर्थत्वादनभिधानाच् च प्रत्ययो न भवति, न हि धनुषा [4]पद्य इति विवक्षितोऽर्थः प्रतीयते? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्यां धनुष्करणं न सम्भाव्यते इति। तेन इह न भवति, चौरं विध्यति, शत्रुं विध्यति[5] देवदत्तः इति॥

## धनगणं लब्धा। (८४/१६३६)

तद् इत्येव। धनगणशब्दाभ्यां [6]द्वितीयासमर्थाभ्यां लब्धा इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। [7]धन्यः। गण्यः। लब्धा इति तृन्नन्तं, तेन द्वितीया समर्था विभक्ति[8]र्युज्यते॥

## अन्नाण् णः। (८५/१६३७)

अन्नशब्दात् [9]तद् इति द्वितीयासमर्थात् लब्धा इत्येतस्मिन्नर्थे णः प्रत्ययो भवति। अन्नं लब्धा आन्नः॥

## वशं गतः। (८६/१६३८)

वशशब्दात् तद् इति द्वितीयासमर्थाद् गतः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। वशं गतः वश्यः। [10]कामप्राप्तो विधेयः इत्यर्थः॥

## पदमस्मिन् दृश्यम्। (८७/१६३९)

पदशब्दात् प्रथमासमर्थाद् [12]दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत् प्रत्ययो भवति। पदं दृश्यम् अस्मिन् पद्यः कर्दमः। पद्याः पांसवः। निर्देशात् एव[11] प्रथमा समर्थविभक्तिः। शक्यार्थे [13]कृत्यः। शक्यते यस्मिन् पदं मूल्याः, [19]सुष्ठु द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः। [15]कर्दमस्यावस्थोच्यते नातिद्रवो नातिशुष्क इति[16]॥

## मूलमस्यावर्हि। (८८/१६४०)

मूलशब्दात् प्रथमासमर्थाद् आवर्हि इत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत् प्रत्ययो भवति। [17]मूलमेषाम् आवर्हि मूल्या माषाः। मूल्या मुद्गाः। '[18]बृह उद्यमने' (धा. पा. १३४८)। येषां मूलमावृह्यते उत्पाट्यते ते मूल्याः, [19]सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना [20]सङ्ग्रहीतुं न शक्यन्ते इत्यर्थः॥

---

1. पाद्याः क. 2. उदाहरणमिदं नास्ति फ. 3. असामर्थ्यात् फ. ज, असामान्यात् ह. 4. पाद्यः क. 5. धनुषा इत्यधिकम् फ. ज, देवदत्तः नास्ति फ. 6. तदिति इत्यधिकम् फ. 7. धनं लब्धा धन्यः। गणं लब्धा गण्यः ड. ब. 8. उच्यते ज. 9. तद् इति नास्ति ब. ह. ज. 10. कामप्राप्तो विधेये क, कामप्राप्ते विधेये ड, कामप्राप्तौ विधेये ज. 11. अत्र इत्यधिकम् ब. 12. दृश्योपाधिकात् ब. 13. कृत्यप्रत्ययः फ. 14. प्रतिमुद्रोत्पादनं येन क. इ. 15. समावस्था ज, मृदवस्था फ. 16. उच्यते इत्यधिकम् ज. फ 17. आबर्हणमाबर्हे उत्पाटनम् इत्यधिकम् ह. 18. वृह उद्यमे अ. ब. क, बृह उद्यमने आङ्पूर्वः ड. 19. न इत्यधिकम् क. 20. ग्रहीतुम् क.

## सञ्ज्ञायां धेनुष्या । (८९/१६४१)

धेनुष्या इति निपात्यते सञ्ज्ञायां विषये । सञ्ज्ञाग्रहणमभिधेयनियमार्थम् । धेनोः षुगागमो [1]यश्च प्रत्ययः निपात्यते । अन्तोदात्तोऽपि ह्ययमिष्यते । या धेनुरुत्तमर्णाय [2]ऋणप्रदानाद् दोहनार्थं दीयते सा धेनुष्या । पीतदुग्धा इति यस्याः प्रसिद्धिः । धेनुष्यां भवते ददामि[3] ॥

## गृहपतिना संयुक्ते ञ्यः । (९०/१६४२)

निर्देशादेव [4]तृतीया समर्थविभक्तिः । गृहपतिशब्दात् तृतीयासमर्थात् संयुक्ते इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति । गृहपतिना संयुक्तः गार्हपत्योऽग्निः । अन्यस्यापि गृहपतिना संयोगो[5]ऽस्ति, तत्र सञ्ज्ञाधिकारादतिप्रसङ्ग-निवृत्तिः ॥

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । (९१/१६४३)

नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासङ्ख्यं यत् प्रत्ययो भवति । प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते । नावा तार्यम् नाव्यमुदकम् । नाव्या नदी । शक्यार्थे कृत्यः । वयसा तुल्यः वयस्यः [6]सखा । सञ्ज्ञाधिकारोऽभिधेयनियमार्थः । तेन वयसा तुल्ये शत्रौ न भवति । धर्मेण प्राप्यं धर्म्यम्[7] । ननु च [8]धर्मादनपेते (४.४.९२/१६४४) इति वक्ष्यमाणेनैव सिद्धम् ? नैतदस्ति । धर्मं यदनुवर्तते तद्धर्मादनपेतम् इत्युच्यते । फलं तु धर्मादपेत्येव, कार्यविरोधित्वाद् धर्मस्य । विषेण वध्यः विष्यः । [9]विषेण वधमर्हति इत्यर्थः । मूलेनानाम्यम् मूल्यम् । आनाम्यमभिभवनीयम् । पटादीनामुत्पत्तिकारणं मूलं तेन तदभिभूयते शेषीक्रियते । मूलं हि सगुणं मूल्यं करोति । 'पोरदुपधात्' (३.१.९८/२८४४) इति यति प्राप्ते [10]आनाम्यम् इति निपातनात् [11]ण्यत् । मूलेन समः मूल्यः पटः । उपदानेन समानफलः इत्यर्थः । [12]सीतया समितं सीत्यं क्षेत्रम् । [13]समितं सङ्गतमित्यर्थः । 'रथसीताहलेभ्यो यद्विधौ' इति (कात्या.वा. १) तदन्तविधिरपि इष्यते । परमसीत्यम् । उत्तमसीत्यम् । द्विसीत्यम् । त्रिसीत्यम् । तुलया संमितं तुल्यम् । संमितं समानं, सदृशमित्यर्थः । यथा तुला परिच्छिनत्ति [14]परमेवं [15]तदपि इति ॥

## धर्मपथ्यर्थन्यायादनपेते । (९२/१६४४)

निर्देशादेव पञ्चमी समर्थविभक्तिः । धर्मादिभ्यः पञ्चमीसमर्थेभ्योऽनपेतः [16]इत्यर्थे यत् प्रत्ययो भवति । धर्मात् अनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । सञ्ज्ञाधिकारादभिधेयनियमः ॥

---

1. यत् च क. 2. आ ऋणादानात् क. 3. इति इत्यधिकम् ह. 4. तृतीया नास्ति फ. 5. यथा भवति फ, यद्यपि इत्यधिकम् ज. 6. सखा नास्ति फ. 7. इति इत्यधिकम् फ. 8. धर्मात् नास्ति फ. 9. विषमर्हति ज. 10. आनम्यम् क. 11. ण्यः ज. 12. यथा इत्यधिकम् फ. 13. वाक्यमिदं नास्ति फ. 14. तथेति ज. 15. परिमेयमेव तदपि ह. 16. इत्येतस्मिन्नर्थे ब. क. ई. ज, अनपेतेऽर्थे इ.

## छन्दसो निर्मिते। (९३/१६४५)

प्रत्ययार्थ[1]सामर्थ्यलभ्या [2]समर्थविभक्तिः। छन्दःशब्दात् तृतीयासमर्थान् निर्मिते इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। निर्मितः उत्पादितः। छन्दसा [3]निर्मितः छन्दस्यः। छन्दसा इच्छया [4]कृतः इत्यर्थः। इच्छापर्याय छन्दःशब्दः इह गृह्यते[5]॥

## उरसोऽण् च। (९४/१६४६)

उरःशब्दात् तृतीयासमर्थान् निर्मिते इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकारात् यत् च। [6]उरसा निर्मितः औरसः पुत्रः, उरस्यः [7]पुत्रः। सञ्ज्ञाधिकारादभिधेयनियमः॥

## हृदयस्य प्रियः। (९५/१६४७)

हृदयस्य निर्देशादेव समर्थविभक्तिः। हृदयशब्दात् षष्ठीसमर्थात् प्रियः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। प्रियः हृद्यः देशः। हृद्यं [8]वनम्। सञ्ज्ञाधिकारादभिधेयनियमः। [9]इह न भवति, हृदयस्य प्रियः पुत्रः [10]इति॥

## बन्धने चर्षौ। (९६/१६४८)

हृदयस्य इत्येव। बन्धने इति [11]प्रत्ययार्थः। तद्विशेषणमृषिग्रहणम्। बध्यते येन तद् बन्धनम्। हृदयस्य [12]बन्धनमृषिः हृदयशब्दात् षष्ठीसमर्थाद् बन्धने ऋषावभिधेये यत् प्रत्ययो भवति। ऋषिर्वेदो गृह्यते। हृद्यः। परहृदयं येन बध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्यः इत्युच्यते॥

## मतजनहलात् करणजल्पकर्षेषु। (९७/१६४९)

मतादिभ्यः त्रिभ्यः शब्देभ्यः त्रिष्वेव करणादिष्वर्थेषु यथासङ्ख्यं यत् प्रत्ययो भवति। प्रत्ययार्थ[13]सामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः। मतं ज्ञानं [14]तस्य करणं मत्यम्। [15]भावसाधनं वा। जनस्य जल्पः जन्यः। हलस्यः कर्षः हल्यः। द्विहल्यः। [16]त्रिहल्यः। कर्षणं कर्षः, भावसाधनं वा॥

## तत्र साधुः। (९८/१६५०)

तत्र इति सप्तमीसमर्थात् साधुः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। [17]सामसु साधुः सामन्यः[18]। [19]वेमन्यः। कर्मण्यः। शरण्यः। साधुः [20]इह प्रवीणो योग्यो वा गृह्यते, नोपकारकः। तत्र हि परत्वात् 'तस्मै हितम्' (५.१.५/१६६५) इत्यनेन विधिना भवितव्यम्॥

---

1. सामर्थ्याल्लब्धा ज. 2. तृतीयाविभक्तिः ड. फ. 3. निर्मितं छन्दस्यम् फ, छन्दसा निर्मितः नास्ति इ. 4. कृतं फ. 5. न वेदगायत्र्यादिवचनः इत्यधिकम् ह. 6. उरसा निर्मितः नास्ति ब. ज. 7. पुत्रः नास्ति ब. 8. वचनम् क. इ. फ, धनम् ह. 9. तेन इत्यधिकम् क. ड. 10. इति नास्ति ज. फ. 11. विशेषणार्थः क. 12. बन्धनः हृद्यः ब. क. ड. इ. ई, बन्धनं हृद्यं ह. 13. सामर्ध्यलब्धा क. इ. फ. 14. उत्पादनं ह. 15. भावः साधनं वा ब. ड. ई. ह. 16. परमहल्यः फ. 17. सामनि ड. 18. विप्रः इत्यधिकम् क. 19. नास्ति ब. 20. इति फ.

## प्रतिजनादिभ्यः खञ् । (९९/१६५१)

[1]प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्न[2]र्थे । यतोऽपवादः । प्रतिजने साधुः [3]प्रातिजनीनः । जने जने साधुः इत्यर्थः । [4]ऐदंयुगीनः । सांयुगीनः ।

प्रतिजन । इदंयुग । संयुग[5] । [6]समयुग । परयुग । [7]परकुल । परस्यकुल । [8]अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । [9]महाजन । प्रतिजनादिः ।

यत्र हितार्थ एव साध्वर्थस्तत्र वचनात् प्राक्क्रीतीया बाध्यन्ते ॥

## भक्ताण् णः । (१००/१६५२)

भक्तशब्दात् णः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् [10]विषये । यतोऽपवादः । भक्ते [11]साधुः भाक्तः शालिः । भाक्ताः तण्डुलाः ॥

## परिषदो ण्यः । (१०१/१६५३)

परिषच्छब्दाद् ण्यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये । यतोऽपवादः । परिषदि साधुः पारिषद्यः । णप्रत्ययोऽप्यत्रेष्यते[12] । तदर्थं योगविभागः [13]क्रियते । 'परिषदः' णो भवति, [14]परिषदि साधुः पारिषदः । ततः 'ण्यः' । परिषदः इत्येव ॥

## कथादिभ्यष्ठक् (१०२/१६५४)

कथादिभ्यः शब्देभ्यः ठक् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् [15]विषये । यतोऽपवादः । कथायां साधुः [16]काथिकः । [17]वैकथिकः ।

कथा । [18]विकथा । वितण्डा । [19]कुष्टचित् । जनवाद । जनेवाद । [20]वृत्ति । [21]सद्गृह । गुण । गण । आयुर्वेद[22] । कथादिः ॥

## गुडादिभ्यष्ठञ् । (१०३/१६५५)

गुडादिभ्यः शब्देभ्यः ठञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये । यतोऽपवादः । गुडे साधुः गौडिकः [23]इक्षुः । कौल्माषिको मुद्गः । [24]साक्तुको यवः ।

गुड । कुल्माष । सक्तु । अपूप[25] । [26]मांसौदन । इक्षु । वेणु । [27]सङ्ग्राम । [28]सङ्घात । प्रवास । निवास । उपवास । गुडादिः ॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् । (१०४/१६५६)

पथ्यादिभ्यः शब्देभ्यः ढञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् [29]विषये । यतोऽपवादः । पथि साधु [30]पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥

---

1. प्रतिजनात् इत्येव फ. 2. विषये ब. क. ई. ज. 3. प्रतिजनीनः ई. 4. एवम् इत्यधिकम् क. 5. प्रयुग इत्यधिकम् ब.ई. 6. नास्ति ड. 7. पत्रस्यकुलं पत्रकुलम् ड. 8. नास्ति फ. 9. महाजन नास्ति ड. 10. अर्थे फ.ह. 11. साधवः शालयः भाक्ताः ह. 12. इति इत्यधिकम् ब. 13. करिष्यते फ.ज. 14. पर्षदि साधुः पार्षदः, पार्षद्यः ह. 15. अर्थे फ. 16. कथिकः ब. 17. नास्ति फ. 18. विश्वकथा ब. ज. ह. 19. नास्ति ब. क. 20. वृत्त फ. 21 संग्रह फ. 22. धनुर्वेद इत्यधिकम् ह. 23. इक्षुः नास्ति फ. 24. साक्तुको यवः नास्ति ब.क. 25. यूप इत्यधिकम् ह. 26. नास्ति ड. 27. नास्ति क, सांग्रामिकः भटः इत्यधिकम् फ. 28. संयाव सुवास ड. 29. अर्थे ह. 30. पाथेयः । आतिथेयः । स्वापतेयः ज.ह.

## सभायाः यः । (१०५/१६५७)

सभाशब्दाद् यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् [1]विषये । यतोऽपवादः । स्वरे विशेषः । सभायां साधुः सभ्यः ॥

## ढश्छन्दसि । (१०६/३४७७)

सभाशब्दाड् ढः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये छन्दसि । यस्यापवादः । [2]'सभेयो युवाऽस्य यजमानस्य वीरो जायताम्' (वा. सं. २२.२२) ॥

## समानतीर्थे वासी । (१०७/१६५८)

साधुः इति निवृत्तम् । वासी इति प्रत्ययार्थः । समानतीर्थशब्दात् तत्र इति सप्तमीसमर्थाद् वासी इत्येत-
स्मिन्नर्थे [3]यत् प्रत्ययो भवति । [4]समानतीर्थे वासी इति सतीर्थ्यः । समानोपाध्यायः इत्यर्थः । [5]तीर्थशब्देनेह गुरुरुच्यते ॥

## समानोदरे शयित ओ चोदात्तः । (१०८/१६५९)

समानोदरशब्दात् सप्तमीसमर्थात् शयितः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, ओकारश्चोदात्तः[6] । शयितः स्थितः इत्यर्थः । समानोदरे शयितः समानोदर्यः भ्राता ॥

## सोदराद् यः । (१०९/१६६०)

सोदरशब्दात् सप्तमीसमर्थात् शयितः इत्येतस्मिन्नर्थे [7]यः प्रत्ययो भवति । 'विभाषोदरे' (६.३.८८/
१०१६) इति [8]सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः । समानोदरे शयितः सोदर्यः भ्राता ।
ओ चोदात्तः (४.४.१०८/१६५९) इति नानुवर्तते । यकारे स्वरः ॥

## भवे छन्दसि । (११०/३४७६)

तत्र [9]इत्येव । सप्तमीसमर्थात् भव इत्येतस्मिन्नर्थे छन्दसि विषये यत् प्रत्ययो भवति । [10]अणादीनां [11]घादीनां चापवादः । सति दर्शने तेऽपि भवन्ति, [12]सर्वविधीनां छन्दसि व्यभिचारात् । 'नमो मेध्याय च विद्युत्याय च [13]नमः' (तै.सं. ४. ५. ७. १६) । आपादपरिसमाप्तेः छन्दोऽधिकारः । [14]भवाधिकारश्च 'समुद्राभ्राद्घः' (४.४.११८/३४६४) इति यावत्[15] ॥

---

1. अर्थे फ. ह. 2. संसभेयः ह, सभेयोऽस्य युवा यजमानस्य धीरो जीयात् क. 3. यत् नास्ति ब, प्रत्ययः नास्ति फ. 4. समाने तीर्थे गुरौ वसति ड. फ. 5. शब्दशक्तिस्वाभाव्यात् समानस्य सभावः, तीर्थे यः इत्यधिकम् ब. क. ड. इ. ई. ज. फ. ह. 6. भवति इत्यधिकम् फ. ह. 7. यत् क. फ. 8. सूत्रेण नास्ति फ. 9. एव नास्ति ह. ज. 10. तत्र भवे इत्यधिकम् ड. 11. राष्ट्रावारपारात् इत्यधिकम् ड. 12. सर्वविधानात् ह. 13. नमः नास्ति ई. 14. भवाधिकारश्च नास्ति ड. 15. इति केचित् इत्यधिकम् ड.

## पाथोनदीभ्यां ड्यण्। (१११/३४५७)

पाथःशब्दान् नदीशब्दाच्च ड्यण् प्रत्ययो भवति तत्र भवः इत्येतस्मिन्नर्थे[1]। यतोऽपवादः। पाथसि भवः 'पाथ्यो वृषा' (ऋ. ६. १६. १५)। 'च नो दधीत नाद्यो गिरो मे' (ऋ. २.३५.१)। पाथः अन्तरिक्षम्॥

## वेशन्तहिमवद्भ्यामण्। (११२/३४५८)

वेशन्तशब्दाद्धिमवच्छब्दाच्च अण् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् [2]विषये। यतोऽपवादः। 'वैशन्तीभ्यः स्वाहा' (तै. सं. ७. ४. १३. ९)। 'हैमवतीभ्यः स्वाहा[2]' (शौ. १९. २. १)॥

## स्रोतसो विभाषा ड्यड्ड्यौ। (११३/३४५९)

स्रोतःशब्दाद् विभाषा ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः तत्र भवः इत्येतस्मिन् विषये। यतोऽपवादः। [3]पक्षे सोऽपि भवति। स्रोतसि भवः 'स्रोत्यः' (ऋ. १०. १०४.८)। 'स्रोतस्यः' (अ. १९. २. ४)। ड्यड्ड्ययोः [4]स्वरे विशेषः॥

## सगर्भसयूथसनुताद् यन्। (११४/३४६०)

सगर्भसयूथसनुतशब्देभ्यो यन् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। यतोऽपवादः। स्वरे विशेषः। 'अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः' (तै. सं. १. २. ४.२)। 'यो नः सनुत्यः' (ऋ. २.३०.९)। सर्वत्र समानस्य छन्दसि (६. ३. ८४/१०१२) इति सभावः॥

## तुग्राद् घन्। (११५/३४६१)

तुग्रशब्दाद् घन् [5]प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। यतोऽपवादः। 'त्वमग्ने [6]वृषभस्तुग्रियाणाम्'। [7]अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः॥

## अग्राद् यत्। (११६/३४६२)

अग्रशब्दात् यत् प्रत्ययो भवति [8]तत्र भवः इत्येतस्मिन् [9]विषये। अग्रे [10]भवम् 'अग्र्यम्' (खि. १. ३. ७)। किमर्थमिदं यावता सामान्येन [11]यद् विहित एव? 'घच्छौ च' (४. ४. ११७/३४६३) इति वक्ष्यति: ताभ्यां बाधा मा भूत् इति पुनर्विधीयते॥

## घच्छौ च। (११७/३४६३)

अग्रशब्दात् [12]यत् घच्छौ च प्रत्यया भवन्ति तत्र भवः इत्येतस्मिन् [13]विषये। '[14]अग्र्यम्' (खि. १. ३. ७), अग्रियम् (ऋ. १. १३. १०), 'अग्रीयम्' (मै. २. ७. १३. १३)। चकारः 'तुग्राद् घन्' (४. ४. ११५/३४६१) इत्यस्यानुकर्षणार्थः। अग्रियम्। स्वरे विशेषः॥

---

1. विषये ब. 2. अर्थे फ 3. पक्षे नास्ति फ. 4. स्वरविशेषः ज. 5. प्रत्ययः नास्ति फ. 6. विषमः ह, तुग्रियाणाम् नास्ति ब. ई. 7. अग्न्याकाश फ. ज, अग्न्याकाशयजुषि शिष्टः तुग्रशब्दः ड. 8. भवार्थे फ. 9. अर्थे ह. 10. भवः अग्रचः ज. 11. यत् नास्ति फ. 12. यत् नास्ति ब. ड. ई. फ. 13. अर्थे फ 14. अग्रचम् नास्ति ब. ड.

## समुद्राभ्राद् घः। (११८/३४६४)

समुद्रशब्दात् अभ्रशब्दाच्च घः प्रत्ययो भवति तत्र भवः इत्येतस्मि[1]न्नर्थे। यतोऽपवादः। 'समुद्रिया नदीनाम्' (ऋ. ७.८७.१)। 'अभ्रियस्येव घोषाः' (ऋ. १०.६८.१)। अभ्रशब्दस्यापूर्वनिपातः, [2]तस्य लक्षणस्य व्यभिचारित्वात्॥

## बर्हिषि दत्तम्। (११९/३४६५)

भवः इति निवृत्तम्। बर्हिःशब्दात् सप्तमीसमर्थात् दत्तम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। 'बर्हिष्येषु निधिषु प्रियेषु (ऋ. १०.१५.५)॥

## दूतस्य भागकर्मणी। (१२०/३४६६)

निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद् भागे कर्मणि चाभिधेये यत् प्रत्ययो भवति। भागः अंशः। कर्म क्रिया। '[3]यदग्ने यासि दूत्यम्' (ऋ. १.१२.४)। [4]दूतभागः दूतकर्म वा॥

## रक्षोयातूनां हननी। (१२१/३४६७)

निर्देशादेव समर्थविभक्तिः। रक्षःशब्दाद् यातुशब्दाच्च षष्ठीसमर्थाद् हननी इत्येतस्मिन्नर्थे [5]यत् प्रत्ययो भवति। हन्यते[6]ऽनया इति हननी। '[7]या वां मित्रावरुणौ रक्षस्या तनू' (मै. २.३.१) 'यातव्या' (मै. २.३.१)। रक्षसां हननी। यातूनां हननी। बहुवचनं [8]स्तुतिवैशिष्टयज्ञापनार्थम्। बहूनां रक्षसां हननेन तनूः स्तूयते॥

## रेवतीजगतीहविष्याभ्यः प्रशस्ये। (१२२/३४६८)

रेवत्यादिभ्यः [9]षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत् प्रत्ययो भवति। प्रशंसनं प्रशस्यम्, भावे[10]क्यप् प्रत्ययो भवति। 'यद्वो रेवती रेवत्यम्' (काठ. सं. १.८)। 'यद्वो जगती जगत्यम्' (काठ. सं. १.८)। 'यद्वो हविष्या हविष्यम्' (काठ. सं. १.८)। हविषे हिता हविष्याः, तासां [11]प्रशंसनं हविष्यम्। 'यस्येति च' (६.४.१४८/३११) इति लोपे कृते 'हलो यमां यमि लोपः' (८.४.६४/६०) इति लोपः॥

## असुरस्य स्वम्। (१२३/३४६९)

असुरशब्दात् षष्ठीसमर्थात् स्वम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणोऽपवादः। 'असुर्यं वा एतत् पात्रं यत् कुलालकृतं चक्रवृत्तम् (मै.सं. १.८.३)॥

---

1. विषये क. ई. 2. तल्लक्षणस्य ई, तस्य लक्षणव्यभिचारात् ड, निघातो लक्षणस्य व्यभिचार चिह्नम् ज. 3. अयं तेऽग्ने दूत्यम् ह, यत्तेऽग्ने दूत्यम् मुद्रितः पाठः ब. क. 4. दूतस्य भागः कर्म वा फ. 5. यन् नास्ति ब. 6. तया ब. 7. या ते अग्ने रक्षस्या तनूः मुद्रितः पाठः 8. तु वैशिष्टय° ड, स्तुतिवैशेष्य° क. 9. शब्देभ्यः इत्यधिकम् ब. क. ड. ई. फ. ह. 10. अयं इत्यधिकम् ड. 11. प्रशंसने ड. 12. यच्चक्रधृतं कुलालकतम् मुद्रित्तः पाठः।

## मायायामण् । (१२४/३४७०)

असुरशब्दात् षष्ठीसमर्थात् मायायां [1]स्वविशेषे अण् प्रत्ययो भवति । [2]पूर्वस्य यतोऽपवादः । 'आसुरी माया स्वधया कृतासि' (वा.सं. ११.६९)

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः । (१२५/३४७१)

तद्वान् इति निर्देशादेव समर्थविभक्तिः[3] । मतुबन्तात् [4]प्रातिपदिकात् प्रथमासमर्थादासाम् इति षष्ठ्यर्थे यत् प्रत्ययो भवति, यत् [5]प्रथमासमर्थमुपधानो मन्त्रश्चेत् स भवति, यत् तदासामिति निर्दिष्टमिष्टकाश्चेत् ता भवन्ति । लुक् च मतोः इति प्रकृतिनिर्ह्रासः । इतिकरणस्ततश्चेद् विवक्षा । तद्वान् इत्यवयवेन समुदायो [6]व्यपदिश्यते । वर्चःशब्दो यस्मिन् मन्त्रेऽस्ति स वर्चस्वान् । उपधीयते येन स उपधानः । [7]चयनवचनः इत्यर्थः । वर्चस्वानुपधानमन्त्रः आसाम् इष्टकानाम् इति विगृह्य यति विहिते [8]मतोर्लुकि कृते, वर्चस्या (तै.ब्रा. १.८.९.१) [9]उपदधाति, तेजस्या (तै.ब्रा. १.८.९.१) उपदधाति । 'पयस्याः' (तै.सं २.३.१३.१) । 'रेतस्याः' (ष.विं. २१) । तद्वान् इति किम् ? मन्त्रसमुदायादेव मा भूत् । उपधानः इति किम् ? वर्चस्वान् [10]उपस्थानमन्त्रः आसाम् इत्यत्र मा भूत् । मन्त्रः इति किम् ? अङ्गुलिमानुपधानो हस्तः आसाम् इत्यत्र मा भूत् । इष्टकासु इति किम् ? [11]अङ्गुलिमानुपधानो हस्त आसाम् इत्यत्र मा भूत् । इतिकरणो नियमार्थः । [12]अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान् [13]मन्त्रो गृह्यते, न सर्वेण ॥

## अश्विमानण् । (१२६/३४७२)

अश्विशब्दो यस्मिन् मन्त्रेऽस्ति सोऽश्विमान् । अश्विमच्छब्दादण् प्रत्ययो भवति । [14]पूर्वस्य यतोऽपवादः । अश्विमानुपधानो मन्त्रः आसामि[15]ष्टकानाम् इति [16]विगृह्याण् [17]विधीयते, तत्र मतुपो लुकि कृते 'इनण्यनपत्ये' (६.४.१६४/१२४५) इति प्रकृतिभावः । 'आश्विनीरुपदधाति' (श.ब्रा. ८.२.१.११) ॥

## वयस्यासु मूर्ध्नो मतुप् । (१२७/३४७३)

वयस्वानुपधानो मन्त्रो [18]यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति । [19]पूर्वस्य यतोऽपवादः । यस्मिन् मन्त्रे वयःशब्दो[20] मूर्धन्शब्दश्च विद्यते स वयस्वानपि भवति [21]मूर्धन्वानपि, यथा 'मूर्धा वयः प्रजापतिश्छन्दः' (वा.सं. १४ ९) इति । तत्र वयस्वच्छब्दादिव मूर्धन्वच्छब्दादपि यति प्राप्ते मतुप् विधास्यते । 'मूर्धन्वतीर्भवन्ति' (तै.सं. ५.३.८.३) । [22]वयस्या एव मूर्धन्वत्यः । वयस्यासु इति किम् ? यत्र मूर्धन्शब्द एव केवलो न वयःशब्दस्तत्र मा भूत् । मूर्धन्वतः इति वक्तव्ये मूर्ध्नः इत्युक्तं, मतुपो लुकं भाविनं [23]चित्ते कृत्वा ॥

---

1. विषये ह. 2. पूर्वस्य नास्ति फ. 3. आसामिति प्रत्ययार्थः इत्यधिकम् क. 4. प्रातिपदिकात् नास्ति ब. क. इ. 5. तत् इत्यधिकम् ब.क. 6. निर्दिश्यते फ. 7. चयनः रचनः ड.ज. 8. मतुब्लुकि क. 9. उपधातव्या फ. 10. उपधान फ. 11. वर्चस्वान् उपधानमन्त्रः एषांकपालानामित्यत्र माभूत् ब.क.इ.ई.ह. 12. अनेकसम्भवे इ. 13. मन्त्रो नास्ति फ. 14. पूर्वस्य नास्ति फ. 15. इष्टकानाम् नास्ति फ.ई. 16. अणि कृते मतुब्लुकि च क. इ. 17. क्रियते ई.ह. 18. आसाम् फ. 19. प्रकृतिसम्बन्धिनो लुक् च इत्यधिकम् ब. 20. अस्ति इत्यधिकम् फ. ज. 21. तथा इत्यधिकम् फ. 22. वयस्याश्च फ, वयस्याश्च ताः क. 23. चेतसि ह.

## मत्वर्थे मासतन्वोः । (१२८/३४७४)

यस्मिन्नर्थे मतुब् विहितः, तस्मिश्छन्दसि विषये यत् [1]प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः । प्रथमासमर्थाद् अस्त्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो भवति । मत्वर्थीयानामपवादः । नभांसि विद्यन्ते यस्मिन् मासे नभस्यो (तै. सं. १.४.१४.१) मासः । 'सहस्यः' (तै.सं. १. ४. १४. १) । 'तपस्यः'(तै.सं.१.४.१४.१) । मधव्यः (तै. सं. ५.२.९.३) । नभःशब्दो[2]ऽभ्रेषु वर्तते । [3]तन्वां खल्वपि – ओजोऽस्यां विद्यते 'ओजस्या तनूः । रक्षस्या तनूः' (मै.सं. २.३.१) । मासतन्वोः इति किम् ? [4]मधुमता पात्रेण [5]चरति । मासतन्वोरनन्तरार्थे वा (म.भा.२.३३४) । मध्वस्मिन्नस्ति मध्वस्मिन्न[6]नन्तरमिति वा मधव्यो मासः ।

[४९२] लुगकारेकाररेफाश्च[7] वक्तव्याः । (म.भा. २. ३३५)

लुक् तावत् – 'तपश्च तपस्यश्च' (तै.सं. १. ४. १४. १) । [8]'नभश्च नभस्यश्च' (तै. सं. १. ४. १४. १) । 'सहश्च सहस्यश्च' (तै.सं. १. ४. १४. १) । नपुंसकलिङ्गं छान्दसत्वात् । अकारः – 'इषो मासः' (तै. सं. १. ४. १४. १) । '[9]ऊर्जो मासः' (तै. सं. १. ४. १४. १) । इकारः – 'शुचिर्मासः' (तै. सं. १. ४. १४. १) । रेफः – 'शुक्रो मासः' (तै. सं. १. ४. १४. १) ॥

## मधोर्ञ च । (१२९/३४७५)

मधुशब्दान् मत्वर्थे[10] ञः प्रत्ययो भवति, चकाराद् यत् च । उपसङ्ख्यानाल् लुक् च । 'माधवः[11] (तै. सं. १. ४. १४. १), 'मधव्यः' (तै. सं. ५. २. ९. ३), 'मधुः' (तै. सं. १. ४. १४. १) । तन्वां खल्वपि- [12]माधवा, मधव्या, मधुः तनूः ॥

## ओजसोऽहनि यत्खौ । (१३०/३४७६)

मत्वर्थे इत्येव । ओजःशब्दान् मत्वयर्थे यत्खौ[13] प्रत्ययौ भवतोऽहन्य[14]भिधेये । [15]ओजस्यमहः । [16]ओजसीनमहः ॥

## वेशोयशआदेर्भगाद् यल् । (१३१/३४७७)

मत्वर्थे इत्येव । वेशोयशसी [17]आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशआदेर्भगान्तात् [18]प्रातिपदिकात् मत्वर्थे यल् प्रत्ययो भवति । लकारः स्वरार्थः । वेशोभगो विद्यते यस्य स वेशोभग्यः । [19]यशोभग्यः । वेशः इति बलमुच्यते । श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । वेशश्चासौ भगश्च श्रीप्रभृतिर्वेशोभगः, [20]सोऽस्यास्ति इति वेशोभग्यः ॥

---

1. प्रत्ययो नास्ति फ. 2. मेघेषु ड. 3. तन्वां खल्वपि नास्ति फ, खल्वपि नास्ति ज. 4. पथा मधुमताऽऽभरन् (तै. ब्रा. 2. 6. 11. 1). 5. चरन्ति ब. 6. अनन्तरे ड. 7. प्रत्ययाः इत्यधिकम् फ. ज. 8. नभश्च नास्ति ह. 9. ऊर्जो मासः नास्ति फ.ज. 10. मासतन्वोः इत्यधिकम् ड. 11. मासः इत्यधिकम् ड. 12. माधवी माधव्या ह. 13. इत्येतौ इत्यधिकम् ब. फ. ज. 14. इत्यभिधे फ. 15. अहन्योजस्ये (काठ.सं 22.14.38) 16. शुक्रे अहन्नोजसीने (मै. सं. 3.16.4.52). 17. आदिः ई. 18. प्रातिपदिकात् मत्वर्थे नास्ति फ. 19. यशोभग्यः नास्ति ड. 20. सोऽस्यास्ति नास्ति ड.

## ख च। (१३२/३४७८)

वेशोयशआदेर्भगान्तात् प्रातिपदिकात् मत्वर्थे खः प्रत्ययो भवति। [1]योगविभागो यथासङ्ख्यनिरासार्थः उत्तरार्थश्च। [2]चकारात् यत्। [3]वेशोभगीनः, [4]वेशोभग्यः। [5]यशोभगीनः, यशोभग्यः॥

## पूर्वैः कृतमिनयौ च। (१३३/३४७९)

[6]मत्वर्थे इति निवृत्तम्। निर्देशादेव समर्थविभक्तिः। पूर्वशब्दात् तृतीयासमर्थात् कृतम् इत्येतस्मिन्नर्थे इन य इत्येतौ प्रत्ययौ भवतः। चकारात् ख च। 'गम्भीरेभिः पथिभिः पूर्विणेभिः' (काठ. सं. ९.६.१९)। 'पूर्व्यैः' (तै. १.८.५.२)। पूर्वीणः। पूर्वैः इति बहुवचनान्तेन पूर्वपुरुषाः उच्यन्ते। तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा॥

## अद्भिः संस्कृतम्। (१३४/३४८०)

निर्देशादेव समर्थविभक्तिः। अप्शब्दात् तृतीयासमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। 'यस्येदमप्यं हविः' (ऋ. १०.८६.१२)। [7]अद्भिः संस्कृतम् [8]इति॥

## सहस्रेण संमितौ घः। (१३५/३४८१)

निर्देशादेव समर्थविभक्तिः। सहस्रशब्दात् तृतीयासमर्थात् [9]सम्मितौ इत्येतस्मिन्नर्थे घः प्रत्ययो भवति। सम्मितः तुल्यः, सदृशः। 'अयमग्निः सहस्रियः' (तै. सं. ४.७.१३.४)। [10]सहस्रतुल्यः इत्यर्थः। केचित्तु समितौ इति पठन्ति। तत्रापि समित्या सम्मितः एव लक्षयितव्यः। तत्र छन्दसि प्रयोगदर्शनात्॥

## मतौ च। (१३६/३४८२)

मत्वर्थे च [11]सहस्रशब्दात् [12]घः प्रत्ययो भवति। सहस्रमस्य विद्यते [13]सहस्रियः। 'तपःसहस्राभ्यां विनीनी' (५.२.१०२/१९०९), '[14]अण् च' (५.२.१०३/१९१०) इत्यस्यापवादः॥

## सोमम‍र्हति यः। (१३७/३४८३)

निर्देशादेव समर्थविभक्तिः। सोमशब्दात् द्वितीयासमर्थात् अर्हति इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। [15]सोमम् अर्हन्ति सोम्या ब्राह्मणाः (तै.सं. २.१.२.९)। [16]यज्ञार्हाः इत्यर्थः। [17]यति प्रकृते यग्रहणम्। [18]स्वरे विशेषः॥

---

1. योगबिभागो – यत् नास्ति क. ई. 2. चकारात् नास्ति ब. क. फ. 3. या सरस्वती यशोभगीना या सरस्वती वेशोभगीना (सा. श्रौ. सू. 6.4.3) 4. वेशोभग्यः नास्ति फ. 5. यशोभगीनः यशोभग्यः नास्ति ब. ड.इ.फ.ह. 6. वाक्यमिदं नास्ति फ. 7. अद्भिः नास्ति फ. ज. 8. इति नास्ति ब. क. ई. 9. संमितः अ.क. ड.ह.इ. 10. सहस्रेण संमितः फ. 11. प्रथमासमर्थात् इत्यधिकम् फ. 12. घञ् ह. 13. सहस्रीयः ह. ज. 14. अण् च नास्ति फ. 15. सोममर्हति इति सोम्यः ब्राह्मणः ब. 16. यज्ञाङ्गाः क, याज्ञकः इ. 17. यत्-प्रकरणे यविधाने फ, यत्प्रकरणे यविधानम् ज. 18. स्वरविशेषणार्थम् ब, स्वरविशेषात् ज, स्वरविशेषार्थः ड. ई.

## मये च । (१३८/३४८४)

[1]सोमग्रहणं, यश्चानुवर्तते । मय इति मयडर्थो लक्ष्यते । सोमशब्दान् [2]मयडर्थे यः प्रत्ययो भवति । आगतविकारावयवप्रकृता मयडर्थाः । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (४.३.८१/१४६१) 'मयट् च' (४.३.८२/१४६२), 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (४.३.१४३/१५२३), 'तत्प्रकृतवचने मयट्' (५.४.२१/२०८९) इति । तत्र [3]यथायोगं समर्थविभक्तिः । 'पिबाति सोम्यं मधु' (ऋ. ८.२४.१३) । सोममयम् इत्यर्थः ॥

## मधोः । (१३९/३४८५)

यशब्दो निवृत्तः । मधुशब्दान्मयडर्थे यत्प्रत्ययो भवति । मधव्यान् [4]स्तोकान् (पै. १.८८.२) । मधुमयान् इत्यर्थः ॥

## वसोः समूहे च । (१४०/३४८६)

वसुशब्दात् समूहे वाच्ये यत् प्रत्ययो भवति, चकारान्मयडर्थे च । यथायोगं समर्थविभक्तिः । वसव्यः समूहः । मयडर्थो वा ।

[४९३] अक्षरसमूहे छन्दसः [5]स्वार्थ उपसङ्ख्यानम् । (म.भा. २.३३५)

'[6]ओ श्रावय इति चतुरक्षरम् । अस्तु [7]श्रौषट् इति चतुरक्षरम् । यज इति द्व्यक्षरम् । 'ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । [8]एष वै [9]सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्[10]यज्ञो मन्त्रे विहितः (मै.सं. १.४.११) । सप्तदशाक्षराण्येव [11]छन्दस्यः इत्यर्थः । छन्दःशब्दादक्षरसमूहे वर्तमानात् [12]स्वार्थे [13]यत् प्रत्ययः ।

[४९४] वसुशब्दादपि [14]यद् वक्तव्यः । (म.भा. २.३३५)

'हस्तौ [15]पृणस्व बहुभिर्वसव्यैः' (तै.सं. १.२.१३.२) । वसुभिः इत्यर्थः । '[16]अग्निराशे वसव्यस्य' (ऋ. ४.५५.८) । [17]वसोः इत्यर्थः ॥

## नक्षत्राद् घः । (१४१/३४८७)

नक्षत्रशब्दाद् घः प्रत्ययो भवति स्वार्थे । समूहे इति नानुवर्तते । 'नक्षत्रियेभ्यः स्वाहा' (वा.सं. १२.२८) ॥

## सर्वदेवात् तातिल् । (१४२/३४८८)

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति छन्दसि [18]विषये स्वार्थिकः । 'सर्वतातिम्' (ऋ. १०.३६.१४) । 'देवतातिम्' (ऋ. ३.१९.२) ॥

---

1. सोमप्रत्ययश्चानुवर्तते ई.ह, यत्प्रत्ययश्च क. 2. मयार्थे ब. 3. यथायथं ड. 4. स्तोकान् मधुमयान् इत्यर्थः नास्ति फ.ज. 5. स्वार्थे नास्ति फ, स्वरार्थे ज. 6. आश्रावय ब.फ.इ. (तै. 1.6.11.1) 7. वौषट् ड.ह, नास्ति ब. 8. एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्तौ (मै.सं. 1.4.11) 9. सप्तदशाक्षरः नास्ति ब.क. 10. यज्ञमनु ब.ड.ई.ह, यज्ञमन्त्रे क. 11. एतानि ड. 12. स्वरार्थे ज. 13. यत् नास्ति फ, प्रत्ययो भवति फ. 14. स्वार्थे यः प्रत्ययः भवति ड.फ.ह. 15. गृहीतस्य मुद्रितः पाठः, वृणस्व ब, गृहस्य क, प्रणस्व ह, वृणीष्व ड. 16. उदाहरणमिदं नास्ति ब. ई, अग्निविशेषे वसव्यः वसवः इ. 17. बसुनः ज. ह. 18. विषये नास्ति, स्वार्थे ड.इ.

## शिवशमरिष्टस्य करे। (१४३/३४८९)

करोति इति करः प्रत्ययार्थः। तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः [1]शब्देभ्यः षष्ठी-समर्थेभ्यः करे इत्येतस्मिन्नर्थे तातिल् प्रत्ययो भवति। शिवं करोति [2]इति शिवतातिः। (पै. ५.३६.१)। 'शंतातिः' (ऋ. ८.१८.७)। [3]'अरिष्टतातिः' (ऋ. १०.६०.८)॥

## भावे च। (१४४/३४९०)

भावे चार्थे छन्दसि विषये शिवादिभ्यः[4] तातिल् प्रत्ययो भवति। शिवस्य भावः शिवतातिः (पै. ५.३६.१)। 'शंतातिः' (ऋ. ८.१८.७)। 'अरिष्टतातिः' (ऋ. १०.६०.८)। यतः पूर्णोऽवधिः। अतः परमन्यः प्रत्ययो[5]ऽधि-क्रियते॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ

चतुर्थाध्यायस्य चतुर्थः पादः॥

प्रथमो भागः समाप्तः

———o———

1. प्रातिपदिकेभ्यः क. इ. 2. इति नास्ति ब. इ. 3. अथो अरिष्टतातये (ऋ. 10.60.8) 4. प्रातिपदिकेभ्यः इत्यधिकम् ब. क. ड, शब्देभ्यः इत्यधिकम् ह. 5. विधीयते फ. ज.